# BALARAMAYANA,

*A DRAMA*

BY

RAJASEKHARA

EDITED WITH A COMMENTARY

BY

PANDIT JIBANANDA VIDYASAGARA B. A.

SUPERINTENDENT FREE SANSKRIT COLLEGE.

*CALCUTTA;*

*Printed at the New Valmiki Press.*

1884.

*To be had from Pandit Jibananda Vidyasagara B. A.*
*Superintendent Free Sansksit College, Calcutta*

## एतानि मुद्रितसंस्कृतपुस्तकानि ।

१ आशुबोध व्याकरणम् — १।०
२ धातुरूपादर्शः — २
३ शब्दस्तोम महानिधिः — १०
४ सिद्धान्तकौमुदी सरला सहिता — ११
५ सिद्धान्तबिन्दुसार (वेदान्त) — ॥
६ दत्ताद्यानादिपद्धतिः (बङ्गाक्षरैः) — ४
७ गयाश्राद्धादि पद्धतिः — १
८ शब्दार्थरत्नम् — ॥।
९ वाक्यमञ्जरी (बङ्गाक्षरैः) — ।०
१० छन्दोमञ्जरी तथा वृत्तरत्नाकर सटीक — ॥/
११ वेणीसंहार नाटक — १
१२ अनर्घराघव नाटक सटीक — १॥
१३ रत्नावली नाटिका सटीक — ॥।
१४ मालविकाग्निमित्र सटीक — १॥
१५ धनञ्जय विजय सटीक — ।
१६ महावीरचरितनाटक — १॥
१७ सांख्यतत्त्वकौमुदी सटीक — २
१८ वैयाकरणभूषणसार — ॥।
१९ लीलावती — ॥।
२० बीजगणित — १
२१ शिशुपालवध सटीक (माघ) — ४
२२ किरातार्जुनीय सटीक — २॥
२३ कुमारसम्भव पूर्वखण्ड सटीक — ॥।
२४ कुमारसम्भव उत्तरखण्ड — ॥
२५ सूत्रम् पाणिनीयम् — ॥।
२६ शब्दतत्त्वम् (शब्दाभिधान) — १२२
२७ कादम्बरी सटीक — ४
२८ राजप्रशस्ति — /
२९ अनुमानचिन्तामणि तथा अनुमानदीधिति — ४
३० सर्वदर्शनसंग्रहः — १
३१ भामिनीविलास सटीक — १
३२ हितोपदेश सटीक — १
३३ भाषापरिच्छेदमुक्तावलीसहित — १
३४ बहुविवाहवाद — ।०
३५ दशकुमारचरित सटीक — १॥
३६ परिभाषेन्दुशेखर — ।।
३७ कविकल्पद्रुम धातुपाठः — ॥
३८ चक्रदत्त (वैद्यक) — २॥
३९ उणादिसूत्र सटीक
४० मेदिनीकोष — १
४१ पञ्चतन्त्रम् — २॥
४२ विद्वन्मोदतरङ्गिणी (चम्पूकाव्य) — ॥
४३ माधवचम्पू — ।/
४४ तर्कसंग्रह — ॥
४५ प्रसन्नराघव नाटक — १
४६ विवेकचूडामणि — ।/
४७ काव्यसंग्रह (सम्पूर्ण) — ५
४८ शिक्षानुशासन सटीक — ।
४९ ऋतुसंहार सटीक — ।/
५० विक्रमोर्वशी (सटीक) — १॥
५१ वसन्ततिलक भाण — ।/
५२ गायत्री व्याख्या — ॥०
५३ सांख्यदर्शन (भाष्यसहित) — २
५४ भोजप्रबन्ध — ॥।०
५५ नलोदय सटीक — ॥/
५६ ईश केन कठ प्रश्न मुण्डक माण्डूक्य (सटीक सभाष्य) — ५
५७ छान्दोग्य सटीक सभाष्य — ५

# बालरामायणम् ।

नाम

नाटकम् ।

महाकवि श्रीराजशेखर विरचितम् ।

बि, ए, उपाधिधारिणा
श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण
विरचितया व्याख्ययान्वितम् ।



कलिकाता नगर्य्याम् ।

नूतन वाल्मीकियन्त्रे

मुद्रितम् ।

इं १८८४ ।

# बालरामायणम् ।

## नाटकम् ।

### प्रथमोऽङ्कः ।

प्रसत्तेर्यः पात्रं तिलकयति यं सूक्तिरचना
य आद्यः स्वादूनां श्रुतिचुलुकलेह्येन मधुना ।
यदात्मानो विद्याः परिणमति यश्चार्थवपुषा
स गुम्फो वाणीनां कविवृषनिषेव्यो विजयते ॥ १ ॥ (क)

---

(क) ग्रन्थारम्भे प्रारीप्सित परिसमाप्तिकामो ग्रन्थकृत् विघ्नविघाताय वाग्देवतायाः प्रशस्तिरूपं मङ्गलमाचरति । प्रसत्तेरिति । यः प्रसत्तेः प्रसादगुणस्य । उक्तञ्च दर्पणे, चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः । स प्रसादः समस्तेषु रसेषु रचनासु चेति । पात्रम् आधारः प्रसादगुणपूर्ण इति यावत् सूक्तिरचना शोभना उक्तिरचना वचनपरिपाटी यं तिलकयति अलङ्करोति शोभनवचनरचनालङ्कृत इत्यर्थः, श्रुतिः श्रोत्रेन्द्रियम् एव चुलुकं प्रसृतिः तेन लेह्यं लेहनीयं तेन मधुना मधुररसेन हेतुना यः स्वादूनां सुस्वाद्यवस्तूनाम् आद्यः प्रथमः अतिसुस्वाद्य इत्यर्थः विद्यास्तत्त्वज्ञानानि यदात्मानः यत् स्वरूपाः तत्त्वज्ञानपूर्ण इति भावः यश्च अर्थवपुषा परिणमति शब्दार्थयोः काव्यशरीरत्वेनोक्तत्वात् यदि च शब्दवैचित्र्यमर्थवैचित्र्यञ्च काव्यत्वप्रयोजकं तथापि शब्दापेक्षया अर्थवैचित्र्यस्य प्राधान्यात् अर्थरूपेण वपुषा शरीरेण परिणमति परितः शोभते इत्यर्थः अर्थवैचित्र्यपूर्ण इति भावः स कविवृषैः कविश्रेष्ठैः निषेव्यः आदरणीयः वाणीनां भारतीनां गुम्फः ग्रन्थनं रचना इत्यर्थः विजयते विशेषेण सर्वोत्कर्षेणेत्यर्थः वर्त्तते इति

नान्द्यन्ते (ख) सूत्रधारः (ग) ससंरम्भं परिक्रम्य पुरोऽव-लोक्य सप्रश्रयमञ्जलिं बद्ध्वा भो भो भुजस्तम्भालानितलक्ष्मी-करेणुना (घ) रघुकुलैकतिलकेन महेन्द्रपालदेवेनाधिकृताः सभासदः सर्वानेष वो गुणनिधिर्विज्ञापयति विदितमेवै-तद्भवताम् । यत्तु नाट्याचार्येण धूर्तिलेन (ङ) प्रतिज्ञातम् ।

वीराद्भुतप्रायरसे प्रबन्धे
लोकोत्तरं कौशलमस्ति यस्य ।
नाट्ये च नृत्ये च परं प्रवीणा-
मसौ सुतां मे परिणेष्यतीति ॥ २ ॥ (च)

---

सन्दर्भार्थः । वृत्तमत्र शिखरिणी—रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणीति लक्षणात् ।

(ख) नान्दी—देवद्विजनृपादीनामाशीर्वादपरायणा । नन्दन्ति देवता यस्मात्तस्मान्नान्दीति कीर्तितेत्युक्तलक्षणा, तस्या अन्ते अवसाने ।

(ग) सूत्रधारः सूत्रं नाट्यसाधनं धारयतीति व्युत्पत्त्या नाट्याङ्गसाधकः नाटकप्रस्तावकः प्रधाननट इत्यर्थः ।

(घ) ससंरम्भं ससम्भ्रममित्यर्थः । सप्रश्रयं सविनयम् । भुजस्तम्भा-लानितलक्ष्मीकरेणुना भुजस्तम्भ एव आलानं गजबन्धनस्तम्भः, तदस्या जातमिति भुजस्तम्भालानिता इतोऽस्य जात इतीतप्रत्ययः । भुजस्तम्भालानिता लक्ष्मीरेव करेणुर्हस्तिनी येन । करेणुरिभ्यां स्त्री नेभे इत्यमरः । बाहुबलविनिर्जितराजलक्ष्मीकेणेत्यर्थः ।

(ङ) धूर्तिलेन तदाख्येन नाट्याचार्येण अभिनयोपदेष्ट्रा ।

(च) वीरेति । वीराद्भुतप्रायो वीररसाद्भुतरसबहुले नाट्ये अभिनेये नृत्ये च प्रबन्धे यस्य लोकोत्तरम् अलौकिकं परम् अत्यन्तं कौशलं नैपुण्यम् अस्ति असौ मे मम प्रवीणां प्रावीण्यवतीं प्रज्ञा-शालिनीमित्यर्थः प्रकृष्टा वीणा प्रवीणा प्रकृष्टवीणावत् मधुरभाषिणी-

पारिपार्श्विकः । वम्मीइणा मुणिवरिट्ठेण दिट्ठणि-बन्धणस्स (द) रामचन्दचरिदस्स को उण सो विसेसो जं एस कई दंसइस्सदि (७)।

सूत्रधारः । मारिष ! कश्चित्कश्चित्प्रगल्भते (ध) नहि सर्वः सर्वं जानाति ।

पारिपार्श्विकः । भाव ! णं भणामि पच्चक्खीकिदसअलस-ग्गसहत्थादो तत्थभवदो महेसिणो अदिक्कमिअ किं एस चम्मचक्खू पेक्खिस्सदि (८)।

---

(७) वाल्मीकिना मुनिवरिष्ठेन दृष्टनिबन्धनस्य रामचन्द्रचरितस्य कः पुनः स विशेषो यमेष कविर्दर्शयिष्यति ।

(८) भाव ! ननु भणामि प्रत्यक्षीकृतसकलसर्गसद्भावार्थात् तत्रभवतो महर्षेरतिक्रम्य किमेष चर्मचक्षुः प्रेक्षिष्यते ।

---

याति प्रापयति अन्तर्भूतणिजर्थः कविं तं कुलतिलकं करोतीत्यर्थः । तथा उदारैः महद्भिः विशुद्धचरितैरिति भावः हारैः कमलैः फुल्ला विकासं गता कीर्त्तिः दिक्षु भ्रमति कविमेनं कीर्त्तिमन्तं करोतीति भावः। तथा रामनाम्नः रामाख्यस्य विष्णोः धीरोदात्तं चरितम् । उक्तञ्च दर्पणे, अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः । स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथित इति । जयति सर्वोत्कर्षेण वर्त्तते । तत् तस्मात् काव्यव्याजात् काव्यच्छलेन काव्यरूपं समाश्रित्य इत्यर्थः इयम् अपरा कापि अनिर्वचनीया कामधेनुः अभीष्टदोहिनी धेनुः काव्यादेव अभीष्टसिद्धेरिति भावः। वृत्तमत्र मन्दाक्रान्ता—मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्ममिति लक्षणात् ।

(द) मुनिवरिष्ठेन मुनिश्रेष्ठेन । दृष्टनिबन्धनस्य दृष्टं ज्ञानचक्षुषा निरूपितं निबन्धनं हेतुभूतो विषयो यस्य तादृशस्य ।

(ध) प्रगल्भते स्पर्द्धते ।

सूत्रधारः। मारिष! मा मैवम्।

वदनेन्दुषु वामदृशामिन्दीवरपत्रसंघटितम्।
रसनासु च सुकवीनां निवसति सारस्वतं चक्षुः ॥ ७ ॥ (न)

प्राज्ञश्चायम्। वस्त्वन्तरमतिशयानो हि प्रज्ञाप्रकर्षः। (प) सूक्तमिदं तेनैव महामन्त्रिपुत्रेण।

उदन्वच्छिन्ना भूः स च निधिरपां योजनशतं
सदा पान्थः पूषा गगनपरिमाणं गणयति।
इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः
सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥ ८ ॥ (फ)

---

(न) वदनेन्दुष्विति। वामदृशां वामे शोभने दृशौ यासां तासां नारीणां वदनेन्दुषु मुखचन्द्रेषु चक्षुः इन्दीवरपत्रैः नीलोत्पलदलैः संघटितं निर्मितं तथा सुकवीनां रसनासु जिह्वासु सारस्वतं सरस्वती वाणी तद्घटितं निवसति। अत्र अप्रस्तुतानां महिलामुखचन्द्राणां प्रस्तुतानाञ्च कविरसनानाम् एकधर्मस्य निवासरूपस्याभिसम्बन्धात् दीपकालङ्कारः। तदुक्तं दर्पणकारैः, अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते। उपगीतिवृत्तम्, आर्य्या परार्द्धतुल्ये दलद्वये प्राहुरुपगीतिमिति लक्षणात्, आर्य्यालक्षणन्तु तस्योदाहरणे लिखितत्वान्नात्रोल्लिखितम्।

(प) प्राज्ञः प्रकृष्टज्ञानसम्पन्नः। वस्त्वन्तरं वस्तुविशेषम् अतिशयानः अतिक्रामन् अभिभवन्नित्यर्थः प्रज्ञाप्रकर्षः बुद्धेरुत्कर्षः।

(फ) उदन्वदिति। भूः पृथिवी उदन्वता समुद्रेण छिन्ना वृता, स च अपां निधिः समुद्रः योजनानां शतं शतयोजनपरिमित इत्यर्थः। पूषा सूर्य्यः पान्थः सन् सदा गगनपरिमाणं गणयति करोति इति इत्थं भावाः पदार्थाः स्फुरतां प्रकाशमानानाम् अवधीनां मुद्राभिः चिह्नैः मुकुलिताः वेष्टिताः। अयं पुनः सतां कवीनां प्रज्ञाया

पारिपार्श्विकः । ता णमक्कारो करीअदु (फ) ।

सूत्रधारः । ननु नमस्कृतं तेनैव ।

योगीन्द्रश्छन्दसां स्रष्टा रामायणमहाकविः ।
वल्मीकजन्मा जयति प्राच्यः प्राचेतसो मुनिः ॥९॥ (ब)

प्रबन्धोपक्रमे (भ) च स किल कविरेव मुक्तवान् ।

ब्रह्मभ्यः शिवमस्तु वस्तु विततं किञ्चिद्वयं ब्रूमहे
हे सन्तः ! शृणुतावधत्त विधृतो युष्मासु सेवाञ्जलिः ।
यद्वा किं विनयोक्तिभिर्मम गिरां यद्यस्ति सूक्तामृतं
माद्यन्ति स्वयमेव तत्र मनसो याञ्चा परं दैन्यभूः ॥१०॥ (म)

---

(फ) तन्नमस्कारः क्रियताम् ।

---

उन्मेषः स्फुरणम् असीमा निरवधिः विजयते सर्वोत्कर्षेण वर्त्तते । [illegible] ।

(ब) योगीन्द्र इति । योगिनामिन्द्रः प्रवरः छन्दसां वेदातिरिक्तानां स्रष्टा रचयिता रामायणस्य रामचरितग्रन्थस्य कविः प्रणेता प्राच्यः प्राग्भवः पुरातन इत्यर्थः प्रचेतसः वरुणस्य अपत्यं पुमान् प्राचेतसः वल्मीकजन्मा वल्मीकोद्भवः मुनिः जयति सर्वोत्कर्षेण वर्त्तते ।

(भ) प्रबन्धोपक्रमे प्रबन्धस्य ग्रन्थस्य उपक्रमे प्रारम्भे ।

(म) ब्रह्मभ्य इति । ब्रह्मभ्यः ब्राह्मणेभ्यः वेदेभ्यो वा । वेदस्तत्त्वं तपो ब्रह्म इत्यमरः । शिवं कल्याणम् अस्तु । वयं किञ्चित् किमपि विततं विस्तृतं वस्तु ब्रूमहे वदामः । हे सन्तः ! साधवः ! शृणुत आकर्णयत, अवधत्त अभिनिविष्टा भवत. युष्मासु सेवाञ्जलिः प्रणामाञ्जलिः विधृतः कृतः । यद्वा अथवा विनयोक्तिभिः विनीत-

सर्वभाषाविचक्षणश्च स एवमाह ।

गिरः श्रव्या दिव्याः प्रकृतिमधुराः प्राकृतधुराः
सुभव्योऽपभ्रंशः सरसरचनं भूतवचनम् ।
विभिन्नाः पन्थानः किमपि कमनीयाश्च त इमे
निबद्धा यस्त्वेषां स खलु निखिलेऽस्मिन् कविवृषा ॥११॥ (य)

एतत्प्रबन्धमहत्त्वं प्रति तेनेदमुक्तम् ।

ब्रूते यः कोऽपि दोषं महदिति सुमतिर्बालरामायणेऽस्मिन्
प्रष्टव्योऽसौ पटीयानिह भणितिगुणो विद्यते वा न वेति ।
यद्यस्ति स्वस्ति तुभ्यं भव पठनरुचिर्विद्धि नः षट् प्रबन्धा-
नेवं चेद्दीर्घमास्तां नटवटुवदने जर्जरा काव्यकन्या ॥१२॥ (र)

---

वचनैः किम्? यदि मम गिरां सूक्तानां शोभनवचनरूपमसनम् अस्ति, तदा सुमनसः विद्वांसः स्वयमेव माद्यन्ति मत्ता भवन्ति, धात्र्या परं केवलं दैन्यभूः दीनतास्पदम् । शार्दूलविक्रीडितं वृत्तं, सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितमिति लक्षणात् ।

(य) गिर इति । दिव्याः मनोज्ञाः प्रकृतिमधुराः स्वभावमनोहारिण्यः प्राकृतधुराः प्राकृतभाषाभारयत्यः गिरः श्रव्याः श्रोतव्याः । अपभ्रंशः अपशब्दः प्राकृतभाषारूप इति भावः । सुभव्यः सुलक्षितः । सरसं रसयुक्तं वचनम् । तथाभूतं सत्यं वचनम् । विभिन्नाः पृथग्भूताः किमपि अनिर्वाच्यतया इत्यर्थः कमनीयाः मनोहराश्च ते इमे पन्थानः । यस्तु कविवृषा कविश्रेष्ठः अस्मिन् निखिले सन्दर्भे एषां समस्तानां पथां खलु निश्चयेन निबद्धा निवेशयिता इत्यर्थः । शिखरिणीवृत्तम् ।

(र) ब्रूते इति । यः कोऽपि सुमतिः अस्मिन् बालरामायणे महदिति नाटकमिदं महत् अतिविस्तीर्णमिति दोषं ब्रूते वदति,

पारिपार्श्विकः । विहस्य भाव ! अलङ्किदकदमगोत्तो पवित्तीकिदकदमणामहेओ एस कईं जस्सिं णाम भावस्स देवस्स अ एव्वं पक्खवादो (१०) । (ख)

सूत्रधारः । अयि अनभिज्ञ ! गगनार्णवमाणिक्यं (ग) पृषाणमपि तर्हि पृच्छ ।

स मूर्त्तो यत्रासीद् गुणगण इवाकालजलदः
सुरानन्दः सोऽपि श्रवणपुटपेयेन वचसा ।
नचान्ये गण्यन्ते तरलकविराजप्रभृतयो
महाभागस्तस्मिन्नयमजनि यायावरकुले ॥ १२ ॥ (घ)

---

(१०) अलङ्कृतकतमगोत्रः पवित्रीकृतकतमनामधेय एष कविर्यस्मिन् नाम भावस्य देवस्य चैवं पक्षपातः ।

---

असौ पटीयान् सुनिपुणो जनः इह ग्रन्थे भणितिगुणो वचनमाधुरी विद्यते वा, न वा इति प्रष्टव्यः । यदि अस्ति भणितिगुण इति शेषः तुभ्यं स्वस्ति तव शुभं भूयादित्यर्थः, पठनरुचिः पाठार्थी भव वः युष्माकं षट् प्रबन्धान् विद्धि जानीहि चेत् यदि नैवं तदा नयस्य बटोर्विप्रस्य मम वदने काव्यकन्या काव्यरूपा कुमारी जर्जरा सती दीर्घं बहुकालम् आस्तां तिष्ठतु । स्रग्धरावृत्तं, म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति लक्षणात् ।

(ख) अलङ्कृतकतमगोत्रः कस्मिन् गोत्रे उत्पन्न इत्यर्थः । पवित्रीकृतकतमनामधेयः किन्नामधेयश्च । पक्षपातः भक्तिः ।

(ग) गगनार्णवमाणिक्यं गगनमेव अर्णवः समुद्रः तस्य माणिक्यं रत्नविशेषभूतम् ।

(घ) स इति । यत्र गुणानां दयादाक्षिण्यादीनां मूर्त इव मूर्त्तिमानिव सः अकालजलदः तदाख्यः पुरुषः आसीत् । सोऽपि अकाल-

तदामुष्यायणस्य महाराष्ट्रचूडामणेरकालजलदस्य चतुर्थो दौर्दुकिः शीलवतीसूनुरुपाध्यायश्रीराजशेखर इत्यपर्याप्तं बहुमानेन। स्तुतिं नाटयित्वा अहो। किमपि कमनीया कवेराम्नायाशीः (घ)।

आद्यः कन्दो वेदविद्यालतानां
जैह्मं चक्षुर्निर्निमेषं कवीनाम्।
यो येनार्थी तस्य तत् प्रचरन्ती
वाङ्मूर्त्तिर्मे देवता सन्निधत्ताम् ॥ १४ ॥ (ङ)

इदं च सूक्तमुक्तवान् (च)।

---

जलदोऽपि श्रवणपुटपेयेन वचसा सुरान् आनन्दयतीति तथोक्तः। यथा स सर्वगुणाकरः तथा सुकविरपीति भावः। अन्ये अपरे तरलाः चपलाः कविराजप्रभृतयः न च गण्यन्ते येन इति शेषः तस्मिन् यायावरकुले अयं महाभागः अजनि उदपद्यत। शिखरिणीवृत्तम्।

(घ) आमुष्यायणस्य एतद्गोत्रभवस्य महाराष्ट्रस्य चूडामणेः शिरोरत्नभूतस्य अकालजलदस्य चतुर्थः दौर्दुकिः दुर्दुकस्य अपत्यं पुमान् शीलवत्या नाम मातुः तनयः उपाध्यायः पण्डितवरः श्रीराजशेखर इति बहुमानेन अपर्याप्तं प्रभूतं भावे क्तप्रत्ययः। आशीः कल्याण-परम्परा।

(ङ) आद्य इति। वेदविद्या एव लताः तासाम् आद्यः प्रथमः कन्दः मूलं कवीनां निर्निमेषं निमेषरहितं जैह्मं जिह्वाभवं चक्षुः नेत्रभूतं तथा यो जनः येन अर्थी यत् कामयते इत्यर्थः तस्य तत् प्रचरन्ती। ददती वाङ्मूर्त्तिः वाङ्मयी देवता सरस्वती मे मम सन्निधत्तां सान्निध्यं करोतु। वृत्तमत्र शालिनी, मात्तौ गौ चेच्छालिनी वेदलोकैरिति लक्षणात्।

(च) सूक्तं शोभनं वचनम्।

जिह्वे देवि ! सरस्वतीं भगवतीमद्य समग्रां कुरु
त्वां बद्धाञ्जलिराजशेखरकविः सोऽयं स्वयं याचते ।
स्तुत्येऽस्मिन्निजवंशमौक्तिकमणौ रामे विरामे द्विषां
कुण्ठा मे प्रतिभेव दैवतवशाद्वाचां प्रवृत्तिर्यदि ॥१५॥ (घ)

पारिपार्श्विकः । तत् किं स वर्णीयदि (११) ।

सूत्रधारः । ननु वर्णितमेव दैवज्ञेन ।

बभूव वल्मीकभवः कविः पुरा
ततः प्रपेदे भुवि भर्तृमेण्ठताम् ।
स्थितः पुनर्यो भवभूतिरेखया
स वर्त्तते सम्प्रति राजशेखरः ॥ १६ ॥ (ङ)

---

(११) तत् किं न वर्ण्यते ।

---

(घ) जिह्वे इति । हे जिह्वे ! रसने देवि ! त्वम् अद्य प्रथमतः समग्रां सम्पूर्णां भगवतीं सरस्वतीं कुरु धारय इत्यर्थः । सोऽयं राजशेखरकविः त्वां स्वयं बद्धाञ्जलिः सन् याचते । स्तुत्ये स्तवनीये अस्मिन् निजवंशस्य मौक्तिकमणौ मुक्तारत्नभूते द्विषां शत्रूणां विरामे विध्वंसकारिणि रामे मे मम प्रतिभा कुण्ठेव सङ्कुचिता एव वर्त्तते इत्यर्थः रामचरितं वक्तुमहं सर्वदा असमर्थ एवेति भावः, यदि दैवतवशात् भाग्यवशात् वाचां प्रवृत्तिः स्फुरणं जिह्वायां स्यादिति शेषः तदाहं रामचरितं वक्तुं शक्नुयामिति तात्पर्य्यार्थः । शार्दूलविक्रीडितं वृत्तम् ।

(ङ) बभूवेति । पुरा पूर्वकाले वल्मीकभवः वल्मीकोत्पन्नः वाल्मीकिः नाम कविः बभूव । ततः भुवि पृथिव्यां भर्तृमेण्ठतां भर्तृहरित्वं प्रपेदे प्राप । यश्च भवभूतिरेखया भवभूतिनाम्ना स्थितः सम्प्रति स राजशेखरः वर्त्तते । वंशस्थविलं वृत्तं, वदन्ति वंशस्थविलं जतौ जराविति लक्षणात् ।

अपिच । किं न श्रुतं सभ्यस्य ग्राहरवर्मणो वर्णनम् ।

पातुं श्रोत्ररसायनं रचयितुं वाचः सतां सम्मता
व्युत्पत्तिं परमामवाप्तुमवधिं लब्धुं रसस्रोतसः ।
भोक्तुं स्वादु फलं च जीविततरोर्यद्यस्ति ते कौतुकं
तद् भ्रातः !शृणु राजशेखरकवेः सूक्तीः सुधास्यन्दिनीः ॥१७॥(ख)

अपिच ।

आपन्नार्त्तिहरः पराक्रमधनः सौजन्यवारांनिधि-
स्त्यागी सत्यसुधाप्रवाहशशभृत्कान्तः कवीनां गुरुः ।
वर्ण्यं वा गुणरत्नरोहणगिरेः किं तस्य साक्षादसौ
देवो यस्य महेन्द्रपालनृपतिः शिष्यो रघुग्रामणीः १८॥ (ग)

---

(ख) पातुमिति । हे भ्रातः ! श्रोत्राभ्यां रसायनम् अमृतमय-औषधविशेषं पातुं सतां साधूनां सम्मताः वाचः रचयितुं, परमाम् उत्कृष्टां व्युत्पत्तिम् अवाप्तुं लब्धुं रसस्रोतसः रसप्रवाहस्य अवधिं पारं लब्धुं गन्तुमित्यर्थः तथा जीविततरोः जीवनरूपस्य वृक्षस्य स्वादु फलं भोक्तुं यदि कौतुकम् अस्ति, तत् तदा राजशेखरकवेः सुधास्यन्दिनीः अमृतवर्षिणीः सूक्तीः सुवचनानि शृणु शार्दूल-विक्रीड़ितं वृत्तम् ।

(ग) आपन्नार्त्तिहर इति । असौ कवीनां गुरुः राजशेखरः आपन्नानाम् आर्त्तिहरः पीड़ाप्रशमयिता, पराक्रमधनः शूरः सौजन्यवारां निधिः साधुतमः त्यागी दानशीलः, सत्यमेव सुधाप्रवाहः तस्य शश-भृत् चन्द्रः कान्तः जनरञ्जनश्च । गुणरत्नानां रोहणस्य उत्पत्तेः गिरेः पर्वतस्वरूपस्य अथवा गुणरत्नेषु रोहणगिरेः सर्वाश्रितप्रदस्य रोहणाख्यस्य कस्यचित् पर्वतविशेषतुल्यस्य तस्य किं वा वर्ण्यं वर्णनीयम् ? असौ साक्षात् देवः देवस्वरूपः, रघूणां रघुवंश्यानां

नेपथ्ये गीयते ।

मुक्कहरिणङ्कमण्डलपासप्पसरो बुधो विवुहवग्गो ।
ओत्थरिअ राहुविहुरं णलिणीणाहं समुल्लिहइ(१२)॥१८॥ (घ)

सूत्रधारः । आकर्ण्य कथमुपस्नुतदेवादेशैः (ङ) कुशी-लवैरुपक्रान्तमेव यदियं पुनःशेफस्य प्रावेशिकी ध्रुवा । विमृश्य ध्रुवा हि नाम नाट्यस्य प्रथमे प्राणाः । तथाहि ।

प्रथयति पात्रविशेषान् सामाजिकमनांसि रञ्जयति ।
अनुसंदधाति च रसान् नाट्यविधाने ध्रुवा गीतिः ॥२०॥ (च)

---

(१२) मुक्तहरिणाङ्कमण्डलपार्श्वप्रसरो बुधो विबुधवर्गः ।
अवतीर्य राहुविधुरं नलिनीनाथं समुल्लिखति ॥

---

यामणीः धुरन्धरः महेन्द्रपालः नाम नृपतिः यस्य शिष्यः । शार्दूलविक्रीडितं वृत्तम् ।

(घ) मुक्तेति । मुक्तः परित्यक्तः हरिणाङ्कमण्डलस्य चन्द्रस्य पार्श्वप्रसरः पार्श्वावस्थानं येन तादृशः बुधः विज्ञतमः विबुध्यन्त इति विबुधाः देवास्तेषां वर्गः अवतीर्य विमानादिति शेषः राहुणा विधुरं व्याकुलम् आक्रमणादिति भावः नलिनीनाथं चन्द्रं समुल्लिखति ।

(ङ) उपस्नुतदेवादेशैः देवादेशं स्रवद्भिः । उपक्रान्तं प्रारब्धम् । प्रावेशिकी प्रवेशसूचिका ध्रुवा गीतिविशेषः । प्रथमे आद्याः प्राणाः जीवनानि ।

(च) प्रथयतीति । ध्रुवा गीतिः नाट्यविधाने पात्रविशेषान् नटविशेषान् प्रथयति प्रवर्त्तयति, सामाजिकानां सभ्यानां मनांसि रञ्जयति आनन्दयति, रसान् अनुसन्दधाति च । उपगीतिर्वृत्तम् ।

तदेहावामप्यनन्तरकरणीयाय (छ) सज्जीभवाव इति निष्क्रान्तौ आमुखम् (ज)।

ततः प्रविशति शुनःशेफः ।

शुनःशेफः । प्रातःसवन (झ) एव यजमानं द्रष्टुमिच्छामि । तत्र कश्चित् सन्ध्यां वन्दमानस्य मे कालातिपातः संवृत्तः । ऊर्द्ध्वमवलोक्य कथमद्याप्यपटिष्ठमाञ्जिष्ठं च मञ्जु मार्त्तण्डीयं तेजः । तथाहि ।

उषःप्रवालद्रुमबालपल्लवा-
स्त्रिलोकहर्म्याङ्गणहस्तदीपिकाः ।
दिनद्विपेन्द्रारुणकर्णचामरा
मरीचयोऽर्कस्य लुठन्ति कोमलाः ॥ २१ ॥ (ञ)

---

(छ) अनन्तरकरणीयाय अतःपरं कर्त्तव्य कार्य्याय ।

(ज) आमुखं ।—नटी विदूषको वापि पारिपार्श्विक एव वा । सूत्रधारेण सहिताः संलापं यत्र कुर्वते । आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि वेति कथितलक्षणम् ।

(झ) सवने स्नाने । अपटिष्ठमाञ्जिष्ठम् अपटिष्ठा अनुज्ज्वला माञ्जिष्ठा रक्तवर्णद्रव्यभेदो यस्मात् तादृशं मञ्जिष्ठारागवदुज्ज्वलमित्यर्थः । मञ्जु मनोज्ञम् मार्त्तण्डीयं सौरीयम् ।

(ञ) उष इति । उषः प्रभाते सप्तम्यन्तमव्ययम् । प्रवाला विद्रुमा इव द्रुमाणां बालपल्लवाः नवकिसलयाः येभ्यः तादृशाः त्रयाणां लोकानां समाहारः त्रिलोकं तदेव हर्म्याङ्गणम् तस्य हस्तदीपिकाः करधृतदीपश्रेणयः, तथा दिनमेव द्विपेन्द्रः करिराजः तस्य अरुणा रक्ताः कर्णचामराः कोमला अर्कस्य मरीचयः किरणा लुठन्ति समन्तात् पतन्ति । वंशस्थविलं वृत्तम् ।

[illegible]त्वा ।

यदेतदग्रेसरमम्बरस्थं
ज्योतिः स पूषा पुरुषः पुराणः ।
अथास्य शिष्यः किल याज्ञवल्क्य-
स्तस्यापि राजा जनकः स योगी ॥ २२ ॥ (ट)

राक्षसरक्षोपघ्नं (ठ) रामभद्रमानेतुं सिद्धाश्रमादयोध्यां गच्छता तातविश्वामित्रेण यज्ञोपनिमन्त्रकस्य परमसुहृदः श्रोत्रियक्षत्रियस्य महाराजसीरध्वजस्य प्रतिनिधिः प्रेषितोऽस्मि । आसन्नसत्रसमयस्य (ड) चागच्छतोऽध्वरविधिरवभृथावशेषो वर्तत इति मे तर्कः । तदेष रात्रेः मौहूर्तिकोऽपि भवन् न गुरोरपराधभूमिः स्याम् इति परिक्रामति ।

---

(ट) यदिति । यत् एतत् अग्रेसरम् अग्रतः परिदृश्यमानं अम्बरस्थं गगनतलवर्त्ति ज्योतिः तेजः, स पुराणः पुरुषः पूषा मार्त्तण्डः । अस्य अस्य एव अथ शब्दोऽत्रानन्तरार्थः । शिष्यः याज्ञवल्क्यः किलेति प्रसिद्धौ याज्ञवल्क्यः अस्य शिष्य इति प्रसिद्धिरित्यर्थः । स च राजा योगी जनकः तस्य याज्ञवल्क्यस्यापि शिष्य इति शेषः । उपजातिवृत्तम् ।

(ठ) राक्षसरक्षोपघ्नं राक्षसेभ्यः या रक्षा तस्याः औपघ्नं रक्षोभयविध्वंसिनमित्यर्थः । यज्ञोपनिमन्त्रकस्य यज्ञे उपनिमन्त्रकस्य निमन्त्रणं कृतवत इत्यर्थः । श्रोत्रियक्षत्रियस्य श्रोत्रियः छान्दसः वेदपाठकः श्रोत्रियच्छान्दसौ समावित्यमरः स चासौ क्षत्रियः राजन्यश्चेति तथाभूतस्य महाराजसीरध्वजस्य जनकस्य ।

(ड) आसन्नसत्रसमयस्य आसन्नः उपस्थितः सत्रसमयो यस्य

प्रविश्य तापसच्छद्मना (ढ) रावणः । स्वगतम् ।

सम्प्रेषितो माल्यवताहमद्य
ज्ञातुं प्रवृत्तिं कुशिकात्मजस्य ।
पुरं निमीनां मिथिलां च गन्तुं
तां चाप्ययोध्यां रघुराजधानीम् ॥ २२ ॥ (ण)

कुलपुत्रक इति सप्रसादमादिष्टवास्मि (त)। यथा सीता भास्वीमयोनिजां जनककन्यां धूर्जटिधनुरारोपणपणपरिशेयां देवो दशाननः श्रुतवान्। तस्य मत्स्यमगडलचाराधिकारनियुक्ता सहोदरी शूर्पणखा नित्यमेवंविधानां राजकार्य्याणां सम्पादयित्री उचितविधायिनी च मे वत्सा। प्रभुचित्तानुवर्त्तनं हि सेवकजनसिद्धविद्या। सीतार्थी च मिथिलां प्रस्थातुकामो महाराजरावणः। किं बहुना-ऽयमपरो गरूडस्योपरि पिच्छिकोद्भेदो यत्किल प्रस्तास्य-

तयोक्तस्य। अध्वरविधिः यज्ञानुष्ठानम् अवभृथावशेषः अवभृथः दीक्षान्तस्नानम् अवशेषो यस्य तादृशः। सर्व एव यज्ञविधिरवसितः केवलम् अवभृथोऽवशिष्यते इत्यर्थः। सौस्नातिकः सुस्नातं पृच्छतीति तथोक्तः सुस्नातशब्दात् प्रश्नार्थे ठिकप्रत्ययः। अपराधभूमिः दोषभाजनम् स्यां भवेयम्।

(ढ) तापसच्छद्मना मुनिवेशेनेत्यर्थः।

(ण) सम्प्रेषित इति। अहमद्य माल्यवता राक्षसराजस्य मातामहेन कुशिकात्मजस्य विश्वामित्रस्य प्रवृत्तिं वार्त्तां ज्ञातुं तथा निमीनां निमिवंश्यानां पुरं मिथिलां रघुराजधानीं ताम् अयोध्याञ्च गन्तुं सम्प्रेषितः। उपजातिर्वृत्तम्।

(त) कुलपुत्रकः कुलस्य वंशस्य पुत्रकः वंशधुरन्धरं इत्यर्थः सप्रसादं सानुकम्पम्। धूर्जटिधनुरारोपणपणपरिशेयां धूर्जटेः हरस्य

मानेन निशाचरचक्रवर्तिना तत्रभवतो नीललोहितान्ते-वासिनः पार्वतीधर्मपुत्रकस्य जामदग्न्यस्य सकाशं परशु-मार्गणाय मायामयः प्रहितः । तदिदमसमञ्जसमिव पश्यामि । यतः ।

शमव्यायामाभ्यां प्रतिविहिततन्त्रस्य नृपतेः
परं प्रत्यावापः फलति क्षतसेकस्तरुरिव ।
बहुव्याजं राज्यं न सुकरमराज्यप्रणिधिभि-
र्दुराराधा लक्ष्मीरनवहितचित्तं चलयति ॥२४॥ (घ)

---

धनुरारोपणं अथवा धनुषः संयोजनम् एव पणः शुल्कं तेन परिणेया विवाह्या ताम् । मर्त्यमण्डलचाराधिकारनियुक्ता मर्त्यमण्डलेषु चारः कः केन पथा यातीति गुप्तानुसन्धानार्थं भ्रमणं तस्य अधिकारे व्यापारे नियुक्ता दयाननेनेति शेषः । प्रभुचित्तानुवर्त्तनं प्रभोः स्वामिनः चित्तस्य मनसः अनुवर्त्तनम् अनुसरणम् अभिप्रायानुसारेण कार्य्यसाधनमित्यर्थः । सेवकजनशिक्षाशिल्पा सेवकजनानां शिक्षा निश्चिता शिल्पा शिक्षासनम् । पिण्डकोद्भेदः विस्फोटकजननम् । प्रस्थास्यमानेन गमिष्यता । नीललोहितान्तेवासिनः शङ्करशिष्यस्य । मायामयः तदाख्यः राक्षसः । असमञ्जसमिव विसंष्ठुलमिव ।

(घ) शमेति । शमव्यायामाभ्यां शमेन माद्दवेन व्यायामेन पुरुषकारेण च इत्यर्थः प्रतिविहितः पर्य्यवलोकितः तन्त्रः राज्यभारः येन तादृशस्य नृपतेः प्रत्यावापः परराष्ट्रचिन्तनव्यापारः क्षतः सेकः यस्य तथोक्तः तरुरिव परम् अत्यन्तं फलति । बहुव्याजं छलपूर्णं राज्यं अराज्यप्रणिधिभिः न सन्ति राज्येषु प्रणिधयो येषां तैः तादृशैः नृप-तिभिः न सुकरं सुसाध्यम् । यतः लक्ष्मीः दुराराधा दुःखेन आराध्या सती अनवहितं चित्तं यस्य तथाभूतं नृपं चलयति भ्रंशयति ।

शार्दूलविक्रीडितं वृत्तम् ।

निश्चय। भद्रमुख! अनमात्यायत्तसिद्धेर्धिङ्मन्त्रित्वम् (द)। कुतः।

स्वेच्छया कुरुते स्वामी यत्किञ्चन यतस्ततः।
तत्तत् प्रतिचिकीर्षन्तो दुःखं जीवन्ति मन्त्रिणः॥२५॥ (ध)।

विचिन्त्य। तद्भवद्भविष्यदनर्थयोर्भवदनर्थं प्रथमं प्रतिकुर्वीतेति नीतिविदः। तदेष सीतावृत्तान्त एव प्रथमं प्रतिविधातव्यः। भद्रमुख! तत्त्वया मेनकाकामुकस्य त्रिशङ्कुयाजिनः क्षत्रियब्राह्मणस्य तस्य प्रवृत्तिरस्मासु निवेदनीया स च सिद्धाश्रमादुच्चलित इति श्रुतिः। तस्य दशरथः सीरध्वजश्च परं मित्रे। तत्र यदि दशरथं प्रति यायात् तदहमन्यापदेशेन दशकन्धरस्य यात्राभङ्गाय यतिष्ये। स हि नक्तंचराणां निसर्गामित्रो विश्वामित्रः। व्रतचर्यया वीरव्रतचर्यया च समर्थः। दशरथो-

---

(द) अनमात्यायत्तसिद्धेः अमात्येषु आयत्ता सिद्धिर्यस्य स न भवतीति अनमात्यायत्तसिद्धिः तस्य।

(ध) स्वेच्छयेति। स्वामी स्वेच्छया यतस्ततः यत्र तत्र यत् किञ्चन कुरुते। मन्त्रिणस्तु तत्तत् स्वामिकार्यं अविधिज्ञातमिति भावः प्रतिचिकीर्षन्तः प्रतिकर्त्तुमिच्छन्तः दुःखं यथा तथा जीवन्ति।

(न) भवद्भविष्यदनर्थयोः वर्त्तमानभाविनोरनिष्टयोः मध्ये भवदनर्थं वर्त्तमानमनर्थम्। नीतिविदः नीतिशास्त्रज्ञा इति वदन्तीति शेषः। प्रतिविधातव्यः प्रतिकर्त्तव्यः दूरव्य इत्यर्थः। मेनकाकामुकस्य मेनका नाम सुरसुन्दरी देवैस्तपोभीतैः विश्वामित्राय पुरा प्रेषिता, स तु तस्यामासक्तः कियन्तं कालं विषयसुखं बुभुजे इति पौराणिकी गाथात्रानुसन्धेया। त्रिशङ्कुयाजिनः पुरा त्रिशङ्कुनाम

ऽपि तथाविध एव । जनकश्च योगी शान्तो दान्तश्च । अहं तु मिथिलां पुरीं प्रत्युच्चलितस्तच्चरितमिमां विचित्य रघुराजधानीं यास्यामि । निरूप्य तादृश एव तादृशा-नामपसर्पः स्यादिति कृततापसवेषोऽपि महर्षिभ्यो बिभ्यत् सञ्चरामि । पुरोऽवलोक्य कथं तापसः ? । प्रत्यभिज्ञाय तथापि विश्वामित्रधर्मपुत्रः शुनःशेफः । भवत्वस्मादेव तत्किंवदन्तीलाभः ( न ) । उपसृत्य भगवन्नभिवादये ।

शुनःशेफः । अभिलषितेन युज्यस्व ।

इति परिक्रामतः ।

राक्षसः । विलोक्य भगवन् ! साप्तपदीनं ( प ) सख्यं मां मुखरयति तत्प्रष्टुकामोऽस्मि ।

---

सूर्यवंशीयः कश्चिन्नृपतिः कुलगुरुं वशिष्ठं सशरीरस्वर्गगमनाय यष्टु-कामो अनुरुरोध । वशिष्ठस्तु त्वं नैतादृक् पुण्यभागसीति प्रत्याख्यातः विश्वामित्रं वशिष्ठद्वेषिणमभिश्रियत् स च विश्वामित्रस्तम् अभिमत-यागार्थमङ्गीकृत्य अयाजयदिति पुराणस्थकथात्र अनुसन्धेया । क्षत्रिय-ब्राह्मणस्य आदौ क्षत्रियः पश्चात् ब्राह्मण इति तथोक्तस्य विश्वामित्रस्य इत्यर्थः । उच्चलितः क्वचित् गत इति श्रुतिः जनरवः । अन्यापदेशेन अपरं छलमाश्रित्य इत्यर्थः । व्रतचर्यया तपोऽनुष्ठानेन घोरव्रतचर्यया शौर्यप्रकटनेन च । विचित्य अन्विष्य अपसर्पः चरः अपसर्पश्चरः स्पश इत्यमरः । तत् किंवदन्तीलाभः तद्वार्त्तोपालम्भः ।

(प) साप्तपदीनं सप्तभिः पदैः सुप्तिङन्तैः साध्यम् अथवा विवाहानन्तरं कुशण्डिकायां सप्तपदीगमनेन स्त्रीपुंसयोरलौकिकं प्रेम जायते तन्निबन्धनं साप्तपदीनपदस्य सख्यवाचकत्वमिति बोध्यम् । मुखरयति वाचालयति ।

शुनःशेफः। ब्रह्मन्! अभिधीयताम्।

राघवः। विद्यास्नातक (फ) इव लक्ष्यसे तत् कथमयं स्वाध्यायप्रत्यूहः?।

शुनःशेफः। गुरोरादेशः।

राघवः। कस्ते गुरुः?।

शुनःशेफः। भगवान् विश्वामित्रः।

राघवः। स्वगतम्। भवतु कोपयाम्येनम्। सुप्रसन्न-कुपितानां हि भावज्ञानं द्रष्टव्यम्। प्रकाशम्। अथ कोऽयं विश्वामित्रो नाम?।

शुनःशेफः। सकोपम्। अये! द्वीपान्तरादिवागतोऽसि यद्भगवन्तं विश्वामित्रमपि न जानासि?।

न्यस्यान्यान् दक्षिणस्यां दिशि गगनमुनीन् सप्त कृप्तर्क्षपङ्क्ति-
र्नव्यं हव्यं च कृत्वा त्रिदशजनहृते सर्वयागाङ्गवर्गे।
वासिष्ठीं शापमुद्रां सपदि विदलयन् यो महासत्त्वबन्धे
मध्येव्योम त्रिशङ्कोः शतमखविमुखः स्वर्गसर्गं चकार॥२६॥(ब)

---

(फ) विद्यास्नातकः स्नातकः ब्रह्मचारिविशेषः विद्यासु स्नातकः विद्यास्नातकः। स्वाध्यायप्रत्यूहः वेदाध्ययनविघ्नः।

(ब) न्यस्येति। यः अन्यान् सप्त गगनमुनीन् दक्षिणस्यां दिशि न्यस्य स्थापयित्वा कृप्तः विरचितः ऋक्षाणां नक्षत्राणां पङ्क्तिः स्थानं येन तथाभूतः सर्वेषाम् यागाङ्गानां यज्ञसाधनसामग्रीणां वर्गे त्रिदशजनैः देवैः हृतेऽपि स्वत्वानुसन्धेयः। गुरुत्यागिनस्त्रिशङ्कोः स्वर्गानधिकारितया विद्वेषादिति भावः। नव्यं अवैदिकं हव्यं यागं कृत्वा च वाशिष्ठीं वशिष्ठसम्बन्धिनीं शापमुद्रां त्रिशङ्कुं प्रति न त्वं कदापि स्वर्गमाप्स्यसीत्येवं रूपां अभिशापवाणीं विदलयन् भञ्जयन् शतमखविमुखः

 

अपिच ।

स क्षत्रब्रह्ममहानिधिः क्षितिभुजां जेता मुनीनां च यः
पाणी यस्य परं पवित्रिततलौ चापस्रुचोर्धारणात् ।
विश्वामित्र इति त्रिलोकतिलकं त्वं वेत्सि नास्मद्गुरुं
योऽस्मिंश्चित्रशिखण्डिनां भगवतां धाता कृतः सप्तमः ॥२७॥ (भ)

सम्प्रत्येव राक्षसभयात् सत्रे दीक्षिष्यमाणः स भगवान् रक्षितारं रामभद्रं वरीतुमयोध्यां गतः ।

राक्षसः । सत्रासम् । भगवन् ! मा कोपीः । वटुस्वभावसुलभं चापलमत्रापराध्यति न पुनरस्मानम् । कः पुनः स्तम्भितरम्भं (य) भगवन्तं विश्वामित्रं न जानाति ।

---

गुरुत्यागात् इन्द्रस्य त्रिशङ्कुविरोधितया तमगणयन्नित्यर्थः महायत्नं महान् यत्न एव बन्धः बन्धनं अवलम्बनं यस्मिन् तादृशे मध्येव्योम व्योम्नो मध्यं तस्मिन् अव्ययीभावसमासः । त्रिशङ्कोः स्वर्गस्य सर्गं सृष्टिं चकार स्रग्धरावृत्तम् ।

(भ) क्षत्रेति यः क्षत्राणां ब्रह्मणां ब्राह्मणानाञ्च महानिधिः महारत्नं क्षात्रब्रह्मधर्मस्य परमोत्कर्षभूत इत्यर्थः । किञ्चेति चार्थः । क्षितिभुजां राज्ञां मुनीनाञ्च जेता पराभविता । यस्य पाणी चापस्रुचोः चापस्य धनुषः स्रुचः यज्ञाङ्गविशेषस्य च धारणात् परम् अतिशयेन पवित्रितं तलं ययोः तादृशौ । त्वं तथाभूतं त्रिलोकतिलकं त्रिभुवनप्रधानभूषणभूतं विश्वामित्र इति ख्यातं अस्मद्गुरुं न वेत्सि, यः धात्रा ब्रह्मणा अस्मिन् जगति भगवतां सर्वशक्तिमतां चित्रशिखण्डिनां सप्तानां देवर्षीणां तदुक्तम् मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः । वशिष्ठश्चेति, सप्तैते ज्ञेयाश्चित्रशिखण्डिनः । इति । सप्तमः सप्तानां पूरणः कृतः सप्तसंख्या पूरणस्य विद्यमानत्वेऽपि तेषां समत्वविवक्षया सप्तमत्वमुक्तमिति बोध्यम् ।

(य) स्तम्भितरम्भं स्तम्भिता रम्भा येन तं पुरा देवैस्तपोभङ्गार्थं

स्वगतम्। कृतं यत् कर्त्तव्यम्। सम्प्रति चारसञ्चारस्यावसरः।
प्रकाशम्। क्व पुनर्गुर्वादेशो गमयिता।

शुनःशेफः। मिथिलापुरीम्।

राक्षसः। किं तत्र ?

शुनःशेफः। गुरुसुहृदो राजर्षेः सीरध्वजस्य यज्ञोपस्थानम् ब्रह्मंस्त्वमपि वैदेशिक (र) इवासि तत् कुतः पुनरिदमागम्यते ?।

राक्षसः। स्वगतम्। भवत्वेवं तावत्। प्रकाशम्। (ल) रोहणाचलपरिसरोत्संगादगस्त्याश्रमतः।

शुनःशेफः। किञ्चित् सानुशयम् (व)। कोऽयमगस्त्यो नाम ?।

राक्षसः। विहस्य। भगवन्! कृतप्रतिकृतमेतत् (श)। निजोदयनिर्विषीकृतभुवनाम्भस्कं कः पुनरगस्त्यं न जानाति।

---

प्रेषिता सुरनारी रम्भा विश्वामित्रं दृष्ट्वैव स्तम्भिता बभूवेति पुराणमनुसन्धेयम्। चारसञ्चारस्य चाराणां प्रणिधीनां सञ्चारस्य करणीयव्यापारस्य। अवसरः समयः। गमयिता प्रेरकः।

(र) वैदेशिकः विदेशादागतः।

(ल) रोहणाचलपरिसरोत्संगात् रोहणो नाम पर्वतः गिरिः तस्य परिसरस्य आसन्नतरस्थानस्य उत्संगात् क्रोडभूतात्।

(व) सानुशयं सानुतापम्।

(श) कृत प्रतिकृतं कृतस्य मत्कृतस्य कर्मणः विश्वामित्रानुप्रश्नस्य प्रतिकृतं प्रतीकारः। यथाहं कोऽयम् विश्वामित्र इति पृष्टवान् भवानपि कोऽयमगस्त्यो नामेति तथा पृष्टवानिति मत्कृतस्य प्रतिक्रिया जातेति भावः। निजोदय निर्विषीकृत भुवनाम्भस्कं निजेन स्वेन उदयेन निर्विषीकृतानि विषरहितीकृतानि भुवनानां अम्भांसि येन तं अगस्त्योदये जलानि प्रसीदन्तीति प्रसिद्धिः।

निषेद्धा विन्ध्यस्य प्रथमपृथुकाचान्तजलधिः
कृतापद्वातापेर्न स कलसभूः कस्य विदितः ? ।
गुरुर्लोपामुद्राहृदयदयितो यस्त्रिजगत-
स्त्वयीं माणिक्याद्रेरधिवसति वेश्मासदृशा ॥२८॥ (घ)

---

(घ) निषेद्धेति विन्ध्यस्य अद्रेः निषेद्धा स्तम्भयिता पुरा सुमेरु जिगीषुर्विन्ध्याद्रिः सूर्य्यमात्मप्रदक्षिणीकरणार्थमनुरुरोध । नाहं निधातृनियममन्यथा कर्त्तुं शक्नुयामिति तेन प्रत्याख्यातस्तद्गतिरोधाय ऊर्द्धमाक्रान्तुमारेभे । तद्दृष्ट्वा देवैस्तत्रैर्याचितो महामुनिरगस्त्यस्तं पर्वतं शिष्यतया वर्त्तमानमुपेत्य अहं दक्षिणस्यां दिशि कार्य्यार्थं गमिष्यामि यावत् नागमिष्यामि तावत् त्वया नोर्द्धमाक्रमितव्यमित्युक्त्वा विन्ध्यं उन्नमनाच्चारयदिति पुराणगाथात्रानुसन्धेया । प्रथमेन आद्येन एकेनेत्यर्थः चुलुकेन गण्डूषेण आचान्तः पीतः जलधिर्येन तथोक्तः । तथा वातापेः तन्नाम्नो राक्षसस्य कृता आपद् विध्वंसो येन तथभूतः । पुरा आतापि वातापिश्च नाम द्वौ भ्रातरौ असुरौ मुनिवेशेन विचरन्तौ प्रत्यहं एकं मुनिं वा ब्राह्मणं आतिथ्यार्थं निमन्त्रयामासतुः । अथागते अतिथौ वातापि भ्रातरं आतापिं मेषरूपिणं कृत्वा तं विनाश्य तन्मांसेन अतिथिं पर्य्यचरत् । ततश्चातिथिं कृताहारं निश्चिन्तं सुप्तं दृष्ट्वा तस्मिन् वातापौ दुरात्मनि आतापे ! निष्क्रमस्वेति शनैः कथयति स आतापिः कुक्षिस्थः तमतिथिं विदार्य्य निर्गच्छतिस्म । ततस्तौ सुखेन तन्मांसं भक्षयन्तौ कालं निन्यतुः । एकदा अगस्त्ये अतिथौ तथा आतिथ्यदृप्ते निश्वाम्यति स पूर्ववत् आतापे ! निष्क्रमस्वेति भ्रातरमाह्वयतिस्म । अगस्त्यस्तु क्व ते भ्राता मया भक्षितः कुक्षौ मे परिपाकं गत इति वदन् तं मायाविनं तदानीं घोरकोपिणं भस्मसाच्चकार । तदा प्रभृति आतापिर्भक्षितो येन वातापिश्च महासुरः समुद्रः शोषितो येन स मेऽगस्त्यः प्रसीदतु इति लोकैरगस्त्यः स्तूयते

शुनःशेफः । परस्परं गुर्वधिक्षेपादुभावपि प्रायश्चित्तिनौ वर्त्तावहे (ख)।

रावणः । तदनुजानीहि मामघमर्षणाय (छ)।

शुनःशेफः । (च) निर्वर्त्तितगुर्वाज्ञोऽहमपि प्रायश्चित्ते यतिष्ये । किन्तु किञ्चित्प्रष्टव्यमस्ति ।

रावणः । नियोजय ।

शुनःशेफः । लङ्कोपकण्ठवर्त्तिनि तत्राश्रमपदे कश्चिदस्ति दशकण्ठोदन्तः (क) ।

रावणः । यत् किल (ख) स्थाणवीयधनुरारोपणपणेन रावणः सीतां परिणेष्यतीति तत्र कश्चिदेवंविधः ।

---

इति पौराणिकी वार्त्ता । कलसभूः कुम्भयोनिः पुरा मैत्रावरुणयोरुर्वशीदर्शनसञ्जातविकारयोः रेतः कुम्भे पपात तेनास्य समुत्पत्तिर्जातेति पुराणम् । सः अगस्त्यः कस्य न विदितः ? अपितु सर्वस्यैवेति भावः । त्रिजगतो गुरुः लोपामुद्रायाः नाम राजकन्याया हृदयदयितः मनोहरपतिः यः वैश्वानररूपा तापसप्रवरः माणिक्याद्रेः समीपे इति त्रयीं त्रिवेदीं अधि अधिकृत्य सततं ऋक्सामयजूंषि समाम्नयन् वसति । शिखरिणी वृत्तमत्र ।

(ख) गुर्वधिक्षेपात् गुरोर्विश्वामित्रस्य अगस्त्यस्य च अधिक्षेपात् अवमानात् मात्रापि अस्मात्क्लेशापरिचयप्रकटनेनेति भावः । प्रायश्चित्तिनौ प्रायश्चित्तार्हौ वर्त्तावहे भवावः ।

(छ) अघमर्षणाय । अघानि मर्षयति ध्वंसयतीति अघमर्षणो नाम मन्त्रविशेषः तस्मै तन्मन्त्रपाठायेत्यर्थः ।

(च) निर्वर्त्तितगुर्वाज्ञः । अनुष्ठितगुरुनिर्देशः ।

(क) लङ्कोपकण्ठवर्त्तिनि लङ्कासन्निहिते इत्यर्थः दशकण्ठोदन्तः दशकण्ठस्य दशाननस्य उदन्तः वृत्तान्तः ।

(ख) स्थाणवीयधनुरारोपणपणेन स्थाणोर्हरस्य इदं स्थाणवीयं यद्धनुः तस्य आरोपणमेव पणः शुल्कं तेन ।

शुनःशेफः । विहस्य स्वगतम् । अये ! (ग) लघुचित्तवृत्ति-
निर्भिन्नहृदयार्थो राक्षस इवैषः । युक्तियुक्तं चैतत् ।

अगर्भसम्भवां कन्यां दशकण्ठो जगज्जयी ।
आरोप्य हरकोदण्डं कथं न परिणेष्यति ? ॥ २९ ॥ (घ)

प्रकाशम् । ब्रह्मन् ! अनुमन्यस्व मां मिथिलाप्रवेशनाय ।

राक्षसः । मामपि कार्य्यवशादितो गत्वा प्रायश्चि-
त्ताय । इति निष्क्रान्तौ । शुद्धविष्कम्भकः (ङ) ।

ततः प्रविशति पुष्पकेण रावणः प्रहस्तश्च ।

रावणः ।

यस्यारोपणकर्मणापि बहवो वीरव्रतं त्याजिताः
कार्य्यं सज्जितबाणमीश्वरधनुस्तद्दोर्भिरेभिर्मया ।
स्त्रीरत्नं तदगर्भसम्भवमितो लभ्यं च लीलाधिता
तेनैषा मम फुल्लपङ्कजवनी जाता दृशां विंशतिः ॥३०॥ (च)

---

(ग) लघुचित्तवृत्तिः लघ्वी चित्तस्य वृत्तिर्यस्य तादृशः क्षुद्रचेताः,
निर्भिन्नहृदयार्थः निर्भिन्नः प्रकाशितः हृदयार्थो येन तादृशः ।

(घ) अगर्भेति । जगज्जयी त्रिभुवनजेता दशकण्ठः हरकोदण्डं
आरोप्य ज्यया सङ्गमय्य अगर्भसम्भवां अयोनिजां कन्यां सीतां कथं
न परिणेष्यति अवश्यमेव परिणेष्यतीत्यर्थः ।

(ङ) शुद्धविष्कम्भकः वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः ।
सङ्क्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शित इत्युक्तलक्षणो विष्क-
म्भकः । शुद्धश्चासौ विष्कम्भकश्चेति तथोक्तः तदुक्तं मध्येन मध्य-
माभ्यां वा पात्राभ्यां संप्रयोजितः । शुद्धः स्यात् स तु सङ्कीर्णो
नीचमध्यमकल्पित इति ।

(च) यस्येति । यस्य धनुषः आरोपणकर्मणापि भक्तो दूरे

प्रहस्तकः । सर्वतोऽवलोक्य कथं दशाननदेवदर्शनाकाङ्क्षि
वृन्दारकवृन्दमिदमयतः समयमपि गगनाभोगं बिभर्त्ति ।
साक्षेपम् । (छ)

वह्ने ! निह्नोतुमर्चिः परिचिनु पुरतः सिञ्चतो वारिवाहान्
हेमन्तस्यान्तिके स्थाः प्रथयति दवथुं येन ते ग्रीष्म ! नोष्मा ।
मार्त्तण्डाः ! चण्डतापप्रशमनविषये धत्त नाडीं जलार्द्रां
देवो नान्यप्रतापं त्रिभुवनविजयी मृष्यते श्रीदशास्यः ॥३१॥ (ज)

---

आसताम् आरोपणेऽप्य सामर्थ्यप्रकटनेन बहवो राजान इति शेषः वीरव्रतं त्याजिताः लज्जया वीराभिमानितां लङ्का गता इत्यर्थः तत् ईश्वरधनुः शैवं धनुः मया एभिः दोर्भिः भुजैः त्रिगत्या इतिशेषः सज्जः संयोजितः बाणो यस्मिन् तत् कार्य्यम् । इतः कार्य्यात् तत् अगर्भसम्भवं स्त्रीरत्नं लभ्यम् । तेन हेतुना मम एषा इयां चक्षुषां नेत्राणां विंशतिः फुल्ला विकासं गता पङ्कजयनी कमल-श्रेणी लीलायिता विलासवती जाता । शार्दूलविक्रीडितं वृत्तम् ।

(छ) वृन्दारकवृन्दं देवसमूहः । बिभर्त्ति आप्नोति । साक्षेपं सतिरस्कारम् ।

(ज) वह्ने इति । हे वह्ने ! अग्ने ! अर्चिः स्वं तेजः निह्नोतुं गोपितुं सम्वरितुमित्यर्थः परिचिनु अभ्यस्य । हे ग्रीष्म ! सिञ्चतः वर्षतः वारिवाहान् मेघान् परितः वायन्द्रोऽत्राध्याहार्य्यः हेमन्तस्य अन्तिके समीपे स्थाः भव तिष्ठ इत्यर्थः येन ते तव उष्मा उष्णत्वं दवथुं तापं न प्रथयति आविष्करोति । हे मार्त्तण्डाः ! भास्कराः ! द्वादशात्मकत्वात् बहुवचनम् । चण्डतापस्य उग्रतापस्य प्रशमनविषये शान्त्यर्थं जलार्द्रां नाडीं प्रभां धत्त धारयत । यतः त्रिभुवनविजयी देवः श्रीदशास्यः अन्येषां प्रतापं न मृष्यते सहते । चतुर्थपादवाक्यस्य हेतुत्वेन निर्देशात् काव्यलिङ्गमलङ्कारः तदुक्तं हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते इति । स्रग्धरावृत्तम् ।

रावणः । सौत्सुक्यं हंहो ! (ज) नभस्तरुपुष्प ! पुष्पक ! किञ्चिदुच्यसे ।

सेवागतामरविमानसहस्रसेनाः
सीमन्तयन् मम मनोजयिना जवेन ।
तां मैथिलस्य नृपतेर्व्रज राजधानीं
यत्राद्भुतं हरधनुर्धरणीसुता च ॥ ३२ ॥ (झ)

प्रहस्तः । किमद्याप्युत्कण्ठते देवः । नन्ववतीर्णममुना (ञ) गगनार्णवपोतपात्रेण विमानराजेन जनकमन्दिरे । तद्भवतु देवागमनं सीरध्वजाय निवेदयामि । उच्चैः ।

वामैराकृष्य वेगात् प्रगुणितशिरसः पाणिभिः केशबन्धान्
सव्यैरव्याजशस्त्रप्रणयनपटुभिश्छिन्दतः कण्ठपीठीः ।
मन्वानस्यानुरूपामुपकरणगतिं प्रीतये चन्द्रमौले
र्यस्यात्तस्तोषपोषं व्यधित दशमुखो विंशतिर्बाहवश्च ॥ ३३ ॥ (ट)

---

(ज) नभस्तरुपुष्प ! नभ एव तरुः तस्य पुष्पं तत् सम्बुद्धौ ।

(झ) सेवेति । हे पुष्पक ! त्वं मम सेवार्थं आगतानि यानि अमरविमानानि देवयानानि तेषां सहस्रसेनाः सीमन्तयन् सीमन्तीकुर्वन् मनोजयिना मनसोऽपि अधिकेन वेगेन यत्र अद्भुतं हरधनुः, धरणीसुता जानकी च विद्यते तां मैथिलस्य नृपतेः राजधानीं व्रज गच्छ । वसन्ततिलकं वृत्तम् उक्तं वसन्ततिलकं तभजाजगौग इति लक्षणात् ।

(ञ) गगनार्णवपोतपात्रेण गगनमेव अर्णवः तस्य पोतपात्रं तरिरूपं यानं तेन ।

(ट) वामैरिति । वामैः पाणिभिः भुजैः वेगात् प्रगुणितानि भूषितानि शिरांसि यैः तादृशान् केशबन्धान् आकृष्य

सोऽयं स्वयंग्रहणदुर्ललितो दशास्य-
स्त्वां याचते दुहितरं पणपूर्वमेव ।
सम्बन्धसन्धिममुना च सहानुभूय
वंशो निमेर्जयतु यावदियं धरित्री ॥ ३४ ॥ (ठ)

कर्णं दत्त्वाऽऽकाशे किं ब्रूथ? सोऽयं पुराणब्रह्मवादी याज्ञवल्क्यशिष्यो राजर्षिर्जनक (ड) आङ्गिरसेन पुरोधसा सार्धमितोऽभिवर्त्तते। तदिदमास्थानमण्डपोकण्ठमधिष्ठीयताम् । इत्यनन्तरतः ।

ततः प्रविशति जनकः शतानन्दश्च ।

जनकः ।

---

पञ्चमोष्ठैः हरस्य प्रीतये सन्तोषाय अनुरूपां उपकरणगतिं उपचारप्रयोगं सम्भाव्य अतएव अव्याजं अकपटं यथा तथा शस्त्रप्रणयने पटुभिः असिप्रयोगनिपुणैः सव्यैः दक्षिणैः पाणिभिः कण्ठपीठीः कण्ठनालीः दधेति शेषः छिन्दतः कृन्ततः यस्य दशानां मुखानां समाहारः दशमुखी विंशतिर्बाहवश्च अन्तस्तोषस्य मनस्तुष्टेः पोषं वृद्धिं व्यधित, स इति परेणान्वयः कार्य्यः । हरप्रीतये यः दशमुखानि छित्त्वा बलीनददादित्यर्थः । स्रग्धरावृत्तम् ।

(ठ) स इति । सोऽयं दशास्यः रावणः स्वयं ग्रहणे बलाद्ग्रहणे इत्यर्थः दुर्ललितः कृताभ्यास इत्यर्थः अपिरत्राध्याहार्य्यः । त्वां पणपूर्वमेव पणपूरणं कृत्वैवेत्यर्थः दुहितरं कन्यां जानकीं याचते । अमुना सह सम्बन्धसन्धिं यौनविधिमनुभूय कृत्वा यावत् इयं धरित्री स्थास्यतीति शेषः । तावत् निमेर्वंशः जयतु सर्वोत्कर्षेण वर्त्तताम् । वंशस्थविलं वृत्तम् ।

(ड) आङ्गिरसेन अङ्गिरसो अपत्यं पुमान् आङ्गिरसः

यन्मीमांसयतः श्रुतीः शतपथाः साक्षात्कृतब्रह्मणो
विश्वामित्रमहामुनेरपि वयं वर्त्तामहे चेतसि ।
अप्युल्लीढकषायपावनधियां सद्यः समाधिस्पृशां
तत्सङ्गीतकमन्तरेण हृदयं हर्षान्नरीनर्ति नः ॥ ३५ ॥ (ढ)

शतानन्दः । राजर्षे ! (ण) सूर्य्यप्रशिष्य ! सत्याशिषस्ते गुरवो यद्भगवान् विश्वामित्रोऽपि मैत्रीमनुरुध्यते । प्रहृष्टः । तदेव (त) पठति ।

---

तेन पुरोधसा पुरोहितेन पुरोधास्तु पुरोहित इत्यमरः । शतानन्देनेत्यर्थः । आस्थानमण्डपोपकण्ठं सभागृहान्तिकम् ।

(ढ) यदिति । यत् यस्मात् शतं पन्थानो यासां ताः श्रुतीः वेदान् मीमांसयतः विचारयतः, तथा साक्षात् कृतः तपोभिः प्रत्यक्षीकृतः ब्रह्मा येन तथाभूतस्य विश्वामित्रमहामुनेरपि चेतसि वयं वर्त्तामहे तिष्ठामः यज्ञविघ्नसमुत्सारणार्थं प्रतिनिधिं सुतःशेफं प्रेषयता तेन अनुग्राह्यत्वेन अस्माकं स्मरणादिति भावः । तत् तस्मात् उल्लीढकषायपावनधियां उल्लीढः उच्चैरतिशयेन लीढः पीतः कषायः विस्वादरसविशेषो यैः ते उल्लीढकषायाः तपोनिष्ठतया इन्द्रियदमनार्थं शरीरशोषणाय कषायरसपायिनः पावनधियः पवित्रमतयश्च ते तथोक्तानामपि नः अस्माकं हृदयं समाधौ चित्तसंयमे स्पृशं सत् सद्यः सङ्गीतं अन्तरेण विनापि हर्षात् तपोधनस्य विश्वामित्रस्य समादरजनितादिति भावः नरीनर्त्ति पुनः पुनरतिशयेन नृत्यति । शार्दूलविक्रीड़ितं वृत्तम् ।

(ण) सूर्य्यप्रशिष्य ! सूर्य्यशिष्यस्य याज्ञवल्क्यस्य शिष्य इत्यर्थः शिष्यस्य शिष्यः प्रशिष्य इत्यभिधानात् । सत्याशिषः सत्या आशिषः शुभाशंसनानि येषां ते । मैत्रीमनुरुध्यते मित्रत्वेन त्वामनुमन्यत इत्यर्थः ।

(त) तदेव यन्मीमांसयतेत्यादि पूर्वोक्तमित्यर्थः ।

जनकः । आश्चर्यं । अये ! तपस्यतामपि न (च) निरत्ययः सुखप्रत्ययः । यत् सीतार्थी दशकण्ठोऽपि गृहानुपगच्छति ।

शतानन्दः । अहह ! आश्चर्य्यमेकोऽपि गरीयान् दोषः समग्रमपि (ट) गुणग्रामं दूषयति । तथाहि ।

आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी ।
उत्पत्तिर्द्रुहिणान्वये च तदहो ! नेदृग्वरो लभ्यते
स्याच्चेदेष न रावणः क्वनु पुनः सर्वत्र सर्वे गुणाः ? ॥२६॥(ध)

---

(च) निरत्ययः अत्ययरहितः विघ्नरहित इत्यर्थः । सुखप्रत्ययः पात्रे कन्यां दत्त्वा सुखी भविष्यामीति सुखप्रत्याशा इत्यर्थः ।

(ट) गुणग्रामं गुणराशिम् ।

(ध) आज्ञेति आज्ञा रावणस्येति शेषः । शक्रस्य इन्द्रस्य यः शिरोमणिः शिरोरत्नं तस्य प्रणयिनी शक्रेण शिरसा ध्रियते इत्यर्थः । शास्त्राणि नवं नूतनं निर्मलमित्यर्थः चक्षुः रावणस्य सम्यक् शास्त्रदर्शित्वमस्तीति भावः । भूतपतौ पिनाकिनि हरे भक्तिः, लङ्का इति ख्याता दिव्या पुरी पदं वासस्थानं तथा द्रुहिणस्य ब्रह्मणः अन्वये वंशे उत्पत्तिः ब्रह्मणस्य पुलस्त्यस्य पौत्रत्वादिति भावः । तस्मात् अहो इति आश्चर्य्यसूचकमव्ययम् । ईदृक् वरः न लभ्यते केनापीति शेषः । चेत् यदि एषः रावणः, रावयति क्रन्दयति लोकानिति व्युत्पत्तिदूषितो न स्यात् । क्व कुत्र नु वा नुशब्दो वितर्के । सर्वत्र सर्वस्मिन् जने सर्वे गुणा वर्त्तन्ते ? इति शेषः न कुत्रापीत्यर्थः । सामान्येन विशेषसमर्थनरूपोऽयमर्थान्तरन्यासः । यदुक्तं दर्पणकारेण । सामान्यम् वा विशेषेण विशेषस्तेन वा यदि । कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते । साधर्म्येणेतरेणार्थान्तर-न्यासोऽष्टधा ततः इति । शार्दूलविक्रीडितं वृत्तम् ।

जनकः । सत्येदम् । भगवन्नौतथ्य ! (न) गृहानुपगताय सीतार्थिने लङ्केश्वराय किमुत्तरम् ? ।

शतानन्दः । राजर्षे ! चिरं दत्तमेवोत्तरम् ।

जनकः । भगवन् ! केन ।

शतानन्दः । भगवता (प) शिपिविष्टेन ।

जनकः । किमिव ।

शतानन्दः । स्वधनुः ।

जनकः । निःश्वस्य ।

गिरिशधनुरधिज्यं रावणः कर्त्तुमीष्टे
करतुलितहराद्रेर्दुष्करं किं हि तस्य ? ।
किमुत न स निमीनां यौनसम्बन्धयोग्यः ?
तदिति हि मम चित्तं चिन्तया मूर्च्छतीव ॥२७॥ (फ)

शतानन्दः । राजर्षे ! मा विषीदस्व । (ब) पाणिप्रणयिनं

---

(न) औतथ्य ! उतथ्यस्य अङ्गिरः पुत्रस्य अपत्यं पुमान् औतथ्यः तत्सम्बुद्धौ । किमुत्तरं देयमिति शेषः ।

(प) शिपिविष्टेन हरेण ।

(फ) गिरीति । रावणः गिरिशधनुः शैवं कार्मुकं अधिज्यं ज्यायुक्तं कर्त्तुं ईष्टे प्रभवति । हि यतः करेण तुलितः हराद्रिः कैलासः येन तादृशस्य तस्य किं दुष्करं ? न किमपीत्यर्थः । स च किमुत कथं वा निमीनां मद्वंश्यानां यौनसम्बन्धयोग्यः न । अपितु योग्य एव ब्रह्मान्वयोत्पन्नत्वादिति भावः । तदिति तदेवं हेतोः मम चित्तं चिन्तया मूर्च्छतीव इति कर्त्तव्यताम् नावधारयतीवेत्यर्थः । वंशस्थविलं वृत्तम् ।

(ब) पाणिप्रणयिनं स्वभुजसङ्गिनं कोदण्डदण्डं धनुर्यष्टिम् विघोढ़ा परिणेता । प्रचण्डश्चासौ खण्डः प्रचण्डखाण्डरखण्डः । श्रीकण्ठस्य

कोदण्डदण्डं प्रमादीकुर्वतः पार्वतीपतेर्विवोढा कः सीताया अभिमत इति न जानीमः। इदं तु प्रतिजानीमहे यदुत न प्रचण्डदोःखण्डोऽपि दशकण्ठः श्रीकण्ठमनोषितमपरथा प्रस्थापयिष्यति। तदेहि दुर्वृत्तमपि मुनिपुत्रमुचितेन सम्भावयाव इत्युत्थाय परिक्रामतः।

जनकः। पुरोऽवलोक्य। दिष्ट्या दृष्ट (भ) पुलस्त्यप्रसवाः प्रमोदामहे। लङ्केश्वर! इत इतो भवानिदमासनमास्थताम्। सर्वे यथोचितमुपविशन्ति।

शतानन्दः। ऋषिपुत्रको दिव्यश्चासि (म) तत्कृतमातिथेयीं कुर्मः।

महोक्षो वा महाजो वा श्रोत्रियाय विशस्यते।
निवेद्यते तु दिव्याय स्रक्सुगन्धिनिधिर्विधिः॥ ३८॥ (य)

---

विष्णो र्मनीषितं वाञ्छितम् अपरथा अन्येन प्रकारेण प्रस्थापयिष्यति प्रस्थापयितुम् यक्ष्यतीत्यर्थः। मुनिपुत्रं मुनेर्विश्रवसःपुत्रं रावणम्। सम्भावयावः सत्कुर्मः।

(भ) दृष्टपुलस्त्यप्रसवाः दृष्टः पुलस्त्यस्य ब्रह्मसुतस्य प्रसवः तनयः रावण इत्यर्थः यैः तथाभूताः।

(म) आतिथेयीं अतिथिविहितं सत्कारम्।

(य) महोक्ष इति महान् उक्षा वृषः महोक्षः वा महान् अजः छागः महाजः वा श्रोत्रियाय वेदव्रतविप्राय स्वगृहगतायेति शेषः विशस्यते वध्यते आतिथ्यार्थेति भावः। दिव्याय अमानवीयाय तु श्रोत्रियाय स्रक्सुगन्धिनिधिः सुगन्धस्रुचा यज्ञाङ्गविशेषेण सह सुगन्धिर्निधिः रत्नविशेषरूपो विधिः निवेद्यते दीयते।

रावणः । ब्रह्मर्षे ! इयमस्माकमातिथेयी
यत् पार्वतीहठकुचग्रहणप्रवीणे
पाणौ स्थितं पुरभिदः शरदां सहस्रम् ।
गीर्वाणसारकणनिर्मितगात्रमत्र
तन्मैथिलीक्रयधनं धनुराविरस्तु ॥ ३८ ॥ (र)

प्रहस्तः । आविरस्तु सममगर्भसम्भवया सीतया । (ल)

रावणः । सप्रत्याशं स्वगतं च ।

निर्माल्यं नयनश्रियः कुवलयं वक्त्रस्य दासः शशी
कान्तिः प्रावरणं तनोर्मधुमुचो यस्याश्च वाचः किल ।
विंशत्या रचिताञ्जलिः करतलैस्त्वां याचते रावण-
स्तां द्रष्टुं जनकात्मजां हृदय ! हे नेत्राणि मित्रीकुरु ॥४०॥ (व)

---

(र) यदिति । यत् पुरभिदः त्रिपुरारेः पार्वत्याः हठेन सहसा यत् कुचग्रहणं तत्र प्रवीणे तत्परे पाणौ शरदां वत्सराणां सहस्रं स्थितम्, अत्र मत्सन्निधौ इत्यर्थः तत् गीर्वाणानां देवानां सारकणेन निर्मितं गात्रं शरीरं यस्य तथोक्तं देवानां शरीरेभ्यः सारांशाहृत्य निर्मितमित्यर्थः, मैथिल्याः सीतायाः क्रयस्य धनं धनुः आविरस्तु प्रकटीभवतु ।

(ल) अगर्भसम्भवया अयोनिजया जानक्या समं सह ।

(व) निर्माल्यमिति । कुवलयं नीलोत्पलं यस्याः नयनश्रियः नेत्रकान्त्याः निर्माल्यं निवेदितद्रव्यम् । शशी चन्द्रः वक्त्रस्य यस्याः इति सर्वत्र संबध्यते दासः किङ्करः । कान्तिः लावण्यं तनोः अङ्गस्य प्रावरणम् आच्छादनम् । वाचः मधुमुचः मधुवर्षिणः किल निश्चितम् । रावणः विंशत्या करतलैः रचितः अञ्जलिः येन तथोक्तः सन् तां जानकीं याचते । हे हृदय ! तां जनकात्मजां द्रष्टुं नेत्राणि विंशतिमिति शेषः मित्रीकुरु सहायान् कुरु ।

शतानन्दः । इदमाविर्भवति दशानन ! माहेश्वरं धनुः ।

रावणः । स्वात्मानं प्रतीदमाविर्भवति माहेश्वरं धनुर्न-पुनरयापि माधवम् (ग) ।

शतानन्दः । सहेलमालोक्य ।

स्फूर्जद्वज्राहतसुरगिरिस्वर्णचूर्णच्छटाभि-
स्तुल्योल्लासैस्त्रिभुवनदृशां दत्तदौस्थित्यमुद्रः ।
आशारम्भाण्यमविरतं रुद्रकोदण्डदण्डः
स्वेच्छाचण्डो रचयति रुचां पञ्जरैः पिञ्जराणि ॥४१॥ (घ)

नेपथ्यं प्रति कः कोऽत्र भोः (ङ) सौविदल्लेषु ? कन्यान्तः-पुरादागच्छतु जनकराजकन्या । नेपथ्ये इयमियम् । ततः प्रविशति सीता सख्यौ च ।

सीता । ससाध्वसौत्सुक्यम् (च) । अम्महे ! रक्खसो त्ति सुणिअ सच्चं साज्झसकोदूहल्लाणं अन्तरे वट्टामि ।

---

(१२) अहो ! राक्षसः इति श्रुत्वा सत्यं साध्वसकौतूहलयोरन्तरे वर्ते ।

---

(ग) माधवं मधुघस्य इदं मदनमस्वभ्रीत्वर्थः ।

(घ) स्फूर्जदिति । अथ स्वेच्छया चण्डः भीषणः रुद्रस्य कोदण्डदण्डः धनुः स्फूर्जता स्फुरता वज्राहतस्य सुरगिरेः सुमेरोः स्वर्णचूर्णानां छटाभिः प्रभाभिः तुल्यः उल्लासः प्रकाशः येषां तैः रुचां तेजसां पञ्जरैः समूहैः त्रिभुवनानां भुवनत्रयवासिनां दृशां चक्षुषां दत्ता दौस्थित्येन दुःखेनावस्थानेन मुद्रा सङ्कोचो येन तथोक्तः सन् आशारम्भाणि दिगन्तराणि अविरतं पिञ्जराणि पिङ्गवर्णरञ्जितानि रचयति करोति । वृत्तमत्र मन्दाक्रान्ता ।

(ङ) सौविदल्लेषु कञ्चुकिषु सौविदल्लाः कञ्चुकिन इत्यमरः ।

(च) साध्वसकौतूहलयोः साध्वसं भयं कौतूहलम् औत्सुक्यं तयोः । वर्ते तिष्ठामि ।

एका । भट्टिदारिए ! रक्खसोत्ति मा णं परिहव रक्खसचक्कवट्टीक्खु एसो ( १४ ) ।

सीता । अहिअदरं उव्वेअणिज्जो ( १५ ) ।

द्वितीया । अह किं मन्तेध किं कादुं इध आअदो ( १६ ) ।

प्रथमा । सङ्करसरासणं समारोवइदुं ( १७ ) । (ग)

द्वितीया । णं एव्वं भण भट्टिदारिअं परिणेदुं ( १८ ) ।

प्रथमा । अयि (क) उड्डामरसीले ! कहं पुण असङ्करो अलद्धसङ्करप्पसादो वा इमं चावमारोवइस्सदि ( १९ ) ।

सीता । स्वगतम् । (ख) अम्महे ऊससिदम्हि अणब्भवरिसेण पिअसहीवअणेण ( २० ) ।

---

( १४ ) भर्तृदारिके ! राक्षस इति मैनं परिभव राक्षसचक्रवर्ती खल्वेषः ।

( १५ ) अधिकतरमुद्वेजनीयः ।

( १६ ) अथ किं मन्त्रयथः किं कर्तुमिहागतः ।

( १७ ) शङ्करशरासनं समारोपयितुम् ।

( १८ ) नन्वेवं भण भर्तृदारिकां परिणेतुम् ।

( १९ ) अयि उड्डामरशीले ! कथं पुनरशङ्करोऽलब्धशङ्करप्रसादो वेमं चापमारोपयिष्यति ।

( २० ) अहो उच्छ्वसितास्मि अनभ्रवर्षेण प्रियसखीवचनेन ।

---

( ग ) समारोपयितुं ज्यया सङ्गमयितुम् ।

( क ) उड्डामरशीले उत्तरलस्वभावे । अशङ्करः शङ्करादन्यः । अलब्धशङ्करप्रसादः अप्रसादितशङ्कर इत्यर्थः ।

( ख ) उच्छ्वसिता जीविता । अनभ्रवर्षेण विना मेघं जलवर्षणेन ।

सर्वाः परिक्रामन्ति ।

सीता । पुरो विलोक्य । एक्कासणोववेसिणो कहिं उण एदे जणा (२१) ।

सखी । णं एक्को एव्व एसो दसमुहो विंसदिभुअदण्डो अ (२२) ।

सीता । तादसदानन्दमिस्साणं अन्तरे उवविसिस्सम् (२३)

रावणः । सौत्सुक्यमवलोक्य स्वगतम् । अहो ! त्रिभुवनातिशायि मकरध्वजसञ्जीवनं (ग) रामणीयकमस्याः । तथाहि ।

इन्दुर्लिप्त इवाञ्जनेन जडिता दृष्टिर्मृगीणामिव
प्रम्लानारुणिमेव विद्रुमलता श्यामेव हेमद्युतिः ।
पारुष्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतं
सीतायाः पुरतश्च हन्त ! शिखिनां बर्हाः सगर्हा इव ॥४२॥ (घ)

---

(२१) एकासनोपवेशिनः क्व पुनरेते जनाः ।

(२२) नन्वेक एवैष दशमुखो विंशतिभुजदण्डश्च ।

(२२) तातशतानन्दमिश्राणामन्तर उपवेक्ष्यामि ।

---

(ग) मकरध्वजसञ्जीवनं कामोद्दीपनम् ।

(घ) इन्दुरिति । हन्त ! हर्षे सीतायाः पुरतः अग्रतः इन्दुः चन्द्रः अञ्जनेन कज्जलेन लिप्त इव, मुखप्रशस्तिरियं मृगीणां दृष्टिः जडिता सङ्कुचिता इव, नेत्रप्रशस्तिरियम् । विद्रुमलता प्रवालवल्ली प्रम्लानः प्रकर्षेण मालिन्यं गतः अरुणिमा लौहित्यं यस्याः तादृशीव अधरप्रशस्तिरियम् । हेमद्युतिः स्वर्णकान्तिः श्यामेव अङ्गप्रशस्तिरियम् । कोकिलवधूनां कण्ठेषु कलया अंशतः पारुष्यं कार्कश्यं प्रस्तुतमिव वचनप्रशस्तिरियम् । तथा शिखिनां मयूराणां बर्हाः शिखाः सगर्हा इव कुत्सिता इव केशप्रशस्तिरियम् । अत्रोत्-

किंच बहुष्वपि निजेषु कर्मसु विवेक्त्रे (ङ) कर्त्रे किञ्चिदेव रोचते । यतः ।

एतां यथा हृदयवर्त्मसमायताक्षीं
संसारसारनिचयेन विधाय वेधाः ।
शङ्के दिदेश मदनं परिरक्षितार-
मारात् स मां किरति येन शरैः शितागैः ॥४३॥ (च)

शतानन्दः । पुलस्त्यनन्दन ! इदं तन्नुवियं सा सीता ।

रावणः । इदं तन्नुरयं स रावणः ! किं (छ) पुनरसम्भा-वनागर्भमदृशकण्ठोचितं व्याहरसि । पश्य ।

---

प्रेक्षालङ्कारः तदुक्तं दर्पणे । भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मनेति । शार्दूलविक्रीडितं वृत्तम् ।

(ङ) विवेक्त्रे । विवेचकाय ।

(च) एतामिति । शङ्के मन्ये वेधाः ब्रह्मा एताम् आयताक्षीं विशालनेत्रां यथा हृदयवर्त्मनं चित्तवृत्तिमनुसृत्य इत्यर्थः संसारसारनिचयेन संसारस्य सृष्टेः सारसङ्घातेन विधाय निर्माय मदनं परिरक्षितारम् एतस्या इति शेषः दिदेश नियुक्तवान्, येन हेतुना स मदनः शितागैः तीक्ष्णमुखैः शरैः आरात् दूरमनर्घमित्यर्थः । आराद् दूरसमीपयोरित्यमरः । मां किरति अभिवर्षति । अत्र शङ्केपदस्य उत्प्रेक्षावाचकत्वात् उत्प्रेक्षालङ्कारः, तदुक्तं मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः । उत्प्रेक्षावाचकाः एते इवशब्दोऽपि तादृश इति । वंशस्थविलं वृत्तम् ।

(छ) असम्भावनागर्भम् असम्मानसहितमित्यर्थः । व्याहरसि वदसि व्याहार उक्तिर्लपितमित्यमरः ।

सार्द्धं हरेण हरवल्लभया च देव्या
हेरम्बषण्मुखवृषप्रमथावकीर्णम् ।
कैलासमुद्धृतवतो दशकन्धरस्य
कैषा जरद्धनुषि दुर्मददोःपरीक्षा ॥ ४४ ॥ (ञ)

प्रहस्तः । स्वगतम् । इदं (झ) शिपिविष्टान्यस्मादृष्टगुणारोपणकर्म कार्मुकम् । कथमेतत् । विचिन्त्य पराक्रमपरीक्षायां को वा महादेवोऽपि देवस्य किंच ।

क्षतं सुराणां सारेण स्थाणवीयमिदं धनुः ।
किङ्करास्ते च देवस्य सुकरा रोपणक्रिया ॥ ४५ ॥ (ञ)

रावणः । सरोषं धनुरादाय ।

अस्मद्दोर्दण्डचण्डाञ्चननिविडगुणग्रन्थिभुग्नाभग्नाग्निव्यग्रीभावोर्ध्वपृष्ठत्रुटदणुरणत्कर्मणः कार्मुकस्य ।

---

(ञ) सार्द्धमिति । हरेण हरवल्लभया पार्वत्या देव्या सार्द्धं हेरम्बो गणपतिः, षण्मुखः कार्त्तिकेयः, वृषः हरवाहनं प्रमथाः हरानुचराः तैः अवकीर्णं व्याप्तं कैलासम् उद्धृतवतः उत्तोलितवतः दशकन्धरस्य मम अस्मिन् जरद्धनुषि जीर्णे कोदण्डे का एषा दुर्मदानां मचण्डवीर्याणां दोष्णां भुजानां परीक्षा ? । वंशस्थविलं वृत्तम् ।

(झ) शिपिविष्टान्यस्मात् शिपिविष्टात् हरात् अन्यस्मात् जनात् अदृष्टं केनापीति भावः गुणारोपणकर्म यस्य तत् ।

(ञ) क्षतमिति । सुराणां देवानां सारेण इदं स्थाणवीयं धनुः क्षतं निर्मितं ते च देवाः देवस्य महाराजचक्रवर्त्तिनः रावणस्य किङ्कराः दासाः, तस्मात् रोपणक्रिया आरोपणं सुकरा सुसाध्या देवेनेति शेषः ।

(ट) अस्मदिति । अस्माकं दोर्दण्डैः चण्डम् अञ्चनम् आरोपणं तस्य तादृशस्य निविडगुणस्य घनमौर्व्या यः ग्रन्थिः तेन भुग्नः वक्री-

कल्पान्तोद्भ्रान्तभर्गप्रहतडमरुकोड्डामरध्वानधीर-
ष्टङ्कारस्तारतारस्त्रिदशनियमितो व्योमरन्ध्रं रुणद्धु ॥४६॥(ट)

शतानन्दः। अपवार्य (ठ)। अहो! लङ्कापतेरपूर्वो गर्वगरिमा यन्ममापि शतानन्दस्य न निश्चिनुते चेतः किं भवितेति। दुरारोपमैन्दुशेखरं धनुर्दुर्निवारा रावणभुजदण्डाः।

जनकः। स्वागतम्। भगवन्! भर्ग! (ड) सन्निधत्स्व निजे धनुषि यथा जनककुलालङ्करणं भवति मे वत्सा। जितत्रिजगतापि जामात्रा वयमपत्रपामहे।

सीता। आत्मगतं सप्रणामम्। अम्ब वसुन्धरे! पसीद सीदा विस्तवेदि पढमं मे अन्तरं देज्ज पच्छा रावणो धनुं आरोविज्जदु (२४)।

---

(२४) अम्ब वसुन्धरे! प्रसीद सीता विज्ञापयति प्रथमं मे अन्तरं देहि पश्चाद्रावणो धनुरारोपयतु।

---

ततः यः उभयाभ्यां कोटिद्वयं तस्य व्यस्तीभावेन आकर्षणवशात् कोटित्वापनयनेन ऋजुभूतं त्रुटत् खण्डयत् अनणु अनल्पं रणत्कम रणरणध्वनिर्यस्य तथाभूतस्य कार्मुकस्य तारतारः अतिदीर्घः कल्पान्ते प्रलयकाले उद्भ्रान्तः उच्चैर्भ्रमन् यो भर्गः संहारमूर्त्तिः रुद्रः तेन प्रहतस्य ताडितस्य डमरुकस्य वाद्यभेदस्य उड्डामरः प्रचण्डो यो ध्वानः निस्वनः तद्वद्धीरः गम्भीरः अतएव त्रिदशैः देवैः नियमितः स्तुतः टङ्कारः व्योमरन्ध्रं गगनाभ्यन्तरम् रुणद्धु आवृणोतु।

(ठ) अपवार्य। पुरःस्थस्य अन्यस्य रहस्य कथनमपवारितम्।

(ड) सन्निधत्स्व सन्निधेहि साम्निध्यं कुरु इत्यर्थः येन भङ्क्तुं न शक्यते रावणेनेति भावः। अपत्रपामहे अन्येभ्यो लज्जामहे। लज्जा सापत्रपान्यतः इत्यमरः।

सख्यौ । आकाशे भगवं अणङ्ग ! णमो दे माक्खु रक्खसं उद्दिसिअ सुउमारजणजोग्गं (ठ) पहरणं संधिहिसि (२५) ।

प्रहस्तकः । सगर्वम् । हन्त ! न सर्वदा सर्वस्य सदृशो दशापाकः (ण) । यतः ।

वामो बाहुर्मृडान्याः करकलितरणत्कङ्कणालीकरालो
यस्मिन् सव्यश्च शम्भोर्भुजगवलयवान् सह्यमाकर्षणं तत् ।
कैलासोद्धारधीरं दशवदनभुजामण्डलीयन्त्रबन्धं
रे रे कोदण्डदण्ड ! प्रतिपत तदलं नासि सोढा दृढोऽपि ॥४७॥ (त)

विचिन्त्य । भवतु पातालचरानम्बरचरांश्च सावधानान्विधा-

---

(२५) भगवन्ननङ्ग ! नमस्ते मा खलु राक्षसमुद्दिश्य सुकुमारजन-योग्यं प्रहरणं सन्धास्यसि ।

---

(ठ) प्रहरणं अस्त्रं घोरमस्त्रं सन्धाय रावणं जहीति भावः ।

(ण) दशापाकः अवस्थापरिणामः ।

(त) वाम इति । रे रे कोदण्डदण्ड ! यस्मिन् मृडान्याः पार्वत्याः करेण कलिता धृता रणन्ती या कङ्कणाली तया करालः दन्तुरः अलङ्कृत इति यावत् वामो बाहुः, तथा शम्भोः भुजग-वलयवान् अहिवलयभूषित इत्यर्थः सव्यः दक्षिणः बाहुरिति शेषः । तेन हरगौरीस्पृष्टमिति भावः । तत् आकर्षणं सह्यं त्वयेति शेषः । साम्प्रतं कैलासस्य कुबेरशैलस्य उद्धारेण उत्तोलनेन धीरं दृढं दशवदनस्य रावणस्य भुजामण्डली भुजसमूह एव यन्त्रं तदेव बन्धः तं प्रतिपत आगच्छ हि, दृढोऽपि अतिकठिनोऽपि त्वं तत् दशवदनभुजामण्डलीयन्त्रबन्धं अलं पर्याप्तं न सोढासि सोढुं अक्षमोऽसीत्यर्थः । [illegible] ।

[illegible] ( अधोऽवलोक्य ।

पृथ्वि ! स्थिरा भव भुजङ्गम ! धारयैनां
त्वं कूर्मराज ! तदिदं द्वितयं दधीथाः ।
दिक्कुञ्जराः ! कुरुत तत्त्रितये दिधीर्षां
देवः करोति हरकार्मुकमाततज्यम् ॥ ४८ ॥ ( घ )

ऊर्ध्वमवलोक्य ।

अश्वान् विश्वासयैतान् अरुण ! कुरु स्वर्गमातङ्गकण्ठे
गाढोरुग्रन्थिमाधोरण ! विबुधगणाः ! कर्णयोर्दत्त हस्तान् ।
लङ्केन्द्रोदग्रपाणिप्रणयिभवधनुर्भङ्गजन्मा कठोर-
ष्टङ्कारः स्वर्गरोदःकुहरवलयितस्त्रासकारी न कस्य ? ॥ ४९ ॥ (ङ)

---

( घ ) पृथ्वीति । देवो दशाननः हरकार्मुकम् आततज्यं करोति ततः, हे पृथ्वि ! स्थिरा भव, मा चञ्चला इति शेषः, भुजङ्गम ! नागराज ! एनां पृथ्वीं धारय, हे कूर्मराज ! त्वं तदिदं द्वितयं पृथ्वीभुजगयोर्द्वयं दधीथाः धारय, हे दिक्कुञ्जराः ! तत्त्रितये तेषां पृथ्वीभुजङ्गमकूर्माणां त्रये दिधीर्षां धारणेच्छां कुरु । चतुर्थपादवाक्यस्य पादत्रयहेतुत्वेन निर्देशात् काव्यलिङ्गमलङ्कारः । वृत्तमत्र वसन्ततिलकं तथोक्तं वसन्ततिलकं तभजाजगौ ग इति लक्षणात् ।

(ङ) अश्वानिति । हे अरुण ! सूर्यसारथे । अश्वान् घोटानिति शेषः । एषां विश्वासय, निःशङ्कान् कुरु । आधोरण ! हस्तिपाल ! स्वर्गमातङ्गस्य ऐरावतस्य कण्ठे गाढः उरुः महान् ग्रन्थिर्यस्य तादृशं कुरु । हे विबुधगणाः ! देवाः ! कर्णयोः हस्तान् दत्त । लङ्केन्द्रस्य उदग्रैः पाणिभिः प्रणयि रतु भववनुः शैवं कार्मुकं तस्य भङ्गेन जन्म यस्य तथाभूतः कठोरः टङ्कारः स्वर्गस्य रोदसः पृथिव्याश्च कुहरे अन्तराले वलयितः व्याप्तः सन् कस्य त्रासकारी भयप्रदो न ? अपि तु सर्वेषामेव । अत्र चतुर्थपादवाक्यस्य पादत्रयहेतुत्वेन कीर्तनात् काव्यलिङ्गमलङ्कारः । स्रग्धरावृत्तम् ।

रावणः । अहो ! मम दशाननस्यास्य यदमीषां स्वावयवानामपि जितगगनचाटुकारः सर्वत्र व्यापारः । तथाहि सम्प्रत्येव तावत् ।

निष्पर्य्यायनिवेशपेशलरसैरन्योन्यनिर्भर्त्सिभि-
र्हस्ताग्रैर्युगपन्निपत्य दशभिर्वामैर्धृतं कार्मुकम् ।
सव्यानां पुनरप्रथीयसि विधावस्मिन् गुणारोपणे
मत्सेवाविदुषामहं प्रथमिका काप्यम्बरे वर्त्तते ॥ ५० ॥ (ध)

(विचिन्त्य । सजुगुप्सानुतापम् (न) । अविमृश्यकारिता हि पुंसः परं परिभवस्थानं यत्प्राकृतवदप्राकृतोऽपि रावणः पणेन परिणेतुकामः । तत्सर्वथा किमनेन ।

रुद्राद्रेस्तुलनं स्वकण्ठविपिनच्छेदो हरेर्वासनं
कारावेश्मनि पुष्पकापहरणं यस्येदृशाः केलयः ।

---

(ध) निष्पर्य्यायेति । निष्पर्य्यायः पर्य्यायरहितः यौगपदिक इत्यर्थः यः निवेशः आपङ्क्तिः तेन पेशलाः दृढाः रसा अनुरागाः येषां तैः अन्योन्यं परस्परं निर्भर्त्सयन्तीति निर्भर्त्सयन्तः स्पर्द्धमाना इत्यर्थः, तैः दशभिः वामैः हस्ताग्रैः युगपत् समकालं निपत्य कार्मुकं धृतम् । पुनः सव्यानां दक्षिणेषां भुजानाम् अस्मिन् गुणारोपणे विधौ व्यापारे अप्रथीयसि पृथुताम् अगतवति अपूर्णतां गते इति तावत् मत्सेवाविदुषां मम परिचर्य्यातत्पराणां देवानामिति शेषः अम्बरे आकाशे कापि अनिर्वाच्या अहमहमिका अहमहमिका अहमग्रे देवं दशाननं सेविष्ये अहमग्रे इत्येवंरूपा इत्यर्थः वर्त्तते ।

(न) सजुगुप्सानुतापं सावमानानुतापमित्यर्थः । अविमृश्यकारिता अविवेकिता परिभवस्थानम् अवमानमापदम् । प्राकृतवत् नीचवत् ।

(प) रुद्राद्रेरिति । यस्य मम रुद्राद्रेः कैलासस्य तुलनं

सोऽहं दुर्मदबाहुदण्डसचिवो लङ्केश्वरस्तस्य मे
का श्लाघा घुणजर्जरेण धनुषा कृष्टेन भग्नेन वा ।५१॥(प)

इति सावज्ञं क्षिपति ।

सख्यौ । भट्टिदारिए ! दिट्ठिआ वड्ढसि समं दे पाणि-ग्गहणमङ्गलेण मुक्कं रावणेण धणू (२६) ।

सीता । साश्वासमात्मगतम् । हिअअ ! अणुऊलो विअ दे देवो मम्महो अ (२७) ।

शतानन्दः । भो लङ्केश्वर ! (फ) परममाहेश्वरोऽसि तत्कि-मिदमसंस्तुतं प्रस्तुतम् ।

जनकः । ससंरम्भमुत्थाय (ब) ।

---

(२६) भर्तृदारिके ! दिष्ट्या वर्धसे समं ते पाणिग्रहणमङ्गलेन मुक्तं रावणेन धनुः ।

(२७) हृदय ! अनुकूल इव ते देवो मन्मथश्च ।

---

हस्तेनोद्धरणम् । स्वस्य कण्ठविपिनस्य कण्ठारण्यस्य छेदः स्वहस्तेन हरप्रीतये कर्त्तनम् । कारावेश्मनि बन्धनशालायां हरेरिन्द्रस्य वासनम् अवस्थापनं तथा पुष्पकस्य देवयानरत्नस्य अपहरणं कुवेरादिति शेषः ईदृशाः एवंप्रकाराः केलयः क्रीड़ितानि, सः दुर्मदाः प्रचण्डाः बाहवो दण्डा एव सचिवाः सहाया यस्य तथाभूतः लङ्केश्वरः अहम् । तस्य तादृशस्य मे मम घुणैः कीटविशेषैः जर्जरेण अन्तःसारशून्येनेति भावः धनुषा शैवेन कृष्टेन आरोपितज्येन वा भग्नेन किम् ?

(फ) परममाहेश्वरः परमशैवः । असंस्तुतम् अप्रस्तावानुरूप-मित्यर्थः ।

(ब) ससंरम्भं सक्रोधम् ।

न ब्रह्मोपनिषन्निषेवणरतिर्नो याज्ञवल्क्यो गुरुः
कोपावेश ! न विस्रसा च सहसा शक्नोति रोद्धुं मनः ।
दृष्ट्वा शम्भुमहाधनुःपरिभवं पार्ष्णिर्जराजर्जर-
स्तेनाभ्युत्सहते ममैष युगपच्चापाय शापाय च ॥ ५२ ॥(भ)

विलोक्य नेपथ्यं प्रति कः कोऽत्र भोः ? । धनुर्धनुः । प्रविश्य धनुरुपनीय निष्क्रान्तः पुरुषः ।

जनकः । (म) परिकरं बद्ध्वा गृह्णाति ।

राघवः । सकोपहासम् ।

हस्तालम्बितमक्षसूत्रवलयं कर्णावतंसीकृतं
न्यस्तं भ्रूयुगमुन्नमय्य रचितं यज्ञोपवीतेन च ।
सन्नद्धा जघने च वल्कलपटी पाणिश्च धत्ते धनु-
र्दृष्टं भो ! जनकस्य योगिन इदं दान्तं विरक्तं मनः ॥ ५३ ॥(य)

---

(भ) नेति । हे कोपावेश ! क्रोधावेग ! ब्रह्मणां वेदानाम् उपनिषदां विद्यानां निषेवणरतिः सेवनानुरागः मम; ममेति शेषः रोद्धुं निवारयितुं न, गुरुः याज्ञवल्क्यः न, विस्रसा जरा च न सहसा शक्नोति त्वन्निवारणमिति शेषः । शम्भोः हरस्य महाधनुषः परिभवं रावणकर्तृकसावज्ञक्षेपणरूपमिति भावः दृष्ट्वा जरया वार्द्धक्येन जर्जरः मम एषः पार्ष्णिः तेन क्रोधावेगेन हेतुना युगपत् समकालं चापाय धनुषे, शापाय च धनुर्ग्रहीतुं शापं वा दातुम् अभ्युत्सहते अभिवाञ्छति । शार्दूलविक्रीडितं वृत्तम् ।

(म) परिकरं बद्ध्वा बद्धकटिरित्यर्थः ।

(य) हस्तेति । हस्तं हस्तात् स्खलितं पश्चात् आलम्बितं धृतम् अक्षसूत्रवलयं जपमालामण्डलं कर्णस्य अवतंसीकृतं भूषणीकृतं कर्णे मण्डलाकारेण गृहीतं सर्वत्र जनकेनेति सम्बन्धः । न्यस्तं वार्द्धक्यात् अवनतं भ्रूयुगम् उन्नमय्य उत्तोल्य रचितम् । यज्ञोपवीतेन

शतानन्दः । आश्चर्यम् । अहो महाप्रभावो मे याज्यः । अस्य हि ।

वाञ्छानुगौ न जरसा जनकस्य पाणी
सत्यं स एष तपसस्तु परः प्रकर्षः ।
मौर्वी स्वयं यदधिरोहति चापकोटिं
सन्धानकर्मणि शराश्च यदुत्सहन्ते ॥ ५४ ॥ (ल)

सीता । हद्धि ! हद्धि ! तादोवि णाम उवसमेक्कधणो धणुं वावारेदि स एस हुदवहं (व) वरिसिदुकामो मिअङ्कमणी (२८) ।

---

(२८) हा धिक् ! हा धिक् ! तातोऽपि नाम उपशमैकधनो धनुः व्यापारयति स एष हुतवहं वर्षितुकामो मृगाङ्कमणिः ।

---

जघने वल्कलपटी ! वल्कलरूपं वसनं मस्तका बद्धम् । पाणिश्च धनुः धत्ते । भो ! योगिनोऽपि जनकस्य इदं हास्तं मनः विरक्तम् ।

(र) याज्यः यजमानः ।

(ल) वाञ्छानुगाविति । जनकस्य पाणी भुजौ जरसा वार्द्धक्येन वाञ्छानुगौ अभिलाषानुरूपकारिणौ न । तथापि मौर्वी चापकोटिं धनुष्कोटिं यत् अधिरोहति, शराश्च सन्धानकर्मणि लक्ष्यनिपातनव्यापारे यच्च उत्सहन्ते, स एषः सत्यं निश्चितं तपसः परः परमः प्रकर्षः । वृत्तमत्र वसन्ततिलकम् ।

(व) तं हुतवहम् अग्निं वर्षितुकामः वर्षणेन निर्वापयितुकामः मृगाङ्कमणिः चन्द्रकान्तमणिः । अत्र चन्द्रकान्तमणेर्हुतवहवर्षणं जनकस्य शमैकरतेः धनुषा शत्रुघातनमिवेति वाक्ययोः साम्यस्य गम्यमानत्वात् प्रतिवस्तूपमालङ्कारः । तदुक्तं, प्रतिवस्तूपमा सा स्यात्

मङ्गलकः । आः । क्षत्रियबन्धो ! हताश ! दशाननमुद्दिश्य धनुरारोपयसि नन्वेष ते (श) पौलस्त्यशस्त्रं चन्द्रहासः शिक्षयिता ।

रावणः उच्चैर्विहस्य सोल्लुण्ठम् (ष) ।

घुणव्रणमभङ्गुरं पशुपतेः पुराणं धनु-
र्निरीक्ष्य भुजमण्डलीबलमदाद्विकीर्णं मया ।
स एष न तितिक्षते समरसीम्नि सीरध्वजः
समं हसत हे ! मुखान्यसममेतदुट्टङ्कनम् ॥ ५५ ॥ (स)

जनकः । पुलस्त्यपुत्र ! (ह) संशृणु श्लाघाम् एष ते परममाहेश्वरः सीरध्वजो न क्षमते ।

---

वाक्ययोर्गम्यसाम्ययोः । एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथक् इति ।

(श) पौलस्त्यस्य रावणस्य शस्त्रं चन्द्रहासः असिः ।

(ष) सोल्लुण्ठं सपरिहासम् ।

(स) घुणेति । घुणव्रणं कीटनिष्कुषितमित्यर्थः पशुपतेः पुराणं धनुः अतएव अभङ्गुरं तद्गत्वा भङ्क्तुमनर्हमिति यावत् निरीक्ष्य दृष्ट्वा विविच्य इत्यर्थः भुजमण्डलीनां बलस्य यो मदः दर्पः तस्मात् मया विकीर्णम् अनायासेन विक्षिप्तम् । स एष सीरध्वजः जनकः समरसीम्नि संग्रामसीमायां वर्त्तमानः सन् इति शेषः न तितिक्षते । मे मुखानि ! दशेति शेषः समं हसत, एतेन जनकेन उट्टङ्कनं संग्रामावतरणम् असमम् अयोग्यम् । पृथ्वीवृत्तं, जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुरिति लक्षणात् ।

(ह) संशृणु श्लाघाम् ।

रावणः। अहो! सीतास्नेहो मामार्द्रयति यदहमपि दृग्दग्ध ईदृशानां वचसां सोढा। ससंरम्भम्।

यज्वा जरापरिणतः श्वशुरो भविष्यन्
ब्रह्मैकतानहृदयो गुणवांस्तथेति।
क्षान्तेर्निमित्तमिदमत्र ममैकमेकं
हे पाणयः! किमिति वाञ्छथ चन्द्रहासम् ॥५६॥ (घ)

जनकः। रावण! इतो (क) भव एष प्रहरण्यसे। नेपथ्ये

जनक! विरम रोषात् त्वं हि संन्यस्तशस्त्रः
कथमयमुपरागस्त्वद्गुरुर्याज्ञवल्क्यः।
परिणतिपरिहीणक्षुद्रराजन्यजन्यं
तदिह शरनिवेशं संहर व्रीडिताः स्मः ॥ ५७ ॥ ( ख )

---

( घ ) यज्वेति। हे पाणयः! भुजाः! यज्वा याज्ञिकः, जरापरिणतः वार्द्धक्यपरीतः, भविष्यन् भावी श्वशुरः, ब्रह्मणि परमात्मनि एकतानम् एकाग्रं हृदयं यस्य तादृशः तथा गुणवान् दाक्षिण्यादिगुणशाली इति एकम् एकं प्रत्येकम् इदं मम क्षान्तेः क्षमायाः निदानं हेतुः। तदत्र किमिति चन्द्रहासम् असिं गृहीतुमिति शेषः। वाञ्छथ अभिलषथ? वृत्तमत्र वसन्ततिलकम्।

( क ) भव तिष्ठ।

( ख ) जनकेति। हे जनक! रोषात् विरम रोषं त्यज इत्यर्थः हि यतः त्वं संन्यस्तानि शस्त्राणि येन तादृशः। कथं किमर्थम् अयं उपरागः? याज्ञवल्क्यः तव गुरुः तच्छिष्यस्य क्रोधोऽसम्भव इति भावः। परिणतिपरिहीणानाम् अपरिणामदर्शिनामित्यर्थः क्षुद्राणां नीचानां राजन्यानां जन्यं युद्धम्। तस्मात् इह शरनिवेशं शरनिक्षेपाभिनिवेशमित्यर्थः संहर संहर त्यज इत्यर्थः। व्रीडिताः लज्जिताः स्मः तव एतादृशं मनःक्षोभं संयमविरुद्धं दृष्ट्वा वयं लज्जामहे

जनकः । बालर्षे शुनःशेफ ! यदात्थ इदमपास्तं भस्त्रम् । तथाकृत्वा (ग) तज्जगतामपराद्धसत्वायेदं शापोदकमुत्सृजामि इति कमण्डलुमादत्ते ।

शतानन्दः । भगवतो (घ) वैकर्त्तनादागतस्य निरवधिसीम्नो ब्रह्मतत्त्वोपलम्भस्य तपोराशेश्च किमयं व्ययः क्रियत इति शापोदकमुपसंहरेति ।

जनकः । भगवन् ! विश्वामित्रधर्मपुत्र ! कुलगुरो ! गौतम !

कृते राक्षसराजेन पिनाकस्य पराभवे ।
जानन्ति युक्तं गुरवो भवद्भिः परवानहम् ॥ ५८ ॥ (ङ)

रावणः । मिथिलेश्वर ! किमिति (च) संरभसे । ननु रभसनिर्जितैरावणो रावणः खल्वहम् ।

---

इति भावः । वृत्तमत्र मालिनी न ननमयययुतेयं मालिनी भोगिलोकैरिति लक्षणात् ।

(ग) अपराद्धसत्वाय राक्षसरहिताय ।

(घ) वैकर्त्तनात् विकर्त्तनस्य सूर्य्यस्य अयं वैकर्त्तनः याज्ञवल्क्यः तस्मात् विकर्त्तनार्कमार्त्तण्ड मिहिरारुणपूषण इत्यमरः । निरवधिसीम्नः सीमारहितस्य इत्यर्थः ब्रह्मतत्त्वोपालम्भस्य ब्रह्मणो वेदस्य यत् तत्त्वं तात्पर्य्यं तस्य उपालम्भः आगमः प्राप्तिरिति यावत् ।

(ङ) कृते इति । राक्षसराजेन रावणेन पिनाकस्य हरधनुषः पराभवे कृते युक्तं समुचितं यदिति शेषः गुरवो भवन्तः तत् जानन्ति । अहं भवद्भिः परवान् भवतां मते स्थित इति भावः ।

(च) संरभसे कुप्यसि । रभसनिर्जितैरावणः रभसेन वेगेन निर्जितः ऐरावणः ऐरावतः येन तथोक्तः ।

मयि कण्ठपरिच्छेदपरितोषितशङ्करे
कुण्ठीभवन्ति सर्वेषामस्त्राणि च तपांसि च ॥५८॥ (छ)

त्वं किल (ज) सम्बन्धज्येष्ठो ब्रह्मविद्यावरिष्ठ इति च मया श्रूयते ।

मल्लौ । अपवार्य्य हताश ! दे वश्रणं जणअकुलदेवदाओ पडिहणन्तु (२८) ।

शतानन्दः । निशाचरचक्रवर्त्तिन् ! मा वृथा (झ) विकत्थस्व । चक्रीकृतचण्डीशचापदण्डस्य शोभत एष व्याहारो न पुनस्तव ।

रावणः । सक्रोधम् । किमिदमाह भवान् । निशाचरचक्रवर्त्तिन् ! मा वृथा विकत्थस्व इत्यादि पूर्वोक्तमनुवदति । विचिन्त्य तत्किमत्र साम्प्रतम् ।

परिषदियमृषीणामेष वृद्धो नरेन्द्रः
कथमथ तदमुष्मिन् मैथिलीलालसोऽपि ।
निजभुजबलदर्प्यद्वीरवीर्य्ये समाजे
हठहरणविनोदं राक्षसेन्द्रः करोतु ॥ ६० ॥ (ञ)

---

(२८) हताशः ते वचनं जनककुलदेवताः प्रतिघ्नन्तु ।

---

(छ) मयीति । कण्ठानां परिच्छेदेन कर्त्तनेन परितोषितः शङ्करो येन तादृशे मयि सर्व्वेषाम् अस्त्राणि तपांसि च कुण्ठीभवन्ति ।

(ज) सम्बन्धज्येष्ठः सम्बन्धेन भाविश्वशुरत्वरूपेण ज्येष्ठः मान्यः ।

(झ) विकत्थस्व श्लाघस्व । चक्रीकृतचण्डीशचापदण्डस्य चक्रीकृतः मण्डलीकृतः चण्डीशस्य शिवस्य चापदण्डः धनुर्यष्टिर्येन तादृशस्य जनकस्येति शेषः ।

(ञ) परिषदिति । इयम् ऋषीणां परिषद् सभा, एष वृद्धो नरेन्द्रः

सर्वरव्वम्। शृणुत भोः! शृणुत निशाचरपतेः प्रतिज्ञाम्। कुर्वन् मौर्वीनिवेशक्रमनमदटनि स्पष्टटङ्कारशब्दं शम्भोः कोदण्डदण्डं बधिरितभुवनं भूर्भुवःस्वस्त्रयेऽपि। यस्तामेतां वरीता रसयति तदसृक् चन्द्रहासो ममासिः कण्ठास्थिग्रन्थिशल्कीकरणभवरणत्कारवाचालधारः ॥६१॥ (ट)

नेपथ्ये कलकलः।

रावणः। भोः प्रहस्त! (ठ) किमयमकाण्डचण्डो विस्तीर्णजलधरध्वानतानवकृदेष निर्घोषः।

---

अङ्गदः। अङ्ग भो! अङ्गेति सम्बोधनसूचकमव्ययम्। तत् तस्मात् मैथिलीलालसः जानकीलोलुपः सन् अमुष्मिन् निजभुजबलेन दृप्यतां वीराणां वीर्यं यस्मिन् तादृशे समाजेऽपि राक्षसेन्द्रः किं कुठकरणविनोदं कुठेन बलात् यत् करणं मैथिल्या इति भावः तेन विनोदं आनन्दम् करोतु। वृत्तमत्र मालिनी।

(ट) कुर्व्वन्निति। भूः पृथ्वी भुवः अन्तरीक्षं स्वः स्वर्गः तेषां त्रयेऽपि त्रिलोक्यामपीत्यर्थः शम्भोः हरस्य कोदण्डदण्डं धनुर्यष्टिं मौर्व्वीनिवेशस्य ज्यायोजनस्य यः क्रमः तेन नमन्त्यौ अटन्यौ कोटी यस्य तथोक्तं स्पष्टः विशदः टङ्कारशब्दः यस्य तादृशम् अतएव बधिरितभुवनं कुर्व्वन् ताम् एतां मैथिलीं वरीता परिणेष्यति मम चन्द्रहासो नाम असिः कण्ठस्य अस्थ्नां यः ग्रन्थिः तस्य शल्कीकरणात् खण्डनात् भवतीति तथोक्तः यः रणत्कारः रणरणस्वनः तेन वाचाला धारा यस्य तादृशः सन् तस्य असृक् रसयति आस्वदति। भविष्यत्सामीप्ये लट्।

(ठ) अकाण्डचण्डः अकस्मात् भीषणः। विस्तीर्णं जलधरध्वानतानवकृत् विस्तीर्णो विशालः यो जलधरध्वानः मेघगर्जितं तस्य तानवं तनुतां करोतीति तथोक्तः।

प्रहस्तकः । देव ! (ङ) देवमनुपततामस्मद्बलानामेष निर्भरभरितभुवनतलाभोगः कलकलः ।

नेपथ्ये वैतालिकः । जय जय त्रिजगत्पते पौलस्त्य ! सुखाय (ढ) माध्यन्दिनी सन्ध्या भवतु देवस्य सम्प्रति हि ।

शीतं श्रीखण्डकाण्डं निविडयति फणी भोगनालेन लीन-
श्छायाद्रुमस्य मूले रचयति चमरी रम्यरोमव्यलीलाम् ।
सेर्ष्यान्तर्मानुषीयं वितरति कमितुर्घर्मितस्याङ्कपालीं
लीलाकस्तूरिकैणी सरति विचरितुं सारणिग्रन्थिपर्णम् ॥ ६२ ॥ (ण

---

(ङ) अनुपतताम् अनुसरताम् । निर्भरभरितभुवनतलाभोगः निर्भरम् अत्यर्थं भरितः पूरितः भुवनतलस्य आभोगः विस्तारः येन तथाभूतः ।

(ढ) माध्यन्दिनी माध्याह्निकी ।

(ण) शीतमिति । फणी पन्नगः भोगनालेन भोगः सकायः भोगः सुखेऽस्त्र्यादि भृतावहेश्च फणकाययोरित्यमरः । स एव नालं मृणालं तेन लीनः तिरोभूतः सन् शीतं शीतलं श्रीखण्डकाण्डं चन्दनस्कन्धं निविडयति वेष्टयति । चमरी मृगीविशेषः छायाद्रुमस्य छायाप्रधान-तरोर्मूले रम्यां रोमव्यलीलाम् उत्क्षेप्य चर्व्वणरूपां रचयति आदरति । अन्तः सेर्ष्या लुलुषितान्तःकरणा इयं मानुषी खण्डिता नायिका इत्यर्थः खातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायितेति आलङ्कारिकाः । घर्मितस्य घर्मार्त्तस्य कमितुः कान्तस्य अङ्कपालीम् उत्सङ्गदेशं वितरति ददाति तादृशी अपि तापशान्तये स्वामिनमङ्कमारोपयतीत्यर्थः । लीलाकस्तू-रिका मृगनाभिविलासिनी एणी मृगी सारणेः नदीभेदस्य ग्रन्थिपर्णं चोरनामकं गन्धद्रव्यभेदं विचरितुं भक्षयितुं सरति गच्छति सर्वस्य माध्यन्दिनतापशमनार्थमिति भावः । स्रग्धरावृत्तम् ।

रावणः । तद्वयमपि (त) निसर्गरमणीयेषु मिथिलापुरीपरिसराक्रीडेषु क्रीडाभिर्द्वित्राणि दिनान्यात्मानं विनोदयामस्तदादिश्यन्तां सेनापतयः ।

ताम्बूलीनद्धमुग्धक्रमुकतरुतलप्रस्तरे सानुगाभिः
पायंपायं कलाचीकृतकदलदलं नारिकेलीफलाम्भः ।
सेव्यन्तां व्योमयात्राश्रमजलजयिनः सैन्यसीमन्तिनीभि-
र्दात्यूहव्यूहकेलीकलितकुहकुहारावकान्ता वनान्ताः ॥६२॥ (थ)

इति निष्क्रान्ताः सर्वे ।

प्रतिज्ञापौलस्त्यो नाम प्रथमोऽङ्कः ।

---

(त) निसर्गरमणीयेषु स्वभावरम्येषु मिथिलापुरीपरिसराक्रीडेषु मिथिलापुर्य्याः यः परिसरः आभोगः तस्य आक्रीडेषु उपवनेषु ।

(थ) ताम्बूलीति । सानुगाभिः सभर्तृकाभिः सैन्यसीमन्तिनीभिः सैनिकमहिलाभिः ताम्बूलीभिस्ताम्बूललताभिः नद्धः परिवृतः अतएव मुग्धः सुन्दरः । मुग्धः सुन्दरमूढयोरिति कोषः । यः क्रमुकतरूणां गुवाकवृक्षाणां तलप्रस्तरः तलप्रदेशः तस्मिन् कलाचीकृतानि पात्रीकृतानि कदलीदलानि कदलीपत्राणि यस्य तत् नारिकेलीफलाम्भः नारिकेलोदकं पायं पायं पीत्वा पीत्वा दात्यूहानां कोकिलानां व्यूहः समूहः तस्य केलीकलितः क्रीडोच्चरितः यः कुहकुहारावः कुहुकुहुध्वनिरित्यर्थः तेन कान्ता रम्याः अतएव व्योमयात्रया अन्तरीक्षगमनेन यत् श्रमजलं घर्मोदकं तज्जयिनः तच्छमयितारः वनान्ता वनभूमयः सेव्यन्ताम् । स्रग्धरावृत्तम् ।

इति प्रथमोऽङ्कः ।

# अथ द्वितीयोऽङ्कः ।

अतः परं परशुरामरावणीयो भविष्यति ।

ततः प्रविशति भृङ्गिरिटिः (क) ।

भृङ्गिरिटिः । सपरिक्रममात्मानं निर्वर्ण्य । अये ! विकृत-रूपतापि क्वचिन्महतेऽभ्युदयाय । यतः ।

स्नायुप्रायनिबद्धकीकसतनुं नृत्यन्तमालोक्य मां
चामुण्डाकरतालकुट्टितलयं वृत्ते विवाहोत्सवे ।
ह्रीमुद्रामपनुद्य यद्विहसितं देव्या समं शम्भुना
तेनाद्यापि मयि प्रभुः स जगतामास्ते प्रसादोन्मुखः ॥१॥ (ख)

पुनर्निरूप्य सोपहासम् । अहो ! (ग) त्रिभुवनाधिपतेरनुचरस्य महार्हवेषता ।

---

(क) भृङ्गिरिटिः शिवानुचरविशेषः । निर्वर्ण्य दृष्ट्वा । विकृत-रूपता रूपस्य वैकृत्यम् । अभ्युदयाय मङ्गलाय ।

(ख) स्नायुप्रायेति । विवाहोत्सवे पार्वत्या इति शेषः वृत्ते जाते स्नायुप्रायेण प्रायेण स्नायुना शिरया मांसवैरल्यादिति भावः निबद्धाः कीकसाः अस्थीनि यस्यास्तादृशी तनुः शरीरं यस्य तथाभूतं प्रायेण अस्थीभूतशरीरमित्यर्थः चामुण्डायाः कालिकायाः करतालेन कुट्टितः कल्पितः लयः नृत्यविरतिर्येन तथाभूतं नृत्यन्तं माम् आलोक्य दृष्ट्वा देव्या पार्वत्या ह्रीमुद्रां लज्जाजनितं सङ्कोचम् अपनुद्य विहाय शम्भुना समं सह यत् विहसितं, तेन अद्यापि स जगतां प्रभुः हरः मयि प्रसादोन्मुखः प्रसन्नः आस्ते वर्त्तते ।

(ग) त्रिभुवनाधिपतेः हरस्य ।

कौपीनाच्छादनं वल्कमक्षसूत्रं जटासटाः।
रुद्राक्षास्त्रिपुण्ड्रं च वेशो भृङ्गिरिटेरयम्॥ २॥ (घ)

विचिन्त्य भृङ्गिरिटिस्वामिनो वा कीदृशो वेशविशेषः।

दिगम्बरो वहति भुजङ्गभूषणं
कपालवान् कलयति दाम कौणपम्।
वृषप्रियो रचयति भस्मगुण्ठना-
मुमापतेश्चरितमचिन्त्यकारणम्॥ ३॥ (ङ)

(च) यद्वा यस्य लैङ्गोद्भवं भैरवीयं तौम्बुरवमौमापतमार्द्ध-नारीश्वरमैन्दुशेखरमन्तकान्तकरं कालकूटीयं जम्भारि-भुजस्तम्भनं दृषमखोन्माथि माम्मथं त्रैपुरमन्धकासुरीय-मित्यपरमप्यपरिमेयं चित्रं चरित्रजातमाचक्षते। तस्य

---

(घ) कौपीनेति। कौपीनमेव आच्छादनं परिधानम्। वल्कं वल्कलं तरुत्वक् अक्षसूत्रं जपमालिका, जटानां सटा विस्ताराः। रुद्राक्षः त्रिशूलं त्रिपुण्ड्रं तिलकविशेषः अयं भृङ्गिरिटेर्मम इति शेषः वेशः परिच्छदः।

(ङ) दिगम्बर इति। दिगम्बरः नग्नः सन् भुजङ्गभूषणं वहति। कपालवान् नरशिरोधारी सन् कौणपं शवं दाम मालां कलयति बिभर्त्ति। तथा वृषप्रियः वृषभवाहनः सन् भस्मगुण्ठनां भस्मा-च्छादनं रचयति। उमापतेः हरस्य चरितम् अचिन्त्यकारणम् अतर्क्य-हेतुकं केन हेतुना देवस्य एवंरूपं चरितं न कोऽपि जानातीति भावः। रुचिराहृत्तं, जभौ जसौ गेति रुचिरा चतुर्ग्रहैरिति लक्षणात्।

(च) यद्वा अथवा। लैङ्गोद्भवं लिङ्गसम्भूतं भैरवीयं भैरवरूप-सम्बन्धि, तौम्बुरवं तुम्बुरुसम्बन्धम् औमापतम् उमापतिनिष्ठम् आर्द्ध-नारीश्वरं हरगौरीरूपीयं ऐन्दुशेखरं चन्द्रमौलिकम् अन्तकान्तकरं

भगवतश्चेष्टापरीक्षायां को नाम परमेष्ठिवैकुण्ठावपि ।
किं पुनर्भृङ्गिरिटिः । तथाहि ।

नग्नस्तिष्ठति तं नमन्ति विबुधाः संवीतदिव्यांशुकाः
प्रीतो याति वृषेण वारणगतस्तं वासवः सेवते ।
भूषा तस्य नृणां कपालशकलाः स्तोता धनेशः स्वयं
दौर्गत्यस्य परं पदं स भगवान् शम्भुर्विभुत्वस्य च ॥ ४ ॥ (छ)

तत्किमनेन यथादिष्टमनुतिष्ठामि । परिक्रम्यावलोक्य च ।
अये ! नारदः । ? (ज) कलहकुतूहली खल्वेष मुनिः यद्वा ।

---

शमनदमनं कालकूटीयं हलाहलपानीयं जम्भारिभुजस्तम्भनं जम्भो नाम असुरः तस्य अरिरिन्द्रः तस्य भुजस्य स्वप्रहारार्थमुद्यतस्येति भावः स्तम्भनं निस्पन्दीकरणं दक्षमखोन्माथि दक्षयज्ञविध्वंसनं मान्मथं मदनभस्मीकरणरूपं त्रैपुरं त्रिपुराणाम् असुरनगरीणां पातनरूपं तथा अन्धकाहरीयम् अन्धकासुरवधरूपमित्यर्थः । अपरिमेयम् अपरिच्छेद्यं चित्रम् अद्भुतं चरित्रजातं चरितसमूहम् आचक्षते कीर्त्तयन्ति बुधा इति शेषः । चेष्टापरीक्षायां चरित्रविज्ञाने, परमेष्ठिवैकुण्ठौ विरिञ्चिविष्णू अपि कौ नाम, न कौ अपि, न समर्थौ इति भावः ।

(छ) नग्न इति । नग्नः दिगम्बरः तिष्ठति भगवान् शम्भुरिति शेषः । विबुधाः देवास्तु संवीतं परिहितं दिव्यम् अंशुकं वसनं यैः तादृशाः सन्तः तं शम्भुं नमन्ति । प्रीतः सन् वृषेण याति गच्छति, वासवः इन्द्रः वारणगतः ऐरावतस्थः तं सेवते । कपालशकलाः नरशिरःखण्डाः तस्य भूषणं, स्वयं धनेशः कुबेरः तस्य स्तोता तं स्तौतीत्यर्थः । तस्मात् स भगवान् शम्भुः दौर्गत्यस्य दारिद्र्यस्य विभुत्वस्य वैभवस्य च परं पदम् आस्पदम् । स्वयं दुर्गतः स्थित्वा सेवकान् वैभवशालिनः करोतीति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(ज) कलहकुतूहली कलहप्रियः ।

लिङ्गोद्भवव्यतिकरे स्वमहत्त्वहेतो-
र्नारायणद्रुहिणयोरुदभूद्विवादः ।
यस्मादयं कलिमुखो मुनिराविरासीत्
तस्मात् कथं नु भवतु प्रियसम्प्रहारः ॥ ५ ॥ (झ)

विचिन्त्य । भवत्वस्मादेव तर्हि (ञ) तयोरुदन्तमुपलप्स्ये इति परिक्रामति । ततः प्रविशति यथा निर्दिष्टो नारदः ।

नारदः । विचिन्त्य सत्यं सत्यमिदं गीयते दुस्त्यजा (ट) प्रकृतिरिति । यतः ।

युयुधे युध्यते को वा योत्स्यते वा मदोद्धतः ।
इति मे व्यग्रमनसः कालोऽभ्येति च याति च ॥६॥ (ठ)

---

(झ) लिङ्गेति । लिङ्गस्य शैवस्य उद्भवव्यतिकरे उदयप्रसङ्गे स्वमहत्त्वहेतोः स्वं स्वं महत्त्वं श्रेष्ठत्वं तस्य हेतोः नारायणद्रुहिणयोः विष्णुब्रह्मणोः विवादः पुरा अहमेव महान् इति नारायणो वदति अहमेव महान् इति ब्रह्मा वदति इत्येवंरूपः उदभूत् । यस्मात् विवादात् अयं कलिः मुखे प्रारम्भे उद्भवक्षणे इत्यर्थः अथवा मुखे वदने यस्य स मुनिर्नारदः आविरासीत् अजनि । तत् तस्मात् अस्यागमनादित्यर्थः प्रियः सम्प्रहारः विनाशः यस्य अथवा अभिलषितसंग्रामः कथं नु मा भवतु अवश्यमेव भविष्यतीत्यर्थः । वृत्तमत्र वसन्ततिलकम् ।

(ञ) तयोर्जामदग्न्यदशकण्ठयोः । उदन्तं वार्त्ताम् । वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यादित्यमरः ।

(ट) प्रकृतिः स्वभावः दुस्त्यजा त्यक्तुमशक्या ।

(ठ) युयुधे इति । को जनः मदोद्धतः सन् युयुधे, युध्यते वा योत्स्यते इति इत्थं व्यग्रं व्यस्तं मनो यस्य तादृशस्य मम कालः अभ्येति आगच्छति याति गच्छति च ।

अपि च।

> स्रस्तास्त्रतन्त्रतुरगाणि कृपाणघात-
> घूर्णत्करीण्यनणुपूतनफूत्कृतानि।
> धावत्कबन्धकटुताण्डवडामराणि
> द्रष्टुं रणान्यहरहस्त्रिजगद्भ्रमामि॥ ७॥ (ड)

विमृश्य यो यत्रानुरक्तः स तदन्यतिरस्कारेण तदेव बहु-मन्यते। तथाहि।

> तन्मम ब्रह्म परमं तत्तपः सा क्रतुक्रिया।
> स स्वाध्यायः स च जपो यद्वीक्षे युद्धमुद्धतम्॥ ८॥ (ढ)

येन (ण) केनचिद्व्यसनिनो जनस्य तदसन्निधाने तत्प्रतिनिधिरपि विनोदाय। तथाचाहम्।

---

(ड) स्रस्तेति। अहरहः प्रतिदिनं स्रस्तानि च्युतानि अस्त्राणां तन्त्राणि जालानि येषां तादृशाः तुरगा अश्वा येषु तानि, कृपाणानाम् असीनां घातेन प्रहारेण घूर्णन्तः मोहं गच्छन्तः करिणो हस्तिनो येषु तथोक्तानि, अनणुभिः बहुभिः पूतनैः पिशाचभेदैः फूत्कृतानि शब्दितानि तथा धावताम् इतस्ततः सञ्चरतां कबन्धानाम् अपमूर्द्धकलेवराणां कटुभिरुद्धतैः ताण्डवैः नृत्यैः डामराणि भीषणानि रणानि संग्रामान् द्रष्टुं त्रयाणां जगतां समाहारः त्रिजगत् त्रीणि जगन्ति सर्वः भ्रमामि पर्यटामि।

(ढ) तदिति। यदहम् उद्धतं भीषणं युद्धं वीक्षे पश्यामि तत् मम परमं ब्रह्म परमात्मध्यानं, तत् तपः प्राजापत्याद्यनुष्ठानं सा क्रतोर्यज्ञस्य क्रिया अनुष्ठानं सः स्वाध्यायः वेदाध्ययनं स च जपः मन्त्रोच्चारणव्यापारः।

(ण) व्यसनिनः व्यसनासक्तस्य तदसन्निधाने तस्य व्यसनस्य असन्निधाने अलाभे। विनोदाय सन्तोषाय।

अलाभे वीरयुद्धस्य नखवादनसम्भृतम्।
सापत्न्यककलिं स्त्रीणां पश्यामि च शृणोमि च ॥९॥ (त)

किञ्च।

लावकतित्तिरिकुक्कुटमेषैर्महिषैश्च या रणक्रीडाः।
द्रुहिणाच्युतकलियोनेस्ताः प्रीत्यै नारदस्य मुनेः ॥१०॥ (थ)

अपि च।

वीराणां शस्त्रसंस्फोटे करिणां दन्तघट्टने।
व्याघ्राणां नखनिर्भेदे नारदः परितुष्यति ॥ ११ ॥ (द)

आत्मानं निर्दिशन्। अपि च।

यन्नारीतनुरच्युतः स भगवान् कन्दर्पदर्पापहो
यच्चाभूद्गिरिशः पतिश्च मरुतां यत्स्त्रैणपुष्पायुधः।
सौम्यं यच्च विमुच्य रूपमभवच्चण्डी हिमाद्रेः सुता
तत्सर्वं मम नारदस्य ललितं युद्धैकलीलारुचेः ॥१२॥ (ध)

---

(त) अलाभे इति। वीराणां युद्धस्य अलाभे अप्राप्तौ नखवादनेन नखेन नखस्य ताडनेन इत्यर्थः सम्भृतं स्त्रीणां नारीणां सापत्न्यककलिं सापत्न्यकलहं पश्यामि च शृणोमि च।

(थ) लावकेति। लावकाः पक्षिविशेषाः तित्तिरयः पक्षिभेदाः कुक्कुटाः मेषाश्च प्रसिद्धाः तैः महिषैश्च या रणक्रीडाः संग्रामकेलिव्यापाराः, ताः द्रुहिणाच्युतकलियोनेः ब्रह्म विष्णुविवादभवस्य मुनेः नारदस्य प्रीत्यै भवन्तीति शेषः।

(द) वीराणामिति। वीराणां योधानां शस्त्रसंस्फोटे शस्त्रप्रहारे करिणां हस्तिनां दन्तघट्टने दन्ताभ्यां प्रहरणे तथा व्याघ्राणां नखनिर्भेदे नखैर्विदारणे नारदः परितुष्यति।

(ध) यदिति। स भगवान् अच्युतः नारायणः यत् नारीतनुः असुराणां मोहनाय गृहीतमोहिनीमूर्त्तिः, गिरिशः हरः यत्

सम्प्रत्येवोपस्थितामिव मनोरथसिद्धिं पश्यामि यदा-वेदितमेतस्य न त्रयीविद्याशिष्येण माठरेण यथा याचित-परशुं दशग्रीवमाधूतधूर्जटिधनुषं चाभियोक्तुं मिथिला-पुरीं प्रस्थितो राम इति। विचिन्त्य। तदहमपि तत्र गत्वा तयोरमर्षवृद्धिविधिना मनोरथानामप्यपथं समरसम्भार-मालोकयामि। इति परिक्रामति।

भृङ्गिरिटिः। वेगात् कतिचित्पदानि गत्वा। स्वागतं देवर्षेर्नारदस्य।

नारदः। कथं महादेवानुचरो भृङ्गिरिटिः। उपसृत्य स्वस्ति भृङ्गिरिटये। क्व पुनः प्रस्थीयते?।

भृङ्गिरिटिः। यत्र वीरवर्गवरिष्ठौ जामदग्न्यदशकण्ठौ।

---

कन्दर्पस्य कामस्य दर्पापहः भस्मीकरणादिति भावः, मरुतां देवानां पतिश्च यत्र फेनपुञ्जायुधः वज्रायुधः अभूत्। तथा चण्डी मनोसौम्यं शोभनं रूपं विमुच्य यत् हिमाद्रेः सुता पार्वती अभवत्, तत् सर्वं युद्धे एका केवला लीलारुचिः लीलया रुचिः अनुरागो यस्य तादृशस्य नारदस्य मम ललितं चेष्टितं मम चेष्टयैव तत् सर्वमभवदित्यर्थः। शार्दूलविक्रीडितं वृत्तम्।

(ग) एतस्य जामदग्न्यस्य। त्रयीविद्याशिष्येण त्रयीविद्या ऋग्-सामयजुःसम्बन्धिनी विद्या तत्र शिष्यः छात्रः तेन माठरेण तदाख्येन पुरुषेण। याचितः परशुः येन तम् परशुरामात् परशुप्रार्थयितार-मित्यर्थः। तथा आधूतं अवज्ञया क्षिप्तं धूर्जटेः धनुः येन तम्। अभियोक्तुम् आक्रमितुम्। तयोर्जामदग्न्यदशग्रीवयोः अमर्षस्य क्रोधस्य वृद्धिविधिना वर्द्धनव्यापारेण। अपथम् अगोचरं समरसम्भारं संग्रामव्यापारम्।

नारदः। (प) प्रमथप्रथम! साधु स्मारितोऽस्मि। तत् कथय कः पुनर्जामदग्न्यादशग्रीवयोर्वीरव्रतचर्यासु (फ) प्रकृष्यते।

भृङ्गिरिटिः। देवर्षे! महदन्तरं (ब) रामरावणयोर्वीरव्रतचर्यां प्रति पश्य।

त्रिःसप्तावधि बाधिता क्षितिभुजामाजन्मवैखानसः
कर्त्ता मातृवधैनसः स सकलश्रुत्यर्थवीथीगुरुः।
विश्वस्याश्च भुवः क्रतौ वितरिता श्यामाकमुष्टिम्पचो
रामः सोमसुदप्रमेयमहिमा कासां गिरां गोचरः? ॥१९॥ (भ)

---

(प) प्रमथप्रथम! प्रमथानां हरानुचराणां प्रथमः श्रेष्ठः तत्सम्बुद्धौ।

(फ) प्रकृष्यते प्रकृष्टः गण्यते।

(ब) रामरावणयोः जामदग्न्यदशग्रीवयोः।

(भ) त्रिरिति। त्रिःसप्तावधि एकविंशतिवारं क्षितिभुजां राज्ञां बाधिता निहन्ता अथच आजन्मवैखानसः यावज्जीवतापसः मातृवधैनसः जननीवधजनितस्य पापस्य कर्त्ता कारकः पितुराज्ञया मातृवधकारीत्यर्थः अथच सकलाः सर्व्वाः श्रुतीनां या अर्थवीथ्यः अर्थावल्यः तासां गुरुः उपदेष्टा, क्रतौ यज्ञे स्वकृते विश्वस्याः सर्व्वस्याः भुवः पृथिव्याश्च वितरिता दाता कश्यपायेति शेषः। अथच श्यामाकानां तृणधान्यविशेषाणां मुष्टिं पचतीति तथोक्तः निःस्पृह इति भावः सोमसुत् सोमं रसविशेषं सुनोति यज्ञेषु देवप्रीत्यर्थम् आहरतीति तथोक्तः अतएव अप्रमेयः अपरिच्छेद्यः महिमा यस्य तथाभूतः रामः कासां गिरां वाचां गोचरः? कैर्वचनैः कीर्त्त्यते? न कैरपीतीत्यर्थः। शार्दूलविक्रीडितं वृत्तम्।

नारदः। चन्द्रशेखरसखे। न रावणोऽपि वीरव्रतचर्यां प्रति (म) केनाप्यतिसन्धीयते। यतः।

आसीदस्ति भविष्यति क्वचिदपि त्रैलोक्यमालोक्यतां
यद्येतस्य दशाननस्य सदृशो दिव्या हि युष्मद्दृशः।
तुल्यं कृत्तशिरश्छिदः कृतनुतेः स्तोकत्रिलोकीप्रदो
यस्मात् सोऽपि वरप्रदानसमये देवः शिवो लज्जितः॥१४॥ (य)

भृङ्गिरिटिः। देवर्षे! नारद! (र) यथा समर्थयसे। तथाहि।

एकः कैलासमद्रिं करगतमकरोच्चिच्छिदे क्रौञ्चमन्यो
लङ्कामेकः कुवेरादहृत वसतये कोङ्कणानब्धितोऽन्यः।
एकः शक्रस्य जेता समिति भगवतः कार्त्तवीर्य्यस्य चान्य-
स्तत् कामं कर्मसाम्यात्त्विमपरमनयोर्मध्यगा वीरलक्ष्मीः १५ (ल)

---

(म) अतिसन्धीयते प्रतार्य्यते पराजीयते इत्यर्थः।

(य) आसीदिति। एतस्य दशाननस्य सदृशः पुरुषः कश्चित् अपि आसीत् अस्ति वा भविष्यति यदीति प्रश्ने त्रैलोक्यं त्रिभुवन-मालोक्यतां दृश्यतां हि यतः युष्माकं दृशः चक्षुंषि दिव्याः दिव्य-चक्षुषा सर्व्वदर्शिनो यूयमिति भावः। यस्मात् सोऽपि देवः शिवः कृत्तशिरश्छिदः समप्रसुपञ्चकर्त्तिनः कृता नुतिः स्तुतिर्येन तादृशस्य स्तुवतः क्रमेण स्वशिरांसि जुह्वतः अस्य दशाननस्य वरप्रदानसमये स्तोकां क्षुद्रां त्रिलोकीं प्रददातीति तथोक्तः सन् तुल्यं समं यथायथमदत्त्वा इत्यर्थः लज्जितः। मदत्त्वा एतस्य तपोऽनुरूपा त्रिलोकी न तत् कथमस्य निष्क्रयं करवाणीति मन्यमानो ललज्जे इति भावः। इत्त-मत्र शार्दूलविक्रीड़ितम्।

(र) समर्थयसे सम्भावयसि तथा इति शेषः।

(ल) एक इति। एकः अनयोर्जामदग्न्यदशग्रीवयोरिति शेषः। रावणः कैलासम् अद्रिं पर्वतं करगतं हस्तोद्धृतम् अकरोत्। अपरः

नारदः । सहर्षं कलकलयन् ।

चित्रं नेत्ररसायनं त्रिदशतासिद्धेर्महामङ्गलं
मोक्षद्वारमपावृतं मम मनःप्रह्लादनाभेषजम् ।
साकं नाकपुरन्ध्रिभिर्नवपतिप्राप्त्युत्सुकाभिः सुराः !
सर्वे पश्यत रामरावणरणं वक्त्येष वो नारदः ॥१६॥ (ब)

भृङ्गिरिटिः । युद्धैकतृष्णे ! मा निर्भरं (श) संरम्भस्व । त्वन्मनोरथपरिपन्थी हि देवादेशः । यदेषोऽस्मि स्वचापतिरस्कारमप्यविगणय्य ऋचीकपुलस्त्यसहितस्तयोरन्योन्यमन्युग्रन्थिश्लथीकरणाय प्रेषितः ।

---

रामः क्रौञ्चं पर्वतं चिच्छिदे बिभेद । एकः रावणः वसतये कुबेरात् लङ्काम् अद्भुत जहार । अन्यः रामः अब्धितः समुद्रात् कोङ्कणान् देशभेदान् । तदुक्तम् अथाभ्यङ्गं समारभ्य कोटिदेशस्य मध्यगे । समुद्रप्रान्तदेशो हि कोङ्कणः परिकीर्त्तित इति ! एकः रावणः समिति युद्धे भगवतः शक्रस्य इन्द्रस्य जेता, अन्यः रामः कार्त्तवीर्य्यस्य जेता इति शेषः, तस्मात् कर्मसाम्यात् कार्य्यतौल्यात् अनयोरपरं किं वक्तव्यमिति शेषः । वीरलक्ष्मीस्तु कामं सम्यक् मध्यगा मध्यवर्त्तिनी एकमपि परित्यक्तुं न शक्नोतीति भावः । स्रग्धरावृत्तम् ।

(ब) चित्रमिति । हे सुराः ! सर्वे यूयं नवपतिप्राप्तये उत्सुकाभिः नाकपुरन्ध्रिभिः सुरसुन्दरीभिः साकं चित्रम् अद्भुतं नेत्ररसायनं नयनप्रीतिकरं त्रिदशतायाः देवत्वस्य सिद्धेः महामङ्गलम् अपावृतम् उद्घाटितं मोक्षद्वारं मुक्तिमार्गं मम मनसः प्रह्लादनायाः भेषजं औषधं रामरावणयोः रणं युद्धं पश्यत अवलोकयत, एष नारदः वः युष्मान् वक्ति । शार्दूलविक्रीडितं वृत्तम् ।

(श) संरम्भस्व उत्सहस्व । त्वन्मनोरथस्य तवाभिलाषस्य परिपन्थी विरोधी । स्वस्य चापस्य धनुषः तिरस्कारम् अवमाननम्

नारदः । सविषादमात्मगतम् । धिक्कष्टमुत्थितश्च (ग) कौतुक-द्रुमाङ्कुरो झटिति त्रुटितश्च तदन्तरितं तावदिदं रामरावणीयं युद्धमयोध्यां गत्वा परं रामरावणीयं योजयिष्यामि सम्प्रत्येवोभयरामीयं वा । प्रकाशम् । भूर्भुवःस्वस्त्रितयवासिभिरप्यनुल्लङ्घनीयो देवादेशः । तदहं ब्रह्मणः सदनं प्रति तावद्यास्यामि ।

भृङ्गिरिटिः । अहमपि प्रस्तुतकार्यसिद्धये । इति निष्क्रान्तौ ।

शुद्धविष्कम्भकः ।

ततः प्रविशति रावणः प्रतीहारी च ।

रावणः । (ङ) सीतामनुसन्धाय ।

तद्वक्त्रं यदि ? मुद्रिता शशिकथा तच्चेत् स्मितं का सुधा ?
सा दृष्टिर्यदि ? हारितं कुवलयैस्ताश्चेद्गिरो ? धिङ्मधु ।
सा चेत्कान्तिरतन्वमेव कनकं किं वा बहु ब्रूमहे
यत् सत्यं पुनरुक्तवस्तुविरसः सर्गक्रमो वेधसः ॥ १७ ॥ (च)

---

ऋचीकपुत्रेण शुनःशेफेन सहितः तयोः रामरावणयोः अन्योन्यस्य परस्परस्य मन्युपन्थेः क्रोधोद्रेकस्य शमीकरणाय उपशमनाय ।

(ग) कौतुकस्य कौतूहलरूपस्य तरोः अङ्कुरः । त्रुटितः ध्वस्तश्च । अन्तरितं तिरोहितं परम् अपरम् रामरावणीयं परशुरामरावणीयं विरमतु दाशरथिरावणीयं वा उभयरामीयं जामदग्न्यदाशरथमित्यर्थः योजयिष्यामि विधास्यामीत्यर्थः । देवादेशः देवस्य हरस्य आदेशः आज्ञा ।

(ङ) अनुसन्धाय स्मृत्वा ।

(च) तदिति । यदि तत् वक्त्रं वदनं सीताया इति सर्वत्र योज्यम् । वर्त्तते इति शेषः तदा शशिकथा मुद्रिता तिरोहिता । कोऽपि शशिनो नाम न करिष्यतीति भावः । चेत् यदि तत् स्मितं

प्रतीहारी । स्वगतम् । अहं अज्जवि सञ्जेअ (च) चित्तभित्ती तंचेअ चित्तग्गम्म ता गाढ़मभिणिविठ्ठो दसाणणे कामो ता मण्णे सदमण्णुपक्खवादो एत्थ वित्थरइ । आकाशे । हंहो विसमबाण ! जुत्तमिदं सरिसमिदं जं दाणिं एदावमेत्ते वि

---

(२१) कथमद्यापि सैव चित्रभित्तिस्तदेव चित्रकर्म तद्गाढ़मभिनिविष्टो दशानने कामस्तन्मन्ये शतमन्युपक्षपातोऽत्र विस्तार्यते । हंहो विषमबाण ! युक्तमिदं सदृशमिदं यदिदानीमेतावन्मात्रेऽपि दशाननप्रसादे

---

मन्दहसितं तदा सुधा अमृतं का ? तुच्छेति भावः । यदि सा दृष्टिः नयनं तदा कुवलयैः नीलोत्पलैः चारितं पराजितम् । चेत् यदि ताः गिरः वचांसि, तदा मधु धिक् । चेत् यदि सा कान्तिः, तदा कनकं सुवर्णम् एव अतन्वस्तु अप्रधानं निकृष्टं तुच्छमित्यर्थः । बहु किंवा ब्रूमहे वदामः, वेधसः विधातुः सर्गक्रमः सृष्टिपरिपाटी पुनरुक्तेषु वस्तुषु विमुखः पराङ्मुखः तुल्यं वस्तु विधाता न सृजतीति नियम इति यत् तत् सत्यम् । शार्दूलविक्रीड़ितं वृत्तम् ।

( च ) चित्रभित्तिः चित्रस्य आलेख्यस्य भित्तिः कुड्यम् । चित्रकर्म आलेख्यरचनम् । अयं भावः—रावणः सीतां दृष्ट्वा तामेव सततं चिन्तयति । अत्र सीता एव चित्रभित्तिः तद्रूपलावण्यादिचिन्तनं चित्रकर्म इति । शतमन्युपक्षपातः शतं मन्यवो यस्य सः शतमन्युरिन्द्रः तस्मिन् पक्षपातः स्नेहः इन्द्रस्नेहात् कामेन दशानन इन्द्रशत्रुरेवं व्याकुलीक्रियते इति भावः । एतावन्मात्रेऽपि दशाननप्रसादे दशाननस्त्वां प्रति एवं प्रसन्नस्तथापीत्यर्थः । पुरन्दरे तद्वैरिणि पक्षपातः प्रश्रयः । सकलजनानां निन्दनीयेन अनेन कामेन अनुभयवेदनत्वेनापि सीतां परित्यज्य केवलं रावणं प्रति वाणवर्षणत्वेन न लज्जायते इति भावः । कार्य्यम् एकमिति शेषः कार्य्यान्तरम् अन्यत् कार्य्यम्

दसाणणप्पमादे दैदिसो दे पुरन्दरपक्खवादो जेण सम्रल-
अणणिन्दणिज्जेण दूमिणा अणुभयवेदणत्तणेणवि ण लज्जी-
अग्रदि। भोदु कज्जं कज्जन्तरमन्तरेदि ता एव्वं दाव।
प्रकाशम्। देव! (क) मात्रामभो दुवारदेसे चिठ्ठदि (३१)।

रावणः। आकर्ण्य भो भो मदन! अति हि नाम
(ख) दुर्ललितोऽसि यन्मय्यपि प्रहरसि। यद्वा।

अपि प्रहर्त्ता मम वल्लभोऽसि
मृगाङ्कबन्धो! निखिलामरेषु।
यैर्व्यापृतस्त्वं मयि रावणेऽपि
तैरेव बाणैर्यदि तां प्रति स्याः॥ १८॥ (ग)

प्रतीहारी। पूर्वोक्तमभिधत्ते।

---

दैदृशस्ते पुरन्दरपक्षपातो येन सकलजननिन्दनीयेनानेन अनुभयवेदनत्वे-
नापि न लज्जाते। भवतु कार्यं कार्यान्तरमन्तरयति तदेवं तावत्
देव! मायामयो द्वारोद्देशे तिष्ठति।

---

अन्तरयति तिरोदधाति अन्यकार्यचिन्तया सीतागतं देवस्य मनः
निवृत्तं भवतीति भावः।

(क) मायामयः तदाख्यः कश्चित् रावणानुचरः।

(ख) दुर्ललितः दुर्विनीतः।

(ग) अपीति। हे मृगाङ्कबन्धो! चन्द्रसख! मदन! निखिला-
मरेषु सर्वेषु अमरेषु मध्ये प्रहर्त्तापि त्वं मम वल्लभः प्रियोऽसि, यैः
बाणैः त्वं रावणेऽपि मयि व्यापृतः व्यापारवान् प्रहरणशील इत्यर्थः
यदि तैरेव तां जानकीं प्रति स्याः भवेः, जानकीमपि प्रहरेर्यदीत्यर्थः।
उपजातिवृत्तम्।

राघवः । हन्त हन्त ! नैकप्रकारो मदनव्यापारः । (घ) यतो मम वैदेहीदर्शनतः प्रभृति ।

व्यञ्चत्कुञ्चितमुन्मुखं हसितवत् साकूतमाकेकरं
व्यावृत्तं प्रसरत्प्रसादि मुकुलं सप्रेम कम्प्रं स्थिरम् ।
उद्भ्रु भ्रान्तमपाङ्गवृत्ति विकचं मज्जत्तरङ्गाकुलं
चक्षुः सास्रु च वर्त्तते रसवशादेकैकमन्यक्रियम् ॥१९॥ (ङ)

प्रतीहारी । स्वगतम् । सर्व्वथा (च)मन्दोदरीमन्दीकृतच्छेदपङ्क्ते-

---

(२२) सर्वथा मन्दोदरीमन्दीकृतच्छेदपङ्क्तेरस्य सीतामया उल्लापा-

---

(घ) नैकप्रकारः बहुविधः ।

(ङ) व्यञ्चदिति । एकैकं चक्षुः विंशतेरिति शेषः । रसवशात् रामवशात् अन्यक्रियं विभिन्नव्यापारं वर्त्तते तथाहि एकं व्यञ्चत् कुञ्चत् । द्वितीयं कुञ्चितं प्रागेव सङ्कोचमाप्तम् । तृतीयम् उन्मुखं सीतां प्रत्यभिमुखम् । चतुर्थं हसितवत् हास्ययुक्तम् । पञ्चमं साकूतं साभिप्रायम् । षष्ठम् आकेकरम् ईषद्वक्रम् सप्तमं व्यावृत्तं पराङ्मुखम् अष्टमं प्रसरत् विकासं गच्छत् । नवमं प्रसादि प्रसन्नं विमलमित्यर्थः । दशमं मुकुलं मुद्रितम् । एकादशं सप्रेम प्रेमपूर्णम् । द्वादशं कम्प्रं कमनीयं स्पृहयालु इत्यर्थः । त्रयोदशं स्थिरं निश्चलम् । चतुर्दशम् उद्भ्रु उन्नमितभ्रु । पञ्चदशं भ्रान्तं घूर्णत् । षोडशं अपाङ्गवृत्ति कटाक्षितम् । सप्तदशं विकचं विकस्वरम् । अष्टादशं मज्जत् अन्तर्लीनमित्यर्थः । ऊनविंशं तरङ्गाकुलं तरलमित्यर्थः । विंशं सास्रु अश्रुयुतम् । चार्द्धविमीलितं वृत्तम् ।

(च) मन्दोदरीमन्दीकृतच्छेदपङ्क्तेः मन्दोदर्य्या मन्दीकृतः खर्वीकृतः च्छेदपङ्क्तिः येन तथोक्तस्य । उल्लापाः आलापाः । निसर्गदुःसहेन स्वभावादसह्येन वैरित्वादिति भावः । सीतावेशं सीतावेशनम् । परशुरामप्रार्थप्रतिनिवृत्तः परशुरामात् प्रतिनिवृत्तः ।

दुगविठ्ठो से सीदामग्गा उच्चावा। विचिन्त्य। ता भोदु चिसग्गदूसहेण से परसुरामणामग्गहणेण सिढिलेमि सीदावेसं। प्रकाशम्। णं विणवेमि परसुरामपासपडि- णिउत्तो इत्यर्धोक्ते (३२)।

रावणः। मायामयस्तच्छीघ्रं प्रविशतु।

प्रविश्य मायामयः। देव! मायामय इतो दृष्टिदानेनानु- ग्राह्यः।

रावणः। अथ याचितपरशुना परशुरामेण किमभि- हितमासीत्।

मायामयः। त्रैलोक्यमाणिक्य! रामोदन्तमाकर्णयतु स्वामी।

पौलस्त्यः प्रणयेन याचत इति श्रुत्वा मनो मोदते
देयो नैष हरप्रसादपरशुस्तेनाधिकं ताम्यति।
तद्वाच्यः स दशाननो मम गिरा दत्ता द्विजेभ्यो मही
तुभ्यं ब्रूहि रसातलत्रिदिवयोर्निर्जित्य किं दीयताम्॥२०॥(छ)

---

तद्भवतु निसर्गदुःसहेनास्य परशुरामनामग्रहणेन शिथिलयामि सीतावेशम्। ननु विज्ञापयामि परशुरामपार्श्वप्रतिनिवृत्तः।

---

(छ) पौलस्त्य इति। पौलस्त्यः रावणः प्रणयेन याचते परशु- मिति शेषः। इति श्रुत्वा मनः ममेति शेषः मोदते हृष्यति रावणस्य महामहिमशालित्वात् याचनं हर्षायेति भावः। एषः हरप्रसाद- परशुः शिवानुग्रहदत्तः कुठारः न देयः तेन हेतुना अधिकं ताम्यति क्षुभ्यति। तत् तस्मात् स दशाननः मम गिरा वाचा त्वया वाच्यः वक्तव्यः। मया मही द्विजेभ्यः दत्ता, ब्रूहि वद, रसातलत्रिदिवयोः

रावणः । कदा नु खलु परशुरामो रसातलत्रिदिवयो-
र्जेता दाता च संवृत्तः ? । रावणः पुनः प्रतिग्रहीता ।
ततस्त्वया किमसौ प्रत्युक्तः ।

मायामयः । नक्तंचरचक्रवर्त्तिन् ! इदमिदं निवेद्यते ।

देवो यद्यपि ते गुरुः स भगवान् खण्डेन्दुचूडामणिः
क्षौणीमण्डलमेकविंशतिमिदं वारान् जितं यद्यपि ।
द्रष्टव्योऽस्यसुमेव भार्गववटो ! कण्ठे कुठारं वहन्
पौलस्त्यस्य पुरस्तथापि रचितप्रत्यग्रसेवाञ्जलिः ॥ २१ ॥ (ज)

रावणः । सप्रसादम् । (झ) कथमीदृशमनीदृशोऽभिदधीत
ततस्ततः ? ।

मायामयः । तूष्णीं तिष्ठति ।

रावणः । पराभिहितं हि भाषसे तदविशङ्कं निवेदय ।

मायामयः । देव ! (ञ) प्रकृतिमुखरा हि ब्राह्मणजाति-
र्देवादेश इति निवेद्यते ।

---

पातालस्वर्गयोर्मध्ये किं निर्जित्य तुभ्यं दीयताम् । यदि पातालं वा स्वर्गं कामयसे, तदा तत् निर्जित्य अहं तुभ्यं दास्यामीति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(ज) देव इति । हे भार्गवबटो ! भृगुवंशद्विज ! यद्यपि स भगवान् देवः खण्डेन्दुचूडामणिः इन्दुशेखरः ते तव गुरुः, यद्यपि च एकविंशतिं वारान् इदं क्षौणीमण्डलं भूतलं जितं भवतेति शेषः तथापि असुमेव कुठारं कण्ठे वहन् पौलस्त्यस्य रावणस्य पुरः अग्रतः रचितः कृतः प्रत्यग्रः अभिनवः सेवाञ्जलिः सेवार्थं करयोर्योगः येन तथाभूतः द्रष्टव्यः भवेति शेषः । शार्दूलविक्रीडितं वृत्तम् ।

(झ) अनीदृशः अनेवंविधः त्वदन्यः जन इत्यर्थः ।

(ञ) प्रकृतिमुखरा स्वभावचपला ।

परशुमिममदेयं याचते युद्धहेतो-
र्गिरिशधनुरधिज्यं कर्त्तुमुत्कण्ठते च ।
तदिदमभिदधीथास्त्वं प्रवाचं पिशाचं
तव भुजतरुखण्डं मत्कुठारो न सोढा ॥ २२ ॥ (ट)

रावणः । सक्रोधहासम् । सूक्तं (ठ) भद्रेण प्रकृतिमुखरा ब्राह्मणजातिरिति तदनुभविष्यति क्षुद्रक्षत्रियविजयदुःशिक्षितो मुनिखेटश्चापलस्य फलम् ।

मायामयः । (ड) अस्तमितान्यविक्रमगतीनि जगन्ति त्रीण्यपि मन्वानो नितरां दृप्यति ब्रह्मवीरः ।

रावणः । कतरदधिष्ठानमध्यास्ते स ते ब्रह्मवीरः ।

मायामयः । स्वगतम् । (ढ) सक्रोपग्रन्थिरिवास्मत्स्वामी भवतु न प्राणनिर्याणेऽप्यनुचितवाचो भवन्ति भृत्याः । प्रकाशम् ।

---

(ट) परशुमिति । इमम् अदेयं दातुमनर्हं परशु युद्धहेतोः याचते प्रार्थयते गिरिशधनुः शैवं कार्मुकम् अधिज्यं मौर्वीसङ्गतं कर्त्तुम् उत्कण्ठते च । रावण इति शेषः । तत् तस्मात् त्वं प्रवाचं प्रवक्तारं पिशाचं देवयोनिविशेषं राक्षसमित्यर्थः रावणम् इदम् अभिदधीथाः वदेः मम कुठारः तव भुजतरुखण्डं न सोढा न सहिष्यते छेत्स्यतीति भावः । वृत्तमत्र मालिनी ।

(ठ) सूक्तं शोभनं कथितं भद्रेण साधुना त्वयेति शेषः । क्षुद्रक्षत्रियविजयदुःशिक्षितः क्षुद्राणां क्षत्रियाणां विजयेन दुःशिक्षितः दृप्तः । मुनिखेटः मुन्यधमः । चापलस्य चञ्चलतायाः औद्धत्यस्य इत्यर्थः ।

(ड) अस्तमितान्यविक्रमगतीनि अस्तमिता तिरोहिता अन्येषां क्षत्रियवीराणां विक्रमगतयः पराक्रमव्यापाराः येषु तानि ।

(ढ) सक्रोपग्रन्थिः क्रोपग्रन्थिना क्रोधावेगेन सहितः । प्राण-निर्याणे प्राणात्यये ।

निःशेषं काश्यपाय क्रतुविधिगुरवे दक्षिणीकृत्य पृथ्वीं
कान्तैर्ज्योतिःशिखण्डैर्मधुरिपुशयने व्यस्तवान् वारि येभ्यः ।
तानेलानारिकेलीक्रमुककृषिलताराजरम्भावनान्ता-
नम्भोधेर्गर्भभागानधिवसति मुनिर्भार्गवो भर्गशिष्यः ॥२३॥ (थ)

रावणः । तर्हि मिथिलातः सिंहलानुसरेण लङ्कां (त) साधयतः सविधीभविता ।

मायामयः । देव । प्रकृतिरोषणो रेणुकापुत्रस्तमागतमुत्प्रेक्षे ।

रावणः । तत्प्रियं प्रियं नः । नेपथ्ये ।

स एष भृगुपुङ्गवो गिरिशबालशिष्यो मुनिः
परश्वधशिखाग्रसञ्चयचिकृत्ताखिलक्षत्रियः ।
उपैति धृतमत्सरो गुरुशरासनभ्यक्कृतेः
क्व नाम दशकन्धरो वहतु चन्द्रहासं करे ॥ २४ ॥ (द)

---

(थ) निःशेषमिति । भर्गस्य शिवस्य शिष्यः भार्गवो मुनिः जामदग्न्यः क्रतुविधेरश्वमेधानुष्ठानस्य गुरवे आचार्याय काश्यपाय निःशेषं यथा तथा पृथ्वीं दक्षिणीकृत्य दक्षिणां दत्त्वा ज्योतिःशिखण्डैः तेजः पूर्णैः कान्तैः शरैः मधुरिपुशयने हरिशयनकाले येभ्यः सकाशात् वारि जलं व्यस्तवान् अपसारितवान् एलानां नारिकेलीनां क्रमुकाणां गुवाकानां कृषिलतानां नागवल्लीनां राजरम्भानाञ्च वनैः अन्तान् रम्यान् तान् अपसारिततोयान् इत्यर्थः अम्भोधेः समुद्रस्य गर्भभागान् अभ्यन्तरप्रदेशान् अधिवसति । दत्तायां पृथिव्यां वासस्य अनौचित्यात् जलापसारणेन समुद्रगर्भे वसतीति भावः । स्रग्धरावृत्तम् ।

(त) साधयतः गच्छतः । सविधीभविता भविष्यतीत्यर्थः ।

(थ) प्रकृतिरोषणः स्वभावकोपनः रेणुकापुत्रः रेणुका जमदग्निपत्नी तत्पुत्रः परशुरामः । उत्प्रेक्षे सम्भावयामि ।

(द) स इति स एषः भृगूणां भार्गवाणां पुङ्गवः श्रेष्ठः गिरि-

रावणः। (ध) अनाकर्णनमभिनीय। अपि न नर्मगर्भमभिधत्से।

मायामयः। सत्यमेतत्।

रावणः। स विनोदयिता मे (न) कन्दर्पकण्डूलभुजदण्डमण्डलम्। नेपथ्ये पुनस्तदेव।

मायामयः। ननु प्राप्त एवायमसावितः (प) समहस्तास्फाल्यमानमार्जनामञ्जुमुरजनिनदनिष्यन्दसुन्दरेण रवेण निवेदितनिजागमनो जामदग्न्यः।

ततः प्रविशति करेण शरमान्दोलयन्नूनधनुर्जामदग्न्यो माठरश्च।

माठरः। स्वगतम्।

अयमेव महाभागो भृग्वपत्यं यदस्य हि।
यदेव ब्रह्म परमं स एव गिरिशो गुरुः॥ २५॥ (फ)

---

यस्य शम्भुशिष्यः नवान्तेवासी परश्वधस्य कुठारस्य शिक्षाक्षमे आशु-शुक्षणौ अग्नौ हुता आहुतीकृता अखिलाः समग्राः क्षत्रियाः येन तपोनिधिः मुनिः परशुरामः गुरोर्हरस्य शरासनं कार्मुकं तस्य न्यकृतेः अधिक्षेपात् कृतमत्सरः जातक्रोधः सन् उपैति आगच्छति। दश-कन्धरः रावणः क नाम? कुत्र खलु वर्तते इति शेषः, करे चन्द्रहासं तदाख्यम् असिं करोतु गृह्णातु। वृत्तमत्र पृथ्वी।

(ध) अनाकर्णनं अश्रवणम्। नर्मगर्भं सपरिहासम्।

(न) कन्दर्पकण्डूलभुजमण्डलं कन्दर्पेण कामेन कण्डूलं कण्डूति-युक्तं बाहुदण्डमण्डलम्।

(प) समहस्तेति समेन हस्तेन आस्फाल्यमानः ताड्यमानः मार्जनया शोधनेन मञ्जुः मनोज्ञः यः मुरजः वाद्यभेदः तस्य निनदः निस्वनः तद्वत् निष्यन्दसुन्दरेण निःसरणगम्भीरेण।

(फ) अयमिति। अयमेव भृगोरपत्यं महाभागः महात्मा, यदु

किञ्च (ब) अनाकलितसत्वसारसम्भारभीषणरमणीया-
कृतयो हि महात्मानः। तथाहि।

वैखानसो मुनिवृषा प्रवरश्च वीर-
श्चित्रं चरित्रमिदमस्य मुदे भिये च।
क्षीराम्बुधेरिव पयः सभुजङ्गराजं
मार्तण्डरूपमिव घर्मपरिप्लुतं च॥ २६॥ (भ)

विचिन्त्य। भवत्वेवं तावत्। प्रकाशम्। भगवन्! भार्गव! (म) किमिदमप्राकृतच्यवनादिवचःशृङ्खलाविसंष्ठुलमपक्रममुपक्रान्तम्।

जामदग्न्यः। वचरवमनाकर्ण्य। अहो! मयि महान् खलु

---

यस्मात् अस्य परमं ब्रह्म यदेव, स गिरिशः शिव एव गुरुः आचार्य्यः हियब्दः पादपूरणार्थः। परमात्मनो हरस्य शिष्यत्वात् महाभागत्वमित्यर्थः।

(ब) अनाकलितेति अनाकलितेन केनाप्यशोभितेन सत्त्व-सारयोः उत्साहबलयोः सम्भारेण आतिशय्येन भीषणा रमणीयाश्च आकृतयः येषां तथाभूताः।

(भ) वैखानस इति। अयं मुनिवृषा तापसप्रवरः वैखानसः यावज्जीवब्रह्मपरायणः प्रवरः वीरश्च। अस्य चित्रम् अद्भुतं इदं चरित्रं क्षीराम्बुधेः सभुजङ्गराजं पन्नगराजसहितं पयः सलिलमिव घर्मेण परिप्लुतं युक्तञ्च मार्तण्डरूपमिव सौरं रूपमिव मुदे आनन्दाय भिये भीतये च लोकानामिति शेषः। वृत्तमत्र वसन्ततिलकम्।

(म) अप्राकृतेति। अप्राकृतया अगणितया च्यवनादीनां पूर्व-पुरुषाणां वचःशृङ्खलया वचनपरम्परया विसंष्ठुलम् असङ्गतम् अपक्रमं क्रमस्य शिष्टाचाररूपनियमस्य अभावः शिष्टाचाररहितमित्यर्थः उपक्रान्तं प्रारब्धम्। पुरा च्यवनादयः परशुरामपूर्वपुरुषाः रामं पुनः

(य) महेश्वरवल्लभायाः प्रसादः । कुतः ।

गोदानमङ्गलविधेरनु रेणुका यान्
केशानवर्द्धयत तातनिवारिताऽपि ।
वेणीकृता मम जटापटलस्य हेतो-
स्ते कुन्तलाः स्वयमपास्य भवं भवान्या ॥ २७ ॥ (र)

माठरः । भगवन् ! भार्गव ! इत्यादि तदेवाभिधत्ते ।

जामदग्न्यः । महाब्राह्मण ! किमुच्यते यदनभिज्ञोऽसि (ल) वीरव्रतचर्याक्रमस्य न च विन्दानस्य योगमार्गमनुप्रीतिपदः परब्रह्मानन्दः । पश्यतु भवान् ।

---

पुनः जगत् संहर्तुं प्रवृत्त मुपलभ्य तस्मात् पापात् निवारयामासुरिति पौराणिकी वार्त्ता ।

(य) महेश्वरवल्लभायाः पार्वत्याः ।

(र) गोदानेति । गोदानं गावः केशाः दीयन्ते खण्ड्यन्ते अस्मिन् इति दो च छेदे इत्यस्मात् अनट् प्रत्ययः । उपनयनान्तरं विवाहात् प्राक् क्रियमाणकेशच्छेदनगर्भः संस्कारविशेषः । तदेव मङ्गलं माङ्गलिकं कर्म, तस्य विधेः अनुष्ठानात् अनु परं रेणुका मम माता तातेन पित्रा निवारितापि यान् केशान् अवर्द्धयत वर्द्धयामास, भवान्या पार्वत्या भवं हरम् अपास्य पतिसेवामपि त्यक्त्वा इति भावः । मम जटापटलस्य जटासमूहस्य हेतोः स्वयं ते कुन्तलाः केशाः वेणीकृताः । वृत्तमत्र वसन्ततिलकम् ।

(ल) वीरव्रतचर्य्याक्रमस्य वीरव्रतस्य वीराचारस्य या चर्य्या अनुष्ठानं तस्य क्रमः तस्य कर्मणि षष्ठी अनभिज्ञः अज्ञः । विन्दानस्य जानतः योगमार्गं मुक्तिमार्गमित्यर्थः न च वीरव्रतस्येति शेषः । अनुप्रीतिपदः प्राप्तप्रीतिदायी । वीरव्रतचर्य्यायां ब्रह्मानन्दसुखमस्तीति भावः ।

शैवं पश्यति षण्मुखे भगवती कोदण्डशिक्षार्थं
धम्मिल्लं विरचय्य चुम्बितवती यं वत्सला मूर्द्धनि ।
सोढा सोऽपि हि भार्गवो गुरुधनुर्निर्भञ्जनं राघवा-
दित्याकर्ण्य गणैर्वृतः स्मितमुखैरीशोऽपि लज्जिष्यते ॥२८॥ (ङ)

माठरः । शिष्यस्नेह एव मां मुखरयति । तदाचार्याः प्रमाणम् ।

जामदग्न्यः । स एष भृगुपुङ्गव इत्यादि पठति ।

राघवः । साधु भोः ! साधु सत्यमिन्दुशेखरशिष्योऽसि ।

वीरप्रसूर्जगति भार्गव ! रेणुकैव
या त्वां त्रिलोकतिलकं सुतमभ्यसूत ।
शक्रेभकुम्भतटखण्डनचण्डधारो
येनैष मे न गणितो युधि चन्द्रहासः ॥ २९ ॥ (च)

---

(ङ) शैवमिति । षण्मुखे षडानने स्कन्दे शैवं पश्यति अव-लोकयति सति मां प्रतीति शेषः । वत्सला स्नेहवती भगवती पार्वती कोदण्डशिक्षया धनुर्विद्यापर्य्यालोचनेन श्लथं शिथिलं धम्मिल्लं केशं विरचय्य यं मां मूर्द्धनि चुम्बितवती सोऽपि भार्गवः राघवात् गुरो-र्धनुषो निर्भञ्जनं सोढा इति आकर्ण्य स्मितमुखैः हसद्भिः गणैः प्रमथैः वृतः ईशोऽपि लज्जिष्यते लज्जां प्राप्स्यति ।

(च) वीरप्रसूरिति । हे भार्गव ! जगति रेणुका भवन्माता एव वीरप्रसूः वीरप्रसविनी, या त्रिलोकीतिलकं त्वाम् अभ्यसूत प्रसूत-वती । येन युधि शक्रस्य य इभः हस्ती ऐरावत इत्यर्थः तस्य कुम्भावेव तटौ तयोः खण्डनेन विदारणेन चण्डा तीक्ष्णा धारा यस्य तादृशः मे मम चन्द्रहासः असिः न गणितः तुच्छीकृत इति भावः । वसन्त-तिलकम् ।

जामदग्न्यः। पुलस्त्यापत्य! (प) अयमस्माकमाकस्मिकवीरव्रतदायी विफलीकृतकृतान्तक्रोधहासः स ते चन्द्रहासः। येन त्रिपिविष्टपरितुष्टये स्वकण्ठकाण्डमण्डलीं द्विधा कृतवानसि।

रावणः। आं जामदग्न्य! स एवैष (स) निसर्गकरालः करवालः येन सा मम भूर्भुवःस्वस्त्रयी पादपीठे लोठिता।

जामदग्न्यः। लङ्केश्वर! ईदृश एवायं चन्द्रहासः।

दृष्टे मुखानामेतस्मिन् कण्ठखण्डनशङ्कया।
स्वेषां च न परेषां च जायन्ते कम्पसम्पदः॥ ३०॥ (ह)

रावणः। भार्गव! भार्गव! मामेवं किं करवाम (च) यदतिक्रान्ते वस्तुनि साक्षिप्रत्ययपरतन्त्रा व्यवहाराः। ततश्च।

---

(प) आकस्मिक वीरव्रतदायी आकस्मिकम् अतर्कितं वीरव्रतं ददातीति तथोक्तः। विफलीकृतकृतान्तक्रोधहासः विफलीकृतौ कृतान्तस्य यमस्य क्रोधहासौ येन तथोक्तः तन्निर्जयादिति भावः। येन चन्द्रहासेन त्रिपिविष्टस्य हरस्य परितुष्टये। स्वस्य कण्ठा एव काण्डाः दण्डस्तम्भाः तेषां मण्डलीम्।

(स) निसर्गकरालः स्वभावभीषणः। करवालः असिः।

(ह) दृष्टे इति। एतस्मिन् करवाले दृष्टे कण्ठखण्डनशङ्कया शिरश्छेदनभयेन स्वेषां मुखानामेव न परेषाञ्च अन्येषां शत्रूणां मुखानां कम्पसम्पदः कम्पोदयाः जायन्ते। स्वशिरांसि एव कम्पन्ते, न परेषान्तु कम्पन्ते एव इत्यर्थः।

(च) अतिक्रान्ते गते वस्तुनि विषये साक्षिप्रत्ययस्य परतन्त्राः पराधीनाः व्यवहाराः व्यापाराः अतीतं वस्तु साक्षिभिः प्रत्याय्यते इति भावः।

आस्कन्धावधि कण्ठकाण्डविपिने द्राक् चन्द्रहासासिना
छेत्तुं प्रक्रमिते मयैव टसिति त्रुट्यच्छिरःसन्ततौ ।
अस्मेरं गलितास्रु गद्गदपदं भुग्नभ्रु वा यद्यभू-
त्तेष्वेकमपि स्वयं स भगवांस्तस्मै प्रमाथं शिवः ॥३१॥ (क)

आत्मद्रुग्धः । आत्मवधः (ख) प्रथमः पातकेषु । अनेनापि विकत्थसे इत्यहो । ते श्रुतिषु वैचक्षण्यं यदित्थमध्यगीष्महि ।

असूर्या इति ते लोका अन्धेन तमसा वृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥३२॥ (ग)

---

(क) आस्कन्धेति । मया एव स्वयमित्यर्थः द्राक् झटिति आस्कन्धावधि स्कन्धात् अवधेः सीम्नः आ इति आस्कन्धावधि स्कन्धपर्यन्तमित्यर्थः टस् इति त्रुट्यन्ती शिरःसन्ततिः शिरःसमूहो यस्य तथाभूते कण्ठकाण्डविपिने कण्ठरूपदण्डकाण्डवने छेत्तुं प्रक्रमिते प्रारब्धे सति तेषु शिरःसु मध्ये एकमपि शिर इति शेषः यदि अस्मेरं हास्यविरहितं गलितास्रु अश्रुपूर्णं गद्गदपदं कातर्यात् अस्पष्टार्थोच्चारितपदप्रतिकृत्तं वा भुग्ना भ्रूर्यस्य तादृशम् अभूत्, तत् तदा तस्मै सः भगवान् शिवः स्वयं प्रमाथं साक्षीत्यर्थः । धैर्यातिशयात् न कस्यापि शिरसः व्याकुलताभाव इति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(ख) पातकेषु पतन्ति एभ्यः पातकानि पापानि तेषु मध्ये प्रथमः श्रेष्ठः । विकत्थसे श्लाघसे । श्रुतिषु वेदेषु शास्त्रेषु वा वैचक्षण्यं पाण्डित्यम् अध्यगीष्महि अधीतवन्तः वयमिति शेषः ।

(ग) असूर्या इति । ये के च जनाः आत्महनः आत्मघातिनः ते प्रेत्य तान् लोकान् अभिगच्छन्ति प्राप्नुवन्ति । कानित्याह—असूर्या इति सूर्यादिरश्मिरहिता इति भावः अतएव अन्धेन निविड़ेन तमसा अन्धकारेण वृताः आच्छन्नाः, ते प्रसिद्धाः ।

राघवः । आः (घ) क्षत्रियापुत्र ! ब्राह्मण इव मीमांसमानस्त्रिवेदीं विप्लावयसि । तदेष ते राजा राघवो दण्डधरः ।

जामदग्न्यः । विहस्य । अहो (ङ) वर्णाश्रमेषु वैशारद्यं राज्ञः । तदिदमध्याप्यसे ।

सकलस्यास्य लोकस्य जातिर्भवति मातृतः ।
ऋषीणां तु श्रुतिदृष्टा पितृतो धर्मनिर्णयः ॥ ३३ ॥ (च)

राघवः । यदात्थ एवमपि भवतु ।

जामदग्न्यः । किं (छ) पुनरैरम्मदे मज्जसि न दारयसि

---

(घ) क्षत्रियापुत्र ! रेणुकायाः गाधिराज पुत्रीत्वादिति भावः । पुरा गाधिर्नाम कुशिकात्मजः अपुत्रः पुत्रीं रेणुकां जमदग्नये भार्गवाय ददौ । स तु ऋषिः स्वस्य श्वशुरस्य च पुत्रार्थं यज्ञमकरोत् । तत्र पायसद्वयम् अग्नेरुत्थितम् एकं ब्रह्मतेजोऽन्वितं अपरं क्षत्रतेजसा सम्भृतम् । ब्रह्मतेजोऽन्वितं रेणुकाया भक्षणार्थं प्रस्तुतं भ्रान्त्या तन्माता बुभुजे, क्षात्रन्तु रेणुका । ततस्तयोरेका ब्रह्मिष्ठं विश्वामित्रमसूत । अपरा क्षत्रतेजःसम्भृतं परशुराममिति पौराणी कथात्रानुसन्धेया । मीमांसमानः तत्त्वं विचारयन् । विप्लावयसि विप्लुतां विध्वस्तामिति यावत् करोषि ।

(ङ) वर्णाश्रमेषु वर्णेषु ब्राह्मणादिषु आश्रमेषु ब्रह्मचर्यादिषु च वैशारद्यम् आधिपत्यं वा वैचक्षण्यम् । अध्याप्यसे पाठ्यसे शिक्ष्यसे इत्यर्थः ।

(च) सकलस्येति । अस्य सकलस्य लोकस्य जातिः मातृतः मातृसम्बन्धेन इत्यर्थः भवति लोकात् योनिर्गरीयसीति स्मरणात् । श्रुतिदृष्टा वेददर्शिनाम् ऋषीणान्तु पितृतः पितृसम्बन्धेन धर्मनिर्णयः धर्मस्य आम्नायादि विहितस्य निर्णयः निरूपणम् । यदि चाहं क्षत्रियासुतः, तथापि पितुर्ब्राह्मणत्वात् ब्राह्मणत्वमिति भावः ।

(छ) ऐरम्मदे इरया जलेन माद्यति वर्द्धते इति इरम्मदो वैद्युतानलः ;

ज्योतिरस्तमयते ? । अतश्च ।

यः पाणिप्रणयात्पवित्रिततनुर्देवेन खट्वाङ्गिना
यः यस्यैकगुरुर्गजासुरवधूवैधव्यमुद्राप्रदः ।
तस्मिन् परशौ शिताग्रहुतभुग्ज्वालाच्छटाडामरे
क्षिप्यन्तः सहसा व्रजन्ति विलयं ते चन्द्रहासादयः ॥२४॥ (ज)

राघवः । विहस्य । अयमसौ चन्द्रहासस्य (झ) विलापयिता कुठारो यः खण्डैकभाग इत्यमाङ्गलिकत्वाद्भगवता भर्गेण भवते दत्तः । तत्तपस्यतस्ते महदुपकरणमासीत्स-मित्काण्डखण्डनाय ।

---

वाडवानलो वा । तस्य इदं ऐरम्मदं तस्मिन् महसि तेजसि द्वारवीयं दाहशक्तिः ज्योतिः काष्ठानलः इत्यर्थः अस्तमयते अस्तं नाशं व्रजति गच्छति तिरोहितं भवतीत्यर्थः ।

(ज) य इति । यः देवेन खट्वाङ्गिना हरेण पाणिप्रणयात् पाणिना करेण प्रणयः परिग्रहः तस्मात् पवित्रिता पाविता तनुः अवयवो यस्य तथोक्तः, यस्यैकगुरुः भक्तानाम् एकः मुख्यः गुरुः महान्, तथा गजासुरस्य वधूनां यत् वैधव्यं पतिराहित्यं तदेव मुद्रा सङ्कोचः तां प्रददातीति तथाभूतः । पुरा देवदेवः अनेन कुठारेण गजासुरं निहतवानिति प्रसिद्धिः । तत्र शिताग्रं तीक्ष्णधारा एव हुतभुग्ज्वाला वह्निशिखा तस्याः छटाभिः स्फुरणैः डामरे भीषणे अस्मिन् परशौ कुठारे क्षिप्यन्तः मज्जन्तः ते चन्द्रहासादयः सहसा विलयं व्रजन्ति खण्डिता भवन्तीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

(झ) विलापयिता विध्वंसयिता । खण्डैकभागः खण्डः त्रुटितः असुरविध्वंसनेनेति भावः एकभागो यस्य तादृशः अतएव खण्ड-परशुरिति शिवपर्यायः । अमाङ्गलिकत्वात् अशुभजनकत्वात् क्षत्रियाणां पशूनाम् अमङ्गलजनकत्वस्य प्रासङ्गिकत्वादिति भावः । उप॰

जामदग्न्यः । भोः राघव ! स एवायं भगवतो भवानीवल्लभस्य (ञ) प्रसादचिह्नकः परशुर्महदुपकरणं च मे तपस्यतः समित्काण्डखण्डनाय क्रुध्यतस्तु प्रचण्डदुर्वृत्तदण्डनाय ।

राघवः । जामदग्न्य ! ईदृश एवायं (ट) खण्डपरशुपाणौ परशुरासीत् । आधारनिबन्धनो यदाधेयस्य गुणाध्यारोपः । मुक्ताशुक्तिसम्पुटपीतं हि पथ्य पयो ग्रन्थीभवति ।

जामदग्न्यः । निशाचरचक्रवर्त्तिन् ! न (ठ) सार्वत्रिकमिदं सलिलगर्भगतोऽपि गभस्तिमाली दुरालोक एव । जामदग्न्यपाणिप्रणयवानपि हरपरश्वधो दुर्निषेध एव ।

---

करणम् उपक्रियते अनेनेति उपात् कृधातोः करणे अनट्प्रत्ययः । उपकारसाधनमित्यर्थः । समित्काण्डखण्डनाय, काष्ठप्रकाण्डखण्डनाय ।

(ञ) प्रसादचिह्नकः अनुग्रहस्मारकः । प्रचण्डानां भीषणानां दुर्वृत्तानां दुराचाराणां दण्डनाय ध्वंसनाय ।

(ट) खण्डपरशुपाणौ खण्डपरशुः शिवः तस्य पाणौ । ईदृशः प्रचण्डदुर्वृत्तदण्डन इत्यर्थः । आधेयस्य आश्रितस्य गुणाध्यारोपः गुणवत्त्वाध्यासः आधारनिबन्धनः आश्रयहेतुकः आश्रयगुणेनैव आश्रितस्य गुणवत्त्वं न तु स्वत इति भावः । मुक्ताशुक्तिसम्पुटपीतं मुक्तायाः या शुक्तिः जलजजीवविशेषः तस्याः सम्पुटेन उभयपार्श्वेन पीतं पयः सलिलं ग्रन्थीभवति मुक्तावयवत्वेन परिणमतीति भावः ।

(ठ) इदम् आधेयस्य आधारनिबन्धनं गुणवत्त्वमित्यर्थः । गभस्तिमाली रश्मिमाली सूर्य्य इत्यर्थः दुरालोकः दुर्दर्शः । यदि आधारस्यैव प्राबल्यं तदा कथम् आधारे सलिले पतितस्य सूर्य्यस्य आधारगुणः सुखालोकत्वं स्यादिति भावः । दुर्निषेधः दुर्वारः ।

रावणः। ओमिति ब्रूमः। यदि न दुर्निषेधः कथमिव (ड) रेणुकाशिरश्छेदेऽपि स्वच्छन्दः। अपिच रे ब्रह्मबन्धो!।

देवीविलासमुकुरः परशुर्यं आसीत्
लम्बोदरासुरशिरोमणिशातधारः।
तं रेणुकारुधिरपङ्ककृताङ्कमेनं
दृष्ट्वा न कस्य हृदयं करुणा रुणद्धि ॥ २५ ॥ (ढ)

विचिन्त्य। हंहो नीललोहितशिष्य! नूतनः खल्वेष क्षत्रियधर्मो यत् जननीजनेऽपि (ण) शौर्यपर्यवसायः। तथाप्याद्रियसे। अहो! स्वतन्त्रा लोकयात्रा। यद्वा असतामपि महापुरुषशुश्रूषा किमपि कामदुघा। यतः।

त्वं जामदग्न्य! जननीवधपातकेन (त)
न ब्रह्मवर्चसवता सविधेऽभविष्यः।

---

(ड) रेणुकाशिरश्छेदे इति सोल्लुण्ठोक्तिः। ब्रह्मबन्धो! ब्राह्मणापसद! इत्यर्थः।

(ढ) देवीति। देव्याः पार्वत्याः विलासमुकुरः क्रीडादर्पणं यः परशुः लम्बोदरासुरस्य गजासुरस्य शिरोमणौ शाता निशिता धारा यस्य तथोक्तः आसीत्, रेणुकायाः रुधिरपङ्केन कृतः अङ्कः चिह्नं कलङ्को वा यस्य तादृशं तम् एनं परशुं दृष्ट्वा अवलोकयितुः कस्य जनस्य हृदयं करुणा दया न रुणद्धि आच्छादयति? अपितु सर्वस्यैवेति भावः। वृत्तमत्र वसन्ततिलकम्।

(ण) शौर्यपर्यवसायः वीरत्वप्रकाशः। लोकयात्रा लोकस्थितिः स्वतन्त्रा स्वाधीना, यो यथा इच्छति स तथैव करोतीति स्वेच्छाचारित्वमिति भावः। कामदुघा अभिलषितदोहिनी। महापुरुषसेविनो दुर्जना अपि अभीष्टं साधयन्तीति भावः।

(त) त्वमिति। हे जामदग्न्य! त्वं जननीवधपातकेन ब्रह्मवर्चसवतां

गीर्वाणवन्द्यचरणस्तव चन्द्रमौलि-

राचार्यकं स भगवान् यदि नाकरिष्यत् ॥ ३६ ॥

तथाप्येतदभिधीयते ।

चापाचार्यस्त्रिपुरविजयी कार्त्तिकेयो विजेयः

शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः ।

अस्त्येवैतत् किमु कृतवता रेणुकाकण्ठबाधां

बद्धस्पर्द्धस्तव परशुना लज्जते चन्द्रहासः ॥ ३७ ॥ (अ)

जामदग्न्यः । कथं नाम न लज्जते यतो (इ) निसर्ग-
निरवग्रहं न जानाति जामदग्न्यम् ।

रेवाभागभ्रमज्जद्द्विविधवरवधूहस्तयन्त्रोज्झिताभिः

क्रीडन् वारां लताभिः स्मरसि यदकरोदर्जुनः कार्त्तवीर्यः ।

---

मञ्जिष्ठानां सविधे सकाशे न अभविष्यः स्थितिं न अलप्स्यथाः, यदि गीर्वाणैः देवैः वन्द्यौ चरणौ यस्य तथाभूतः स भगवान् चन्द्रमौलिः तव आचार्यकं गुरुकर्म न अकरिष्यत् । हरिष्यत्वेनैव भवान् कवि-जनमध्ये गतश्च इति भावः । वृत्तमत्र वसन्ततिलकम् ।

(अ) चापाचार्य्य इति । त्रिपुरविजयी शङ्करः चापाचार्य्यः धनुर्वेदशिक्षयिता कार्त्तिकेयः विजेयः पराजयभाजनं, पुराकिल भगवतो देवाद् धूर्जटेः धनुरुपनिषदम् अधीयानेन भृगुनन्दनेन स्कन्दस्य स्पर्द्धया क्रौञ्च शिखरम् अतिनिशितविशिखसमूहेन छेत्त्वा अनुपिहितवत् बिभेद । इति पौराणिकी कथा । शस्त्रव्यस्तः शस्त्रेण व्यस्तः अपसारितः उदधिः समुद्रः सदनं वासभूमिः, इयं भूः पृथ्वी ब्राह्मणाय दत्तेति शेषः हन्तकारः हर्षनिदानम् । सर्वं तवेति सम्बध्यते । एतदेव स्वस्ति शुभम् । एतद्गुणान्वये न लज्जेति भावः । किमु किन्तु रेणुकायाः कण्ठबाधां कण्ठच्छेदं कृतवता तव परशुना कुठारेण बद्धस्पर्द्धः कृतस्पर्द्धः चन्द्रहासः लज्जते । वृत्तमत्र मन्दाक्रान्ता ।

(इ) निसर्गनिरवग्रहं निसर्गेण स्वभावेन निरवग्रहम् अप्रति-
बन्धम् ।

रावणः । ओमिति ब्रूमः । यदि न दुर्निषेधः कथमिव (ड) रेणुकाशिरश्छेदेऽपि स्वच्छन्दः । अपिच रे ब्रह्मबन्धो ! ।

देवीविलासमुकुरः परशुर्यं आसीत्
लम्बोदरासुरशिरोमणिशातधारः ।
तं रेणुकारुधिरपङ्ककृताङ्कमेनं
दृष्ट्वा न कस्य हृदयं करुणा रुणद्धि ॥ ३५ ॥ (ढ)

विचिन्त्य । अहो नीललोहितशिष्य ! नूतनः खल्वेष क्षत्रियधर्मो यत् जननीजनेऽपि (ण) शौर्यपर्यवसायः । तथाप्याद्रियसे । अहो ! स्वतन्त्रा लोकयात्रा । यद्वा असता-मपि महापुरुषशुश्रूषा किमपि कामदुघा । यतः ।

त्वं जामदग्न्य ! जननीवधपातकेन (त)
न ब्रह्मवर्चसवतां सविधेऽभविष्यः ।

---

(ड) रेणुकाशिरश्छेद इति सोल्लुण्ठोक्तिः । ब्रह्मबन्धो ! ब्राह्मणापसद ! इत्यर्थः ।

(ढ) देवीति । देव्याः पार्वत्याः विलासमुकुरः क्रीडादर्पणं यः परशुः लम्बोदरासुरस्य गजासुरस्य शिरोमणौ शाता निशिता धारा यस्य तथोक्तः आसीत्, रेणुकायाः रुधिरपङ्केन कृतः अङ्कः चिह्नं कलङ्को वा यस्य तादृशं तम् एनं परशुं दृष्टुः अवलोकयितुः कस्य जनस्य हृदयं करुणा दया न रुणद्धि आच्छादयति ? अपितु सर्वस्यैवेति भावः । वृत्तमत्र वसन्ततिलकम् ।

(ण) शौर्यपर्यवसायः वीरत्वप्रकाशः । लोकयात्रा लोकस्थितिः स्वतन्त्रा स्वाधीना, यो यथा इच्छति स तथैव करोतीति स्वेच्छाचारित्वमिति भावः । कामदुघा अभिलषितदोहिनी । महापुरुषसेविनो दुर्जना अपि अभीष्टं साधयन्तीति भावः ।

(त) त्वमिति । हे जामदग्न्य ! त्वं जननीवधपातकेन ब्रह्मवर्चसवतां

गीर्वाणवन्द्यचरणस्तव चन्द्रमौलि-
राचार्यकं स भगवान् यदि नाकरिष्यत् ॥ ३६ ॥

तथाप्येतदभिधीयते ।

चापाचार्यस्त्रिपुरविजयी कार्त्तिकेयो विजेयः
शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः ।
अस्त्येवैतत् किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः ॥ ३७ ॥ (अ)

जामदग्न्यः । कथं नाम न लज्जते यतो (इ) निसर्ग-
निरवग्रहं न जानाति जामदग्न्यम् ।

रेवाभोगभ्रमज्जद्विविधवरवधूहस्तयन्त्रोज्झिताभिः
क्रीडन् वारां लताभिः स्मरसि यदकरोदर्जुनः कार्त्तवीर्यः ।

---

ब्रह्मिष्ठानां सविधे सकाशे न अभविष्यः स्थितिं न अलप्स्यथाः, यदि गीर्वाणैः देवैः वन्द्यौ चरणौ यस्य तथाभूतः स भगवान् चन्द्रमौलिः तव आचार्यकं गुरुकर्म न अकरिष्यत् । हरिष्यत्येव भवान् ऋषि-जनमध्ये गतश्च इति भावः । वृत्तमत्र वसन्ततिलकम् ।

(अ) चापाचार्य इति । त्रिपुरविजयी शङ्करः चापाचार्यः धनुर्वेदशिक्षयिता कार्त्तिकेयः विजेयः पराजयभाजनं, पुराकिल भगवतो देवाद् धूर्जटेः धनुरुपनिषदम् अधीयानेन भृगुनन्दनेन स्कन्दस्य स्पर्धया क्रौञ्चं शिखरिणम् अतिनिशितविशिखसमूहेन हेलया मृत्पिण्डवत् बिभेद । इति पौराणिकी कथा । शस्त्रव्यस्तः शस्त्रेण न्यस्तः अपसारितः उदधिः समुद्रः सदनं वासभूमिः, इयं भूः पृथ्वी ब्राह्मणाय दत्तेति शेषः हन्तकारः हर्षनिदानम् । सर्वत्र भवतेति सम्बध्यते । एतदेव अस्ति शुभम् । एतद्गुणाश्रयत्वे न लज्जेति भावः । किमु किन्तु रेणुकायाः कण्ठबाधां कण्ठच्छेदं कृतवता तव परशुना कुठारेण बद्धस्पर्धः कृतस्पर्धः चन्द्रहासः लज्जते । वृत्तमत्र मन्दाक्रान्ता ।

(इ) निसर्गनिरवग्रहं निसर्गेण स्वभावेन निरवग्रहम् अप्रति-बन्धम् ।

तद्दोष्णां यस्तु रामो रणभुवि विदधे वेगवल्गत्कुठारः
प्रायः पौलस्त्य! सा ते श्रवणपरिणतिं नो गता किंवदन्ती॥१८(भ)

प्रतीहारी। स्वगतम्। एदं तं रक्खसाणं पि रक्खसो अत्थित्ति (३२)।

रावणः। विहस्य। मानुषेण रावणपराजय इत्यहो सुभाषितम्। तं प्रति चार्चीकिरपत्यं प्रभुरिति योधनीयो भवति न पुनर्मृधादावेर्योजनीयः। विमृश्य। यद्वा आयुधनिषेध्या रिपवो न सामसाध्याः। उच्चैरुद्यम्य। भार्गव! भार्गव! मा निरर्गलं प्रगल्भस्व। न निरस्त्रेषु निशाचरपतिः प्रहरति यदि ते निर्विघ्ना वीरव्रतचरितोत्कर्षः। अतश्च।

---

(३२) एतत्तत् राक्षसानामपि राक्षसो ऽस्तीति।

---

(भ) रेवेति। कार्त्तवीर्य्यः कृतवीर्य्यतनयः अर्जुनः रेवायाः नर्मदायाः अम्भसां गर्भे मध्ये मज्जतीनाम् अवगाहमानानां विविधानां विचित्राणां वरवधूनां वराङ्गनानां हृद्यन्त्रैः बन्धीकृतहस्तैः उज्झितांभिः मुक्ताभिः वारां जलानां सताभिः शताकारैः विप्रेक्षणैरिति भावः क्रीडन् सन् यत् अकरोत् तदेति शेषः, करवि तदिति शेषः। पुरा दिग्विजिगीषुर्दशग्रीवः कार्त्तवीर्य्यं जेतुं तदन्तिकं जगाम्। तदानीं जलक्रीडास्थितेन तेन दशाननो निर्जित्य कारागारे स्थापित इति पुराणवार्त्ता। रामः परशुरामः रणभुवि संग्रामाङ्गने वेगेन वल्गन् चलन् कुठारो यस्य तथाभूतः सन् तस्य कार्त्तवीर्यस्य दोष्णां सहस्रभुजानां यत् तु खलु विदधे कृतवान् कुठारेण सहस्रं भुजान् चिच्छेद इति यावत्, हे पौलस्त्य! पुलस्त्यनन्दन! रावण! सा किंवदन्ती जनश्रुतिः ते तव श्रवणपरिणतिं श्रोत्रपथं

त्रैयम्बकः परशुरेष निसर्गचण्डः
सौपर्णकेतनमिदं धनुरुन्नतं च ।
अस्मिन् द्वये विभृहि भार्गव ! हेतिमेकां
येनायमृच्छति करं मम चन्द्रहासः ॥ ३८ ॥ (प)

जामदग्न्यः । किं नाम रामोऽप्यर्थ्यमुच्यते । वाडवीयमपि (फ) ज्योतिरर्णवाम्भःपानार्थमभ्यर्थ्यते । किञ्च ।

कैलासाद्रिविटङ्कतः सह सुरैर्द्रष्टुं प्रवृत्ते हरौ
मध्यस्थे शशिशेखरे रणविधौ सूनोश्च शिष्यस्य च ।
सार्द्धं येन विनिर्जितो गणचमूचक्रेण हैरम्बिणा
स्कन्दोऽसौ दशकण्ठ ! कुण्ठरभसास्तस्मिन् मयि त्वादृशाः ॥ ३९ ॥ (ब)

---

नो गता प्रायः मन्ये प्राय इति अव्ययं मन्ये इति क्रियार्थकं बोध्यम् । शार्दूलविक्रीडितं वृत्तम् ।

(न) तं प्रतिहारिणम् । आर्चीकैः ऋचीकनन्दनस्य जमदग्नेः अपत्यं परशुरामः वृथा निरर्थकैः । व्यायुधनिषेध्याः शस्त्रनिवार्याः । साम्ना सन्धिना न साध्याः न निवार्याः । निर्गर्वं निर्बाधं प्रगल्भस्व स्पर्द्धस्व ।

(प) त्रैयम्बक इति । हे भार्गव ! एष निसर्गचण्डः स्वभावभीषणः त्रैयम्बकः शैवः परशुः, इदं सौपर्णकेतनं गरुडध्वजम् उन्नतञ्च धनुः, अस्मिन् द्वये एतयोः द्वयोर्मध्ये इत्यर्थः एकां हेतिम् अस्त्रं बिभृहि गृहाण, येन अयं चन्द्रहासः मम करम् ऋच्छति आश्रयति त्वया अस्त्रे धृते अहम् अस्त्रं ग्रहीष्यामीति भावः । वृत्तमत्र वसन्ततिलकम् ।

(फ) वाडवीयं वाडवानलसम्बन्धि । अर्णवाम्भसां सागराम्भसां पानार्थम् अभ्यर्थ्यते प्रार्थ्यते वाडवानलः सागरसलिलं पिबत्येव का तत्राभ्यर्थना ? इति भावः ।

(ब) कैलासेति । कैलासाद्रेः विटङ्कतः उपरिप्रदेशात् हरौ

रावणः । विहस्य । (भ) सैषा गुरुप्रदेया गुरुपुत्रे दक्षिणा तदिदमनुष्ठितं गुरुवद्गुरुपुत्रे वर्त्तितव्यमिव ।

जामदग्न्यः । भवानिव न सर्वः (म) श्रुत्यर्थवीथीविदग्धः । यतस्त्वैव गुरुवद्गुरुपुत्रे प्रवृत्तिः ।

वयं पुनरशास्त्रचक्षुषस्तदिदं ब्रूमहे । यथा ।

वन्द्यः पितेव स भवान् नलकूबरस्य
रम्भा स्नुषा धनपतेरिव सा तवापि ।
यत्त्वन्यदत्र हृदयात् न तदेति कण्ठं
दोषस्तथापि यदि तत् स्मृत एष रुद्रः ॥४१॥ (य)

---

स्कन्दे सुरैः दैत्यैः सह द्रष्टुं प्रवृत्ते, पशिपेश्वरे हरे सूनोः पुत्रस्य स्कन्दस्य शिष्यस्य मम च रणविधौ मध्यस्थे माध्यस्थ्यमाश्रयति सति येन मया प्रमथचमूचक्रेण प्रमथसैन्यव्यूहेन हेरम्बेन गजाननेन च सार्द्धम् असौ स्कन्दः कार्त्तिकेयः विनिर्जितः जितः, हे दशकण्ठ ! तस्मिन् मयि त्वादृशाः त्वद्विधाः वीराः कुण्ठरभसाः सङ्कुचितवेगाः । स्रग्धरा-वृत्तं, म्रभ्नैर्यानां त्रयेण त्रिमुनि यतियुता स्रग्धरा कीर्त्तितेयमिति लक्षणात् ।

(भ) सैषेति सोल्लुण्ठनोक्तिः ।

(म) श्रुत्यर्थवीथीविदग्धः श्रुतेः अर्थवीथीषु अर्थावलीषु विदग्धः विचक्षणः । अशास्त्रचक्षुषः शास्त्रचक्षुर्हीनाः शास्त्रज्ञान-रहिता इत्यर्थः ।

(य) वन्द्य इति । स शास्त्रज्ञो भवान् नलकूबरस्य कुवेरपुत्रस्य पितेव वन्द्यः पितृव्यत्वादिति भावः । सा रम्भा नलकूबरपत्नी धनपतेः कुवेरस्य इव तवापि स्नुषा पुत्रवधूः भ्रातृपुत्रस्य पुत्रस्थानीयत्वादिति भावः । सर्वेषामेकजातानामेकश्चेत् पुत्रवान् भवेत् । सर्व्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीदिति भ्रातृपुत्रस्य पुत्रत्वातिदेशात् । यत्तु अत्र

राघवः। (र) प्राधेयविक्रमकर्माणो येन केनचिदपवदन्ते। किञ्च।

हेरम्बडम्बरिणि नन्दिनिनन्दिहेतौ-
उद्दामचन्द्रमसि संयति पश्यतु खेन।
मुक्तोऽसि यत् पशुपतिप्रणयानुरोधात्
तेन त्वमेव विजयी विजितः कुमारः॥ ४२॥ (ल)

जामदग्न्यः। (व) किमभेद्यमभ्यसां किमदूष्यं दुर्जनवचसां यतो जामदग्न्यवचांस्यपि विचार्यन्ते। पश्य पश्य।

---

अन्यत् आचरणमिति शेषः तत् हृदयात् कण्ठं न एति अवक्तव्यत्वा-दिति भावः। तथापि एवमसम्यक् कीर्त्तितेऽपि यदि दोषः स्यादिति शेषः तत् तदा एषः रुद्रः शङ्करः स्मृतः। रुद्रस्मरणस्य पापध्वंसकत्वा-दिति भावः। वृत्तमत्र वसन्ततिलकम्।

(र) आधेय विक्रमकर्माणः आधेये आधिजनके मनोव्यथाकरे इत्यर्थः विक्रमकर्मणी येषां ते येषां विक्रमं कर्म च श्रुत्वा लोकाः मानसीं पीड़ामनुभवन्ति इत्यर्थः तादृशाः अपवदन्ते मृषा दोषैः अधि-क्षिपन्ति।

(ल) हेरम्बेति। हेरम्बडम्बरिणि गणेशसत्ताह्लादिनि नन्दिनो-नन्दीश्वरस्य निनन्दिः आनन्दातिशयः तस्य हेतौ तथा उद्दामचन्द्रमसि प्रकटयशसि संयति संग्रामे पशुपतिप्रणयानुरोधात् हरस्य स्नेहवशात् पश्यतु खेन स्कन्देन यत् मुक्तोऽसि परित्यक्तोऽसि तेन हेतुना त्वमेव विजयी जेता, कुमारः कार्त्तिकेयः विजितः पराजितः। कुमारः स्वयं पराभवं स्वीकुर्वन् पितुरनुरोधात् त्वां रक्षितवान् न हत-वानिति भावः। वृत्तमत्र वसन्ततिलकम्।

(व) अभेद्यम् अपात्यम्। अदूष्यं निर्दोषम्।

ईशो गुरुर्गिरिसुता जननी किमाभ्यां
अभूत् स एव समरेषु पराङ्मुखस्य।
अद्यापि काण्डचयखण्डितचन्द्रकायः
साक्षी शिखण्डनिवहो गुहवाहनस्य ॥ ४३ ॥ (ङ)

रावणः। कस्य पुनः (च) प्रत्यक्षपराङ्मुखस्य मतिमतः सतोऽनुमाने बहुमानः। ततश्च तदेवाभिधीयसे त्रैयम्बकः परशुः इत्यादि पुनः पठति।

जामदग्न्यः। निशाचरचक्रवर्त्तिन्! अपकुर्वतापि भवता परमुपकृतं यदेष स्मारितोऽस्मि। ततश्च।

येन न्यक्कृतमिन्दुशेखरधनुर्दर्पादनादृत्य मां
स्वर्गस्त्रीभिरसूयितः स बलवान् पौलस्त्य! कस्ते करः।
द्राक् छित्त्वा मणिबन्धनाद्वलयिनं रामः कुठारेण तं
देव्याः कोपविभिन्नमानशमिनि स्वं धाम सन्धास्यति ॥४४॥ (छ)

---

(ङ) ईश इति। ईशः शङ्करः गुरुः पिता, गिरिसुता पार्वती जननी माता, आभ्यां मातापितृभ्यां किम्? न किमपि प्रयोजनमित्यर्थः। समरेषु पराङ्मुखस्य गुहवाहनस्य मयूरस्य काण्डचयेन शरसङ्घातेन खण्डितं चन्द्रकायं मेचकप्रान्तभागः यस्य तथोक्तः स एव शिखण्डनिवहः पुच्छसङ्घः एव अद्यापि शश्वत् निरन्तरं साक्षी।

(च) प्रत्यक्षपराङ्मुखस्य प्रत्यक्षे विषये पराङ्मुखः निवृत्तः तस्य प्रत्यक्षमगणयत इति भावः।

(छ) येनेति। हे पौलस्त्य! येन करेण दर्पात् माम् अनादृत्य अगणयित्वा इन्दुशेखरस्य भर्तुः न्यक्कृतम् अवज्ञातं स्वर्गस्त्रीभिः सुरनारीभिः असूयितः असूयां गमितः ईर्ष्यया निरीक्षित इत्यर्थः बलवान् ते तव सः करः कः? रामः तं वलयिनं कटकभूषितं करं

अथवा एकस्मिन्नपराधिनि सर्वेऽपि सहधर्मचारिणो-(ङ) ऽपराद्धारः। ततश्च।

ये हेलोद्धृतचन्द्रचूड़गिरयो ये चन्द्रहासार्थिनः
संग्रामे युगपद्भवन्ति सभयं श्लिष्टाश्च ये रम्भया।
दोर्दण्डास्त इमे क्षुरप्रपतनच्छिन्नोच्छलत्पाणयो
मत्कोपाद्दिवि नालशेषकमलामासूत्रयन्त्वब्जिनीम् ॥४५॥ (च)

रावणः। अथ सनाथः प्रमथनाथो भवता (छ) परिपाहकेण। अथ भगवती भवानी च विमाननानतं शिरः समुन्नेष्यति। विचिन्त्य।

---

कुठारेण मणिबन्धनात् द्राक् झटिति छित्त्वा देव्याः पार्श्वस्थाः आस्यशशिनि मुखचन्द्रे कोपविभिन्नं क्रोधविकृतं धनुरवमाननादिति भावः। स्वं निजं स्वाभाविकमित्यर्थः धाम तेजः कान्तिमित्यर्थः सन्धास्यति सङ्क्रमयिष्यतीत्यर्थः।

(ङ) अपराद्धारः अपराधिनः संसर्गजा दोषगुणा भवन्तीति भावः।

(च) ये इति। ये कराः हेलया उद्धृतः चन्द्रचूड़गिरिः कैलासो यैः तथोक्ताः ये संग्रामे युगपत् चन्द्रहासार्थिनः चन्द्रहास-ग्रहणाभिलाषिणः भवन्ति, तथा ये रम्भया नलकूवरभार्य्यया सभयम् आलिङ्गने मृत्युर्मे भवेदिति भयेनेत्यर्थः श्लिष्टाः आलिङ्गिताश्च, ते इमे दोर्दण्डाः बाहुयष्टयः मत्कोपात् मम क्रोधेन क्षुरप्रस्य कुठारस्य यत् पतनं पातः तेन छिन्नाः अतएव उच्छलन्तः पाणयः येभ्यः तथाभूताः सन्तः दिवि अन्तरीक्षे नालानि मृणालानि शेषाः येषां तादृशानि कमलानि यस्याः तादृशीम् अब्जिनीं कमलिनीम् आसू-त्रयन्तु रचयन्तु कुर्वन्तु त्वच्छरीरमिति शेषः। शार्दूलविक्रीड़ितं वृत्तम्।

(छ) परिपाहकेण आश्रयेण।

वन्दीकृतामरपतेर्जितपुष्पकस्य
तस्याट्टहाससमुखराणि मुखानि मेऽद्य ।
तूणीधनुःपरशुवल्कजटाक्षसूत्री
वैखानसो भृगुबटुर्यदयं विपक्षः ॥ ४६ ॥ (ख)

जामदग्न्यः । (ग) विरोचनस्नुषाजनपरीक्षितविक्रमस्य शोभत एव मादृशेषु (घ) बटुरित्यधिक्षेपः । सजुगुप्सम् ।

अपि दशमुख ! कच्चिद्दत्तपातालयात्रः
स्मरसि लयविचित्रं वक्त्रवाद्यं विधाय ।
यदसि बलिवधूभिः स्मेरनेत्रोत्पलाभि-
र्निजकरतलरङ्गे नर्त्तितः कौतुकेन ॥ ४७ ॥ (ङ)

---

(ख) वन्दीकृतेति । वन्दीकृतः कारानिक्षिप्तः अमरपतिः इन्द्रः येन तस्य तथा जितं पुष्पकं कुवेरविमानं येन तथाभूतस्य तस्य मे मम अद्य मुखानि अट्टहाससमुखराणि अट्टहासैः हासविशेषैः मुखराणि वाचालानि हास्यान्येव मुखेषु आविर्भवन्तीत्यर्थः यद् यस्मात् अयं तूणी धनुः परशुः वल्कं जटा अक्षसूत्रं रुद्राक्षमाला च अस्यास्तीति तादृशः वैखानसः तापसः भृगुबटुः भार्गवशिशुः द्विजाधमः विपक्षः शत्रुः । वसन्ततिलकं वृत्तम् ।

(ग) विरोचनस्नुषाजनपरीक्षितविक्रमस्य विरोचनस्य प्रह्लाद-सुतस्य बलिपितुः स्नुषाजनैः पुत्रवधूभिः बलिभार्य्याभिरित्यर्थः परीक्षितः विक्रमो यस्य तथाभूतस्य । पुरा बलिं जिगीषुर्दशाननः पातालमगच्छत् । तत्र तेन निर्जितः कारायां निक्षिप्तः तद्भार्य्याभिः सकरुणाभिः चेटीकृत्य प्रेषितम् अन्नं भुक्त्वा प्राणानरक्षीदिति पुराण-कथाख्येयम् ।

(घ) अधिक्षेपः तिरस्कारः । सजुगुप्सं सावज्ञम् ।

(ङ) अपीति । हे दशमुख ! त्वं दत्ता पातालयात्रा येन सः

रावणः। सर्वमस्ति यतो न भार्गव इव रावणः करुणात्मनि (च) परित्रातव्ये स्त्रीजनेऽपुरुषः।

जामदग्न्यः। भार्गवो न रावण इव (छ) पशावप्यपुरुषः। अपि च किञ्चित् पृच्छामि।

त्वां सङ्क्रन्दननन्दनः किल कपिः कक्षागुहागह्वरे
कृत्वा प्रत्युदधि व्यधत्त स यदा सन्ध्यासमाधिव्रतम्।
मन्ये रावण! बाहुयन्त्रघटनासंरोधमन्दीकृत-
श्वासश्रेणिविसंष्ठुलाननवनो दुःखं तदासीः स्थितः॥४८॥ (ज)

रावणः। (सक्रोधहासम्)। मुग्धबुद्धयो हि यथाश्रुतस्य ग्रहीतारो न पुनर्विवेक्तारः। अतश्च पश्य पश्य।

---

पाताळजयार्थं तत्र प्रविष्ट इत्यर्थः लयविचित्रं लयेन विच्छित्त्या मनोहरं वल्लकीवाद्यं मुरजवाद्यं विधाय कृत्वा नेत्राणि नेत्रोत्पलानि यासां ताभिः फणिवधूभिः कौतुकेन निजकरतलरङ्गे यत् नर्त्तितोऽसि तदपि कच्चित् स्मरसि? वृत्तमत्र मालिनी।

(च) परित्रातव्ये परित्राणार्हे। मातृवधादियं योजनोक्तिरिति बोध्यम्।

(छ) पशौ अपि वानरेऽपि बालिनि इति भावः अपुरुषः पुरुषकारवर्जितः।

(ज) त्वामिति। हे रावण! यदा किलेति प्रसिद्धौ संक्रन्दनस्य इन्द्रस्य। संक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहन इत्यमरः। नन्दनः नन्दयः कपिः बाली त्वां कक्षागुहागह्वरे कक्षारूपे गुहामध्ये कृत्वा संस्थाप्य प्रत्युदधि प्रतिसमुद्रं सन्ध्यासमाधिव्रतं सन्ध्यावन्दनाविधिं व्यधत्त कृतवान्, मन्ये, तदा तस्मिन् काले त्वं बाहुयन्त्राणां घटनासंरोधेन चापनागतिरोधेन मन्दीकृताः याः श्वासश्रेणयः निश्वासावल्यः ताभिः विसंष्ठुलं विशेषेण व्याकुलम् आननवनं मुखमेव वि-

अर्द्धं नारी पुमानर्द्धमिति सञ्चिन्त्य चेतसा ।
षण्ढीयस्यापि कोदण्डे यस्यावज्ञा न संहृता ॥ ४९ ॥ (झ)

भूर्भुवःस्वस्त्रयीवीरः स एष दशकन्धरः ।
का नाम राम ! तस्यास्था बटौ वा मर्कटेऽपि वा ॥५०॥ (ञ)

जामदग्न्यः । पुलस्त्यापत्य ! यद्वा तद्वा भवतु भार्गव-
स्याद्भुतानि तु वीररत्नानि न (ट) आत्मा जुगुप्सते । पश्य ।

लोकोत्तरं चरितमर्पयति प्रतिष्ठां
पुंसां कुलं न हि निमित्तमुदात्ततायाः ।
वातापितापनमुनेः कलशात् प्रसूति-
र्लीलायितं पुनरमुद्रसमुद्रपानम् ॥ ५१ ॥ (ठ)

---

अस्य तथाभूतः सन् दुःखं स्थितः आसीः, दुःखेन स्थितवानित्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

(झ) अर्द्धमिति । अर्द्धं शरीरार्द्धं नारी, अर्द्धं द्वितीयमिति शेषः पुमान् इति चेतसा संचिन्त्य, यः सम्यक् नारी न, वा पुरुषो न, स निश्चोदव एव इति विविच्येति भावः षण्ढीयस्याऽपि कोदण्डे कार्मुके यस्य मम अवज्ञा न संहृता न संवृता । यस्येति कर्त्तरि षष्ठी ।

(ञ) भूर्भुवःस्वस्त्रयीवीरः त्रिलोकवीरः एषः दशकन्धरः सः । तस्य मम बटौ ब्राह्मणाधमे वा मर्कटे वानरे वापि का नाम आस्था आदरः, न कापीत्यर्थः त्रिभुवनवीरस्य मम बटुर्वा कपिर्वा किं करिष्यतीति भावः ।

( ट ) आत्मा रावणस्य इति भावः । जुगुप्सते अवजानाति ।

( ठ ) लोकोत्तरमिति । लोकोत्तरम् अलौकिकं चरितं प्रतिष्ठाम् अर्पयति गमयति पुरुषमिति शेषः कुलम् अन्वयः पुंसां उदात्ततायाः उन्नततायाः न हि निमित्तं कारणम् । वातापेरसुरस्य तापनः दमनः मुनिः अगस्त्यः तस्य कलशात् प्रसूतिः उद्भवः, पुनः किन्तु अमुद्रः सीमावर्जितः यः समुद्रः तस्य पानं लीलायितं विलास-

रावणः। अरे दुर्मुखवटो! (ड) वैखानसखेट! विडम्बित-त्र्यम्बकाचार्य! खड्गेतिधारातिथीकृतरेणुकामूर्द्धन्! मूर्धाभिषिक्तरुधिरजलनिवापाञ्जलितर्पितपितृक! क्षत्रिया-गर्भपातनमहापातकिन्! एष प्रदर्श्यते दशाननदोर्दण्ड-मण्डलीसामर्थ्यसारः। ततश्च।

लूत्वा बिसलतालावं कण्ठं ते रेणुकारिपोः।
स एष चन्द्रहासासिः प्रायश्चित्तं चरिष्यति॥ ५२॥ (ढ)

यद्वा।

क्वायं मे चन्द्रहासः प्रहृतिशतलिपिन्यस्तजैत्रप्रशस्तिः
स्वर्मातङ्गस्य कुम्भे क्व च कुहक! भवान् ब्राह्मणः शस्त्रवाही

---

चेष्टितम्। विशेषेण सामान्यसमर्थनरूपोऽयमर्थान्तरन्यासः। वसन्त-तिलकम्।

(ड) वैखानसखेट! वैखानसेषु तापसेषु खेटः अधमः तत्सम्बुद्धौ। विडम्बितत्र्यम्बकाचार्य्यः! विडम्बितः प्रतारितः त्र्यम्बक एव आचार्य्यो गुरुः येन तथोक्तः तत्सम्बुद्धौ। खड्गेतीति खड्गधारायाः असि-धारायाः अतिथीकृतः रेणुकायाः स्वजनन्याः मूर्द्धा येन तथाभूतः तत्सम्बुद्धौ। मूर्द्धेति मूर्द्धाभिषिक्तानां राज्ञां रुधिरजलान्येव निवापा-ञ्जलयः पितृदेयाञ्जलिपूर्णद्रव्याणि तैः तर्पिताः तृप्तिं गमिताः पितरो येन तादृशः तत्सम्बुद्धौ। क्षत्रियेति क्षत्रियाणां गर्भपातनेन गर्भस्थ-शिशुहननेन महापातकिन्! महापापपूर्ण!।

(ढ) लूत्वेति। स एषः चन्द्रहासासिः रेणुकायाः रिपोः हन्तुः ते तव कण्ठं बिसलतालावं मृणालदण्डमिवेत्यर्थः लूत्वा छित्त्वा प्रायश्चित्तं मातृवधजनितस्य पापस्य शुद्धिं करिष्यति।

(ण) क्वायमिति। हे कुहक! प्रतारणशील! स्वर्मातङ्गस्य ऐरावतस्य कुम्भे प्रहृतिशतेः प्रहारशतेन लिपिन्यस्ता वर्णविन्यस्ता जैत्री जय-

वामेभ्योऽस्मत्करेभ्यो बहिरयमिह यस्तत्कनिष्ठाङ्गुलीभूः
प्रारब्धब्रह्मघोषं हरतु नखशिखा त्वच्छिरः कन्धरातः ॥५३॥(ण)

आमदग्न्यः । अरे रे (त) पुनरुक्ताकार ! दुराचार ! निशा-
चरचरम ! विरिञ्चकुलकलङ्क ! लङ्कोपपते ! पातकैकर-
सिक ! कुबेरवैरिन् ! अभिलषितरम्भापरीरम्भ ! दाक्षायणी-
प्रणामपरिहारिन् ! नन्वेष ते हृश्यते दोर्दण्डमण्डली-
सामर्थ्यसारः ।

रावणः । विहस्य । स्वसारानुसारेण भार्गवो (थ) दश-
कण्ठमप्याकलयति । नेपथ्यं प्रति । पुष्पक ! इतइतः ।

प्रविश्य पुष्पकः । अयमहम् ।

रावणः । एष समारुह्यसे । इत्यर्द्धोत्थितावरोहणना-
टितकाभ्याम् । अहह ! (द) मनाक्किल वीरव्रतसमयमुद्रा-
मतिक्रान्तोऽस्मि ।

---

श्लाघिका प्रशस्तिः प्रशंसा यस्य तथाविधः जयपत्रवान् इत्यर्थः अयं
चन्द्रहासः क, प्रस्रवाही क्षाह्मणो भवांश्च क । इह वामेभ्यः अस्मत्-
करेभ्यः बहिः या इयं तत् कनिष्ठाङ्गुलीभूः तेषां वामकराणां मध्ये
या कनिष्ठा अङ्गुली तस्यां भवतीति तथोक्ता नखशिखा कन्धरातः
ग्रीवाप्रदेशात् प्रारब्धः उच्चारितः ब्रह्मघोषः वेदध्वनिर्येन तादृशं
त्वच्छिरः तव मस्तकं हरतु । शार्दूलविक्रीडितं वृत्तम् ।

(त) पुनरुक्ताकार ! पुनरुक्तः पुनः पुनः कथितः आकारः स्वरूपं यस्य
तथोक्तः तत्सम्बुद्धौ । निशाचर चरम ! राक्षसाधम । लङ्कोपपते !
कुबेरस्वामिकत्वात् लङ्काया इति भावः । अभिलषितरम्भापरीरम्भ !
अभिलषितः वाञ्छितः रम्भायाः भ्रातृव्यपत्न्याः परिरम्भः आलि-
ङ्गनं येन तथोक्तः तत्सम्बुद्धौ ।

(थ) आकलयति अधिक्षिपति इत्यर्थः ।

(द) मनाक् ईषत् । वीरव्रतस्य वीराचारस्य यः समयः नियमः

जामदग्न्यः ।

वीरव्रतात् जहिहि रावण । चन्द्रशाला
मा पुष्पकस्य मयि पादचरेऽपि रामे ।
पश्यन्त्विमाः समरमप्सरसोऽद्य तावत्
न्यक्पातिभिर्विहितमूर्ध्वचरैश्च बाणैः ॥ ५४ ॥ (ध)

रावणः । (न) अनभ्यस्तचरस्त्वेष समरारम्भ इति ममानुकम्पा ।

जामदग्न्यः । (प) सोत्प्रासम् । पशुपतिनाप्यननुकम्प्यमानमनुकम्पस इत्यहो सकरुणा ते धिषणा । किं पुनरिदमुच्यते ।

यथाभ्यासं प्रवर्तन्ते त्वादृशामत्र पत्त्रिणः ।
दूरान्तेवासिनस्त्वेते सर्वतोदिक्कविक्रमाः ॥ ५५ ॥ (फ)

---

स एव मुद्रा सङ्कोचः मर्य्यादा इति यावत् ताम् । रथी रथिनमायोधयति तत् कथं पादचारिणमिमं योद्धुं पुष्पकमारोढासीति भावः ।

(ध) वीरव्रतादिति । हे रावण ! मयि रामे पादचरेऽपि त्वं पुष्पकस्य चन्द्रशालाम् उपरिस्थगृहम् चन्द्रशाला शिरोगृहमित्यमरः । वीरव्रतात् वीरोचितशिष्टाचारादित्यर्थः मा जहिहि न परित्यज । अद्य तावत् इमाः अप्सरसः न्यक्पातिभिः निम्नगामिभिः ऊर्द्ध्वचरैश्च बाणैः विहितं समरं पश्यन्तु ।

(न) अनभ्यस्तचरः अशिक्षितपूर्व इत्यर्थः चरट् भूतपूर्वे इति चरट् प्रत्ययः ।

(प) सोत्प्रासं सपरिहासम् । धिषणा प्रज्ञा ।

(फ) यथाभ्यासमिति । त्वादृशां त्वत्सदृशानां वीराणामिति

रावणः । तद्यदि तवाधुना भगवांस्त्रिनेत्रस्त्राता दृग्भु-
भावपि चापारोपणं नाटयतः ।

ततः प्रविशतः स्वयिष्याप्टचोकपुत्रक्यौ भृङ्गिरिटिच ।

शिशः पुरो निर्दिश्य । आश्चर्यम् । किं उण इदो एदाओ ब) अखण्ड-
पिण्डिअसिहासङ्गचण्डो किअचित्तभाणुणो तक्खणोवण-
द्धुत्तरणतारतरजञ्जकंचणअकेउदण्डमण्डलीओ अमन्द-
सच्छन्दसंपडिअजडिलजालालिपक्खालणासविसेससमुज्जल-
न्तअग्गिरासिअअसंठिअधअपडाडम्बरिल्लीओ णिविडुज्झाप-

---

(२३) किं पुनरित एता अखण्डपिण्डितशिखासङ्गचण्डीकृतचित्र-
भानवस्तत्क्षणोपनतदार्ढ्योत्तरणतारतरजात्यकाञ्चनगयकेतुदण्डमण्डल्यो-
ऽमन्दस्वच्छन्दसंपतितजटिलज्वालालिप्रक्षालनासविशेषसमुज्ज्वलदग्निरा-
शिवंशसंस्थितध्वजपटाडम्बरिण्यो निविडोद्भप्राग्भारपरिगमेध्यन्द्राय-
मानसरसोत्पलाविच्छिन्नकनककोकनदपरिकरेण च विराजमाना विमान-
पङ्क्तयो गगनप्रान्तेभ्यो झटित्यपसरन्ति ।

---

शेषः । पत्रिणः शराः यथाभ्यासं अभ्यासमनतिक्रम्य अभ्यासानुसारे-
णैव इत्यर्थः प्रवर्त्तन्ते यादृशस्ते अभ्यासः तादृशमेव आचरितुं
शक्नोषि न तु अन्यविधमिति भावः । स्मरस्य अन्ते वासिनः शिष्यस्येत्र
मेत्यर्थः एते पत्रिणः सर्वतो दिशि सर्वस्यां दिशि विक्रमः प्रसरो
येषां तथाविधाः ।

(ब) अखण्डेति अखण्डेन सम्पूर्णेन पिण्डितेन घनीभूतेन शिखासङ्गेन
अग्निज्वालानामिति भावः चण्डीकृता तीक्ष्णीकृताः चित्र विचित्राः
भानवः किरणा भानुः करोमरीचिः स्त्रीत्यमरः । यासां ताः तत्
चण्डीति । तत्क्षणोपनतात् तत्क्षणे उपस्थितात् दार्ढ्यात् यत् उत्तरणं
उद्गारः नाशमित्यर्थः । तेन तारतरा उज्ज्वलतरा जाति येषां तादृशाः

भारपरिणमेवि अमुणाअमाणसरसुप्पलाविच्छित्तकणअकोकणअपरिअरेण ण विराअमाणाओ विमाणपन्तीओ गअणपेरन्ताहिं झत्ति ओसरन्ति ( ३४ ) ।

कश्चित् । वत्स ! रामायण !

नश्यन्नानाविमानाङ्गणमणिवलभीरत्नवातायनेभ्यो
वक्त्रैराकण्ठदघ्नैर्यदमरललना लोलमालोकयन्ति ।
यच्चेदं व्योम विद्युत्खचितमिव पुरस्तेन मन्ये किमन्य-
द्वत्साभ्यामाद्रियन्ते शिखिनिचयमुचो देवताः शस्त्रमय्यः ५६ (भ)

---

काञ्चनमयकेतुदण्डानां मण्डलः यासां तथोक्ताः। अमन्देति अमन्दं तथा स्वच्छन्दं यथा तथा सम्पतितानां जटिलानां संहतानां ज्वालावलीनां शिखावलीनां प्रचारणया स्पर्शेन सविशेषं समुज्ज्वलितो यः अग्निराशीनां चयः तेन संस्थितः विनष्टः यः ध्वजपटाडम्बरः पताकाविस्तारः तद्वत्यः। निविडोष्मणां घनसन्तापानां प्राग्भारस्य वेगस्य परिणमेऽपि उपस्थितावपि अम्लायमानानाम् अम्लानानां मरकतोत्पलानाम् आर्द्रकमलानाम् अविच्छिन्नानाम् अस्पृष्टानां कनककोकनदानां काञ्चनरक्तोत्पलानां परिकरेण समूहेन विराजमानाः शोभमानाः विमानपङ्क्तयः देवयानश्रेण्यः गगनप्रान्तेभ्यः अन्तरीक्षदेशेभ्यः झटिति द्रुतम् अपसरन्ति पलायन्ते ।

( भ ) नश्यन्नानेति । अमरललनाः सुरसुन्दर्यः नश्यतां पलायमानानां नानाविमानानां विविधदेवयानानाम् अङ्गणेषु विचरणस्थानेषु याः मणिवलभ्यः रत्नवातायनानि च तेभ्यः आकण्ठदघ्नैः वक्त्रैः मुखैः यत् लोलं सतृष्णं लोलश्चलसतृष्णयोरिति कोषः। आलोकयन्ति पश्यन्ति। यच्च पुरः अग्रतः इदं व्योम अन्तरीक्षं विद्युद्भिः खचितमिव व्याप्तमिव तेन मन्ये सम्भावयामि अन्यत् किं न किमपीत्यर्थः, वत्साभ्यां रामराघवाभ्यामित्यर्थः शिखिनाम् अग्नीनां निचयः राशिः तं मुञ्चन्ति इति

प्रवृत्त्यः । सविशेषमालोक्य सखे ! (म) तत्त्वानुगतस्ते तर्कः ।

एकत्रैकतमोऽपरत्र दशधा कीर्णो यदाकर्ण्यते
टङ्कारस्तिरयन् जगन्ति धनुषामेकादशानामयम् ॥
रामोऽसौ स च रावणो रणधुरां धर्तुं समभ्युद्यता-
वीषद्बालकुशाङ्कुरामरवधूश्रेणिप्रियैः पार्थिभिः ॥ ५७ ॥ (य)

शिष्यः । एकतोऽवलोक्य । सचमत्कारम् । पेक्खह पेक्खह इदो एदाओ (र) अमन्दसिन्दूरसुन्दरिअकुम्भपब्भारभासुराओ पचण्डमुण्डमण्डलीमण्डिअसुण्डादण्डडम्बरड्डामराओ पअट्टमअधाराधोरणीधोरन्धआरिअदिसारत्तणिअसरणीओ ग-

(२५) प्रेक्षध्वं प्रेक्षध्वम् । इत एता अमन्दसिन्दूरसुन्दरितकुम्भ-प्राग्भारभासुराः प्रचण्डमुण्डमण्डलीमण्डितशुण्डादण्डडम्बरोड्डामराः प्रवृत्तमदधाराधोरणीरन्ध्रितदिग्रेणुरमणीयसरण्यो गजघटा निकु-ञ्जपुञ्जितनिर्जितजलदजालजनितविस्तारा दीर्घघटा अपतरन्ति ।

तथाविधाः मन्त्रमय्यः देवताः अन्यास्त्राणीति भावः आहूयन्ते सेव्यन्ते । रामरावणाभ्याम् आग्नेयास्त्राणि मुक्तानीति भावः ।

(म) तत्त्वानुगतः तत्त्वं याथार्थ्यम् अनुगतः अनुसृतः ।

(य) एकत्रेति । यत् यस्मात् एकत्र एकतमः एक एव, परत्र अन्यत्र दशधा कीर्णः विभक्तः जगन्ति तिरयन् आच्छादयन् एकादशानां राम-गृहीतस्य एकस्य दशाननगृहीतानां दशानामित्यर्थः धनुषाम् अयं टङ्कारः भैरवस्वनः आकर्ण्यते श्रूयते तस्मात् असौ रामः स च रावणः बालकुशाङ्कुराणां अभिनवदर्भाङ्कुराणाम् अमरवधूश्रेणीनाञ्च प्रियैः यशोहेतुत्वेनेति भावः पार्थिभिः ईषत् अल्पां रणधुरां संग्रामव्यापारं धर्तुम् आचरितुं समभ्युद्यतौ उद्युक्तवन्तौ ।

(र) अमन्देति । अमन्देन बहुलेन सिन्दूरेण सुन्दरिता।

गुहानिकुञ्जपुञ्जितगभीरनिर्जितजलदजातस्तनितवि-
स्ताराभो दीर्घघण्टाभो मोदरन्ति ( १५ )

कञ्चुकी। भद्र! दाशायन! साधु दृष्टं (ख) वारणा-
स्त्रमिदमामन्त्रितं राघवेन। यतः।

उत्सर्पद्दर्पहेलागुलुगुलितगला डिण्डिमोड्डामरिस्रः
सङ्ग्रामन्यासकर्मक्रमरुचिररुचः सादिभिः शोभमानाः।
एतास्तीक्ष्णाङ्कुशाग्रप्रगुणितशिरसः श्रेणयो वारणानां
प्रेङ्खद्भिः शीकराम्भस्स्तवकितककुभः केतुभिः सम्पतन्ति ॥ १६ (ग)

---

सौन्दर्यशालिनः ये कुम्भप्राग्भाराः कुम्भपूर्वभागाः तैः भासुराः विरा-जमानाः। प्रचण्डेति प्रचण्डाभिः उग्राभिः कुसुमगण्डलीभिः मण्डि-तानाम् अलङ्कृतानां गण्डस्थलानां उदरेण विस्तारेण उड्डामराः भीषणाः। प्रवृत्तेति प्रवृत्तानां प्रस्रुतानां मदधाराणां घोरणीभिः परम्पराभिः निरन्ध्रं निरन्तरं निबद्धैः रेणुभिः रमणीया सरणिः पन्थाः यासां तथोक्ताः। गजेति गजगुहानिकुञ्जेषु कण्ठाभ्यन्तरप्रदेशेषु, पुञ्जिताः सञ्चिताः निर्जितो जलदो मेघो यैः तथाभूताः स्तनित-विस्ताराः बृंहितशब्दाः यासां तथाविधाः। दीर्घघण्टघटा गज-घण्टाः।

( ख ) वारणास्त्रं गजास्त्रम्। आमन्त्रितं प्रयुक्तम्।

( ग ) उत्सर्पदिति। उत्सर्पन्तः उद्गच्छन्तः दर्पहेलाभ्याम् अहङ्का-रावज्ञाभ्यां गुलुगुलिताः स्फुरन्तः गलाः कण्ठाः यासां तथोक्ताः, डिण्डि-मेन वाद्यविशेषेण उड्डामरिस्रः उद्विग्नमानाः। सङ्ग्रामः संग्राम-सज्जा तस्य न्यासः विन्यासः एव कर्म तस्य क्रमेण रुचिराः रुचः दीप्तयः यासां तथाविधाः, सादिभिः हस्तिपकैः तीक्ष्णाङ्कुशाग्रेण तीक्ष्णाङ्कुश-प्रहारेण दृढार्थः प्रगुणितानि शिरांसि यासां एताः अतएव शोभ-मानाः विराजन्त्यः वारणानां गजानां श्रेणयः शीकराम्भोभिः

शिष्यः । इतोऽपि एते (ग) उत्तुङ्गलाङ्गूलमालिङ्गितगगन-घनघोषघुरघुराघोषघर्घरितगलगुहा-कुहरस्फारफुल्लगल्लविस्फुरिता विद्युत्पुञ्जपिञ्जरितदृष्टिच्छ-टाकटाक्षदुष्प्रेक्ष्या सहस्रशः सिंहसङ्घा अवतरन्ति (२६) ।

पुरुषः । इदमपि (घ) द्विरदास्यप्रतिद्वन्द्वि पञ्चानना-स्यमासन्नितं आसन्दन्येन । यतः ।

गुञ्जापुञ्जारुणाक्षैर्धूतविकटसटासङ्कटस्कन्धबन्धै-
र्बिभ्रद्भिर्बभ्रु गात्रं खरनखरशिखाग्रैर्विनिर्यातरौद्रैः ।

---

(२६) इतोऽप्येते उत्तुङ्गलाङ्गूलाग्राक्रान्तगगनाङ्गनोत्सङ्गा घनघोषघुरघुराघोषघर्घरगलगुहाकुहरस्फारफुल्लगल्लव्यतिकरा विद्युत्पुञ्जपिञ्जरितदृष्टिच्छटाकटाक्षदुष्प्रेक्ष्या सहस्रशैव सिंहसङ्घा अवतरन्ति ।

---

पुष्कराजलबिन्दुभिः स्तबकिताः आच्छादिताः ककुभः दिशः याभिः तादृशाः सन्तः प्रेङ्खद्भिः चलद्भिः केतुभिः ध्वजैः सह सम्पतन्ति । कन्धरान्तम् ।

(ग) उत्तुङ्गेति । उत्तुङ्गैः समुन्नतैः लाङ्गूलाग्रैः आलि-ङ्गितः आक्रान्तः गगनाङ्गनमेव उत्सङ्गो यैः तथोक्ताः । घनेति घनानां मेघानां नादितानां घुरघुराघोषेण घुरघुराकारशब्देन घर्घरत् घर्घरशब्दं कुर्वत् यत् गलगुहाकुहरं कण्ठाभ्यन्तरं तस्य स्फारेण स्फीततया फुल्लाः शोभिताः गल्लव्यतिकराः गल्लदेशसमूहा येषां तथाविधाः । विद्युदिति विद्युतां पुञ्जा इव राशय इव पिञ्ज-रिताः पिङ्गलीकृता या दृष्टिच्छटाः तासां कटाक्षेण प्रान्तदर्शनेन ईषद्दर्शनेनेति भावः दुष्प्रेक्ष्याः दुर्दर्शाः द्रष्टुमशक्या इत्यर्थः ।

(घ) द्विरदास्यस्य वारणास्यस्य प्रतिद्वन्द्वि प्रतिकूलं पञ्चा-ननास्यं सिंहास्यं, सिंहो मृगेन्द्रः पञ्चास्य इत्यमरः ।

(ङ) गुञ्जेति । गुञ्जानां पुञ्जा इव अरुणानि अक्षीणि येषां

एतैः कण्ठप्रणालीप्रचयितघुरघुराघोरनिर्घोषनिघ्नै-
र्निर्विघ्नं सिंहसङ्घैरिदमतिरभसात्क्रान्तमेवान्तरिक्षम्॥५८॥ (ङ)

सर्वे। साकूतम्। (ङ) एत एत एतयोरन्तरे भवामः।

शिष्यवर्गमितरे हस्तयन्ति।

विरम भार्गव! संहर सङ्गरं
त्यज धनूंषि दशापि दशानन!।
विषहते न परस्परवैशसं
स भवतोर्भगवान् वृषभध्वजः। ६०॥ (च)

रावणः। सविषादम्। सोऽयं (छ) द्विषयोर्दावपावकस्य
गरिमसारः सीकरासारः। विचार्य।

---

तैः रक्तमेव रित्यर्थः। धुताभिः कम्पिताभिः विकटाभिः तीव्राभिः
सटाभिः जटाभिः सङ्कटाः व्याप्ताः स्कन्धबन्धाः स्कन्धदेशाः येषां तैः।
चञ्चु पिङ्गलं मालं बिभ्रद्भिः। नखराणां तीव्राणां नखराणां या
शिखाग्रश्रेणयः तासां निर्याणेन निर्गमनेन रौद्रैः भीषणैः। कण्ठप्रणा-
लीनां कण्ठरूपनालानां प्रचयी यः घुरघुराशब्दः घोरघोषः तीव्रस्वरः
तेन निघ्नैः आसक्तैः एतैः सिंहसङ्घैः अतिरभसात् अतिवेगात्
निर्विघ्नं निर्बाधं यथा तथा इदम् अन्तरीक्षं क्रान्तम् आक्रान्तम्।
स्रग्धरावृत्तम्।

(ङ) एत एत आगच्छत आगच्छत।

(च) विरमेति। हे भार्गव! विरम शाम्य, सङ्गरं युद्धं
संहर। हे दशानन! दशापि धनूंषि त्यज। स भगवान् वृषभध्वजः
भवतोः युवयोः परस्परवैशसं अन्योन्यविध्वंसं न विषहते नेच्छ-
तीत्यर्थः। वृत्तमत्र द्रुतविलम्बितम्, द्रुतविलम्बितमाह नभौ भरा-
विति लक्षणात्।

(छ) द्विषतोः दग्धुमिच्छोः दावपावकस्य दावानलस्य गरिम-

वीरः स भार्गवमुनिः स च राघवेन्द्रो
योऽयं द्विधा प्रवितती यशसां प्ररोहः ।
कस्मान्न वाञ्छति मया स तमष्टमूर्त्ति-
रेकायनं त्रिजगति क्रियमाणमीशः ॥ ६१ ॥ (ख)

जामदग्न्यः । सायसम् ।

न्यक्कारो गुरुकार्मुकस्य कुरुते मां वीरवर्गे पुनः
साक्षाद्भृङ्गिरिटिर्गिरा पशुपतेराज्ञापयत्येष च ।
हा ! तत् किं करवै किमन्यदथवा याचे मही मन्तरं
येन स्यां समरासनः सपरशुः कालाग्निरुद्रातिथिः ॥६२॥ (ग)

---

सारः गौरवशाली अनतिक्रमणीय इति भावः सीकरासारः धारा-सम्पातः ।

(ख) वीर इति । स भार्गवमुनिः जामदग्न्यः स च राघवेन्द्रः वीरः योऽयं यशसां प्ररोहः देवस्येति भावः द्विधा प्रवि-ततः प्रकर्षेण विस्तारं गतः एकस्य शिष्यत्वात् अपरस्य भक्तत्वादिति भावः । सः अष्टमूर्त्तिः ईशः त्रिजगति मया क्रियमाणं तम् एका-यनम् एकनिष्ठं यशसां प्ररोहं कस्मात् न इच्छति । तस्य यशः-प्ररोहः द्वयोराश्रयोः तिष्ठति, मया तु तस्य एकाश्रयत्वं कर्त्तुमिष्टं देवः कथं न सहते इति तात्पर्य्यार्थः ।

(ग) न्यक्कार इति । गुरोः आचार्य्यस्य यत् कार्मुकं तस्य न्यक्कारः अधिक्षेपः अवमाननमित्यर्थः मां कुरुते प्रेषयति वैरसाधना-येति भावः । एषः भृङ्गिरिटिः पुनः पशुपतेः गिरा वचसा साक्षात् स्वयं वीरवर्गे वीराचारत्यागे आज्ञापयति च । हा इति शोक-सूचकमव्ययं तत् तस्मात् किम् अन्यत् किं कार्य्यं करवै ? अथवा महीं पृथ्वीम् अन्तरम् अवकाशं याचे भूगर्भं प्रवेष्टुमिच्छामीत्यर्थः । येन समरासनः सधनुः सपरशुः परशुसहितः कालः एव अग्निः स

इतरे। तदेव पठन्ति। रावणः। भार्गव भार्गव। देवा- देवाश्चिन्नमसि तदिदमापृच्छ्यसे गमनाय।

जामदग्न्यः। यथात्थ मित्रमसि तदेव प्रेष्यसे।

इतरे। प्रियं नः प्रियं नः।

नेपथ्ये। भगवन्! भार्गव! तत्रभवत्या परमे ब्रह्मणि वर्त्तमानया मैत्रेय्या (ध) लोकयात्रापरतन्त्रया च कात्याः यन्या समं समुपरतकल्को याज्ञवल्कास्त्वामाह।

अतिथिरसि किमन्यद्देवदेवो गुरुस्ते
वयमपि च सदाराः साग्नयोऽस्मिन् वसामः।
तदुपसर गृहानस्त्वं भृगोः पुत्रभाण्ड-
वटुपरिषदभीष्टाः सन्त्वनध्यायचेष्टाः॥ ६२॥ (ङ)

जामदग्न्यः। यथाह सूर्यशिष्यः।

इति निष्क्रान्ताः सर्वे।

परशुराम रावणीयो नाम द्वितीयोऽङ्कः।

---

एव रुद्रः संहारकत्वादिति भावः तस्य अतिथिः सन् भवेयं देहं त्यक्ष्यामीति भावः। शार्दूलविक्रीडितं वृत्तम्।

(ध) लोकयात्रापरतन्त्रया लोकस्थितेरायत्तया लोकस्थित्यनु- सारिण्या इत्यर्थः समुपरतं कल्कं पापं यस्य तथोक्तः निष्पाप इत्यर्थः।

(ङ) अतिथिरिति। अतिथिरसि, अन्यत् किं वक्तव्यमिति शेषः, देवदेवः शिवः ते तव गुरुः आचार्य्यः। वयमपि सदाराः सस्त्रीकाः साग्नयः अपि होतिणः अस्मिन् प्रदेशे वसामः। तत् तस्मात् नः अस्माकं गृहान् उपसर आगच्छ त्वं भृगोः पुत्रभाण्डं पुत्ररत्नं कुलधुरन्धर इत्यर्थः। वटुपरिषद्भिः ब्राह्मणसमाजैः शिष्यैः

# अथ तृतीयोऽङ्कः ।

अतः परं (क) विलक्ष्यलक्ष्मीवरो भविष्यति ।

ततः प्रविशति पक्षिमिथुनम् ॥

पक्षी । प्रिये ! सुवेगे ! भगवतो लक्ष्मीपतिलाञ्छनस्य निसर्गनागशत्रोरमृताहरणविश्रुतविक्रमस्य शकुन्तचक्र-वर्त्तिनो वैनतेयस्यास्मत्कुलप्रथमपुंसः सकलगोत्रधुरन्धरेण भविष्यतापत्येन नूनमन्तर्वत्न्यसि यत् ते निशाचरमांसास्वा-दनेन तत्कीलालकवलेन च दोहदविधेरयमुपस्थितः समयः ।

---

भूयैरिति शेषः अभीष्टाः वाञ्छिताः अनध्यायचेष्टाः अनध्यायेन याः चेष्टाः स्वच्छन्दविहारा इत्यर्थः सन्तु महापुरुषे अतिथावागते विद्या-नध्यायस्य श्लाघनीयत्वादिति भावः ।

## अथ तृतीयाङ्कव्याख्या ।

(क) विलक्ष्यलक्ष्मीवरः विलक्ष्यः लक्षितः लक्ष्मीवरो यस्मिन् तथाविधः । लक्ष्मीपतिलाञ्छनस्य लक्ष्मीपतेः नारायणस्य लाञ्छनं चिह्नं ध्वजस्थितत्वादिति भावः निसर्गेण प्रकृत्या नागानां पन्नगानां शत्रोः, अमृताहरणेन विश्रुतः विख्यातः विक्रमो यस्य तादृशस्य शकुन्तानां चक्रवर्त्तिनः सम्राजः । सकलगोत्राणां समग्रवंशानां धुर-न्धरेण अग्रगण्येन भविष्यता भाविना अपत्येन अन्तर्वत्नी गर्भवती, तव गर्भात् यः पुत्रो जनिष्यते स पक्षिराजवंशधुरन्धरो भवितेति

सुवेण । अयि (ख) चित्तसिहण्ड ! तेल्लोक्केक्कमल्ले रक्ख-सरक्खाकरे पुलत्थकुमारे णन्दमाणे दुल्लहं दोहलअमिमं मण्णे ( २७ ) ।

चित्रशिखण्डः । भवति ! यथात्थ किमुच्यते रावणः खल्वसौ । पश्य ।

साक्षाद्यत्प्रपितामहः कमलभूर्मानः स कोऽप्युन्नतो
न स्त्रीति प्रणनाम यस्य वरदां देवीं भवानीमपि ।
यच्छौर्योदयसाक्षिणी च सकला सा भूर्भुवःस्वस्त्रयी
तं व्यावर्ण्य दशास्यमन्यचरितस्तोत्रेण लज्जामहे ॥१॥ (ग)

किन्तु ।

---

(२७) अये चित्रशिखण्ड ! त्रैलोक्यैकमल्ले राक्षसरक्षाकरे पुलस्त्य-कुमारे नन्दमाने दुर्लभं दोहदकमिमं मन्ये ।

---

भावः । तत् कीलालकवलेन तेषां निशाचराणां कीलालकवलेन रुधिर-पानेन दोहदविधेः दोहदः गर्भिणीमनोरथः तस्य विधेः मनो-रथानुरूपमाचरणमित्यर्थः ।

( ख ) चित्रं शिखण्डं यस्य इति त्वत्प्रसम्बोधनपदम् । त्रैलो-क्येषु एकः अद्वितीयः मल्लः वीरः तस्मिन् पुलस्त्यकुमारे रावणे नन्दमाने राजति दोहदकम् अभिलाषपूरणम् ।

( ग ) साक्षादिति । यस्य प्रपितामहः पितामहपिता साक्षात् स्वयं कमलभूः ब्रह्मा । स कोऽपि अनिर्वचनीयः उन्नतो महान् मानः गर्वः मूर्त्तिमानहङ्कार इत्यर्थः यस्य वरदाम् अभीष्टप्रदां देवीं भवानीं पार्वतीमपि स्त्रीति नारीति बुद्ध्या इत्यर्थः न प्रणनाम । सा सकला समग्रा भूर्भुवः स्वस्त्रयी त्रिजगती यस्य शौर्य्योदयस्य वीर्य्यप्रकाशस्य

गतः स कालो यत्रासीत् मुक्तानां जन्म वंशिषु ।
वर्त्तन्ते साम्प्रतं तासां हेतवः शुक्तिसम्पुटाः ॥ २ ॥ (घ)

यतः (ङ) श्रुतताड़कातारुणोऽपि न निशाचरपतिरद्यापि निजदोर्दण्डचण्डिमोचितमाचरति ।

सुवेगा । हंहो (च) गरुत्मद्गोत्तालङ्करण ! कधेसु कीदिसी उण सुन्दसुन्दरीए वहविड़म्बणा संवुत्ता (२८) ।

चित्रशिखण्डः । प्रिये ! श्रूयताम् । एकदा स भगवान्

---

२८ । गरुत्मद्गोत्रालङ्करण ! कथय कीदृशी पुनः सुन्दसुन्दर्या वधविडम्बना संवृत्ता ।

---

साक्षिणो साक्षात् द्रष्टा, तं हयाननं व्यावर्त्य विहाय अन्येषां चरितस्य लोके च प्रथमा लज्जामहे वयं प्राप्नुमः । शार्दूलविक्रीडितं वृत्तम् ।

(घ) गत इति । यत्र यस्मिन् काले वंशिषु वंशेषु मुक्तानां जन्म आसीत् सः कालः गतः व्यतिक्रान्तः, साम्प्रतं शुक्तिसम्पुटाः तासां मुक्तानां हेतवः जन्मस्थानानि वर्त्तन्ते पूर्वं वंशेषु मुक्तोत्पत्तिरतीव प्रथितासीत् अधुना तु शुक्तेरेव न हि कस्यापि प्राधान्यं सार्वकालिकमिति भावः ।

(ङ) श्रुतं ताड़कायाः राक्षस्याः ताड़नं निधनं येन सः ताड़कावधमाकर्ण्यापीत्यर्थः निशाचरपतिः दशग्रीवः निजानां दोर्दण्डानां भुजयष्टीनां चण्डिमा चण्डत्वं तदुचितं व्यापारं विक्रममित्यर्थः ।

(च) गरुत्मद्गोत्रालङ्करण ! गरुड़वंशभूषण ! सुन्दसुन्दर्याः सुन्दो नाम कश्चित् असुर आसीत् तस्य सुन्दरी भार्य्या ताड़का तस्याः वधविड़म्बना वधव्यापारः ।

विश्वस्य मित्रं विश्वामित्रः (छ) सप्ततन्तुत्राणाय दाशरथि-मयाध्यातः सिद्धाश्रमं सलक्ष्मणं राममानिनाय। वैतानिकं च वितताम। तत्र यथोचितसामोच्चारिण्युद्गातरि व्यस्तमन्त्रसंस्कृताहुतौ होतरि प्रचरत्कर्मधुर्य्येऽध्वर्य्यौ दिव्यां गिरमनुवर्त्तमाने यजमाने सम्यगवेक्षिताखिलकर्मणि ब्रह्मणि सरभसमनैरम्मदमदाम्भोलमनैन्दवममार्त्तण्डीयम-वैश्वभानवं च ज्योतिरुदजृम्भत।

सवेगा। अच्छरिअमच्छरिअम्। तदो तदो ? (२८)।

चित्रयिश्वरः। ततश्च सपुत्रदारेषु दिगन्तरादागतेषु

---

२८। आश्चर्य्यमाश्चर्य्यम्। ततस्ततः ?।

---

(छ) सप्ततन्तुत्राणाय यज्ञरक्षार्थं सप्ततन्तुर्मखः क्रतुरित्यमरः। वैतानिकं यज्ञीयं यथोचितं यथाविधि सामोच्चारिणि सामवेदसूत्रे-गायति उद्गातरि सामवेदिनि ऋत्विजि इत्यर्थः, व्यस्तेन मन्त्रेण संस्कृताः आहुतयः येन तथोक्ते होतरि होमं कुर्वति ऋत्विजि, प्रच-रत् विधिदर्शनमेव कर्म तस्मिन् धुर्य्ये धुरन्धरे विचक्षणे इत्यर्थः अध्वर्य्यौ ऋत्विजि इत्यर्थः अध्वर्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमादित्यमरः। दिव्यां संस्कारपूतां गिरं वाचम् अनुवर्त्तमाने अनु-सरति यजमाने यष्टरि सम्यक् अवेक्षितम् अखिलं समग्रं कर्म येन तादृशे ब्रह्मणि ऋत्विग्विशेषे सति सरभसं सवेगम् अनैरम्मदम् अवै-द्युतम् अदाम्भोलं दम्भोलिर्वज्रं तदीयं न भवतीति अदाम्भोलम् अवैद्युतमित्यर्थः अनैन्दवम् अचान्द्रम् अमार्त्तण्डीयम् असौर्य्यम् अवैश्व-भानवम् अनाग्नेयं ज्योतिः तेजः अलौकिकमिति भावः उदजृम्भत उत्तस्थौ।

किमिदमिति (ञ) कान्दिशीकेषु मुनिषु तथोद्घोषि जनैः ।

रक्ताभ्यक्तोरुसृक्का गुरुकवलवलज्जाङ्गलव्यग्रतालुः
फेत्कारैः फुल्लगल्लव्यतिकरगुरुभिः कम्पयन्ती जगन्ति ।
अन्योन्येनाग्रपाणिप्रणयि शवयुगं ताड़का ताड़यन्ती
सेयं द्रागदृष्टदंष्ट्राङ्कुरकषणरणत्कारभीमाऽभ्युपैति ॥२॥ (झ)

सुवेगा । अहह ! भीषणाणं वि भीसणा हदासा । तदो तदो ? (४०) ।

चित्रशिखण्डः । अथ स भगवान् कुशिकनन्दनस्तत्प्रमथनार्थं राममेव नियुङ्क्ते ।

सुवेगा । दुक्करमुवक्कन्तं भअवदा कोसिएण । तदो तदो ? (४१) ।

---

४० । अहह ! भीषणानामपि भीषणा हताशा । ततस्ततः ।
४१ । दुष्करमुपक्रान्तं भगवता कौशिकेन । ततस्ततः ? ।

---

(ञ) कान्दिशीकेषु भयद्रुतेषु कान्दिशीको भयद्रुत इत्यमरः । उद्घोषि उद्घोषितम् ।

(झ) रक्तैः रुधिरैः अभ्यक्ते लिप्ते उरुणी महती सृक्के ओष्ठप्रान्तौ यस्यास्तादृशी गुरवे कवलाय ग्रासाय वलद्भिः चलद्भिः उदरं गच्छद्भिरित्यर्थः जाङ्गलैः मांसैः व्यग्रः विह्वलः तालु यस्याः तथोक्ता ग्रासभक्षणतत्परा इति भावः फुल्लस्य स्फीतस्य गल्लस्य कण्ठदेशस्य व्यतिकरेण सङ्गेन गुरुभिः महद्भिः गम्भीरैरित्यर्थः फेत्कारैः चीत्कारविशेषैः जगन्ति कम्पयन्ती अग्रपाणि प्रणयि भुजाग्रस्थितं शवयुगलं मृतकलेवरयुगलम् अन्योन्येन परस्परेण ताड़यन्ती दृष्टानां

विश्वामित्रः । ततः (ञ) सञ्जातस्त्रीवधविचिकित्सामुद्रो रामभद्रः सविनयमिदमाह ।

स्त्रीराक्षसी कथमिवात्र पतन्तु बाणाः
प्रेष्यस्य ते कुशिकनन्दन ! तत्प्रसीद ।
आदिश्यतामिह हि कोऽपि तपस्वितन्त्रे
मन्त्राक्षरैः कतिपयैर्य इमामपास्येत् ॥ ४ ॥ (ट)

सुवेगा । अहो ! उचिदकारित्तणं राहवस्स । तदो तदो(४२) ? ।

विश्वामित्रः । (ठ) अथैकजन्मानुभूतचक्षुःप्रभावः स भगवांस्त्रिपताकेन पाणिना चिबुके राममुन्नमय्य निजगाद ।

---

(४२) अहो उचितकारित्वं राघवस्य । ततस्ततः ? ।

---

दंष्ट्राङ्कुराणां कषणेन परस्परसंघर्षेण यः रणत्कारः रणरणशब्दः ते । भीमा भीषणा सा इयं ताडका द्राक् झटिति अभ्युपैति आगच्छति । स्रग्धरावृत्तम् ।

(झ) तत् प्रमथनार्थं तस्याः ताडकाया वधार्थम् ।

(ञ) सञ्जातेति सञ्जाता उत्पन्ना स्त्रीवधे स्त्रीहत्यायां या विचिकित्सा संशयः विचिकित्सा तु संशय इत्यमरः । स्त्रीहत्याया अकर्त्तव्यत्वादिति भावः । तया हेतुना मुद्रा सङ्कोचः यस्य तथाभूतः ।

(ट) स्त्रीति । हे कुशिकनन्दन ! राक्षसी इयं स्त्री अत्र स्त्रियां बाणाः ममेति शेषः, कथं पतन्तु कथं स्त्रीहत्यां करोमीति भावः । तत् तस्मात् ते तव प्रेष्यस्य दासस्य मम प्रसीद प्रसन्नो भव मा क्रुध्य इति भावः । इह तपस्विनां तन्त्रे समाजे तपस्विमध्ये इत्यर्थः कोऽपि तपस्वी आदिश्यताम् आज्ञाप्यतां यः कतिपयैः मन्त्राक्षरैः इमां राक्षसीम् अपास्येत् निराकुर्य्यात् । वृत्तमत्र वसन्ततिलकम् ।

(ठ) एकेति । एकस्मिन् जन्मनि अनुभूतः चक्षुषः प्रभावः

कालरात्रिकरालेयं स्त्रीति किं विचिकित्ससे।
तज्जगत्त्रितयं पातुं तात! ताडय ताडकाम्॥ ५॥ (ड)

सुवेला। साकूतम्। तद्दो तद्दो? (४१)।

चित्रशिखण्डः। ततः सद्यैव मुनिगिरां विरामेण रामकार्मुकतो (ढ) भुजङ्गभोगभीषणा बाणपद्धतिराविरासीत्। उक्तं च लक्ष्मणेन।

विध्वस्तहस्तयुगलं ललितान्त्रतन्त्र-
मुन्मुक्तरक्तततिखण्डितकालखण्डम्।
उत्कृत्तकृत्ति रचितं च शरैः शरीर-
मार्येऽखिलाङ्गपरिताडिनि ताडकायाः॥ ६॥ (ण)

---

(४२) ततस्ततः?।

---

धर्मः येन तथोक्तः चाटो चलितोऽपि तपसा ब्रह्मत्वं प्राप्त इत्यर्थः लिप्सतानेन तिक्तः पताकाः ध्वजपटाकारा उल्लिताः अङ्गुलयः यस्य तादृशेन पाणिना भुजेन।

(ड) कालरात्रीति। कालरात्रिः संहाररात्रिः सा इव करालया भीषणा कालरात्रिर्यथा जगत्संहारिणी तथा इयं राक्षसीत्यर्थः तत्स्त्री इति स्त्रीबुद्ध्या किं कथं विचिकित्ससे संशेषे? हे तात! वत्स! तत् तस्मात् जगतां त्रितयं त्रातुं ताडकां ताडय जहि।

(ढ) भुजङ्गभोगभीषणा आशीविषकायवत् भीषणा तीक्ष्णा बाणानां शराणां पद्धतिः परम्परा।

(ण) विध्वस्तेति। आर्ये रामे अखिलानां सर्वेषाम् अङ्गानां परिताडिनि प्रहारिणि प्रहारार्थिनीति भावः। शरैः ताडकायाः शरीरं विध्वस्तं छिन्नं हस्तयुगलं यस्मात् तादृशं, ललिताः निर्गताः अन्त्रतन्त्राः अन्त्रराजयः यस्मात् तथोक्तम्, उन्मुक्ताः निर्ग-

सुणेमा। (त) डिम्भत्तणेवि तरुणराहवोचिदं चरिदं रामभद्दस्स। तदो तदो? (४४)।

चित्रचित्रकः। (थ) ततस्त्रैशङ्कवस्य कौशिकमहर्षेः प्रसा-यिता सुन्दासुरवधूवधचरितेन विलीयमानः।

साकं लेभे जृम्भकास्त्रैः समस्तै-
र्विश्वामित्रस्तुष्यतो यं कृशाश्वात्।
रामायासौ तं धनुर्वेदमाद्यं
प्रीतः प्रादात् तत्र सौमित्रये च॥ ७॥ (द)

(४४) डिम्भत्वेऽपि तरुणराघवोचितं चरितं रामभद्रस्य।

चिताः रक्तानां ततिः धारा यस्मात् तथाभूतं, अविच्छिन्नं हस्तं काण्ड-खण्डं वक्त्रं यस्य तथाविधं, तथा उत्कृत्ताश्छिन्नाः कृत्तयः चर्माणि यस्य तथाभूतस्य रचितं कृतम्। वृत्तमत्र वसन्ततिलकम्।

(त) डिम्भत्वेऽपि शिशुत्वेऽपि तरुणस्य यूनः राघवस्य रघुवंशी-यस्य उचितं सदृशम्।

(थ) त्रैशङ्कवस्य त्रिशङ्कुसम्बन्धिनः कौशिकमहर्षेः कौशिकरूपस्य यज्ञस्य प्रसाधयिता उद्धर्ता विश्वामित्र इत्यर्थः। विलीयमानः चमत्कृतः।

(द) साकमिति। विश्वामित्रः तुष्यतः कृशाश्वात् मुनेः सका-शात् समस्तैः जृम्भकैः अस्त्रविशेषैः साकं सह यम् आद्यं धनुर्वेदं लेभे, असौ विश्वामित्रः प्रीतः प्रसन्नः सन् ताड़कावधेनेतिभावः। तं धनुर्वेदं तत्र सिद्धाश्रमे रामाय सौमित्रये लक्ष्मणाय च प्रादात्। वृत्तमत्र शालिनी, मात्तौ गौ चेच्छालिनी वेदलोकैरिति लक्षणात्।

सुवेगा । अहो ! से (ब) भरद्माद्‌ामहस्स मुणिणो (न) सुसदिससंजोअगब्भाचरिअविब्भमा । किंच तदो कोसिएण पडिवस्सं (४५) ।

चित्रशिखण्डः । ततश्च शकुन्तलायाः पिता (प) सुकेतुसुतोन्मथनपरीक्षितविक्रमं संक्रान्तकार्मुकोपनिषदं सलक्ष्मणं राममादाय शङ्करशरासनारोपणप्रवर्त्तितसीतास्वयंवरयात्रां मिथिलां पुरीं प्रत्युच्चचाल ।

सुवेगा । तदो तदो ? (४६) ।

चित्रशिखण्डः । ततस्तेषां (फ) ताड़केयौ निजतेजस्तिर-

---

(४५) अहो ! अस्य भरतमातामहस्य मुनेः सुसदृशसंयोगगर्भाचरितविभ्रमाः । किंच ततः कौशिकेन प्रतिपन्नम् ।

(४६) ततस्ततः ? ।

---

(ब) भरतमातामहस्य भरतः शाकुन्तलेयः तस्य माता शकुन्तला तस्य पितुः कौशिकस्य इत्यर्थः । पुरा विश्वामित्रः तपोभीतैर्देवैः तपोविघ्नार्थं प्रेषितां मेनकां कियन्ति दिनानि सम्भुज्य तस्यां शकुन्तलां जनयामासेति पुराणम् ।

(न) सुसदृशसंयोगगर्भाः सुसदृशः अनुरूपः संयोगः गर्भे अन्तरे येषां ते, चरितानां विभ्रमाः विलासाः । प्रतिपन्नं ज्ञातम् ।

(प) सुकेतुसुतोन्मथनपरीक्षितविक्रमं सुकेतोः कस्यचित् गन्धर्वस्य सुतायाः ताड़कायाः उन्मथनेन दमनेन परीक्षितः विक्रमो यस्य तम् । संक्रान्ता आश्रिता कार्मुकोपनिषद् धनुर्विद्या यं तादृशम् । शङ्करस्य यत् शरासनं धनुः तस्य आरोपणेन प्रवर्त्तिता प्रारब्धा सीतास्वयंवरयात्रा जानकीपरिणयोद्यमो यस्यां ताम् ।

(फ) ताड़केयौ ताड़काया अपत्ये पुमांसौ ताड़केयौ ताड़कासुतौ । निजेन तेजसा तिरस्कृताः मार्त्तण्डस्य सूर्यस्य मरीचयः

स्तनमातंङ्कमरीचिर्मारीचः सततोद्यतबाहुः सुबाहुश्च जननीवधविरुद्धौ मध्वानमनुरुन्धाताम्।

सुवेगा। ठाणेक्खु (व) अहिणिविट्ठा दुट्ठा दुट्ठरक्खसीसुदा तदो किं संवुत्तं ताणं (४७) ?।

चित्रमित्रकः। यत्तयोर्मातुः। तथाहि।

कोदण्डात्तरलमुदञ्चतः शरस्य
द्रागद्वेधा व्यधित सुधारया सुबाहुम्।
मारीचं सपदि च पुङ्खपत्रवाते-
रम्भोधेः पुलिनचरं चकार रामः।॥ ८ ॥ (भ)

सुवेगा। सपरितोषम्। रक्खसकुलक्खअकारिक्खु रामभ-न्दचरिदम् (४८)।

---

(४७) स्थाने खल्वभिनिविष्टौ दुष्टौ दुष्टराक्षसीसुतौ। ततः किं संवृत्तं तयोः ?।

(४८) राक्षसकुलक्षयकारि खलु रामचन्द्रचरितम्।

---

येन तयोक्तः सौरतेजःपरिभावीत्यर्थः। जननीवधेन जनन्याः मातुस्ताड़काया वधेन हेतुना विरुद्धौ विरोधकारिणौ जातक्रोधौ इत्यर्थः, अनुरुन्धाताम् अवरुरुधतुः।

(व) अभिनिविष्टौ वैरसाधनार्थमुद्यतौ।

(भ) कोदण्डेति। रामः कोदण्डात् धनुषः तरलं द्रुतम् उदञ्चतः उद्गच्छतः शरस्य सुधारया तीक्ष्णधारया द्राक् झटिति सुबाहुं द्वेधा छिन्नखण्डं व्यधित कृतवान्। पुङ्खपत्रवातैः वायव्यास्त्रैरित्यर्थः सपदि शीघ्रं मारीचम् अम्भोधेः सागरस्य पुलिनचरं सैकतस्थं चकार च। इत्तमत्र प्रहर्षिणी, त्र्याशाभिर्मनजरगाः प्रहर्षिणीयमिति लक्षणात्।

त्रिजटविशिष्टः। तस्माच्च समरतः (म) सुचिरसञ्चितेन निशाचराणामसृजा मांसैश्च च सम्पादय दोहदम्।

सुवेगा। आह! एव्वं तुए उवअरन्तेण (र) णिज्जिदसअल-सउन्तसीमन्तिणीसोहग्गा सुवेगा कआ। किं पुण किंवि पुच्छीअदि? (४९)।

त्रिजटविशिष्टः। प्रिये! समादिश्यताम्।

सुवेगा। कीस दसाणणोवि (ल) अवमाणणासहण-सहावो वट्टदि (५०)।

त्रिजटविशिष्टः। अयि (व) सुपत्निणि! सर्वावमानी दशा-ननः कथमवमाननां सहते। किंतु सीताविरहवैधुर्यम-पराध्यति। न विना हिमानीमचण्डो मार्तण्डः।

---

(४९) आर्य! एवं त्वयोपकुर्वता निर्जितसकलशकुन्तसीमन्तिनी-सौभाग्या सुवेगा कृता। किं पुनः किमपि पृच्छ्यते?।

(५०) कथं दशाननोऽप्यवमाननासहनस्वभावो वर्तते।

---

(म) सुचिरसञ्चितेन सुचिरेण सञ्चितं संस्थापितं तेन असृजा शोणितेन।

(र) निर्जितेति निर्जितं सकलानां शकुन्तसीमन्तिनीनां पक्षिणीनां सौभाग्यं यया तादृशी अतिसौभाग्यवतीति भावः।

(ल) अवमाननायाः असहनः स्वभावो यस्य तादृशः पराव-माननासहिष्णुरित्यर्थः।

(व) सुपत्निणि! पक्षिसुन्दरि! सीताविरहवैधुर्यं सीताया विरहेण अप्राप्त्या यत् वैधुर्यं विकलता तत् अत्र विषये अपराध्यति अपराधमर्हति सीतावियोगदुःखेन व्याकुलीभावात् अनवधानता यथाल चेतरिति भावः। हिमानीं हिमसंहतिं हिमानी हिमसंहति

सुवेगा । कीदिसा उण सीदाविरहवेदणविणोदा दसाणणस्स (५१) ।

चित्रशिखण्डः । लङ्कापुरचारिणा (ग) त्रिकूटाचलपक्षिराजेन रत्नशिखण्डेन भवद्देवरेण निवेदिता एव ।

सुवेगा । के उण दे ? ( ५२ ) ।

चित्रशिखण्डः । नन्वेते कथ्यन्ते ।

इन्दुः सीतावदनसदृशो जानकीनेत्रहृद्यं
नीलाम्भोज बिसकिसलया मैथिलीहासभासः ।
सम्यक्साम्यादिति च बहवस्तस्य जाता जगत्यां
लङ्काभर्त्तुर्जनकतनयाविप्रलम्भे विनोदाः ॥ ॥ ८ ॥ (घ)

---

( ५१ ) कीदृशाः पुनः सीताविरहवेदनविनोदा दशाननस्य ।
( ५२ ) के पुनस्ते ? ।

---

रित्यमरः । तां विना मार्त्तण्डः रविः न प्रचण्डः अतीक्ष्णः हिमानीप्रभावात् रवेर्मान्द्यमित्यर्थः ।

( ग ) त्रिकूटाचलस्य त्रिकूटगिरेः लङ्कानगर्य्याधारस्य यः पक्षिराजः तेन रत्नवत् शिखण्डं यस्य तन्नाम्ना भवत्या तव देवरेण मम भ्रात्रेति यावत् ।

(घ) इन्दुरिति । जनकतनयायाः जानक्याः विप्रलम्भे विरहे तस्य लङ्काभर्त्तुः दशाननस्य जगत्यां सम्यक् साम्यात् सादृश्यात् इति इत्थं बहवो विनोदाश्चित्ततोषकराः जाताः, तथाहि इन्दुः सीतायाः वदनस्य सदृशः, नीलाम्भोजं नीलोत्पलं जानक्याः नेत्रवत् हृद्यं मनोहरं बिसकिसलयाः मृणालपल्लवाः मैथिल्याः हासस्येव भासो येषां तथोक्ताः ।

विनोदान्तरं पुनरिदमत्र। यस्मिन् भगवतः पुरन्दरस्यादेशात्तत्रभवता भरताचार्येण सीतास्वयंवरचरितसंबद्धं नूतनं (ख) नाटकमुपनिबद्धं सुरसद्मनि प्रयुक्तं च। तद्दर्शनाय दशाननेन द्रौहिणिरभ्यर्थितः। तेन चाप्सरोभिः सह पुष्पकमपि लङ्कां पुरीं प्रति प्रहितमिति।

उभे। ता एहि अम्हे वि णिअरज्जाहिट्ठाणं विंझगिरिं गडुअ णिविडणीडणिवासिणो दोहलअं संपादेम्ह (५२) इति परिक्रम्य निष्क्रान्तौ।

(छ) मिश्रविष्कम्भकः।

ततः प्रविशति रावणः प्रहस्तश्च।

रावणः। सहर्षाकूतमभिनीय। हृदय! दिष्ट्या वर्द्धसे सीताप्रतिकृतिदर्शनेन। नेपथ्ये। जय जय त्रिजगत्पते! पौलस्त्य! सुखाय सायन्तनी सन्ध्या भवतु देवस्य। सम्प्रति हि।

माञ्जिष्ठीकृतपट्टसूत्रसदृशः पादानयं पुञ्जयन्
यात्यस्ताचलचुम्बिनीं परिणतिं स्वैरं ग्रहग्रामणीः।

---

(५२) तत् एहि आवामपि निजराज्याधिष्ठानं विन्ध्यगिरिं गत्वा निविडनीडनिवासिनो दोहदं सम्पादयावः।

---

(ख) उपनिबद्धं रचितं सुर-सद्मनि देवसभायां प्रयुक्तम् अभिनीतम्। द्रौहिणिः द्रुहिणस्य ब्रह्मणः पुत्रः भगवान् नाट्याचार्यः भरतः इत्यर्थः तेन भरताचार्य्येण च।

(छ) मिश्रविष्कम्भकः सङ्कीर्णविष्कम्भकः। अत्र उभयोर्नीचजातित्वात् नीचकल्पितत्वेन सङ्कीर्णत्वं तदुक्तं प्रागेव।

वात्यावेगविवर्त्तिताम्बुजरजश्छन्नायमानः स्वयं
क्षीणज्योतिरितोऽप्ययं स भगवानर्णोनिधौ मज्जति॥१०॥ ख)

रावणः। दिष्ट्या गतं दिवसेन। भो भो प्रहस्त!
तदुच्यन्तां (क) वैरिञ्चा मुनयः प्रस्तूयतामिति।

प्रहस्तः। नेपथ्याभिमुखमवलोक्य। भो भो भरतपुत्राः!
(ख) प्रेक्षणकक्षणे क्षणतनयः शृङ्गारचक्रवर्त्ती तत्प्रस्तूयताम्।

प्रविश्य कोहलः।

कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने।
नमः शृङ्गारबीजाय तस्मै कुसुमधन्वने॥ ११॥ (ग)

रावणः। (घ) द्वादशपदेयं प्रवर्तिता नान्दी तत्प्रस्ताव-
यिष्यति।

---

(ख) माञ्जिष्ठीति। अयं स भगवान् महतां ज्योतिषां ग्रामणीः अधिपतिः रविः माञ्जिष्ठीकृतैः मञ्जिष्ठारागेण रञ्जितैः पतद्भिः स्खलद्भिः तुच्छान् पादान् किरणान् पुञ्जयन् सङ्कोचयन् स्वैरं मन्दं मन्दम् अस्ताचलचुम्बिनीं परिणतिं याति गच्छति। इतोऽपि अयं क्षीण-ज्योतिः सन् स्वयं वात्यावेगेन विवर्त्तितैः चालितैः अम्बुजानां रजोभिः परागैः छन्नायमानः अर्णोनिधौ जलनिधौ मज्जति। शार्दूलविक्रीडितं वृत्तम्।

(क) वैरिञ्चाः ब्रह्मसुताः।

(ख) प्रेक्षणकक्षणे दर्शनार्थम्। क्षणतनयः क्षणोत्सवः क्षणोद्योग इत्यर्थः।

(ग) कर्पूर इति। यः दग्धोऽपि भस्मीकृतोऽपि कर्पूर इव जने जने प्रतिपुरुषं शक्तिमान् तस्मै शृङ्गारबीजाय शृङ्गाररसनिदानाय कुसुमधन्वने कामाय नमः।

(घ) द्वादशपदेति द्वादश पदानि सुबन्तरूपाणि यस्यां सा। प्रवर्त्तिता प्रयुक्ता।

कोहलः । तत्रभवतः परमेष्ठिनो (क) मानसभुवः प्रथमपुत्रस्य नाट्ययोनेर्भरताचार्यस्य कृतिरभिनवं सीतास्वयंवर इति नाटकं प्रयोक्तव्यम् । अतः कमलसम्भवोपदिष्टनाट्यवेदेन स्वपौरुषपरितोषितस्वच्छपरशुदर्शितलास्यताण्डवप्रपञ्चचतुरेण भवता दीयमानमवधानमभ्यर्थये । यतः ।

श्रवणैः पेयमनेकैर्दृश्यं दीर्घैश्च लोचनैर्बहुभिः ।
भवदर्थमिव निबद्धं नाट्यं सीतास्वयंवरणम् ॥ १२ ॥ (ख)

रावणः । किं (ग) पुनरिदमसंस्तुतं प्रस्तूयते । कः पुनरसौ योऽयमेव मयि रावणेऽपि सति सीतां स्वयं वृणुते । विचिन्त्य । भवतु निरङ्कुशाः कविवाचः ।

कोहलः । समन्तादवलोक्य अहो राक्षसराजस्य त्रिभुवनशिरःशेखरायमाणा प्रभुशक्तिः । तथाहि ।

---

(क) मानसभुवः मानसजातस्य । प्रयोक्तव्यम् अभिनेतव्यम् । कमलसम्भवेन ब्रह्मणा उपदिष्टः शिक्षितः नाट्यवेदः नाट्यशास्त्रं यस्मै तेन । तथा स्वपौरुषेण परितोषितः यः स्वच्छपरशुः हरः तेन दर्शितेन शिक्षितेनेत्यर्थः लास्यताण्डवप्रपञ्चेन नाट्योत्थापनविस्तारेण चतुरः तेन ।

(ख) श्रवणैरिति । सीतास्वयंवरणं नाट्यम् अनेकैः श्रवणैः कर्णैः पेयं श्राव्यमित्यर्थः तथा बहुभिः दीर्घैः लोचनैः नेत्रैः दृश्यञ्च तस्मात् भवदर्थमिव त्वदर्थमिव निबद्धं रचितं तव बहुश्रोत्रलोचनत्वादिति भावः । आर्यावृत्तं, यस्याः प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि अष्टादश द्वितीये पञ्चदश चतुर्थके सार्या इति लक्षणात् ।

(ग) असंस्तुतं अप्रस्तुतम् । निरङ्कुशाः निर्बाधाः ।

ज्योतींषि प्रसुवन्ति प्रतिफलनवशान् मौक्तिकन्यासलक्ष्मी-
मिन्दोर्ज्योत्स्ना वितानीभवति भगवतां दर्पणत्वं रवीणाम्।
सन्ध्यारागस्य रङ्गे रचयति सहसा सान्द्रसिन्दूररेखां
खेदच्छेदाय चैते दिशि दिशि मरुतस्तालवृन्तीभवन्ति॥१३॥ (ञ)

भोभो लङ्केश्वरसभासदः! स तत्रभवान् द्रौहिणि-
एवमाह।

वाग्वैदर्भी मधुरिमगुणं स्यन्दते श्रोत्रलेह्यं
वस्तुन्यासो हरति हृदयं सूक्तिमुद्रानिवेश्यः।
सद्यः सूते रसमनुपमप्रौढिजन्मा प्रसादः
संदर्भश्रीरिति कृतधियां धाम गीर्देवतायाः॥१४॥ (झ)

---

(ञ) ज्योतींषीति। ज्योतींषि नक्षत्राणि प्रतिफलनवशात् प्रतिबिम्बनात् मौक्तिकानां न्यासस्य लक्ष्मीं श्रियं प्रसुवन्ति वितन्वन्ति। इन्दोः चन्द्रस्य ज्योत्स्ना वितानीभवति चन्द्रातप इव भवतीत्यर्थः। भगवतां रवीणां द्वादशात्मकत्वात् बहुवचनम्। दर्पणत्वं मुकुरकार्य-कारित्वम्। सन्ध्यारागस्य रङ्गे नाट्यशालायां सहसा सान्द्रस्य घनस्य सिन्दूरस्य रेखां रचयति। एते च मरुतः समीरणाः खेदच्छेदाय घर्मनिवारणाय दिशि दिशि तालवृन्तीभवन्ति तालवृन्तकार्य-साधकन्तीत्यर्थः: सर्वत्र तव सन्तोषार्थमिति योज्यम्।

(झ) वागिति। वैदर्भी विदर्भदेशीया वाक् रचनाविशेषः अत्यन्तरस-तृप्तिर्या मधुरा रचना तथा। वैदर्भीति वचनात् श्रोत्राभ्यां कर्णाभ्यां लेह्यं पेयं मधुरिमगुणं माधुर्यरसं स्यन्दते वर्षति। सूक्तिः शोभना उक्तिस्तस्य मुद्रा प्रत्ययसाधनं चिह्नविशेषः तेन निवेश्यः प्राप्यः सूचित इत्यर्थः। वस्तुन इतिवृत्तस्य न्यासः कथनमिति यावत् हृदयं हरति आकर्षति। अनुपमया प्रौढ्या वैचित्र्येण जन्म यस्य तथोक्तः प्रसादः गुणविशेषः। तदुक्तं दर्पणे, चित्तं व्याप्नोति यः क्षिप्रं शुष्के-

ततश्च ।

सुवर्णवर्णच्छविद्योति कुरुत श्रवणाश्रयम् ।
सच्छायमुक्तसद्वृत्तं काव्यं मुक्तामयं बुधाः ! ॥ १५ ॥ (ञ)

नेपथ्ये गीयते ।

प्रकटितरामाम्भोजः कौशिकवान् सपदि लक्ष्मणानन्दी ।
सुरचापदमनहेतोरयमवतीर्णः शरत्समयः ॥ १६ ॥ (ट)

कोहलः । कथमुपक्रान्तं (ठ) भरतपुत्रैः । यदियं राम-

---

ज्ञानमिवानघः । यः प्रसादः समस्तेषु रसेषु रचनासु चेति । सद्यः झटिति रसम् आस्वादं सूते जनयति इति इत्थं कृतधियां मार्जितमतीनां कवीनामित्यर्थः सन्दर्भस्य पन्थाः श्रीः गीर्देवतायाः वाग्देव्याः धाम आश्रयः । वृत्तमत्र मन्दाक्रान्ता ।

(ञ) सुवर्णेति । हे बुधाः ! सुवर्णानां शोभनानां वर्णानां वर्णेन विन्यासेन विद्योतत इति विद्योति शोभमानं सती छाया कान्तिरौज्ज्वल्यं यस्य तादृशम् उद्यन्ति विराजमानानि सुव्यक्ततयेति भावः वृत्तानि छन्दांसि यस्य तथाविधम् अतएव मुक्तामयं मुक्ताहारवत् मनोहरं काव्यं श्रवणाश्रयं कुरुत शृणुत इत्यर्थः ।

(ट) प्रकटितेति । प्रकटितं प्रकाशितं राम एव अम्भोजं कमलं यत्र तथोक्तः कौशिकवान् स विश्वामित्रः पेचकाकुलश्च वर्षासु तेषां गिरिगह्वरादिषु अवस्थितानां साम्प्रतं बहिर्गमनादिति भावः । लक्ष्मणम् आनन्दयतीति तथोक्तः । लक्ष्मणेन शुभचिह्नेन चन्द्रपद्मादिविकासरूपेण लोकानन्दजननश्च । सुरचापस्य देवभगवतो हरकार्मुकस्येत्यर्थः इन्द्रधनुषश्च तस्य वार्षिकत्वादिति भावः । दमनहेतोः भङ्गार्थम् अनुदयार्थञ्च शरत्समयः अवतीर्णः उपस्थितः । ज्योत्स्ना वृत्तम् ।

(ठ) भरतपुत्रैः नटैः । प्रावेशिकी प्रवेशसूचिका ध्रुवा गीतिविशेषः ।

लक्ष्मणानुगतस्य भगवतो विश्वामित्रस्य प्रावेशिको ध्रुवा।
तदहमप्यनन्तरकरणीयाय सज्जो भवामि। इति
निष्क्रान्तः।

प्रस्तावना।

ततः प्रविशति विश्वामित्रो रामलक्ष्मणौ च।

विश्वामित्रः। अहो! (ड) तत्त्वेऽभिनिविष्टं मनो जनकस्य।
यदा याज्ञवल्क्याद्यजुर्विज्ञानविभवः खलु सौ। स हि
चन्द्रमसोऽनुभावो यदस्य ग्रावाणोऽपि निस्यन्दन्ते।

रामलक्ष्मणौ। भगवन्नुपाध्याय! किमसौ वैदेहः? (ढ)
शुक्लान्यपि यजूंषि विज्ञाय याज्ञवल्क्यातो न वनाय
प्रतितिष्ठते।

---

(ड) तत्त्वे परमात्मनि वेदे च। वेदस्तत्त्वं तपो ब्रह्म इत्यमरः। यजुरिति यजुषां विज्ञानस्य विभवः सामर्थ्यम्। अनुभावः प्रभावः। ग्रावाणः प्रस्तराः चन्द्रकान्तमणय इत्यर्थः।

(ढ) शुक्लानि श्वेतवर्णानि। यजूंषि द्विविधानि शुक्लानि कृष्णानि च। पुरा वैशम्पायनो मुनिः स्वशिष्यं याज्ञवल्क्यं प्रति चुक्रोध। ततः क्रुद्धेन गुरुणा मत्तोऽधीतानि देहीत्यभिहितः याज्ञवल्क्यः सर्वाणि अधीतानि यजूंषि उज्जगार। तेन तानि कृष्णवर्णानि अभूवन्। भक्षया मासुश्च तानि तदानीमेव तित्तिरिपक्षिभिः। ततश्च तैत्तिरीयाणि तानि लोके विख्यातानि। यानि च ततः सूर्यमाराध्य तस्य विज्ञानि तानि शुक्लानि। तेन च मुनिना वैदेहाय तानि दत्तानीति गाथातात्पर्ययः; वनाय प्रतितिष्ठते—अयं भावः शुक्लयजुषां ब्रह्मज्ञानदत्त्वेन स्वहात्मनस्स निवर्त्तकत्वादिति।

विश्वामित्रः। वत्स दाशरथे राम! वत्स लक्ष्मण! सं खलु राज्याश्रममहामुनिरित्थं (च) समर्थयते।

स्थितिः पुण्येऽरण्ये सह परिचयो हन्त हरिणैः
फलैर्मेध्या वृत्तिः प्रतिनदि च तल्पानि दृषदः।
इतीयं सामग्री फलति हि विरक्त्यै स्पृहयतां (त)
वनं वा गेहं वा सदृशमुपशान्तस्य मनसः॥ १७॥

रामः। सत्यमिदं गोचरे। (थ) अतथाविधो न तथाविधरहस्यवेदी।

रावणः। साक्षेपम्। अये! अयमसौ रामो दाशरथिर्यस्ताड़कारिस्ताड़केयारिश्च?। सस्मितहृदयम्। अहो! (द) क्षत्रियब्राह्मणस्याभिचारे चातुर्यं यदस्मत्परिजनेऽपि जनितवानयमपि क्षत्रियडिम्भो डिम्भडम्बरम्।

---

(च) समर्थयते विचारयति।

(त) स्थितिरिति। पुण्ये पवित्रे अरण्ये स्थितिः वासः, हन्त इति हर्षसूचकमव्ययं हरिणैः सह परिचयः सङ्गः, फलैः वन्यैः प्रतिनदि च नदीभिश्च मेध्या पवित्रा वृत्तिः जीविका, दृषदः प्रस्तराः तल्पानि शय्याः, इति एवं रूपा इयं सामग्री उपकरणं स्पृहयतां वासनावतां विरक्त्यै विरागाय फलति प्रभवति हि, हिशब्दोऽवधारणे उपशान्तस्य निस्पृहस्य मनसः वनं वा गेहं वा सदृशं तुल्यम्। वृत्तमत्र शिखरिणी।

(थ) अतथाविधः अतद्रूपः अतज्ज्ञ इत्यर्थः। तथाविधं रहस्यं मर्म वेत्तीति तथोक्तः।

(द) अभिचारे मारणादिके आथर्वणिके कर्मणि इत्यर्थः। क्षत्रियब्राह्मणस्य आदौ क्षत्रियः पश्चात् ब्राह्मणः तस्य विश्वामित्रस्य इत्यर्थः। क्षत्रियडिम्भः क्षत्रियशिशुः। डिम्भस्य शिशोः डम्बरं चापल्यम्। अस्यैव मुनेरभिचारप्रभाव एषः, नतु बालकस्येति भावः।

लक्ष्मणः । पुरोऽवलोक्य । अये (ध) सविधीकृतधनुषि स्वयंवरयात्राभुवि वर्त्तामहे । यतः ।

काचत्काञ्चनकिङ्किणीमुखरतोरणैर्गोपुरै-
र्विचित्रमणिदीधितिस्फुरणसूचितेन्द्रायुधैः ।
चकास्त्ययमवाङ्मुखीकृतनभश्चरीलोचनः
स्थितोन्नतनरेश्वरः किमपि मञ्चहर्म्योच्चयः ॥ १८ ॥ (न)

विश्वामित्रः । समन्तादवलोक्य ।

पुरविजयि तदेतत् कार्मुकं चन्द्रमौले-
रयमिह जनकानामग्रणीर्योगिनां च ।
अयमपि च निमीनां धर्मबन्धुः पुरोधाः
सुरयजनसमुत्था मैथिली चेयमत्र ॥ १९ ॥ (प)

---

(ध) सविधीकृतधनुषि सविधीकृतं सन्निधापितं धनुः यस्यां तथोक्तायां स्वयंवरयात्राभुवि स्वयंवरोत्सवक्षेत्रे ।

(न) काचदिति । अवाङ्मुखीकृतानि दिदृक्षया न्यक्प्रसारितानि नभश्चरीणां खेचरीणां लोचनानि येन तथोक्तः, तथा स्थितः उन्नतः महान् नरेश्वरः नरपतिः यत्र तथाभूतः अयं मञ्चहर्म्योच्चयः पर्य्यङ्कशोभिताट्टनिचयः काचन्तीभिः कनककिङ्किणीभिः स्वर्णनिर्मितक्षुद्रघण्टिकाभिः मुखराणि तोरणानि द्वारोपरिस्थितधनुराकाराः अवयवविशेषाः येषां तैः तथा विचित्राणां मणीनां दीधितिस्फुरणेन रश्मिविकासेन सूचितम् इन्द्रायुधं शक्रधनुः यैः तादृशैः गोपुरैः पुरद्वारैः पुरद्वारन्तु गोपुरमित्यमरः। चकास्ति राजते । पृथ्वी वृत्तमत्र ।

(प) पुरेति । तदेतत् परिदृश्यमानमिति भावः चन्द्रमौले हरस्य पुरविजयि त्रिपुरध्वंसि कार्मुकं धनुः । इह अस्मिन् प्रदेशे जनकानां निमिकुलानां योगिनाञ्च अग्रणीः प्रवरः अयं विदेहश्च । अपिच अयं निमीनां धर्मबन्धुः धर्मकार्य्यसहायः पुरोधाः पुरोहितः शतानन्द

ततः प्रविशत्युपविष्टा यथानिर्दिष्टा जनकशतानन्दसीताः प्रतीहारी भार्गविका च।

शतानन्दः। भोः सीरध्वज! अद्य खलु ताडिततारका-कुटुम्बस्य रामभद्रस्य दर्शनेन (फ) दशरथशैशवमनुस्मारितोऽस्मि यत्तेनापि।

अदृष्टभ्रूभेदेन गतेन चणमित्रताम्।
वज्रपाणिः कृतं राज्यमदैत्यमपदानवम्॥ २०॥ (ब)

जनकः। एवमेवैतत्। न (भ) खल्विक्ष्वाकूणामपेक्षित-वयःप्रक्रमो विक्रमः।

शतानन्दः। (म) हेमप्रभे! शाम्भवधनुःसमीपवर्त्तिनीं कुरु राजपुत्रीं प्रवृत्ता स्वयंवरयात्रा।

सीता भार्गविका तथा कुरुतः।

विश्वामित्रः। वत्स! लक्ष्मण! यथानिर्दिष्टं जनका-

---

इत्यर्थः। अत्र च इयं सुरयजनसमुत्था यज्ञवेदिभवा मैथिली सीता च वर्त्तते इति सर्वत्र योज्यम्। वृत्तमत्र मालिनी।

(फ) दशरथशैशवं दशरथस्य शैशवं बाल्यावस्थाम्।

(ब) अदृष्टेति। अदृष्टः भ्रुभ्रूणां भेदः विकासः यस्य तादृशेन बालेनेत्यर्थः वज्रपाणेः इन्द्रस्य चणमित्रतां तत्चणसख्यं गतेन प्राप्तेन सता राज्यं त्रैलोक्यरूपमिन्द्रराज्यम् अदैत्यम् अपदानवं दैत्यदानवशून्यमित्यर्थः। कृतम्।

(भ) अपेक्षितेति अपेक्षितः वयसः क्रमः यस्मिन् तथोक्तः वयो नापेक्षते इति भावः।

(म) हेमप्रभे! भार्गविकासम्बोधनमिदम्। स्वयंवरयात्रा स्वयं-वरोत्सवः।

सन्निवर्त्तिनं (य) मञ्चैकदेशमारोहय रामभद्रम् । आरोह च स्वयं येन सीरध्वजोऽनुसन्धत्ते ।

रामलक्ष्मणौ तथा कुरुतः ।

रामः । स्वगतम् । अये इयमसौ सीता यस्याः स्वयं भगवती वसुमती माता यागभूमिर्जन्ममन्दिरम् इन्दुशेखर-कार्मुकारोपणं च जामातृगुणः । सस्पृहं निर्वर्ण्य ।

समन्तात् साभोगं न च कुचविभागाञ्चितमुरो
नितम्बः स्वां लक्ष्मीमभिलषति नाद्यापि लभते ।
दृशो लीलामुद्रा स्फुरति च न चातिस्थितिमती
तदस्यास्तारुण्यं प्रथममवतीर्णं विजयते ॥ २१ ॥ (र)

विचिन्त्य । हंहो हृदय ! इतः प्रभृति(ल) नूनमस्खलित-शासनः कुसुमायुधो भविता । पश्य ।

---

(य) मञ्चैकदेशं धनुषः मञ्चोपरिस्थितादिति भावः । अनुसन्धत्ते अनुनिरीक्षते इत्यर्थः ।

(र) समन्तादिति । उरः वक्षः समन्तात् चतुर्दिक्षु साभोगम् आभोगः परिपूर्णता तेन सहितम् । आभोगः परिपूर्णतेत्यमरः । कुचयोर्विभागेन विरचनया न च अञ्चितं पूजितं न शोभितमित्यर्थः । नितम्बः स्वां निजां लक्ष्मीं शोभाम् अभिलषति वाञ्छति, अद्यापि न च लभते न प्राप्नोति । दृशोर्नेत्रयोः लीलामुद्रा विलासचिह्नं स्फुरति विकासते, न च सा अतिस्थितिमती न बहुक्षणं तिष्ठतीत्यर्थः सर्वत्र सीताया इति योज्यम् । तत् तस्मात् अस्याः सीतायाः प्रथमम् अवतीर्णं तारुण्यं विजयते । वृत्तमत्र शिखरिणी ।

(ल) अस्खलितशासनः अव्याहताज्ञः ।

वहतु धनुरसङ्गादैश्वरं वैष्णवं वा
प्रहरतु च पृषत्कैः कौसुमैरायसैर्वा ।
तदपि मकरकेतुर्मूर्ध्नि धन्वीश्वराणा-
मियमिह युवभावं यावदङ्गीकरोति ॥ २२ ॥ (ब)

अन्यच्चिभाव्य । तामियं वयोवस्थामलङ्करोति (श) यस्या-
मभिनवाकल्पविकल्पविभ्रमभङ्गिव्यग्रमानसा शङ्के दिवा-
निशं तिष्ठतीति । यतः ।

उत्तालालकभञ्जनानि कबरीपाशेषु शिक्षारसो
दन्तानां परिकर्म नीविनहनं भ्रूलास्ययोग्याग्रहः ।
तिर्यग्लोचनवर्त्तितानि वचसां छेकोक्तिसंक्रान्तयः
स्त्रीणां ध्यायति शैशवे प्रतिपलं कोऽप्येष केलिक्रमः २३ (ष)

---

(ब) वहत्विति । मकरकेतुः असङ्गात् अनासक्त्या आसक्तिमन्तरेण इत्यर्थः ऐश्वरम् ईश्वरसम्बन्धि निर्मितं वा वैष्णवं विष्णुनिर्मितं धनुः वहतु, कौसुमैः कुसुममयैः आयसैः लोहमयैः वा पृषत्कैः शरैः प्रहरतु च, तदपि तथापि धन्वीश्वराणां धनुर्धराग्रणीनां मूर्ध्नि तावत् भविष्यतीति शेषः यावत् इयं मैथिली इह युवभावं तारुण्यम् अङ्गीकरोति । साम्प्रतं कामस्य न धनुर्धराग्रणीत्वं सिध्यति, सीतायास्तारुण्ये सेत्स्यत्येवेति भावः । वृत्तमत्र मालिनी ।

(श) यस्यां वयोऽवस्थायाम् अभिनवानां नूतनानाम् आकल्पानाम् अलङ्काराणां विकल्पस्य रचनायाः यो विभ्रमः विलासः तस्य भङ्गौ व्यापारे व्यग्रम् आसक्तं मानसं यस्याः तादृशी । शङ्के तर्कयामि ।

(ष) उत्तालेति । उत्तालानाम् उन्नतानाम् अलकानाम् चूर्णकुन्तलानाम् । अलकाश्चूर्णकुन्तलाः इत्यमरः । भञ्जनानि कौटिल्येन स्थापनानि इत्यर्थः, कबरीपाशेषु केशबन्धनेषु शिक्षारसः शिक्षायाम् अनुरागः । दन्तानां परिकर्म प्रसाधनं नीव्याः वसनग्रन्थेः नहनं बन्धनं

रावणः। इयमसौ(स) हृदयविशल्यकरणौषधिर्मैथिली।

तदखिलनेत्रसम्पातनेन पश्याम्येनाम्। सुचिरं विभाव्य।

धम्मिल्लो ललितः स्मितं शुचि दृशौ दीर्घे भ्रुवौ भङ्गुरे

पाशाभे श्रवसी विशालमलिकं माञ्जिष्ठपृष्ठोऽधरः।

कण्ठो रुक्मरुचिः समुन्नतमुरः काम्यं च काञ्चीपदं

दृग्वृन्दानि! चिरं विभज्य दशधा तन्मैथिलीं पश्यत २४ (ह)

आकाशे। (च) सीतामनुसन्धाय सोन्मादमिव।

---

भ्रुवोर्लास्यं नर्त्तनं भङ्गीविशेषः तस्य योग्यः अभ्यासः तस्मिन् पटुः यतः आदर इति यावत् लोचनयोः नेत्रयोः तिर्य्यक् वर्त्तितानि कौटिल्येन चालनानि तथा वचसां वाक्यानां छेकोक्तिषु विदग्धवाक्येषु संक्रान्तयः सङ्क्रमणानि छेको विदग्ध इति दर्पणकारः। एषः एवं-प्रायः कोऽपि अनिर्वाच्यः केलिक्रमः विलासक्रमः स्त्रीणां शैशवे बाल्ये गते इति शेषः प्रतिपलं प्रतिक्षणं म्लायति म्लानिं गच्छति। शार्दूलविक्रीडितं वृत्तम्।

(स) हृदयेति हृदयस्य विशल्यकरणं शल्योद्धरणं तस्य ओषधिः।

(ह) धम्मिल्ल इति। हे दृग्वृन्दानि नेत्रसमूहाः! ललितः सुन्दरः ललितं त्रिषु सुन्दरमिति कोषः धम्मिल्लः बद्धकेशः शुचि विशुद्धं स्मितं दीर्घे विशाले दृशौ नेत्रे भङ्गुरे कुटिले भ्रुवौ, पाशाभे बन्धनरज्जुसदृशे श्रवसी कर्णौ विशालम् अलिकं ललाटं मञ्जिष्ठया रञ्जितं माञ्जिष्ठं पृष्ठम् उपरिभागो यस्य तादृशः अधरः। कण्ठः रुक्मरुचिः सुवर्णकान्तिः, समुन्नतं कुचयोः प्राग्भावादिति भावः उरः, काम्यं कमनीयं काञ्चीपदं रशनास्पदं नितम्ब इत्यर्थः शैथिल्या इति सर्वत्रान्वेति। चिरं दशधा उक्तप्रकारेण दशविधेन विभज्य विभागं कृत्वा तां मैथिलीं पश्यत अवलोकयत।

(च) अनुसन्धाय निर्दिश्य मनसा ध्यात्वा वा।

तरङ्गय दृशोऽङ्गने ! पततु चित्रमिन्दीवरं
स्फुटीकुरु रदच्छदं व्रजतु विद्रुमः श्वेतताम् ।
क्षणं वपुरपावृणु स्पृशतु काञ्चनं कालिका-
मुदञ्चय मनाङ्मुखं भवतु च द्विचन्द्रं नभः ॥ २५ ॥ (क)

प्रतीहारी । समन्तादवलोक्य भूमिपालान् । यत् सत्यं (ख) निरुपमरूपसम्पदो जनस्य साहायकेन स भगवान् कुसुमायुधः किमपि कामिजनं विडम्बयति । यतः ।

एतेनाच्चैर्विहसितमसौ काकलीगर्भकण्ठो
लुभ्यच्चक्षुः प्रहितममुना साङ्गभङ्गः स्थितोऽयम् ।
हारस्याग्रं कलयति करेणैष हर्षाच्च किञ्चित्
स्त्रैणः पुंसां नवपरिगमः काममुन्मादहेतुः ॥ २६ ॥ (ग)

---

(क) तरङ्गयेति ! हे अङ्गने सुन्दरि ! दृशः तरङ्गय, चपलय चित्रं मनोज्ञम् इन्दीवरं पततु सौभाग्यात् भ्रश्यतु । रदच्छदं अधरं स्फुटीकुरु प्रकटय, विद्रुमः प्रवालमणिः श्वेततां धावल्यं व्रजतु गच्छतु । क्षणं वपुः शरीरम् अपावृणु निरावरणं कुरु, काञ्चनं कालिकां मालिन्यं स्पृशतु । मनाक् ईषत् मुखम् उदञ्चय उन्नमय, नभः अन्तरीक्षं द्विचन्द्रं भवतु च । पृथ्वी छन्दः ।

(ख) निरुपमेति निरुपमा अतुल्या रूपसम्पद् यस्य तादृशस्य साहायकेन साहाय्येन । विडम्बयति प्रतारयति जयति वा ।

(ग) एतेनेति । एतेन कामिजनेन उच्चैर्विहसितम् । असौ कामिजनः काकलीगर्भकण्ठः मधुरस्वरकण्ठः भवतीति शेषः । अमुना कामिजनेन लुभ्यत् सतृष्णं चक्षुः प्रहितम् । अयं कामिजनः साङ्गभङ्गः अङ्गभङ्गेन सह स्थितः तिष्ठतीत्यर्थः । एषः करेण हारस्य अग्रं हर्षात् उल्लासात् अन्यत् किञ्च किमपि कलयति गृह्णाति । अतः पुंसां स्त्रैणः स्त्रीसम्बन्धी नवपरिगमः अभिनव-

किञ्चिदुच्चैः ।

शृणुत जनकशुल्कं क्षत्रियाः ! सर्व एते
दशवदनभुजानां कुण्ठिता यत्र शक्तिः ।
नमयति धनुरैशं यस्तदारोपणेन
त्रिभुवनजयलक्ष्मीर्मैथिली तस्य दाराः ॥ २७ ॥ (घ)

रावणः । सक्रोधहासम् । (ङ) अप्यलीककवे ! मूढ़ ! कथमिव करतललुलितकैलासशैलोच्चयाः काम्रुकलतारोपणेऽपि दशकण्ठबाहवः कुण्ठाः । किञ्च रे विचक्षणम्मन्य ! वद्राद्रि तुलनम् इत्यादि पठति ।

हेमप्रभा । सहि ! जाणइ ! उवक्कन्ता (च) धणुज्जता ता सफलपरिस्समं होदु संपदं पआवदिणो पिअसहीए

---

(५४) सखि ! जानकि ! उपक्रान्ता धनुर्यात्रा तत् सफलपरिश्रमं भवतु साम्प्रतं प्रजापतेः प्रियसख्या रूपनिर्माणनिपुणत्वम् । अस्तु च हतार्शः कुसुमकोदण्डस्य कोदण्डयोग्यः परिश्रमः ।

---

समागमः कामं यथा तथा उन्मादहेतुः उन्मत्ततानिदानम् । वृत्तमत्र मन्दाक्रान्ता ।

(घ) शृणुतेति । हे सर्वे एते क्षत्रियाः ! यूयं जनकस्य मैथिलस्य शुल्कं पणं शृणुत । यत्र धनुषि दशवदनभुजानां शक्तिः कुण्ठिताः तत् ऐशं धनुः, यः आरोपणेन ज्यया सङ्गमनेन नमयति, त्रिभुवनानां जयलक्ष्मीः विजयश्रीः मैथिली तस्य दाराः पत्नी भवितेति शेषः । वृत्तमत्र मालिनी ।

( ङ ) अलीककवे ! दृथाकवित्ववन् !

( च ) धनुर्यात्रा कार्मुकमहोत्सवः । कुसुमकोदण्डस्य पुष्पधन्वनः कोदण्डयोग्यः कोदण्डस्य धनुषः योग्य अभ्यासः यत्र तादृशः ।

कृतविष्णावणिउवत्तणं अत्थु अ कदत्थो कुसुमकोअण्डस्स कोअण्डजोग्गो परिस्समो ( ५४ ) ।

प्रतीहारी । पुरोऽवलोक्य स्वगतम् । अये नरक ! एष प्रथममुपस्थितः । प्रकाशम् ।

कृष्णागुरुद्रुमतलेषु सुराङ्गनाभि-
रामोदिगन्धमृगबन्धुषु गीतकीर्त्तिः ।
शौरेर्वराहवपुषो जगतीकलत्रे
प्रागज्योतिषाधिपतिरेष सुतः किलाभूत् । २८ ॥ (ञ)

किञ्च ।

अस्योद्योगे प्रसर्पत्पटुपटहरवोद्रिक्तदानद्रवाणां
सन्नाहन्यासदर्पद्विगुणिततरसां वारणानां भरेण ।
निःशेषव्यस्तदुर्वीवलयपरिणतिस्रस्तसन्नाहबन्धः
पृष्ठाष्ठीलं विलोलं कलयति कलया जर्जरं कूर्मराजः २९ (झ)

---

( ञ ) नरकः नरकनामा असुरविशेषः ।

( ञ ) कृष्णेति । आमोदिनः सौरभवन्तः ये गन्धमृगाः कस्तुरी-मृगाः तेषां बन्धुषु आश्रयेषु कृष्णागुरूणां द्रुमाणां तलेषु सुराङ्गनाभिः गीताः कीर्त्तयो यस्य तथोक्तः एष प्रागज्योतिषाधिपतिः नरकः वराहवपुषः वराहमूर्त्तिधरस्य शौरेः नारायणस्य जगतीकलत्रे पृथिवीरूपायां भार्य्यायां सुतः अभूत् । इत्यमत्र वसन्ततिलकम् ।

( झ ) अस्येति । कूर्मराजः अस्य नरकस्य उद्योगे यात्रायां प्रसर्पन्तः समुद्गच्छन्तः पटवः प्रकटाः ये पटहानां वाद्यभेदानां रवाः तैः उद्रिक्ताः उत्तेजिताः दानद्रवः मदजलस्रावः येषां तादृशां तथा सन्नाहस्य परिच्छदस्य न्यासेन विन्यासेन रचनया दर्पः यो दर्पः तेन द्विगुणिततरसां द्विगुणबलानां वारणानां हस्तिनां भरेण निःशेषं यथातथा व्यस्तत् अवनमत् यत् उर्वीवलयं पृथ्वीमण्डलं तस्य

हेमप्रभा । (ञ) दंसणमेत्तमहणिज्जस्सकामरूवो कामरूवेसरा एसो ता इमस्सिं तरुणतापिच्छरिंछालोसरिच्छच्छाया णिवडन्तु णिविड़कडक्खविक्खेवा ( ५५ ) ।

सीता । जो सुरपड़िपक्खो असुरो ( ५६ ) ।

हेमप्रभा । सहि ! मा उत्तम्म ण असुरसमारोवणिज्जं सङ्करसरासणम् ( ५७ ) ।

प्रतीहारी । अहो प्रभावो भवानोवल्लभस्य यद्वसुमतीसूनुरपि ।

दोर्दण्डचरितोच्चण्डो हरचिन्ताचमत्कृतः ।
कार्मुकारोपणायैव समुत्थाय पुनः स्थितः ॥ ३० ॥ (ट)

---

( ५५ ) दर्शनमात्रमहनीयकामरूपः कामरूपेश्वर एषः । तदस्मिंस्तरुणतापिच्छकान्तिसदृशच्छाया निपतन्तु निबिड़कटाक्षनिक्षेपाः ।

( ५६ ) यः सुरप्रतिपक्षोऽसुरः ।

( ५७ ) सखि ! मा उत्ताम्य नासुरसमारोपणीयं शङ्करशरासनम् ।

---

परिणत्या परिणामेन स्रस्तः शिथिलितः सन्नाहस्य परिकरस्य बन्धः रचना यस्य तथोक्तः सन् कलया अंशतः विलोलं चञ्चलं मुण्डालीलं मुण्डरूपम् अष्ठीलं मांसोन्नतिरूपं रोगविशेषं जर्ज्जरं यथा तथा कलयति धत्ते । स्रग्धरावृत्तम् ।

( ञ ) दर्शनेति । दर्शनमात्रेण अवलोकनमात्रेणैव महनीयं स्पृहणीयं कामरूपं कमनीयं रूपं यस्य तादृशः । कामरूपेश्वरः प्राग्ज्योतिषाधिपतिः । तरुणस्य अभिनवस्य तापिञ्छस्य तमालस्य या कान्तिः, तत्सदृशी छाया कान्तिर्येषां तादृशाः निबिड़ा घनाः कटाक्षाणां निक्षेपाः ।

( ट ) दोर्दण्डेति । दोर्दण्डयोः बाहुदण्डयोः चरितेन उच्चण्डः सन्नद्धः अपि हरस्य चिन्तया नैवं भङ्गुरिदम् इति चिन्तया चमत्कृतः

रावणः । धिग् भवन्तं (ठ) वासुन्धरेय ! धिक् । यदभिमानिनामारम्भस्यानिर्वहणममन्दो दुर्यशःकन्दः ।

मङ्गलः । देव ! न (ड) सर्वो दशाननः ।

प्रतीहारी । अन्यतोऽवलोक्य स्वगतम् । अये कथमसौ (ढ) पाण्ड्यः । प्रकाशम् ।

यत्कीर्तिं मलयाद्रिचन्दनलताकुञ्जे भुजङ्गाङ्गनाः
श्रुत्वा तच्छबरीजनात् फणिपतेर्गायन्ति सङ्गीतिषु ।
पाण्ड्यः सोऽयमुदन्वदन्वयधृषा किश्चान्यदस्य स्वयं
दातुं मौक्तिककामधेनुरसमा सा ताम्रपर्णी सरित् ॥ ३१ ॥ (ण)

अपि च ।

---

यिथितः ननु कार्मुकस्य धनुषः आरोपणाय समुत्थाय एव पुनः स्थितः ।

(ठ) वासुन्धरेय ! वसुन्धरानन्दन ! अभिमानिनां मानवतां धीराणाम् आरम्भस्य उद्योगस्य यत् अनिर्वहणम् अपरिसमाप्तिः, सः अमन्दः महान् दुर्यशःकन्दः मूलम् ।

(ड) सर्वः सर्वः जनः इत्यर्थः ।

(ढ) पाण्ड्यः तदाख्यदेशाधिपतिः ।

(ण) यत्कीर्त्तिमिति भुजङ्गानां नागानां अङ्गनाः भुजङ्गाङ्गनाः इत्यर्थः मलयाद्रेः चन्दनलतानां कुञ्जे तच्छबरीजनात् तत्रत्यात् शबरीजनात् यस्य कीर्त्तिं श्रुत्वा फणिपतेः नागराजस्य वासुकेः सङ्गीतिषु गायन्ति सः अयं उदन्वदन्वयस्य सागरकुलस्य धृषा इन्द्रः पाण्ड्यः किञ्च अस्य अन्यत् अपरं वक्तव्यमिति शेषः सा प्रसिद्धा असमा अतुल्या ताम्रपर्णी सरित् स्वयं अस्य पाण्ड्यस्य दातुं दीनार्थं मौक्तिकानां कामधेनुः अभवदिति शेषः । शार्दूलविक्रीडितम् ।

वाचः संयमनं सतां रणविधिः कॢप्तामरीवल्लभो
नेत्रोन्मादकरं वपुर्मृगदृशां हस्तावचेयं यशः ।
इत्येतस्य निसर्गसुन्दरगुणस्यैतत्परं लाञ्छनं
पात्रापात्रविवेचनं न यदभूत् सर्वस्वदानेष्वपि ॥ ३२ ॥ (त)

हेमप्रभा । (थ) कपोलकन्तिणिब्भच्छिअमुद्धमहुअकुसुम-
पण्डिमे ! पण्डुमेइणीणाहो एसो ता इमस्स वअणसदवत्ते
णिवेसअ संचरन्तछप्परणरिंछोलीसच्छाअं दिट्ठिम् (५८) ।

---

(५८) कपोलकान्तिनिर्भर्त्सितमुग्धमधूककुसुमपाण्डिमे ! पाण्डु-
मेदिनीनाथ एष तदस्य वदनशतपत्रे निवेशय संचरत् षट्चरणकान्ति-
सच्छायां दृष्टिम् ।

---

(त) वाच इति । वाचः वचनानि सतां संयमनं रक्षणं रक्षण-
साधनमित्यर्थः रणविधिः संग्रामव्यापारः कॢप्ता विहिता अमरीणां
देवाङ्गनानां वल्लभाः यत्र तादृशः संग्रामहतानां स्वर्गगतत्वेन सुरा-
ङ्गनालाभादिति भावः । वपुः शरीरं मृगदृशां नारीणां नेत्रोन्माद-
करं नयनरञ्जनम् । यशः हस्ताभ्याम् अवचेयम् उपार्जनीयं यशः-
साध्यानां कर्मणां हस्तसाध्यत्वादिति भावः । इतीत्थं निसर्गेण प्रकृत्या
सुन्दराः जनरञ्जनाः गुणाः यस्य तादृशस्य एतस्य पाण्डुस्य परं केव-
लम् एतत् लाञ्छनं कलङ्कः । कलङ्काङ्को लाञ्छनञ्च चिह्नमित्यमरः ।
यत् सर्वस्वदानेषु अपि पात्रापात्रविवेचनं न अभूत् अयं पात्रम् अयम्
अपात्रमित्यविविच्यैव अनेन सर्वस्वं दीयते इति भावः । शार्दूल-
विक्रीडितं वृत्तम् ।

(थ) कपोलेति कपलयोः कान्त्या निर्भर्त्सितः तिरस्कृतः
मुग्धः सुन्दरः मधूककुसुमस्य पाण्डिमा धावल्यं यया तादृशि
मेदिनि ! वदनमेव शतपत्रं पद्मं तस्मिन् सञ्चरतां षट्चरणानां
भ्रमराणां या कान्तिः तस्याः सच्छायां सदृशीम् ।

सीता । जो (द) दविदचूड़ामणी (५९) ।

प्रतीहारी । साकारसंवरणं विहस्य ।

रभसादयमादाय कोदण्डं मदनद्विषः ।

व्रीड़ाविनमितग्रीवो वन्दित्वा पुनरुज्झति ॥ ३३ ॥ (ध)

रावणः । विहस्य । अहो द्रविड़पतेः (न) सुसूचितस्त्याग-कारणपरिग्रहः ।

प्रतीहारी । अन्यतोऽवलोक्य स्वगतम् । अये ! अयं माहिष्मतीपतिः । प्रकाशम् ।

अत्रेर्लोचनशुक्तिमौक्तिकमणेर्देवात्सुधादीधिते-
र्गोत्रं हैहयभूभुजां यदुदगात्तस्मिन्नभूदर्जुनः ।
दोःसीमन्तितनर्मदेन वपुषा पौलस्त्यदर्पद्रुहः
सूनुर्वाञ्छितमेतनादविजयस्तस्यैष शकुन्तपः ॥ ३४ ॥ (प)

---

(५९) यो द्रविड़चूड़ामणिः ।

---

(द) द्रविड़चूड़ामणिः द्रविड़ानां तदाख्यदेशीयानां चूड़ामणिः शिरोरत्नभूतः ।

(ध) रभसादिति । अयं पाण्ड्यः रभसात् वेगात् हर्षाद्वा । रभसो वेगहर्षयोरिति कोषः । मदनद्विषः शम्भोः कोदण्डं कार्मुकम् आदाय गृहीत्वा व्रीड़या लज्जया विनमिता ग्रीवा येन तथोक्तः सन् असामर्थ्यादिति भावः वन्दित्वा शैवं धनुरिति शेषः पुनः उज्झति त्यजति ।

(न) सुसूचितः सुरचितः । त्यागस्य धनुष इति शेषः यत् कारणं शैवधनुषो वन्द्यत्वरूपं तस्य परिग्रहः ग्रहणम् ।

(प) अत्रेरिति । अत्रेः मुनेः लोचनमेव शुक्तिः तस्य मौक्तिक-मणेः मुक्तारत्नभूतादित्यर्थः देवात् सुधादीधितेः चन्द्रात् हैहयभूभुजां

रावणः । आः अरत्नक्षत्रियप्रतीहार ! (फ) दुरभिधायिनमेनं त्वां मृष्यतां नाम दशास्यः । वत्समेघनादनिन्दापदं पुनरयं न क्षमते चन्द्रहासः । इति खड्गमादित्सते ।

प्रहस्तः । देव ! मुनिजनप्रयोज्यं (ब) प्रेक्षणकमेतत्, तदलमकाण्डसंरम्भेण ।

प्रतीहारी ।

यन्मेखला भवति मेकलशैलकन्या
वीतेन्धनो वसति यत्र च चित्रभानुः ।
तामेष पाति कृतवीर्ययशोवतंसां
माहिष्मतीं कलचुरेः कुलराजधानीम् ॥ ३५ ॥ (भ)

अपि च ।

---

हैहयाख्यक्षत्रियाणां यत् गोत्रं कुलम् उदगात् उदपादि, तस्मिन् अर्जुनः कार्त्तवीर्यः अभूत् । दोर्भ्यां बाहुभ्यां सीमन्तिता नर्मदा येन तादृशेन नर्मदायां जलकेलिं कुर्वता इत्यर्थः वपुषा शरीरेण पौलस्त्यस्य रावणस्य दर्पं द्रुह्यतीति तथाभूतस्य तस्य अर्जुनस्य सूनुः तनयः वाग्मिनो मेघनादस्य इन्द्रजितो विजयो येन तथाभूतः एष माहिष्मतीपतिः शत्रुन्तपः शत्रून् तपतीति तथोक्तः तन्नाम्ना ख्यात इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

(फ) दुरभिधायिनं दुर्व्याहारिणम् । मृष्यतां सहताम् । वत्सस्य मेघनादस्य निन्दापदं कुत्साकारणम् ।

(ब) प्रेक्षणकं दृश्यं काव्यम् । अकाण्डे अनवसरे संरम्भः कोपः तेन ।

(भ) यन्मेखलेति । यस्याः मेखला काञ्ची मेकलस्य शैलस्य कन्या नर्मदा इत्यर्थः नर्मदायाः मेकलशैलादुत्पत्तेरिति भावः या नर्मदया परिखारूपेण वेष्टिता इति भावः । यत्र च चित्रभानुः अग्निः

यस्याहवे हरिचमूखुरखण्डितोर्वी-
पांसुप्रसारपरिपूर्तिभिया वहन्ति ।
नेत्राणि नित्यविकचानि मरुत्तरुण्यो
नीरन्ध्रपाणिपुटयुग्मपिधानवन्ति ॥ २६ ॥ (म)

हेमप्रभा । (य) गुरुअणदंसिअविणअणम्मदे ! णम्मदेआ-लहुरणमाहिस्सईणअरणरिन्दो एसो ता इमस्सिं तरल-पम्हलधवलविसाला लाअण्णरत्तणीला दिज्जन्तु सहवेति चित्तपेरन्ता (६०)।

---

(६०) गुरुजनदर्शितविनयनर्मदे ! नर्मदाकाल्हरणमाहिष्मतीनगर-नरेन्द्र एष तदस्मिंस्तरलपक्ष्मलधवलविशाला लावण्यरक्तनीला दीयन्तां सहसैव नेत्रपर्यन्ताः ।

---

वीतेश्रमः इत्थनर्पितोऽपि वसति कार्त्तवीर्यतपस्तुष्टतया प्रतिपा-लकत्वादिति भावः एष यलुन्तपः कृतवीर्य्यस्य अर्जुनपितुः यशोवतंसां कीर्त्तिशालिनीं कलचुरेः तदाख्यस्य राज्ञः कुलराजधानीं माहिष्मतीं पाति रक्षति । वृत्तमत्र वसन्ततिलकम् ।

(म) यस्येति । यस्य यलुन्तपस्य आहवे युद्धे मरुतां देवानां तरुण्यः युवत्यः खेचर्य्य इत्यर्थः हरिचमूनाम् अश्वसैनिकानां खुरैः खण्डितायाः उर्व्याः पृथिव्याः पांसूनां रजसां ये प्रसाराः विस्ताराः तेषां परिपूर्त्तेः पूरणात् या भीः भयं तया हेतुना नित्यविकचानि सततोत्फुल्लानि नेत्राणि नीरन्ध्रयोः पाणिपुटयोः युग्ममेव पिधा-नम् आच्छादनं तद्वन्ति तदाच्छादितानीत्यर्थः वहन्ति धारयन्ति । वृत्तमत्र वसन्ततिलकम् ।

(य) गुरुजनेति गुरुजनेषु दर्शितः विनयः यया सा गुरु-जनदर्शितविनया तथा नर्म केलिं ददाति इति नर्मदा आनन्ददायिनी-त्यर्थः ततश्च गुरुजनदर्शितविनया च नर्मदा चेति विशेषणसमासे

सीता। जो खत्तिअकुलकुमारोवि भविअ अवमखिअपरसुरामपरक्कमो (६१)।

प्रतीहारी। स्वगतम्। अहो गर्वगरिमा हैहयकुलकुमारस्य। प्रकाशम्।

त्रैयम्बकेऽपि कोदण्डे दोर्दण्डमदडामरः।
अयमाद्रियते वीरो नारोपणपणक्रियाम्॥ ३७॥ (र)

प्रहस्तः। मूढ़! दग्धकण्ठायसे किन्तु न वन्दीकृतमहेन्द्रोऽसि।

प्रतीहारी। अन्यतोऽवलोक्य स्वगतम्। अये अयमितश्चेदिपतिः। प्रकाशम्।

सीतास्वयंवरनिदानधनुर्धरेण
दग्धात् पुरत्रितयतो विभुना भवेन।
खण्डं निपत्य भुवि या नगरी बभूव
तामेष चैद्यतिलकस्त्रिपुरीं प्रशास्ति॥ ३८॥ (ल)

---

(६१) यः क्षत्रियकुलकुमारोऽपि भूत्वाऽवमानितपरशुरामपराक्रमः।

---

गुरुजनदर्शितविनयनर्मदा ततृ्यमुक्षौ। नेत्रपर्य्यन्ताः अपाङ्गदेशाः इत्यर्थः।

(र) त्रैयम्बकेऽपीति। दोर्दण्डमदडामरः बाहुबलमदोद्धतः अयं वीरः त्रैयम्बकेऽपि कोदण्डे धनुषि आरोपणमेव पणः तस्य क्रियाम् अनुष्ठानं न आद्रियते।

(ल) सीतेति। सीतायाः स्वयंवरस्य निदानं यत् धनुः तस्य भरतीति धरः तेन विभुना भवेन महादेवेन दग्धात् पुरत्रितयात्

किञ्च ।

पाणिप्रस्थैर्बकुलसुमनःसौरभं यो मिमीते
दम्पत्योर्यः सुरतचरिते सौख्यसंख्यां करोति ।
यश्च ज्योत्स्नां चुलुकपुटकैः काममाचामतीन्दोः
शक्तः स्तोतुं स खलु निखिलान्यस्य कीर्त्त्यद्भुतानि ॥ ३८॥ (च)

हेमप्रभा । (अमन्दमअणमअदाणपअडहाले ! डहालेसरो एसो ता इमं पेक्ख तिरिच्छदंसणलीलाणिमीलिअकालिमेण कलिअससिहरुपंडिमेण दिट्ठिच्छडाकडक्खेण । (६२)

---

(६२) अमन्दमदनमददानप्रकटभावे ! दयालेश्वर एष तदिमं प्रेक्षस्व तिर्य्यग्दर्शनलीलानिमीलितकालिम्ना कलितशशिखण्डपाण्डिम्ना दृष्टिच्छटाकटाक्षेण ।

---

पुराणां त्रयात् खण्डं कियदिति शेषः निपत्य भुवि या नगरी बभूव, एष चैद्यतिलकः चेदिपतिः तां त्रिपुरीं नाम नगरीं अद्यापि परिपालयति । वृत्तमत्र वसन्ततिलकम् ।

(च) पाणीति । यः पाणिप्रस्थैः पाणिरूपैः परिमाणविशेषैः बकुलसुमनसां बकुलपुष्पाणां सौरभं मिमीते आप्नोति, यः दम्पत्योः स्त्रीपुंसयोः सुरतचरिते निधुवनलीलायां सौख्यसंख्यां सुखगणनां करोति, यश्च चुलुकपुटकैः गण्डूषपुटैः इन्दोः चन्द्रस्य ज्योत्स्नां कामं सम्यक् आचामति पिबति, स खलु एष अस्य चैद्यस्य निखिलानि कीर्त्त्यद्भुतानि अद्भुतकीर्त्तीरित्यर्थः स्तोतुम् कीर्त्तयितुं शक्तः समर्थः । पाणिभ्यां बकुलसौरभाहरणमिव, दम्पत्योः सुरतसुखगणनमिव तथा गण्डूषेण समग्रचन्द्रकिरणपानमिव अस्य अद्भुतकीर्त्तिस्तवनं दुष्करमिति तात्पर्य्यार्थः । वृत्तमत्र मन्दाक्रान्ता ।

(छ) अमन्देति अमन्देन घनेन मदनेन कामेन यो मदः विकारः

सीता । एसो सो णम्मदालङ्किदमण्डलाहिपई (६२) ।

प्रतीहारी ।

मानी गिरिशकोदण्डमयमाकलयन् दृशा ।
सखो निभृतमुन्नाहि निजदोर्दण्डमण्डलम् ॥ ४० ॥ (च)

रावणः । अहो मेकलपतेः (छ) स्वपरिच्छेदवैदग्धी ।

प्रतीहारी । अन्यतोऽवलोक्य स्वगतम् । अयमितः सिंहलेश्वरः । प्रकाशम् ।

यस्याम्बुधिः स भगवान् स च रोहणाद्रिः
कोशाविमौ मदनमन्त्रपदैर्वचोभिः ।
सोऽयं प्रियो यदि हसन् मृदु सिंहलेन्द्रः
क्रीडानिधानमनुरोधपुरं धिनोति ॥ ४१ ॥ (ज)

किञ्च ।

---

(६२) यः स नर्मदालङ्कृतमण्डलाधिपतिः ।

---

तस्य दाने प्रकटं भालं ललाटं यस्यास्तत् सम्बुद्धौ । तिर्यग्दर्शनस्य अपाङ्गदर्शनस्य लीलया निमीलितः कालिमा यस्य तादृशेन कलितः स्वीकृतः मणिखण्डस्य कर्पूरचूर्णस्य पाण्डिमा धावल्यं यस्य तादृशेन ।

(च) मानीति । अयं मानी दृशा चक्षुषा गिरिशस्य हरस्य कोदण्डं कार्मुकम् आकलयन् पश्यन् सद्यः निभृतं निःशब्दं यथा तथा निजदोर्दण्डमण्डलं स्वं भुजदण्डमण्डलम् उन्नाहि मन्ये भवेति विविनक्ति ।

(छ) स्वस्य परिच्छेदः परिमाणं तस्य वैदग्धी चातुर्यम् ।

(ज) यस्येति । स भगवान् अम्बुधिः स च रोहणो नाम अद्रिः पर्वतः इमौ यस्य कोशौ धनागारे, रत्नरूपधनागारं इत्यनयोरधिकारीति भावः । सोऽयं सिंहलेन्द्रः मदनमन्त्रपदैः मदनस्य कामस्य मन्त्रपदैः

यस्योच्चण्डासिदण्डप्रहतिविदलितैर्वैरिवर्गैरखण्ड-
च्छिन्नास्त्रोद्भ्रान्तवीरप्रतिबलकलनाशून्यसंग्राममार्गे ।
जीवत्संस्कारशक्त्या भुवि चरति चिरात् क्षुण्णबन्धं कबन्धे
दृष्टो देवीभवद्भिः सह सुरकुसुमैरात्मनः साधुवादः ॥४२॥ (ख)

हेमप्रभा । (क) असमत्तजोव्वणारोहणारम्भे ! रोहणमाणिक्कगिरिणो परमेसरो एसो ता इमं णिज्झाअन्ती कुण चञ्चविसदकन्दोट्टणिउरम्बकरम्बिअं अम्बरद्धन्तं ( ६४ ) ।

---

( ६४ ) असमस्तयौवनारोहणारम्भे ! रोहणमाणिक्यगिरेः परमेश्वर एष तदिमं निध्यायन्ती कुरु चञ्चविशदकमलनिकुरम्बकरम्बित, अम्बरार्द्धान्तम् ।

---

कलकूजनमञ्जुलैः वचनैः प्रियः तथा मदु मन्दं हसन् क्रीडानिधानं विलासाधारम् अनुरोधपुरं तदाख्यनगरं धिनोति प्रीणाति रत्नवतीत्यर्थः । वसन्ततिलकं वृत्तम्

(ख) यस्येति । यस्य उच्चण्डैः तीक्ष्णैः असिभिः दण्डैः तरवारैः या प्रहतिः प्रहारः तया विदलितैः छिन्नैः अतएव देवीभवद्भिः देवत्वं प्राप्तैः वैरिवर्गैः शत्रुसङ्घैः भुवि रणक्षेत्रे छिन्नैः अस्त्रैः उद्भ्रान्तानां वीराणां प्रतिबलानां प्रतिभटानां कलनया आगमेन शून्यः संग्राममार्गः रणपद्धतिः येन तादृशे कबन्धे अपमूर्द्धकलेवरे चिरात् क्षुण्णः छिन्नः बन्धः बाधा यस्मिन् तथाभूतम् निर्बाधमित्यर्थः यथा तथा चरति सति जीवत् संस्कारशक्त्या जीवितसंस्कारवशेन सुरकुसुमैः सह आत्मनः साधुवादः आत्मनः कबन्धान् भुवि विचरतो दृष्ट्वा वैरिणः पुण्यवर्णं स्तुवन्तिस्म इति भावः । स्रग्धरा वृत्तम् ।

(क) असमस्तेति असमस्तः असम्पूर्णः यौवनारोहणस्य तारुण्या-विर्भावस्य आरम्भः यस्याः तत्सम्बुद्धौ । निध्यायन्ती पश्यन्ती चञ्चं विशदानां विकचानां कमलानां निकुरम्बैः मालाभिः करम्बितम् अम्बरस्य अन्तरीक्षस्य अर्द्धान्तम् अर्द्धभागप्रान्तम् ।

सीता । जो (ख) कोत्थुहसगोत्तरअणरइदसेहरालङ्किद-सिरुद्देसो ( ६५ ) ।

प्रतीहारी । स्वगतम् । (ग) अनिश्चिन्वता चित्तेन मन्दो-द्यम इवायम् । प्रकाशम् ।

अस्य चण्डीशकोदण्डे स्वदोर्दण्डे च भूपतेः ।
गतागतशते सख्यं विदधाते विलोचने ॥ ४३ ॥ ( घ )

रावणः । सिंहलपते । किमिदं संदिह्यते न च सन्देह-देहो * वीरव्रतनिर्वाहः ।

प्रतीहारी । अन्यतोऽवलोक्य स्वगतम् । कथं मथुरानाथः । प्रकाशम् ।

हन्तुं रिपूनवतरिष्यति शार्ङ्गपाणिः
कंसप्रलम्बवृषकेशिमुखानिहेति ।

---

( ६५ ) यः कौस्तुभसगोत्ररत्नरचितशेखरालङ्कृतशिरउद्देशः ।

---

(ख) कौस्तुभस्य नारायणोरःस्थितस्य रत्नस्य सगोत्राणि सदृ-शानि यानि रत्नानि तैः रचितेन गुम्फितेन शेखरेण शिरोदाम्ना अलङ्कृतः शोभितः शिरसः उद्देशः भागः यस्य तादृशः ।

( ग ) अनिश्चिन्वता यज्ञः स्वां न वेत्ति सन्दिहता इत्यर्थः चित्तेन मनसा मन्दः शिथिलः उद्यमो यस्य तथाभूत इव ।

( घ ) अस्येति । अस्य भूपतेः विलोचने नेत्रे चण्डीशस्य हरस्य कोदण्डे धनुषि स्वस्य दोर्दण्डे बाहुदण्डे च गतागतशते याता-यातशते सख्यं मित्रत्वं विदधाते कुर्वाते क्षणं शैवं धनुः प्रति क्षणं स्वभुजबलं प्रति मनो यातीति भावः ।

* सन्देहदेहः सन्देहे संशये देहो यस्य तादृशः, वीरा न सन्दि-हन्तीति भावः ।

(ङ) हन्तुमिति । यस्यां शार्ङ्गपाणिः कृष्णः कंसप्रलम्बवृषकेशिमुखान् रिपून् हन्तुम् अवतरिष्यति इति पुराणकवेः व्यासस्य वचांसि भविष्यत्-

यस्यामश्रुम पुराणकवेर्वचांसि
तामेव पार्थिवपतिर्मथुरां प्रशास्ति ॥ ४४ ॥ (ङ)

किञ्च ।

दृष्ट्वा व्योमनि बालमभ्रशकलं लेह्यं जगच्चक्षुषां
नीपानां कुसुमावतंसजननं नृत्यप्रदं बर्हिणाम् ।
याचावेशहरं जिगीषुमनसामस्य स्फुटत्कञ्चुकः
कान्ताभिः सुहृदां द्विषां च युगपत् प्राप्तः प्रमोदोत्सवः ॥ ४५ (च)

हेमप्रभा । णिसग्गसव्वङ्गमहुरे ! महुरेक्कालङ्करणं एसो ता इमस्सिं णिवेसम दिट्ठिं जइ तुमं (छ) णिरुवमरूवरेहादंसणुक्कण्ठाविसंठुलमाणसासि (६६) ।

---

(६६) निसर्गसर्वाङ्गमधुरे मधुरैकालङ्करणमेष ! तदस्मिन्निवेशय दृष्टिं यदि त्वं निरुपमरेखादर्शनोत्कण्ठाविसंष्ठुलमानसाऽसि ।

---

पुराणवाक्यानि इत्यर्थः इह जगति अश्रुम श्रुतवन्तः वयमिति शेषः एष पार्थिवपतिः तां मथुरां प्रशास्ति । वसन्ततिलकं वृत्तम् ।

(च) दृष्ट्वेति । व्योमनि आकाशे जगच्चक्षुषां लेह्यं पेयं नीपानां कदम्बानां कुसुमावतंसजननं पुष्पशोभावहं बर्हिणां शिखिनां नृत्यप्रदं अतएव याचायाः युद्धोद्यमस्य वेशहरं परिच्छदापनायकम् उद्दीपकत्वादिति भावः । बालं नवं अभ्रशकलं मेघखण्डं दृष्ट्वा अस्य जिगीषुमनसां जयार्थिनामित्यर्थः सुहृदाम् द्विषाञ्च यत्नवतां कान्ताभिः कामिनीभिः युगपत् समकालं स्फुटन् कञ्चुको एकत्र वारवाणः अन्यत्र स्तनावरणं यस्मिन् तादृशः प्रमोदोत्सवः आनन्दोत्सवः प्राप्तः उपस्थितः । अत्र वर्षास्वेव युद्धविश्रान्तिरिति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(छ) निरुपमेति निरुपमस्य अतुल्यस्य रूपस्य रेखायाः राज्याः दर्शनेन या उत्कण्ठा तया विसंष्ठुलम् मानसं यस्याः तादृशी ।

सीता । जो विन्दावणविहारदुल्ललिओ (६७) ।

प्रतीहारो (स्वगतम्) । (ज) कथमधिगतकोदण्डपाण्डित्यो-ऽप्ययमुदास्ते । (प्रकाशम्) ।

आरोपयतु वा मा वा राजैष हरकार्मुकम् ।
सूच्यतेऽस्य धनुर्योग्या प्रकोष्ठकिणमालया ॥ ४६ ॥ (झ)

रावणः । (सोपहासम्) । कथं मधुराधिपतिर्महाधन्वी न सुरचापारोपणकर्मणि परमप्रवीणः ।

प्रतीहारो । (अन्यतोऽवलोक्य स्वगतम्) । अयमितोऽवन्ति-पतिः । (प्रकाशम्) ।

निर्वाणैकरुचिर्भवस्य भगवांस्त्रैलोक्यलीलागुरु-
र्देवोऽसौ मकरध्वजस्य वसता विश्रान्तवैरव्रतम् ।
यस्यामात्मसहस्रयैव नगरीमेकामसौ तामसौ
शिप्राम्भःपरिखावतीं नरपतिः सत्यव्रतो रक्षति ॥४७॥ (ञ)

---

(६७) यो वृन्दावनविहारदुर्ललितः ।

---

(ज) अधिगतेति अधिगतं कोदण्डेषु धनुःषु पाण्डित्यं येन तादृशोऽपि धनुर्विद्याविशारदोऽपीत्यर्थः उदास्ते उदासीनस्तिष्ठतीत्यर्थः ।

(झ) आरोपयत्विति । एष राजा हरकार्मुकम् आरोपयतु वा मा वा न आरोपयतु वा इत्यर्थः, अस्य तु प्रकोष्ठस्य मणिबन्धोपरिभागस्य किणमालया बलक्षश्रेण्या धनुर्योग्या धनुषाभ्यासः सूच्यते ज्ञायते ।

(ञ) निर्वाणेति । यस्यां नगर्याम् आत्मसहस्रया वासयोगेन निर्वाणे अपवर्गे एका केवला रुचिर्यस्य तादृशो भगवान् भवः शम्भुः तथा त्रैलोक्यस्य लीलायाः गुरुः शिक्षाचार्यः असौ देवः मकरध्वजः कामश्च विश्रान्तं वैरव्रतं शत्रुभावो यस्मिन् तत् यथा तथा वसतः, या

किञ्च ।

वीरश्रीवेणिबन्धो भुजभुजगफणा शत्रुषु भ्रूपताका
देवस्य प्रेतभर्तुः पृथुतरपृतनाह्रादिनीवीचिलेखा ।
क्रोधाग्नेर्धूमवर्त्तिः सुरयुवतिदृशां शृङ्खलादाम दीर्घं
लक्ष्मीलीलाकटाक्षः प्रतिसमरमभूदस्य जैत्रः कृपाणः ४८(ट)

हेमप्रभा । (ठ) रहचलणचङ्कलणिअम्बुद्दे सविसाले ! विसालेक्कसाभिलासो एसो वाक्कीरउ इमस्सिं क्खण-मण्डलतक्खवपरिक्खवपत्तलब्भूलदालद्धिदा दिट्ठी (६८) ।

---

(६८) रथचरणनितम्बोद्देशविशाले ! विशालैकसाभिलाष एष तव कीर्यतामस्मिन् क्षणमण्डलताण्डवपरिक्षिप्तपत्रलभ्रूलताञ्चिता दृष्टिः ।

---

अपवर्गविलासयोरेकायतनमिति भावः अत्र सत्यव्रतो नाम नरपतिः शिप्रायाः अस्य एव परिखा तद्वतीं तद्वेष्टिताम् एकासनीम् एकम् अद्वितीयम् आसनं सिंहासनं यस्यां तादृशीम् एकाधिपतिकामिति भावः तां नगरीं रक्षति पालयति । शार्दूलविक्रीडितं वृत्तम् ।

(ट) । वीरेति अस्य जैत्रः जयसाधनं कृपाणः असिः प्रतिसमरं वीराणां या श्रीः लक्ष्मीः तस्याः वेणिबन्धः केशपाशः भुज एव भुजगः पन्नगः तस्य फणा, शत्रुषु भ्रूपताका भ्रूकौटिल्यरूपा पताका, देवस्य प्रेतभर्तुः यमस्य पृथुतरा अतिमहती या पृतना सा एव ह्रादिनी नदी तस्याः वीचिलेखा तरङ्गमाला, क्रोधाग्नेः धूमवर्त्तिः धूमाकारा रेखा, सुरयुवतिदृशां दीर्घं शृङ्खलादाम तथा लक्ष्म्याः लीलाकटाक्षः विभ्रमापाङ्गदर्शनम् अभूत् । स्रग्धरावृत्तम्

(ठ) रथेति । रथचरणवत् चक्रवत् विशालः नितम्बोद्देशः यस्याः तत्सम्बुद्धौ ।

सीता । जो (ठ) तिउरदहणट्ठाणट्ठिअमहाकालणामन्तरिअखण्डपरसुणामपविसिदणिडालवट्टो ( ६८ ) ।

प्रतीहारी । स्वगतम् । कथं धनुरारोपणपराङ्मुखोऽयम् । प्रकाशम् ।

नेत्रत्रिभागमात्रेण निरीक्ष्य हरकार्मुकम् ।
एष स्थितो वलत्कण्ठः सुहृदालापतत्परः ॥ ४८ ॥ (ण)

रावणः । हंहो कुशस्थलीनाथ ! (त) कोऽयमनाकलितकालपरिणामजर्जरेऽपि धनुष्यनध्यवसायस्तव ।

प्रतीहारी । अन्यतोऽवलोक्य । स्वगतम् । कथमयं क्रथकैशिकाधिपतिः । प्रकाशम् ।

---

( ६८ ) यस्त्रिपुरदहनस्थानस्थितमहाकालनामान्तरितखण्डपरशुनामपवित्रितनिटालपट्टः ।

---

विशाख एकः अद्वितीयः साभिलाषः सतृष्णः । कौर्य्यतां विविच्यताम् । अयं भवन्तलाञ्छनेन भवचालाकारेण यत् ताण्डवं नर्त्तनं तस्मिन् यत् पाण्डित्यं चातुर्य्यं तत्र पताका पताकवती पद्मिनी कथितारा इत्यर्थः या भ्रूलता तया अलङ्कृता शोभिता ।

(ठ) त्रिपुरेति त्रिपुराणां दहनस्य यत् स्थानं यस्मिन् स्थित्वा त्रिपुरं ददाहेति भावः, तत्र स्थितः महाकालनाम्ना अन्तरितः यः खण्डपरशुः हरः महाकालाख्यो हर इत्यर्थः तस्य नाम्ना पवित्रितः निटालपट्टः भालदेशः यस्य तथोक्तः शिवनामाङ्कित ललाट इत्यर्थः ।

(ण) नेत्रेति । एषः नृपतिः नेत्रत्रिभागमात्रेण हरकार्मुकं निरीक्ष्य वलन्ती प्रयसा कण्ठा उत्कण्ठा यस्य तथोक्तः तथा सुहृद्भिः सह आलापे तत्परः सन् स्थितः ।

(त) अनेति । अनाकलितः अविवेचितः अनिश्चित इत्यर्थः

वाग्देवता वसति यत्र रसप्रसूति
लीलास्पदं भगवतो मदनस्य यच्च।
प्रेङ्खद्विदग्धवनितार्च्चितराजमार्गं
तत्कुण्डिनं नगरमेष विभुर्बिभर्त्ति ॥ ५० ॥ (च)

किञ्च।

रूपाधारैकवेधाः कुलगृहमुचितं चातुरीचेष्टितानां
कन्दर्पोन्मानविद्या हृदयहृतिकरो रागिणां मुक्तिहेतुः।
श्रुत्वैतन्नाम नष्टेष्वरिषु रणभुवो दिव्यभावाश्रमेषु
व्यर्थः स्वःसुन्दरीणां वरवरणविधौ वेषलाभो बभूव ॥५१॥ (छ)

कालस्य परिणामो यस्य तादृशे ऽत एव जर्जरे अतिजीर्णेऽपि। अन-ध्यवसायः अनुद्योगः।

(च) वाग्देवतेति। यत्र रसस्य प्रसूतिः उत्पत्तिस्थानं वाग्देवता सरसा सरस्वती वसति। यच्च स्थानं भगवतो मदनस्य लीला-स्पदं विलासभवनम्। एष विभुः नृपः प्रेङ्खन्तीभिः सहृतं गच्छ-न्तीभिः विदग्धवनिताभिः अर्च्चितः पूजितः अलङ्कृतः इत्यर्थः राजमार्गो यस्य तादृशं तं कुण्डिनं देशं बिभर्त्ति पालयति। वसन्त-तिलकम्।

(छ) रूपेति। अयं नृपतिः रूपस्य आधारः आश्रयः एकः केवलः वेधा ब्रह्मा यस्य तादृशः, चातुरीचेष्टितानां विलासव्यापाराणाम् उचितं कुलगृहं आवासस्थानम्। कन्दर्पस्य आह्वाने विद्याः, हृदय-हृतिकरः मनोहरः तथा रागिणां वासनावतां मुक्तिहेतुः, अपवर्गोप-देशकः भोगापवर्गयोरेकाधारोऽयमिति भावः एतस्य नाम श्रुत्वा रणभुवः संग्रामस्थलात् अरिषु शत्रुषु दिव्यभावाश्रमेषु देवत्वं प्राप्-तवत्सु अतएव नष्टेषु पलायितेषु सत्सु स्वःसुन्दरीणां सुर-नारीणां वरवरणविधौ वेषलाभः सज्जा इत्यर्थः व्यर्थः विफलो बभूव। स्रग्धरावृत्तम्।

हेमप्रभा । सिणिद्धसामलघणकुडिलकुन्तले ! कुन्तलेसरो एसो ता इमस्स दंसणेण सहलीकुरु (ध) पअइसमप्पमाणं णअणणिम्माणम् (७०)।

सीता । जो महाराअवरिट्ठो ( ७१ ) ।

प्रतीहारी । स्वगतम् । अये (न) प्रकृतिपराधीनं चरितमेतस्य । प्रकाशम् ।

हरचापसमारोपे प्रेरितोऽप्यनुजीविभिः ।
स्वरूपं वर्णयत्येष कुन्तविद्याविशारदम् ॥ ५२ ॥ (प)

राघवः । अति हि नाम शैशवोचितमाचरितमनेन ।

प्रतीहारी । अन्यतोऽवलोक्य । स्वगतम् । कथमयं काशीपुरपरमेश्वरः । प्रकाशम् ।

देवस्य मन्मथजितो नयनानलोत्थे
जातः कुले कुलवतां प्रवरः कुमारः ।

---

( ७० ) स्निग्धश्यामलघनकुटिलकुन्तले ! कुन्तलेश्वर एष तदस्य दर्शनेन सफलीकुरु प्रकृतिसमप्रमाणं नयननिर्माणम् ।

( ७१ ) यो महाराजवरिष्ठः ।

---

(ध) प्रकृतिसमप्रमाणं प्रकृतेः वितस्तिकायाः समं प्रमाणं परिमाणं यस्य तादृशम् अतिविशालमित्यर्थः ।

(न) प्रकृतिपराधीनं प्रकृत्या स्वभावेन पराधीनम् ।

(प) हरेति । एष हरस्य चापसमारोपे अनुजीविभिः प्रेषितोऽपि कुन्तविद्यासु अस्त्रविशेषशिक्षासु विशारदं स्वरूपं आत्मानं वर्णयति न तु कार्य्यतः प्रकटयतीति भावः ।

(फ) देवस्येति । मन्मथजितो मदनारेः देवस्य हरस्य नयनानलोत्थे कुले वंशे जातः कुलवतां कुलीनानां प्रवरः काश्याः पुरः अयं

जगत्त्रिलोकभवनाभरणैर्यशोभिः
काश्यः पुरः पतिरयं पुरतश्चकास्ति ॥ ५३ ॥ (फ)

किञ्च ।

वीरा यत्खड्गासिदण्डप्रहरणसुहृदः सम्मुखं सम्पतन्तो
ये जाताः पात्रमाजिष्वनिमिषसुमनोदामदानोत्सवस्य ।
अस्य प्रेङ्खत्कुठारप्रहृतिभिरमरीभूय तैरेव भूयः
शेषाणां मूर्ध्नि मुक्ताः सुरकुसुमसमावृष्टयः पुष्टभृङ्गाः ॥ ५४ ॥ (ब)

हेमप्रभा । (भ) णवकञ्चनकाञ्चिदामालङ्किदकाञ्चिदेसे ! काञ्चिदेसेसरो एसो ता इमस्स वअणच्छरिअङ्के विस्सम्मउ संभमभअणवासिट्ठी दिट्ठी (७२)।

---

(७२) नवकाञ्चनकाञ्चिदामालङ्कृतकाञ्चिदेशे ! काञ्चिदेशेश्वर एष तदस्य वदनच्छरिणाङ्के विश्राम्यतु दर्शित सदसवाक्यहृष्टिर्दृष्टिः ।

---

कुमारः पतिः पुरतः अग्रतः जगत्त्रयस्य त्रिलोकभवनस्य आभरणैः अलङ्कारभूतैः यशोभिः चकास्ति शोभते । वृत्तमत्र वसन्ततिलकम् ।

(ब) वीरेति । ये वीराः खड्गाः तीक्ष्णा असिदण्डा एव प्रहरण-सुहृदः प्रहारमित्राणि येषां तथोक्ताः अभिमुखाया द्रुतयः आजिषु संग्रामेषु सम्मुखं पतन्तः सन्तः अनिमिषाणां देवानां यत् सुमनोदाम पुष्पमाल्यं तस्य दानोत्सवस्य पात्रं जाताः तैरेव अस्य काञ्चीपतेः प्रेङ्खद्भिः कुठारैः याः प्रहृतयः प्रहाराः ताभिः अमरीभूय देवत्वं प्राप्य भूयः शेषाणां निहतावशिष्टानां वीराणां मूर्ध्नि पुष्टा भृङ्गा यासु ताः सभृङ्गाः सुरकुसुमसमावृष्टयः मुक्ताः विक्षिप्ताः । स्रग्धरावृत्तम् ।

(भ) नवेति । नवैः काञ्चनैः निर्मितं यत् काञ्चिदाम रशना तेन अलङ्कृतः काञ्चिदेशः नितम्बदेशः यस्याः तत्सम्बुद्धौ । वदनच्छरिणाङ्के सुधापङ्के ।

सीता । जो (म) चन्द्रसेहरप्पसादीकिदकुलक्कमागदवुसहलञ्छणो (७२) ।

प्रतीहारो । स्वगतम् । (य) कथमप्रमाणीकृतेन्द्राणीशाप इवायम् । प्रकाशम् ।

चापारोपमपास्यैव स्थितः सीतास्वयंवरे
दृश्यते भूभुजां नेत्रैरेष रोषकषायितैः ॥ ५५ ॥ (र)

रावणः । सक्रोधम् । रेरे (ल) निर्मर्याद ! स्वयंवरसमयं विभिन्दन्नेष न भवसि । विभाव्य सलज्जम् । नन्वेष भवसि ।

प्रहस्तः । विहस्य ।

अस्य स्वयंवरविभेदसमुत्सुकस्य
दृष्ट्वा स्फुरत्पुलकपक्ष्मलमङ्गमङ्गम् ।

---

(७२) यश्चन्द्रशेखरप्रसादीकृतकुलक्रमागतवृषभलाञ्छनः ।

---

(म) चन्द्रेति । चन्द्रशेखरेण हरेण प्रसादीकृतः कुलक्रमागतः वृषभ एव लाञ्छनं चिह्नं यस्य तादृशः । यश्चन्द्रशेखरप्रसादलब्धम् प्रभाववन्तम् वृषभमेकं रक्षतीति भावः ।

(य) अप्रमाणीकृतेति । अप्रमाणीकृतः अगणितः इन्द्राण्याः शच्याः शापो येन तथाभूतः स्वयंवरक्षोभकारिणः शच्या विनाशस्त्वत्ते इति श्रुतिमगणयन्निवेति भावः ।

(र) चापेति । एष नृपतिः सीतास्वयंवरे चापारोपं कार्मुकारोपणं अपास्यैव विहायैव भूभुजां राज्ञां रोषकषायितैः क्रोधकलुषितैः स्वयंवरविघ्नकरणस्योद्योगादिति भावः नेत्रैः दृश्यते सर्वेषां क्रोधभाजनमेव इति भावः ।

(ल) निर्मर्याद ! स्थित्यनभिज्ञ ! स्वयंवरस्य समयं नियमं भनक्षि लोपयसि ।

(व) अस्येति । स्वयंवरस्य विभेदे भङ्गे समुत्सुकस्य अस्य राज्ञः

प्रत्युल्लसन्ति च रुषो विलयं च यान्ति
प्रेक्षाप्रपञ्चमनुसृत्य दशाननस्य ॥ ५६ ॥ (व)

प्रतीहारी । अन्यतोऽवलोक्य स्वगतम् । कथमयं (श) वीर-
शृङ्गारललितलम्पटो लाटेश्वरः । प्रकाशम् ।

दैवात् कुम्भयभुवा भुवनैकबन्धोः
संध्याविधौ कलयतश्चुलुकं जलस्य ।
यो जातवान् प्रतिमया स मुनिश्चुलुक्य-
स्तस्यान्वयैकतिलको नृप एष लाटः ॥ ५७ ॥ (ष)

किञ्च ।

हेलावलितकण्ठनालविलसच्छृङ्गाललतालङ्कृतं ।
मालां संदधतीभिरेकविजयी सोऽयं द्विषां धामसु ।
शृङ्गारप्रपञ्चस्पष्टकेतकदलस्पर्द्धावतीनां दृशां
वारस्त्रीभिरदभ्रविभ्रमवशाद्दाऽप्ति पात्रीकृतः ॥ ५८ ॥ (स)

---

स्फुरद्भिः पुलकैः रोमाञ्चैः पक्ष्मलं व्याप्तं अङ्गं अङ्गं प्रत्यङ्गं दश
दशाननस्य रावणस्य रुषः क्रोधाः प्रत्युल्लसन्ति आविर्भवन्ति, प्रेक्षाप्रपञ्चम्
सकाव्याभिनयं अनुसृत्य विविच्य विलयं विनाशं यान्ति गच्छन्ति च ।

(श) वीरेति । वीरशृङ्गारयोः रसयोः ललितः सुन्दरः लम्पटः
रसिकः उभयथा पटुरित्यर्थः ।

(ष) दैवादिति । कुम्भयभुवः पद्मजन्मनः भुवनैकबन्धोः दैवात्
अहष्ट इत्यर्थः सन्ध्याविधौ सन्ध्यावन्दनव्यापारे जलस्य चुलुकं गण्डूषं
कलयतः पिबतः आचमत इत्यर्थः प्रतिमया प्रतिबिम्बेन यः चुलुक्यः
चुलुकभवत्वात् तदाख्यः मुनिः जातवान् एष लाटो नृपः तस्य
चुलुक्यस्य अन्वयैकतिलकः कुलैकभूषणम् । वृत्तमत्र वसन्ततिलकम् ।

(स) हेलेति । सोऽयं एकविजयी लाटो नृपतिः द्विषां शत्रूणां
विजितानामिति भावः धामसु गृहेषु हेलया विलासेन वलिता

हेमप्रभा । अट्ठमीचन्दसुन्दरललाडे ! लाडिस्सरो एसो ता इमस्सिं सामलधवलपवालसच्छसुरचापरिंछोलिच्छाअं विच्छाअन्ता दिज्जन्तु सुन्दलकडक्खविक्खेवा ( ७४ ) ।

सीता । जो(ङ) पइदिणमज्जणमेत्तवावारे सत्तचित्तो(७५)

प्रतीहारी । स्वगतम् । स्वभावेन (च) मायावानयम् ।

प्रकाशम् ।

मार्जनाव्याजलग्नेन करेणोत्सरता पुनः ।
न गृहीतं न च त्यक्तमनेन हरकार्मुकम् ॥ ५८ ॥ (क)

---

( ७४ ) अष्टमीचन्द्रसुन्दरललाटे ! लाटेश्वर एष तदस्मिन् श्याम-धवलप्रवालस्वच्छसुरचापकान्तिच्छायामपि आदधन्तो दीयन्तां सुन्दर-कटाक्षविक्षेपाः ।

( ७५ ) यः प्रतिदिनमवलग्नमात्रव्यापारे सक्तचित्तः ।

---

र्पलिता कण्ठनाले विलसन्ती या मुक्तालता मौक्तिकावलिः तया अलङ्कृतां मालां संदधतीभिः वारस्त्रीभिः वाराङ्गनाभिः अदभ्रः निरतिशयः यः विभ्रमः अदभ्रं बहुलं बहु इत्यमरः । तद्वशात् भृङ्गाणां भ्रमराणाम् अग्रपक्षेण अग्रभागपक्षणेन कृष्टानां केतकदलानां या स्पर्द्धा तद्वतीनां दृशां नेत्राणाम् आदृष्टि आपरितोषं पालोकनः । बहुवर्णं शस्त्रनिस्त्रेषु अदृश्यानात् वाराङ्गना एनं सपरितोषमद्राक्षुरिति सन्दर्भार्थः । वृत्तमत्र शार्दूलविक्रीडितम् ।

( ङ ) प्रतिदिनेति । प्रतिदिनं मज्जनमात्रे स्नानकुरणमात्रे व्यापारे सक्तं रतं चित्तं यस्य तादृशः ।

( च ) मायावान् चातुरीपरायणः ।

(क) मार्जनेति । अनेन लाटेन मार्जना अङ्गमार्जनं सैव व्याजः छलं तत्र लग्नेन तत्परेण अत एव उत्सरता अङ्गमार्जनमेव कुर्वता

रावणः । सत्यं शृङ्गारलीलालम्पट एवायं लाटराजः ।
किमनेन (ख) वीरव्यपदेशेन ।

प्रतीहारी । अन्यतोऽवलोक्य ।

स्वगतम् । कथमयं कुशस्थलीनाथः । प्रकाशम् ।

विश्वामित्रमहामुनेर्यदजनि ब्राह्मण्यलाभात्पुरा
क्षात्रं गोत्रमयं तदादिनृपतिर्दिक्षु श्रुतः सुश्रुतः ।
प्रोक्तं येन नृणां महाकरुणया चित्रं चिकित्सामृतं
कीर्त्तिस्तम्भविभूषणाश्च ककुभो वाहिनीशैः कृताः ६० (ग)

किञ्च ।

वासो जाम्बवपल्लवानि जघने गुञ्जास्रजो भूषणं
हस्ते स्वस्तिकदानमङ्गलनिधिर्धातुद्रवो मण्डनम् ।
उत्तंसः शितिकण्ठपिच्छलतिका वेषोऽयमल्पैर्दिनै-
रस्यारातिवधूजनेन शबरीसंवासतः शिक्षितः ॥ ६१ ॥ (घ)

---

इत्यर्थः करोतु पुनः किन्तु हरकार्मुकं न गृहीतं न च तस्य यस्य चाभिलाषो न च तस्य इति भावः ।

(ख) वीरव्यपदेशेन वीरोऽयमिति कीर्त्तनेन ।

(ग) विश्वामित्रेति । ब्राह्मण्यलाभात् पुरा पूर्वं विश्वामित्रमहामुनेः यत् क्षात्रं गोत्रं कुलम् अजनि, अयं दिक्षु विश्रुतः सुश्रुतो नाम तस्य आदिनृपतिः प्रथमो नृपः, येन महाकरुणया अतिदयया नृणां चित्रं विचित्रं चिकित्सामृतं प्रोक्तं कथितम् । यस्य वाहिनीशैः सेनापतिभिः कीर्त्तिस्तम्भविभूषणाः कीर्त्तिस्तम्भशालिन्यः ककुभः दिशश्च कृताः । शार्दूलविक्रीडितं वृत्तम् ।

(घ) वास इति । अस्य सुश्रुतस्य अरातिवधूजनेन शबरीणां संवासतः वनचारित्वेन संसर्गादित्यर्थः अल्पैर्दिनैः जाम्बवानां जम्बूनां

हेमप्रभा । (ङ)करअलगेज्झमज्झदेसे ! मज्झदेसणरिन्दो ता इमं कोदूहलफुल्लाविअणअणभरिज्जमाणवअणमण्डला विलोएसु (७६) ।

सीता । जो मन्दरान्दोलिददुद्धसिन्धुसमुप्पण्णधण्णन्तरिपरमावदारस्स दिवोदासस्स पढमसिस्सो (७७) ।

प्रतीहारी ।

वामहस्तधृतेशानधनुरन्येन पाणिना ।
एष ज्यामटनीं नेतुं न शक्नोति न मुञ्चति ॥ ६२ ॥ (च)

---

(७६) करतलग्राह्यमध्यदेशे ! मध्यदेशनरेन्द्र एष तदिमं कौतूहलफुल्लितनयनभरितवदनमण्डला विलोकय ।

(७७) यो मन्दरान्दोलितदुग्धसिन्धुसमुत्पन्नधन्वन्तरिपरमावतारस्य दिवोदासस्य प्रथमशिष्यः ।

---

पल्लवानि वासः, जघने भूषणं गुञ्जास्रजः, हस्ते: स्वस्तिकस्य शितावर-शाकस्य दानम् । अश्मनिधिः, अश्मनः पर्वतप्रान्तस्य निधिः श्रेष्ठरत्नं धातूनां गैरिकादीनां द्रवः मण्डनं भूषणं, तथा शिति-कण्ठानां मयूराणां पिच्छलतिका बर्हीशस्य: उत्तंसः कर्णभूषणम्, अयम् इत्थं वेषः परिच्छदः ऽभिचितः । अनेन निर्जिताः शबराः वनमधिवसन्तीति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(ङ) करेति । करतलाभ्यां ग्राह्यः मध्यदेशः यस्याः तत् सम्बुद्धौ क्षीणमध्ये इत्यर्थः । कौतूहलेन कौतुकाग्रेण दिदृक्षयेति भावः फुल्लिताभ्यां विकसिताभ्यां नयनाभ्यां भरितं पूरितं वदनमण्डलं यस्याः ताहशी ।

(च) वामेति । एषः सुश्रुतः वामहस्तेन धृतं ऐशानधनुर्येन तथोक्तःअपि श्लाघ्याचार्यः । अन्येन दक्षिणेन पाणिना ज्यां मौर्वीम् अटनीं कोटिं नेतुं प्रापयितुं न शक्नोति न च मुञ्चति त्यजति ।

रावणः । विहस्य । हंहो (छ) धनुर्वेदविद्याकुश्रुत ! सुश्रुत ! विविधेषु व्याधिषु भिषज्यतु भवान् न पुनः चण्डपरशवे धनुषि ।

प्रतीहारी । समन्तादवलोक्य स्वगतम् । कथमथैते राजानः (ज) सर्वेऽप्यहंपूर्विकया पार्वतीपतेर्भगवतो धनुरारोपयितुमुपस्थिताः । प्रकाशम् ।

पौण्ड्रश्चण्डासिरश्मिर्मगधविभुरसावेष काम्बोजराजः
सौराष्ट्रोऽयं नरेन्द्रः शकनृपतिरितोऽप्ययं नेपालपालः ।
अन्ध्राणामीश्वरोऽग्रे सदसि समुदिताः क्ष्माभृतः सर्व एते
सीतायामिन्दुमौलेर्धनुषि च सरसाः प्रेमकौतूहलाभ्याम् ॥ ६२ (झ)

हेमप्रभा । पेरन्तघोलन्तहारलदालङ्किदथणत्थलि ! थणत्थलिदपभण्डगभीरभीसणे सअलमहीमण्डलमण्डणेक्कपर-

---

(७८) प्रान्तघूर्णद्धारलतालङ्कृतस्तनस्थलि ! स्तनस्तनितप्रचण्ड-

---

(छ) धनुरिति । धनुर्वेदविद्यासु कुश्रुत अनभिज्ञ इत्यर्थः । भिषज्यतु भिषगिवाचरतु, चण्डपरशवे शैवे ।

(ज) अहंपूर्विकया अहमहमिकया ।

(झ) पौण्ड्र इति । चण्डाः प्रचण्डा असीनां रश्मयः यस्य तादृशः सर्वेषां विशेषणतयान्वेति । पौण्ड्रः पौण्ड्रदेशाधिपतिः अयमिति हस्तेन निर्देशः । असौ मगधविभुः, एषः काम्बोजराजः, अयं सौराष्ट्रः सुराष्ट्रदेशीयः नरेन्द्रः, इतोऽपि शकनरपतिः, अत्र नेपालराजः । अयञ्च अन्ध्राणामीश्वरः नृपतिः सर्व एव एते क्ष्माभृतः राजानः सीतायाम् इन्दुमौलेः हरस्य धनुषि च प्रेमकौतूहलाभ्यां सरसाः साभिलाषाः सन्तः अग्रे सदसि सभायां समुदिताः समुपस्थिताः । स्रग्धरावृत्तम् ।

इमे महामहीवइणो (ञ) सम्बरणचक्कुरचच्चरीअचक्खुसंपुडट्ठि असिहासंचिअचावलपुण्डरीअगब्भदलद्दोणीणं सरिच्छेण तिरिच्छेण अ सवणावदंसत्तणं दंसअन्तेण अक्खिविक्खो-हेण जहिच्छं पेक्ख (७८)।

सीता। कीस उण एदे णरिन्दा (ट) सअलखत्तिअमाण-खण्डणखण्डपरसुचावारोवणमुहाडम्बरेण विडम्बअन्ति अत्ताणम् (७९)।

प्रतीहारी। (ठ) एकतरे पृथिवीपालाः।

---

गम्भीरभीषणान् सकलमहीमण्डलमण्डनैकपराक्रमान् महामहीपतीन् सम्बरणचतुरचञ्चरीकचक्षुसम्पुटस्थितशिखासञ्चितचापलपुण्डरीकगर्भदल-द्रोणीनां सदृशेन तिरश्चा च श्रवणावतंसत्वं दर्शयताऽक्षिविक्षोभेण यथेच्छं प्रेक्षस्व।

(७९) कथं पुनरेते नरेन्द्राः सकलक्षत्रियमानखण्डनखण्डपर-शुचापारोपण मुखाडम्बरेण विडम्बयन्त्यात्मानम्।

---

(ञ) सम्बरणेति। सम्बरणचतुराणां सम्बरणशीलानां चञ्चरी-काणां भ्रमराणां चक्षुःसम्पुटेषु स्थिताः याः शिखाः तद्वत् सञ्चितं चापलं याभिः तादृश्यः याः पुण्डरीकाणां गर्भदलद्रोण्यः अभ्य-न्तरपत्राकाराः द्रोण्यः तासां सदृशेन सदृशेन तिरश्चा कुटिलेन श्रवणावतंसत्वं कर्णभूषणतां दर्शयता कर्णभूषणायमानेनेत्यर्थः अक्षि-विक्षोभेण नेत्रचापलेन अपाङ्गप्रेक्षणेनेत्यर्थः।

(ट) सकलेति। सकलानां क्षत्रियाणां मानखण्डनं सम्मान-भङ्गकरं यत् खण्डपरशोर्हरस्य चापं धनुः तस्य आरोपणं मुखे प्रारम्भे यस्य तस्य आडम्बरेण भङ्गोद्योगेन विडम्बयन्ति विफली कुर्वन्ति।

(ठ) एकतरे कतिपयाः।

एकाग्रया धिया ध्येयं न करस्पर्शमर्हति।
इति भक्त्या नमन्त्येते केवलं हरकार्मुकम्॥ ६४॥ (ड)

अन्यतरे तु राजानः।

आरोपणाय कलया कार्मुके कलितेऽप्यमी।
तद्भारभुग्नसर्वाङ्गा जानुभिर्जगतीं गताः॥ ६५॥ (ढ)

रावणः। विहस्य। परं नामैभिरारोपितमौमापतं धनुरात्मापि नारोपितः प्रवीरजनसंख्यासु।

प्रतीहारी। स्वगतम्। कथमेते निखिलक्षत्रियाः क्षत्रियजनोचितेऽपि चापारोपणकर्मणि वितथसामर्थ्या वर्त्तन्ते। तदेतेषु (ण) परमनाकलितसत्त्वसारो विकर्त्तनकुलकुमार आस्ते। यद्वा किमनेनापि।

यस्य वज्रमणेर्भेदे भिद्यन्ते लोहसूचयः।
करोतु तत्र किं नाम नारीनखविलेखनम्॥ ६६॥ (त)

---

(ड) एकेति। एते पृथिवीपालाः एकाग्रया धिया ध्येयं चिन्तनीयं हरकार्मुकं करस्पर्शं न अर्हति प्राप्नोति करस्पर्शयोग्यं न भवति दैवत्वादिति भावः इति हेतोः भक्त्या केवलं नमन्ति।

(ढ) आरोपणायेति। अमी राजानः आरोपणाय ज्यासङ्गमनाय कार्मुके कलया अंशतः कलितेऽपि तोलितेऽपि तस्य भारेण भुग्नानि सर्वाणि अङ्गानि येषां तथोक्ताः सन्तः जानुभिः जगतीं गताः।

(ण) परं केवलम् अनाकलितः अप्रकटितः सत्त्वस्य सारः यस्य तथाभूतः विकर्त्तनस्य सूर्य्यस्य कुलकुमारः रामः।

(त) यस्येति। यस्य वज्रमणेः हीरकस्य भेदे विदारणे लोहसूचयः लौहशलाका भिद्यन्ते, तत्र नार्य्याः नखविलेखनं किं

विचिन्त्य। भवतु तथापि संकीर्त्तयाम्येनम्। (च) अना-कलितसारा हि वीरप्रकाण्डप्रसूतिः।

रावणः। (द) अनारोपितमसम्भावनया लङ्केश्वरेण, अचिरैरप्यसामर्थ्येन मन्ये वृषध्वजायुधं दूष्यति। धनुरभिमुखं रेरे पुराणवेणुदलदुर्द्रोणीनिर्माण!

मुक्तं मयाऽसि हरकार्मुक! यत्तदानीं
मा तेन भूद् दृढ़िमदर्पपरिग्रहस्ते।
त्वद्भङ्गमार्गपटुभिः स पुनः प्रकोष्ठै-
र्नन्वेष तिष्ठति हठैकरुचिर्दशास्यः॥ ६७॥ (ध)

---

नाम करोतु एते महावीरा राजानः यत्र विफलप्रयत्ना अभूवन् तत्रायं बालकः किं करिष्यतीति भावः। नार्य्या इति अधिकमार्दव-द्योतनार्थम्।

(च) हि यतः अनाकलितः अप्रकटितः सारो यस्याः तादृशी, वीर-प्रकाण्डस्य दशरथस्य प्रसूतिः सन्तानः। दाशरथेः सारस्य अनाकलित-त्वात् अयं वर्णनीय इति भावः।

(द) अनारोपित मिति। लङ्केश्वरेण रावणेन असम्भावनया हरा-वमानेन हरावमानत्वं माभूदिति बुद्ध्या इत्यर्थः अथवा असम्भव-बुद्ध्या। मन्ये तर्कयामि वृषध्वजस्य आयुधं धनुः दूष्यसि स्पर्द्धते न कोऽपि मत्तोऽन्यत्र इति अहङ्कारेण माद्यतीति भावः। पुराणस्य वेणोः वंशस्य दलन्त्या द्रोण्या निर्माणं यस्य तादृशः तत्सम्बुद्धौ।

(ध) मुक्तमिति। हे हरकार्मुक! तदानीं यत् मया मुक्तं परि-त्यक्तम् असि, तेन मन्मोचनेन ते तव दृढ़िम्ना दृढ़त्वेन यः दर्पः अहङ्कारः तस्य परिग्रहः ग्रहणं माभूत् मा दृप्य इत्यर्थः। स एव दशास्यः रावणः तव भङ्गे यः मार्गः उपायः तत्र पटुभिः समर्थैः प्रकोष्ठैः उपलक्षितोऽपीति शेषः। हठे एका रुचिः यस्य तादृशः

इत्युत्थातुमिच्छति ।

प्रहस्तः । देव ! नेयं जानकी नचेदमैन्दुशेखरं धनुः ।

रावणः । तत्किमिदम् ।

प्रहस्तः । (न) प्रेक्षणकमिदम् ।

प्रतीहारी ।

यद्बिम्बमम्बरमणिर्यदपां प्रसूति-

र्नक्तं निषिञ्चति यदग्निशिखासु भासः ।

ज्योत्स्ना निशासु हिमधाम्नि च यन्मयूखाः

पूषा पुराणपुरुषः स नमोऽस्तु तस्मै ॥ ९८ ॥ (प)

तस्मादजायत मनुर्नरराजबीजं

यस्यान्वये स सगरः स भगीरथश्च ।

एकेन येन जलधिः परिखानितोऽय-

मन्येन सिद्धसरिता परिपूरितश्च ॥ ९९ ॥ (फ)

---

यथेच्छचारी सन् पुनः तिष्ठति ननु तिष्ठत्येव, यदि मम भङ्क्तुं इच्छा अभविष्यत् तदा अवश्यमेव त्वां भग्नमकरिष्यं मम तु तदानीम् इच्छाविरहात् त्वं दृढ इति भावः । वृत्तमत्र वसन्ततिलकम् ।

(न) प्रेक्षणकं दृश्यकाव्यं नाटकमिदमित्यर्थः ।

(प) यदिति । यस्य बिम्बं मण्डलम् अम्बरस्य आकाशस्य मणिः रत्नं यत् बिम्बम् अपां जलानां प्रसूतिः उत्पत्तिस्थानम् आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति वचनात् । यत् बिम्बं नक्तं रात्रौ अग्निशिखासु भासः प्रभाः निषिञ्चति अर्पयति । यस्य मयूखाः निशासु हिमधाम्नि शीतरश्मौ चन्द्रमसि इत्यर्थः ज्योत्स्नाः चन्द्रिकाः । स पुराणपुरुषः पूषा सूर्यः तस्मै नमोऽस्तु । वृत्तमत्र वसन्ततिलकम् ।

(फ) तस्मादिति । तस्मात् सूर्यात् नरराजानां नृपतीनां बीजं

सावित्रान् मनुतो महीयसि कुले ये जज्ञिरे क्षत्रिया-
स्तेषामेष महारथो दशरथः क्ष्माचक्रमाक्रामति ।
पीनांसः पृथुलोचनः प्रमदयन् कृत्स्नामयोध्यां गुणै-
र्विश्वामित्रवितीर्णचापनिगमस्तस्यैष रामः सुतः ॥७०॥ (व)

रामः । वत्स ! लक्ष्मण ! कथमेष मां निर्दिशति । तदुत्थीयते ।

लक्ष्मणः । एतदुत्थीयते । (भ) मञ्चावरोहणनाटितकेन परिक्रामतः ।

प्रतीहारी । साधु रामभद्र ! साधु सत्यं मार्त्तण्डकुलैकमण्डनमसि ।

रावणः । साधु रे क्षत्रियडिम्भ ! साधु तवैव परम-

---

निदानं मनुः अजायत । यस्य मनोः अन्वये वंशे सः सगरः स च भगीरथश्च उदपादीति शेषः । येन एकेन सगरेण अयं जलधिः परिखानितः अतएवास्य सागर इति संज्ञेति भावः । अन्येन येन भगीरथेन अयं जलधिः स्वर्गसरिता देवनद्या गङ्गया परिपूरितश्च । वृत्तमत्र वसन्ततिलकम् ।

(व) सावित्रानिति । सावित्रात् सूर्यतनयात् मनुतः महीयसि अतिमहति कुले ये क्षत्रियाः जज्ञिरे जाताः तेषां मध्ये एष महारथो दशरथः क्ष्माचक्रं भूमण्डलम् आक्रामति शास्ति । पीनांसः स्थूलस्कन्धः पृथुलोचनः विशालनेत्रः गुणैः शौर्यदाक्षिण्यादिभिः कृत्स्नां समग्राम् अयोध्यां प्रमदयन् रञ्जयन् तथा विश्वामित्रेण वितीर्णः दत्तः चापनिगमः धनुर्वेदः यस्मै तथोक्तः एष रामः तस्य दशरथस्य सुनः तनयः । शार्दूलविक्रीडितं वृत्तम् ।

(भ) मञ्चावरोहणनाटितकेन मञ्चात् साध्युषितात् पल्यङ्कात् यत् अवरोहणं तस्य नाटितकेन अभिनयेन ।

स्वविहितोऽभिमानयन्त्रिरनवधिरध्यवसायश्च। तन्मानुषीषु भवन्माता पुत्रवती।

विश्वामित्रजनकौ। प्रतिदिलीपमतिदशरथमङ्गीकृतं कर्म रामभद्रेण।

हेमप्रभा। कालेण बालत्तणं रामचन्दस्स चरिदेण उण सअलणरेन्दमण्डलीजेट्ठो (८०)।

शतानन्दः। (म) सूर्यशिष्यान्तेवासिन्! प्रतिसाहसिको रामभद्रः।

यतः।

कोदण्डमीशकरपीडनदृष्टसार-
मारब्धनिर्वहणनिर्वृतपूर्वपुंसि।
आरोपणाय परिसर्पति रामभद्रे
गोत्रं तुलां समधिरूढमहस्करस्य॥ ७१॥ (य)

---

(८०) कालेन बालत्वं रामचन्द्रस्य चरितेन पुनः सकलनरेन्द्रमण्डलीश्रेष्ठः।

---

(म) सूर्यशिष्यस्य याज्ञवल्क्यस्य अन्तेवासी शिष्यः जनकः तत्सम्बुद्धौ।

(य) कोदण्डेति। आरब्धस्य कर्मणः निर्वहणेन परिसमाप्त्या निर्वृताः सन्तुष्टाः पूर्वे पुमांसो यस्य तस्मिन् आरब्धकर्मपरिसमाप्त्या निर्वृतसर्वपूर्वपुरुषे इत्यर्थः। सूर्यवंश्यः कोऽपि पुरुषः प्रारब्धमसमाप्य नातिष्ठदिति भावः। रामभद्रे ईशस्य शम्भोः करेण यत् पीडनं तेन दृष्टः सारो यस्य तादृशं कोदण्डं कार्मुकम् आरोपणाय परिसर्पति अभिगच्छति सति अहस्करस्य सूर्यस्य गोत्रं कुलं तुलाम् परीक्षा विषये अरूढपतां संशयकोटित्वं वा समधिरूढं गतम्। वृत्तमत्र वसन्ततिलकम्।

प्रतीहारी ।

प्रणिपत्य कुमारोऽयं मृडान्यै च मृडाय च ।

उद्युक्तो धनुरादातुं न विघ्नः किं करिष्यति ॥ ॥ ७२ ॥ (र)

हेमप्रभा । जं किदं भअवदा दसाअणीवल्लहेण । किंच (ल) केसरिकिसोरसदिसपओट्ठाणं पुरिसाणं भुअदण्डमण्डणिज्जे कज्जे किं विअ दुक्करं णाम (८१) ।

रामः । प्रदक्षिणयन् स्वगतम् ।

वैदेहीवरबीजाय सुरसारमयाय च ।

तुभ्यं चण्डीशचापाय त्रिपुरप्लोषिणे नमः ॥ ७३ ॥ (व)

शरासनमादाय प्रकाशम् ।

महोर्दण्डहयाक्रान्त्या वत्स लक्ष्मण ! लक्षय ।

स्फुटिष्यति तु कोदण्डं त्रुटिष्यति न वा गुणः ।७४। (श)

---

(८१) यत् कृतं भगवता दशाननवल्लभेन । किञ्च केसरिकिशोरसदृशप्रकोष्ठानां पुरुषाणां भुजदण्डमण्डनीये कार्ये किमिव दुष्करं नाम।

---

(र) प्रणिपत्येति । अयं कुमारो रामः मृडान्यै पार्वत्यै मृडाय हराय च प्रणिपत्य धनुः कार्मुकम् आदातुम् उद्युक्तः न विघ्नः न आगमः किं करिष्यति ।

(ल) केसरीति केसरी सिंहः तस्य किशोरः शावकः तत्सदृशप्रकोष्ठानाम् ।

(व) वैदेहीति । वैदेह्या वरस्य बीजं निदानं तस्मै सुरसारमयाय देवसारस्वरूपाय त्रिपुरप्लोषिणे पुरत्रयदाहिने चण्डीशस्य चापाय तुभ्यं नमः ।

(श) महोर्दण्डेति । हे वत्स लक्ष्मण । मम दोर्दण्डयस्य

रावणः । विहस्य । इदं ( घ ) नटगर्जितं नाम ।

लक्ष्मणः । ( ङ ) सोऽयमङ्कुरकराकर्षणकर्मणि कार्मुके यमसम्भावना चार्य्यस्य ।

रामः । तर्हीदमारोप्यते ।

रावणः । इयमपि सा नटविभीषिका ।

प्रतीहारी । समन्तादवलोक्य ।

यथा यथा धूर्जटिचापकोटिं
रामानुबन्धादधिरोहति ज्या ।
तथातथा सर्वनरेश्वराणां
मुखानि मूलात् मलिनीभवन्ति ॥ ७५ ॥ ( छ )

लक्ष्मणः । न केवलं (च) वैलक्ष्यवतां महीपालानामि-
(?)मेन मङ्गलमालिन्येन सम्पन्नम् । अपितु ।

---

....करकुमलस्य व्याक्रान्त्या आक्रमणेन कोदण्डं कार्मुकं तु किन्तु त्रुटिष्यति भङ्क्ष्यति । न वा गुणः मौर्वी त्रुटिष्यति छेत्स्यते । मौर्वीत्रोटनं विना धनुर्भङ्गो भवितेति अवलोकयेति तात्पर्य्यम् ।

( घ ) नटस्य गर्जितं गर्जनम् असारमास्फालनध्वनिः ।

( ङ ) सोढेति सोढुं अङ्कुरस्य करेण आकर्षणकर्म तेन तादृशे ।

( छ ) यथेति । रामस्य अनुबन्धात् आरोपणात् ज्या मौर्वी यथायथा धूर्जटेः चापस्य धनुषः कोटिम् अटनिम् अधिरोहति तथा तथा सर्वेषां नरेश्वराणां मुखानि मूलात् मूलमारभ्य मलिनीभवन्ति । उपजातिवृत्तम् ।

( च ) वैलक्ष्यवतां लज्जितानाम् । सम्पन्नं पूरितम् ।

आर्ये रुद्रशरासनं तुलयति स्मित्वा स्थितं पार्थिवैः
शिञ्जासज्जनतत्परे विहसितं दत्त्वा मिथस्तालिकाः ।
आरोप्य प्रचलाङ्गुलीकिसलये म्लानं गुणास्फालन-
स्फाराकर्षणरुग्णपर्वणि पुनः सिंहासने मूर्छितम् ७६ (क)

प्रतीहारी सहर्षाऽवलोक्य । न केवलमाकृष्टं भग्नं च
किञ्चिदुच्चैः ।

संसर्गादपि मन्थरस्य मरुतः शिञ्जानशिञ्जालतं
सार्धं क्षत्रवधव्रतैकगुरुणा क्रौञ्चाचलद्वेषिणा ।
दोर्दण्डाञ्चलमण्डलीकृतमिदं रामेण राज्ञां पुरः
प्रागप्राप्तपराभवं भवधनुष्टङ्कारवत् त्रुट्यति ॥ ७७ ॥ ( ख )

---

( क ) आर्ये इति । आर्ये रामे रुद्रस्य शरासनं धनुः तुलयति धरति सति पार्थिवैः राजभिः स्मित्वा स्थितम् ईषत् हसितमित्यर्थः । ततः शिञ्जायाः ज्यायाः सज्जने अवरोपणे तत्परे सति मिथः तालिकाः दत्त्वा विहसितम् उच्चैः हासः कृत इत्यर्थः । ततः आरोप्य ज्यया सङ्गमय्य प्रचलानि अङ्गुलि-किसलयानि यस्य तादृशे आर्ये स्थिते सतीति शेषः म्लानं मालिन्यं गतम् । ततः गुणस्य शिञ्जिन्याः आस्फालनेन आरोपणेन स्फारम् उत्कटं यत् आकर्षणं तेन रुग्णानि भग्नानि पर्वाणि धनुर्ग्रन्थयः येन तादृशे सति सिंहासने स्वे स्वे मञ्चे मूर्च्छितम् । शार्दूलविक्रीडितं वृत्तम् ।

( ख ) संसर्गादिति । मन्थरस्य मन्दस्य मरुतः वायोः संसर्गादपि शिञ्जाना स्वनन्ती शिञ्जा मौर्वी एव लता यस्य तादृशं प्राक् पूर्वं कदाचिदपीत्यर्थः अप्राप्तः अलब्धः पराभवो येन तथाभूतम् इदं भवधनुः हरकार्मुकं रामेण क्षत्रवधव्रतैक गुरुणा क्षत्रियवधव्रतिप्रा-प्रधानेन क्रौञ्चाचलद्वेषिणा क्रौञ्चपर्वतविदारकेण परशुरामेण सार्धं

रावणः। सेयं कवीनां (ग) वचनकामधेनुः। यदसद्भूत-मपि सूते।

विश्वामित्रः। सखे! जनक! फलितमस्मद्धनुर्वेदवि-श्राम्भवाशितया रामभद्रस्य। तथाहि।

गुर्वीं मौर्वीं विधुन्वन् विदधदतिभियः सप्तपातालपालान्
वृन्दैर्वृन्दारकाणां प्रसरति परितस्तूर्णमाकर्ण्यमानः।
टङ्कारः खण्डिताशाकरिकरटतटीदानदुर्वर्ण एष
च्युत्पर्वोऽनुसन्धेर्वृषधरधनुषो रामदोर्यन्त्रितस्य॥ ७८ ॥(घ)

शतानन्दः। आश्चर्यमाश्चर्यम्। अतिभवानीवल्लभं राम-भद्रचरितम्। तथाहि।

---

राज्ञां पार्थिवानां पुरः परशुरामस्य मह्योपतोनाश्च अपतः दृत्वर्षः। दोर्दण्डाकुबेन वाहुदण्डाकर्षणेन मण्डलीकृतं वक्रीकृतं यत् टङ्कारवत् सटङ्कारं यथा तथा त्रुट्यति भङ्गं प्राप्नोति। शार्दूलविक्रीडितं छन्दः।

(ग) वचनकामधेनुः वचनमेव वाणी एव कामधेनुः यथेच्छवादि-त्वादिति भावः। यत् यस्मात् असद्भूतमपि मिथ्यारूपमपि सूते सत्यवत् वर्णयतीति भावः।

(घ) गुर्वीमिति। रामस्य दोर्भ्यां यन्त्रितस्य आकृष्टस्य वृषधर-धनुषः हरकार्मुकस्य अनुसन्धेः प्रतिसन्धि त्रुट्यत्पर्वः भग्नपर्विः एषः टाङ्कारः टङ्कारस्वनः स्वार्थे ष्यञ्प्रत्ययः। गुर्वीं महतीं मौर्वीं ज्यां विभिन्दन् छिन्दन् सप्तपातालपालान् सप्तपातालरक्षकान् अति-भियः भयार्त्तान् विदधत् कुर्वन्, वृन्दारकाणां देवानां वृन्दैः समूहैः परितः समन्तात् तूर्णं सहसा आकर्ण्यमानः श्रूय-माणः तथा खण्डितानां भग्नेन त्रुटितानाम् आशाकरिणां दिङ्नागानां करटतटीदानेन गजगण्डतटमदजलक्षरणेन

ओङ्कारो विश्वरक्षाक्रमनिगमविधेरन्तकस्याट्टहासः
संहर्त्ता शात्रवाणां पटुपटहरवः कीर्त्तिनिर्वासनस्य।
दोर्यन्त्रासञ्जिशिञ्जानमदटनिरटत्सर्वपर्वप्रसूत-
ष्टीत्कारः शम्भुचापे जयति विजयिनो राघवस्यादिवन्द्यो ७९ (ङ)

जनकः। नमो भगवते नीललोहिताय।

विश्वक्षमातलनरेश्वरदुष्करेऽस्मिन्
सद्यः कृते गुरुणि कर्मणि राघवेण।
चण्डीशचापमथनाद् व्यथते च चित्तं
जामातृलाभरभसान्मम मोदते च ॥ ८० ॥ (च)

---

दुर्धर्षः वर्षयितुमशक्य इत्यर्थः सन् प्रसरति समन्तात् व्याप्नोति।
स्रग्धरावृत्तम्।

(ङ) ओङ्कार इति। विश्वस्य जगतः रक्षायाः क्रमः नियम एव निगमविधिः वेदविधिः तस्य ओङ्कारः प्रणवः, ब्राह्मणः प्रणवं कुर्य्यादादावन्ते च सर्वत इति स्मरणात्। वेदविधेरोङ्कार इव रामस्य जगतीरक्षायाः प्रथमोद्यमस्वरूप इत्यर्थः अन्तकस्य यमस्य, अट्टहासः उच्चहासरव इव भासमान इत्यर्थः शात्रवाणां संहर्त्ता तथा कीर्त्तिनिर्वासनस्य यशोदूरीकरणस्य पटुर्दक्षात् पटहरवः वाद्यविशेषध्वनिः विजयिनो राघवस्य रामस्य दोर्यन्त्रे आसञ्जिनी या शिञ्जा मौर्वी तया नमन्ती या अटनी कोटिः तस्याः रटन् निर्गच्छन् सर्वेभ्यः पर्वभ्यः ग्रन्थिभ्यः प्रसूतः उद्भूतः शम्भुचापे हरधनुषि आदौ वन्द्यते इति तथोक्तः टीत्कारः शब्दविशेषः जयति। स्रग्धरावृत्तम्।

(च) विश्वेति। विश्वैः सर्वैः क्षमातलनरेश्वरैः भूपालैः दुष्करे कर्त्तुमशक्ये अस्मिन् धनुर्भङ्गरूपे गुरुणि अतिमहति कर्मणि राघवेण रामेण सद्यः झटिति कृते सति मम चित्तं चण्डीशस्य चापमथनात् धनुर्भङ्गात् व्यथते च, जामातृलाभेन यो रभसः हर्षः तस्मात् मोदते हृष्यति च। वृत्तमत्र वसन्ततिलकम्।

सीता। सहि! हेमप्पहे! भग्गं भग्गस्स भअवदो चावं (८२)।

हेमप्पभा। संपण्णं च पिअसहीए पाणिग्गहणं (८३)।

राघवः। उच्चैर्विहस्य। प्रज्ञावतां हि चक्षुरक्षुद्रमति-विषयासु (छ) धिषणासु प्रतिवसति। यतः।

रामेण मुग्धमनसा वृषलाञ्छनस्य
यज्जर्जरं धनुरभाजि मृणालभञ्जम्।
तेनामुना त्रिजगदर्पितकीर्त्तिभारो
रक्षःपतिर्ननु मनाङ् न विडम्बितोऽभूत्। ८१। (ज)

रामः। सकण्ठरोधम्।

वाचा कार्मुकमस्य कौशिकपतेरारोपणायार्पितं
मद्दोर्दण्डहठार्पणेन तदिदं भग्नं जगत्यक्लमति।

---

(८३) सम्पन्नं च प्रियसख्याः पाणिग्रहणम्।

(८२) सखि हेमप्रभे! भग्नं भर्गस्य भगवतश्चापम्।

---

(छ) धिषणासु बुद्धिषु। बुद्धिर्मनीषा धिषणा इत्यमरः।

(ज) रामेणेति। मुग्धमनसा मूढमतिना रामेण वृषलाञ्छनस्य हरस्य जर्जरम् अतिजीर्णं धनुः मृणालभञ्जं मृणालमिवेत्यर्थ. अनायासेनेति भावः यत् अभाजि, तेन अमुना रामकर्त्तृकधनुर्भङ्गेनेति भावः। त्रिजगता अर्पितः दत्तः कीर्त्तिभारः यस्मै तादृशः रक्षसां पतिः रावणः मनाक् अल्पमपि न ननु नैव विडम्बितः तिरस्कृतः अभूत्। अनायाससाध्यत्वादस्य कर्मणः येन केनापि कर्त्तुं शक्यत्वादिति भावः। वृत्तमत्र वसन्ततिलकम्।

(झ) वाचेति। अस्य कौशिकपतेः विश्वामित्रस्य वाचा तदिदं

नो जाने जनकस्तदत्रभगवान् व्रीडावशादुत्तरं
त्रिघ्ने नतकन्धरो भगवते रुद्राय किं दास्यति ? ॥८२॥(झ)

लक्ष्मणः । अहो (ञ) महदन्तरं पुरुषकाराणाम् ।

भग्नं निरीक्ष्य हरकार्मुकमित्यथैते
रोमाञ्चकञ्चुकमिदं वपुरुद्वहामः ।
आर्यस्तु कण्ठधृतवाणि विलक्षभावा-
दाशानिषण्णनयनं वदनं बिभर्त्ति ॥ ८३ ॥ (ट)

विश्वामित्रः । किमुच्यते दिलीपकुलालङ्करणं दशरथोऽस्य (ठ) जनयिता ।

शतानन्दः । महाराज ! सीरध्वज ! यथोचितमत्र प्रस्तूयतां समर्प्यतां वैदेही रामभद्राय ।

---

कार्मुकम् आरोपणाय अर्पितं धृतं, मम दोर्दण्डाभ्याम् हठाकृष्टेन सहसाकर्षणेन कृता न्यक्कृतिः अधिक्षेपो यस्मिन् तत् यथा तथा भग्नस्य । तत् तस्मात् अत्रभगवान् जनकः व्रीडावशात् लज्जया त्रिघ्ने त्रिपुरहन्त्रे भगवते रुद्राय नतकन्धरः विनतग्रीवः सन् किमुत्तरं दास्यति । शार्दूलविक्रीडितं वृत्तम् ।

(ञ) महत् अन्तरं प्रभेदः ।

(ट) भग्नमिति । इति इत्थं हरकार्मुकं भग्नं निरीक्ष्य दृष्ट्वा अथ अनन्तरं एते वयं रोमाञ्चकञ्चुकं रोमाञ्चितं इदं वपुः शरीरम् उद्वहामः । आर्यस्तु विलक्षभावात् लज्जावशात् कण्ठे धृता स्खलिता वाणी वाक् यस्मिन् तत् यथा तथा आशासु दिक्षु निषण्णे नयने यस्य तादृशं वदनं बिभर्त्ति धारयति । महति कार्ये साधिते महतां लज्जातिरेको भवति क्षुद्राणान्तु महदास्फालनमिति भावः ।

(ठ) जनयिता पिता ।

(ड) भग्नेति । भग्नं [illegible] कोदण्डं येन तयोः

जनकः । मञ्चावरोहणनाटितकेन परिक्रम्य ।

भग्नचण्डीशकोदण्ड ! निजदोर्दण्डनिर्जिताम् ।
गृहाण पाणौ वैदेहीं पद्मा पद्मे निषीदतु ॥ ८४ ॥ (छ)

इति पाणौ पाणिमर्पयति ।

रावणः । सक्रोधम् । आः (ठ) कथमयमलीकदुर्विदग्धः क्षत्रियबटुकीटो ममापि लङ्केश्वरस्य पुरतः सीतायाः पाणिं पाणिना पीड़यति । तदेष न भवति । इति संरभते ।

प्रहस्तः । विहस्य स्वगतम् ।

दृष्ट्वैतां रभसादलीकजनकप्रत्तां मृषा मैथिलीं
हस्ताग्रे नटराघवेण विधृतां रागेण रङ्गाङ्गणे ।
उत्ताम्यन्ति रुषा कषायितदृशो देवस्य लङ्कापते-
र्दोर्दण्डा विधृतायुधाश्च वदनान्याक्लिष्टदंष्ट्राणि च ॥ ८५ ॥ (च

---

तत्सम्मुखो । निजेन दोर्दण्डेन निर्जितां वैदेहीं पाणौ गृहाण, पद्मा लक्ष्मीः पद्मे कमले निषीदतु निषण्णा भवतु ।

(ठ) अलीकदुर्विदग्धः वृथापण्डितः । क्षत्रियबटुषु बालकुमारेषु कीटः । संरभते क्रुध्यति ।

(च) दृष्ट्वेति । रभसात् हर्षात् अलीकजनकेन नटरूपेण मिथ्याजनकेन प्रत्तां प्रदत्ताम् एतां मृषा मैथिलीं नटीरूपां नटराघवेण रामनेपथ्यभृता नटेन रङ्गाङ्गणे रङ्गभूमौ रागेण अनुरागेण हस्ताग्रे विधृतां दृष्ट्वा रुषा कषायिताः कलुषिताः दृशो यस्य तादृशस्य देवस्य महाराजस्य लङ्कापतेः रावणस्य दोर्दण्डाः भुजयष्टयः विधृतानि आयुधानि यैः तथोक्ताः तथा वदनानि आक्लिष्टा अधरदंशाय प्रेरिता दंष्ट्रा यैः तादृशानि सन्ति उत्ताम्यन्ति विस्फुरन्ति । शार्दूलविक्रीडितम् वृत्तम् ।

प्रकाशम् । राक्षसपते ! (त) पर्य्यवसितप्रायः प्रेक्षाविधिः । तद्भावयतु चतुराभिनयां बुद्धिं रसवृद्धिं च नर्त्तकानां देवः ।

राघवः । [illegible] । आत्मगतम् । कथं प्रेक्षणकमेतत् । (थ) मुधा संरम्भमस्माभिः । प्रकाशम् । सखे ! प्रहस्त ! अपि स्मरसि दशकन्धरस्य प्रतिज्ञाम् ।

प्रहस्तः । देव ! स्मरामि कुर्वन् मौर्वीमित्यादि पठति ।

राघवः । तदिदमनुष्ठास्यते ।

द्वितीयनेपथ्ये । वैतालिकः । जय जय महाराज ! सीरध्वज ! सुखाय सायन्तनी सन्ध्या तत्रभवतो भवतु देवस्य जामात्रा रामभद्रेण सह । सम्प्रति हि ।

सङ्कोचव्रतमादिशन् जलरुहां देवस्त्रिवेदीतनुः
सोऽयं विद्रुमकन्दसुन्दरवपुर्यात्यस्तमस्तातपः ।
माञ्जिष्ठप्रसरच्छटैकसुहृदां यद्दीधितीनां पुरः
प्रेङ्खाति सनालनीलनलिनप्रस्ताररम्यं तमः ॥ ८६ ॥ (द)

---

(त) पर्य्यवसितप्रायः प्रायेण परिसमाप्तिं गतः । प्रेक्षाविधिः नाट्यदर्शनव्यापारः ।

(थ) मुधा निरर्थकं संरब्धं कुपितम् ।

(द) सङ्कोचेति । त्रिवेदीतनुः वेदत्रयमूर्त्तिः सोऽयं देवः सविता जलरुहां पद्मानां सङ्कोचव्रतमादिशन् विद्रुमकन्दवत् प्रवालमूलमिव सुन्दरं वपुः यस्य तथोक्तः तथा अस्तः क्षीणः आतपो यस्य तथाभूतः सन् अस्तम् अचलं याति गच्छति । तमः तिमिरं माञ्जिष्ठानां मञ्जिष्ठारागेण रञ्जितानां प्रसराणां पित्तलानां याः छटाः समूहः ता एव एके सुहृदो येषां तादृशानां यस्य दीधितीनां रश्मीनां

अपि च ।

दिनसन्ध्यावरवध्वोर्वहति विवाहाग्निविभ्रमं भानुः ।
लाजायते च साक्षादुत्तरलस्तारकानिकरः ॥ ८७ ॥ (ध)

पुनर्नेपथ्ये । देव ! देव्यो विज्ञापयन्ति ।

जनक ! कुलवधूनामेष सज्जः समाजो
विवहनविधिबन्धुर्वर्त्तते चाप्यनेहा ।
अनुभवितुमुदारां कौतुकागारदीक्षां
तदिह सह दुहित्रा प्रेष्यतां रामभद्रः ॥ ८८ ॥ (न)

जनकः । एष प्रेष्यते स्वयं च प्रस्थीयते । प्रतीहारस्त्वं एवमेवम् ।

प्रतीहारी । किञ्चिदुच्चैः ।

इह सुजनसमाजे सङ्गता ये नरेन्द्राः
स्फुटमुकुलितपाणिः प्राह सीरध्वजस्तान् ।

---

पुरः अग्रतः स्थानानि मञ्चासनसहितानि यानि नीलतामसमानि ... तेषां प्रस्तारः विस्तारः तद्वत् रम्यं रमणीयं यथा तथा प्रेक्षत् प्रसरत् सत् भाति राजते । शार्दूलविक्रीडितं वृत्तम् ।

(ध) दिनेति । भानुः सूर्यः दिनसन्ध्ययोर्वरवध्वोः विवाहस्य ...ः अग्निः शोणितत्वेन स्थापित इति भावः तस्य विभ्रमं विलासं वहति । उत्तरलः उज्ज्वलः तारकाणां नक्षत्राणां निकरः निवहस्तु साक्षात् लाजायते लाजवत् आचरति च । आर्य्या वृत्तम् ।

(न) जनकेति । हे जनक ! कुलवधूनाम् एषः समाजः समूहः सज्जः सुसज्जितः । विवहनस्य उद्वाहस्य विधेः बन्धुः अनुकूलः ...र्षः अनेहा समयश्च वर्त्तते । तत् तस्मात् उदारां महतीं कौतुकागारदीक्षां वासगृहसंस्कारमनुभवितुम् इह दुहित्रा मैथिल्या सह रामभद्रः प्रेष्यताम् । मालिनी वृत्तम् ।

(प) इहेति । इह सुजनानां समाजे सभायां ये नरेन्द्राः राजानः

सविधमधिवसन्तो मत्पुरीगोपुराणां
परिचिनुत सपर्य्यां सोत्सवो यावदस्मि ॥ ८९ ॥ (प)

इति निष्क्रान्ताः सर्वे । सीतास्वयंवरो नाम गर्भोऽङ्कः ।

रावणः । विचिन्त्य ।

राज्ञां वृथा सदसि रामयशः प्रकीर्णं
तूर्णं मुधा मुकुलिता च पिनाककीर्त्तिः ।
दीर्णेन जीर्णधनुषा गिरिशोज्झितेन
यातः पदं मम रुषां च मृषैव रामः ॥ ९० ॥ (फ)

(ब) सीतामनुसन्धाय । तदङ्कमित्यादि पठति ।

प्रहस्तः । देव ! समाप्तमेव देवप्रेक्षणकम् । तत् प्रेष्यन्तां वैरिञ्चा मुनयः (भ) परमेश्वरोऽपि प्रविशत्वभ्यन्तरम् । इति परिक्रम्य निष्क्रान्तौ ।

विलक्षलङ्केश्वरो नाम तृतीयोऽङ्कः ।

---

सङ्गताः सीरध्वजः स्फुटमुकुलितः पार्थिवैस्तथोक्तः कृताञ्जलिरित्यर्थः सन् तान् राज्ञः प्राह ब्रवीति, यावदहं सोत्सवः विवाहव्यापृतः अस्मि, तावत् यूयं मम पुर्य्याः गोपुराणां द्वाराणां सविधं सन्निधिमधिवसन्तः सन्तः सपर्य्यां मत्कृतामिति शेषः परिचिनुत गृह्णीत । वृत्तमत्र मालिनी ।

(फ) राज्ञामिति । राज्ञां सदसि वृथा निरर्थकं रामस्य यशः प्रकीर्णं विक्षिप्तं पिनाकस्य हरधनुषः कीर्त्तिः तूर्णं सहसा मुधा निरर्थकं मुकुलिता विनष्टा च । गिरिशोज्झितेन हरत्यक्तेन जीर्णेन धनुषा दीर्णेन भग्नेन रामः मृषैव निरर्थकमेव मम रुषां क्रोधानां पदं यातश्च । वृत्तमत्र वसन्ततिलकम् ।

(ब) अनुसन्धाय स्मृत्वा ।

(भ) परमेश्वरः महाराजः ।

इति तृतीयोऽङ्कः ।

# अथ चतुर्थोऽङ्कः ।

अतः परं भार्गवभङ्गो भविष्यति ।

ततः प्रविशत्युपाध्यायो वटुश्च ।

वटुः । भो भो उवज्झाअ ! (क) अब्भुवगदसिस्सभावो अहमिह भवभूदी सपादोपग्गहमभिवादेम्हि (१) ।

उपाध्यायः । विद्यावान् भूयाः । चिरंजीव । वत्स ! भवभूते ! कुतः पुनरुपनयनादिकाः संस्काराः (ख) कुतश्च मामुपाध्यायीकर्त्तुमागतोऽसि ।

वटुः । भअवदो भग्गवादो (२) ।

उपाध्यायः । भगवान् भार्गवो भगवती भवानीवल्लभात् (ग) प्रतिपन्नकार्मुकोपनिषत् संविदितचतुर्दशविद्यास्थान-

---

(१) भो भो उपाध्याय ! अभ्युपगतशिष्यभावोऽहमेव भवभूतिः सपादोपग्रहमभिवादये ।

(२) भगवतो भार्गवात् ।

---

(क) अभ्युपगतेति । अभ्युपगतः अङ्गीकृतः शिष्यभावो येन सः । पादोपग्रहः पादग्रहणं तेन सहितं सपादोपग्रहं पादावुपगृह्येत्यर्थः ।

(ख) संस्काराः शरीरशुद्ध्यनुकूलविधयः ।

(ग) प्रतिपन्नेति प्रतिपन्ना प्राप्ता कार्मुकोपनिषद् धनुर्विद्या येन तादृशः । संविदितं सम्यक् ज्ञातं चतुर्दशानां विद्यानां स्थानं स्थितिः रहस्यं तत्त्वञ्च येन तथाभूतः । उक्तञ्च विद्याचतुर्दशत्वं यथा

दप्पा खुरप्पा समसमरारम्भपवट्टिदवेरिवीररुहिररामा
णाराआ खण्डिअविपक्खधाणुक्कणाणासणद्धा कण्डा
सुट्ठु मुच्छिअचतुरङ्गबलसेण्णसहस्सारिसहस्सदंसणसव्वंगुक्की-
रिदाओ भेरिआओ सअलखत्तिअगोत्तणिद्दलणदुल्ललिदा
णाणावलित्ति पभुदकण्डसंभारं वहन्तेण कुदो दाव
विज्जाहिगमो णिअसरीरदोवि परिब्भंसिदोह्मि। अदो
गआणणगरुअङ्गभारोवि भविअ भिङ्गिरिटिपडिरूवो
वट्टामि। सअरणम्। पदिक्कन्तदिअसप्पओसे उण णिद्दलि-
दणीलकण्ठसरासणं दासरहिराममभिजुञ्जिदुं णिच्छि-
दमणेण सअं चिन्तिअ बहवो बहुप्पआरफलसारा कण्ड-
करण्डआ संजमिदा। जाणं दुव्वहत्तणं अणु संधिअ
पहरन्तसमए णिहुदपदसंचारमवक्कमिअ उवज्झाअत्तणेण
भअवन्तमब्भुववण्णोह्मि (५)।

---

वैरिवीररुधिररागा नाराचाः खण्डितविपक्षधानुष्कनानासनद्धाः काण्डाः सुष्ठुमूर्च्छितचतुरङ्गबलसैन्यसहस्रारिसहस्रदंशनसर्वाङ्गोत्कीरिता भेरिकाः सकलक्षत्रियगोत्रनिर्दलनदुर्ललिता नानावलिरिति प्रभूत काण्डसम्भारं वहता कुतस्तावत् विद्याधिगमो निजशरीरादपि परिभ्रंशितोऽस्मि। यतो गजाननगुर्वङ्गभारोऽपि भूत्वा भृङ्गिरिटि-प्रतिरूपो वर्त्ते। अतिक्रान्तदिवसप्रदोषे पुनर्निर्दलितनीलकण्ठशरासनं दाशरथिराममभियोक्तुं निश्चितमनसा स्वयं चिन्तयित्वा बहवो बहु-प्रकारफलसाराः काण्डकरण्डकाः संयमिताः येषां दुर्वहत्वमनुसन्धायाव-रात्मसमये निभृतपदसञ्चारमपक्रम्योपाध्यायत्वेन भवन्त मभ्युपपन्नोऽस्मि।

---

दप्पाः भल्लाः अस्त्रविशेषाः। विद्राविताः निराकृताः महारथानां रिपूणां दर्पाः यैः तादृशाः। महारथलक्षणमुक्तं यथा, एको दशसह-

उपाध्यायः । एतदेव च स्वर्गगमनप्रभावभाजां मुन्यतिथीनां मुखेभ्यः श्रुतमस्माभिः । यदुत श्रुतभार्गवसमरसंरम्भेण पुरन्दरेणापि दशरथः सत्कृत्य प्रहित इति । विचिन्त्य ।

---

स्त्राणि बोधयेद्यस्तु धन्विनाम् । शस्त्रशास्त्रप्रवीणस्य स महारथ उच्यते इति, आत्मानं सारथिञ्चाश्वान् रक्षन् युध्येत यो नरः । स महारथ इत्युक्तो धनुर्वेदविशारदैरिति च । क्षुरप्राः अस्त्रविशेषाः । असमेति असमेन निरुपमेन समरारम्भेण युद्धव्यापारेण प्रवर्त्तितः उत्पादितः वैरिवीराणां रुधिरैः रागः लौहित्यं येषु तादृशाः नाराचाः अस्त्रभेदाः । खण्डितेति खण्डिताः छिन्नाः धानुष्काणां धन्विनां बाणासनदण्डाः धनुर्यष्टयः यैः तादृशाः शार्ङ्गाः शराः । षडिति सुष्ठु सम्यक् गुम्फितानां चतुरङ्गबलानां हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयमित्यमरः । सैन्यानां सहपरिसर्पणस्य समभिव्याहारिगणस्य दंशनेन सर्वेषु अङ्गेषु अवयवेषु उत्कीरिताः चिह्निताः भैरिकाः अस्त्रभेदाः । सकलेति सकलानां क्षत्रियगोत्राणां राजकुलानां निर्दलनेन निपीडनेन दुर्ललिताः दुर्विनीताः दर्पिता इत्यर्थः । प्रभूतानां बहूनां काण्डानां शराणां सम्भारः समूहः तम् । परिभ्रंशितः च्यावितः । गजेति गजाननः गणपतिः तस्येव गुरुः स्थूलः अङ्गभारो यस्य तादृशः । भृङ्गीति भृङ्गिरिटेः शिवानुचरभेदस्य अतिकृशितमूर्त्तेरिति भावः प्रतिरूपः सदृशः । अतिक्रान्तेति अतिक्रान्तस्य गतस्य दिवसस्य प्रदोषे रजन्याम् । निर्दलितेति निर्दलितं भग्नं नीलकण्ठस्य हरस्य शरासनं येन तथाभूतम् । अभियोक्तुम् आक्रमितुम् । प्रकाराः बहुविधाः फलानां साराः येषां तादृशाः काण्डानां शराणां करण्डकाः भाजनानि तूणीराणि संयमिताः संगृहीताः । अनुसन्धाय विविच्य निभृतः निःशब्दः पदयोः सञ्चारो यस्मिन् तद् यथा तथा । अभ्युपपन्नः प्राप्तः ।

(ख) स्वर्गेति स्वर्गगमने यः प्रभावः तं भजन्ते इति तथोक्तानां मुन्यतिथीनाम् अतिथीभूतमुनीनाम् । श्रुतेति श्रुतः भार्गवस्य समर-

अहो! महदन्तरमन्योन्यं रामयोः। यत् परिणतवयाः प्रगल्भविक्रमो वैखानससूनुर्यत् कौमारकमुग्धमधुराननो राजन्यपोतः। विमृश्य। अहह! सकृद्दृष्टमपि नयनावलम्बिनमिव तमहमिमं पुरतः पश्यामि। अहो! नु खलु भोः!

ज्यायान् धन्वी नवधृतधनुस्ताम्रहस्तोदरेण
क्षत्रज्योद्व्यतिकरपटुस्ताडकाताडकेन।
कर्णाभ्यर्णस्फुटितपलितः क्षीरकण्ठेन सार्धं
योद्धुं वाञ्छन् कथमसुना लज्जते जामदग्न्यः॥ १ ॥ (ज)

वटुः। भो उपाध्याय! यदि खलु एवंविधपराक्रमो

---

(६) भो उपाध्याय! यदि खल्वेवंविधपराक्रमः परशुरामस्तत् किं पुनर्न [illegible] प्रवृत्त आसीत्।

---

संरम्भः युद्धोद्योगः येन तथोक्तेन। रामयोः दाशरथिजामदग्न्ययोः। वैखानससूनुः तापसपुत्रः भार्गव इति भावः। कौमारकेण कुमारावस्थया मुग्धं सुन्दरं मधुरं मनोहरम् आननं यस्य तथाभूतः राजन्यपोतः क्षत्रियशिशुः राम इति भावः। नयनावलम्बिनमिव नेत्रपथे वर्तमानमिव।

(ज) ज्यायानिति। ज्यायान् प्रवयाः धन्वी धनुर्धरः, क्षत्राणां क्षत्रियाणां ज्योद्व्यतिकरे चूर्णनव्यापारे पटुः समर्थः, तथा कर्णयोः अभ्यर्णेषु समीपेषु स्फुटितं विकसितं पलितं जराजनितधावल्यं यस्य तथोक्तः। पलितं जरसा शौक्ल्यं केशादावित्यमरः। जामदग्न्यः भार्गवः नवधृतेन सद्योऽभिगृहीतेन धनुषा ताम्रं रक्तं हस्तोदरं कराभ्यन्तरं यस्य तेन क्षीरकण्ठेन दुग्धपायिना ताडकाताडकेन ताडकान्तकेन असुना रामेण दाशरथिना योद्धुं वाञ्छन् कथं न लज्जते? मन्दाक्रान्तावृत्तम्।

परसुरामो ता की उथ य (ञ) तिथयथबाणासबे पयद्दो
मासि (६)।

उपाध्यायः। स खलु मरोसनम्मिचाविवयवः (ञ) सब्रह्मचारिभिरनुयुक्तोऽपि पुनःपुनरित्थमभिधाय स्थितः।

आचार्य्यो मे स खलु भगवानस्मद्‌ग्राह्यनामा
तस्मादेषा धनुरुपनिषत् तत्प्रसादात् क्षमोऽपि।
अध्यासीनः कथमहमहो! वर्त्म वैखानसानां
सीतापाणिग्रहणपथितं चापमारोपयामि॥ २॥ (ट)

बटुः। कोरिसं (ठ) मन्ते ध भग्गवराहवाणं समरसंरम्भे
कस्सिं जअवडाआ पडिवस्सिस्सदि (७)।

---

७) कीदृशं मन्यध्व भार्गवराघवयोः समरसंरम्भे कस्मिन् जयपताका प्रतिवर्त्स्यते।

---

(ञ) त्रिनयनेति। त्रिनयनस्य हरस्य बाणासने धनुषि।

(ञ) सब्रह्मचारिभिः सतीर्थैः अनुयुक्तः पृष्टः।

(ट) आचार्य्य इति। अहो बालकाः अस्माभिरग्राह्यम् अवाच्यं नाम। यस्य तादृशः शिष्यैर्गुरुनामां नाम न वक्तव्यमिति शास्त्रादिति भावः। स भगवान् हरः मे आचार्य्यः उपाध्यायः खलु। एषा धनुरुपनिषद् धनुर्वेदः तस्मात् आचार्य्यात् मयाधिगतेति शेषः। तत्प्रसादात् तस्य आचार्य्यस्य प्रसादात् अनुकम्पया क्षमोऽपि शक्तोऽपि अहं वैखानसानां तापसानां वर्त्म पन्थानं व्रतमित्यर्थः अध्यासीनः आश्रितः सन् सीतायाः पाणिग्रहणमेव पन्थाः सोऽस्य जात इति तथाभूतम् अस्य जाते इत इति इतप्रत्ययः। चापं शैवं कार्मुकं कथम् आरोपयामि ज्यया सङ्गमयामि। मन्दाक्रान्तावृत्तम्।

(ठ) मन्यध्व मन्यध्वे।

उपाध्यायः। भद्र भवभूते! किं कथयामि यदुभय-पराक्रमावलोकि सन्देहदोलाधिरूढमिव चेतः। पश्य।

एकः सङ्गरेऽभिमुखमजयत् सूनुमिन्दुमौले-
स्तस्यैवान्यो धनुरनुपमं पुष्पमाथं ममाथ।
द्वावप्येतावति हि बलिनौ किन्तु तस्मा जयश्री-
र्यस्य प्रीतः स खलु भगवान् पार्वतीप्राणनाथः॥ ३॥ (ड)

नेपथ्ये।

अत्रे! पुलस्त्य! पुलह! प्रतिथे! सुगीथ!
शाण्डिल्य! कुण्डिन! विभाण्डक! याज्ञवल्क्य!!
काण्वे! वसिष्ठ! यम! दत्त पदं रणाय
शापेन निर्दहति नारद एष नो चेत्॥ ४॥ (ढ)

---

(ड) एक इति। एकः भार्गवः सङ्गरे संग्रामे अभिमुखम् यथेन्दु-मौलेः चन्द्रशेखरस्य सूनुं कार्त्तिकेयम् अजयत्। अन्यः दाशरथिः तस्यैव चन्द्रचूडस्य अनुपमम् अतुल्यं धनुः पुष्पमाथं पुष्पमिव ममाथ बभञ्जेत्यर्थः। एतावति व्यापारे द्वावपि भार्गवदाशरथी बलिनौ शक्तौ हि, हिशब्दोऽवधारणे। किन्तु स भगवान् पार्वत्याः प्राणनाथः शङ्करः तस्य प्रीतः खलु यस्मिन्ति प्रसन्नो भवेदित्यर्थः; जयश्रीः विजयलक्ष्मीः तद्गुणा तद्गामिनी तमाश्रयिष्यतीत्यर्थः। मन्दाक्रान्तावृत्तम्।

(ढ) अत्रे इत्यादि। नारदवचनमेतत्। अत्रे इत्यादि यम इत्यन्तं सम्बोधनपदम्। हे अत्र्यादयः! चेत् यदि रणाय रामभार्गवयोः संग्रा-मदर्शनाय पदं नो दत्त, नागच्छत इत्यर्थः तदा एष नारदः शापेन निर्दहति युष्मानिति शेषः। नाकनायक इत्यादि रुद्र इत्यन्त सम्बोधनपदम्। हे नाकनायक! देवराज! विनायक! गणेश! चित्रभानो! अग्ने! हे भानो! सूर्य! हे पिनाक! हे वरुण! हे हे यक्षदेव! चन्द्र! हे दस्र! देवविशेष! कीनाश! यम! किन्नर-

भो नाकनायक ! विनायक ! चित्रभानो !
भानो ! विशाख ! वरुण ! धनदेश ! दस्र !।
कीनाश ! किन्नरपते ! पवमान ! रुद्र !
द्राक्सङ्गरं भजत भार्गवराघवीयम् ॥ ५ ॥
रत्नप्रभे ! रजनि ! चित्रलते ! लवङ्गि !
सौदामिनि ! भ्रमरि ! सुन्दरि ! देवसेने !।
रम्भे ! घृताचि ! कलकण्ठि ! सुकण्ठि ! सर्वाः !
स्वर्योषितो ! व्रजत पश्यत रामभद्रम् ॥ ६ ॥
मायावने ! विहगवेग ! कृपाणकेतो !
जीमूतवाहन ! कपिञ्जल ! हंसनाद !।
विद्यावतंस ! तिलकोत्तर ! केलिसार !
विद्याधरास्त्वरितमेत रणाय यामः ॥ ७ ॥
हे हेमवर्ण ! मणिशेखर ! चित्रबाहो !
वीणाविनोद ! मदवल्लभ ! रत्नकण्ठ !।

---

पते ! पवमान ! वायो ! हे रुद्र ! द्राक् द्रुतं भार्गवराघवीयं सङ्गरं संग्रामं भजत पश्यत । रत्नप्रभे इत्यादि सुकण्ठि इत्यन्तं सम्बोधनपदम् । हे रत्नप्रभादयः ! सर्वाः स्वर्योषितः सुरसुन्दर्यः ! यूयं व्रजत गच्छत, रामचन्द्रं पश्यत अवलोकयत । मायावने इत्यादि केलिसार इत्यन्तं सम्बोधनपदम् । हे मायावनिप्रभृतयः विद्याधराः ! यूयं त्वरितं शीघ्रम् एत आगच्छत, रणाय भार्गवराघवयोः रणं द्रष्टुमित्यर्थः यामः गच्छामः वयमिति शेषः । हेमवर्ण इत्यादि रुद्रहास इत्यन्तं सम्बोधनपदम् । हे हेमवर्णादयः चारणाः, सिद्धाः !, चेत् यदि दिदृक्षा द्रष्टुमिच्छा युष्माकमिति शेषः तदा तूर्णं मां द्रुत अनुगच्छत । वसन्ततिलकं वृत्तं सर्वेषु ।

क्रीडाकुमार ! कनकाङ्गद ! चन्द्रहास !
द्राक् सारथाः ! स्मरत मां युधि चेद्दिदृक्षा ॥ ८ ॥ (ठ)

उपाध्यायः । वत्स भवभूते ! कलहकुतूहली नारद-मुनिर्महर्षीन् देवानप्सरसो विद्याधरान् सिद्धांश्च (ण) हठ-प्रसादाभ्यामभिधत्ते तदेतावामपि तत्समरोपस्थानेन कमलसम्भवसम्भवं मुनिमनुवर्त्तामहे ।

इति निष्क्रान्तौ । मिश्रविष्कम्भकः ।

ततः प्रविशति मातलिसारथिना रथेन चामरधारिण्या वीज्य-मानो दशरथः । समन्तादवलोक्य । (त) कथमुचिद्रपारिभद्रद्रुमस्त-बकरमणीयारुणसन्ध्यानुबन्धिनि गगनाङ्गनपृष्ठे प्रति-ष्ठामहे । विचिन्त्य । अहो ! काऽपि वैचित्री वर्त्तते अन्त-रीक्षकुक्षौ प्रभातसमयस्य । तथाहि ।

व्योमोत्सङ्गविभूषणस्य सवितुर्द्यावापृथिव्योः समं
ध्वान्तध्वंसिवदङ्मुखैश्च किरणैः प्रारम्भि चावाङ्मुखैः ।
प्रत्यासन्नविरोधितस्य गगने मन्दाकिनीसद्मनां
पद्मानां प्रकरः प्रगेऽपि विकसत्यात्तकोषच्छदः ॥ ९ ॥ (थ)

---

(ण) हठप्रसादाभ्यां हठेन व्यस्ततया प्रसादेन प्रसन्नतयेत्यर्थः ।

(त) उन्निद्रेति । उन्निद्रः विकाशं गतः यः पारिभद्रद्रुमस्य स्तबकः तद्वत् रमणीया अरुणा या सन्ध्या प्रातःसन्ध्या तामनुबध्नाति अनुरुन्धते इति तथोक्ते गगनाङ्गनपृष्ठे अम्बरतले । अन्तरीक्षकुक्षौ गगनाभ्यन्तरे ।

(थ) व्योमेति । व्योमोत्सङ्गस्य गगनक्रोडस्य विभूषणम् अलङ्कारः तस्य तथा प्रत्यासन्नविरोधितस्य निराकृततमसो: सवितुः सूर्यस्य

अपिच ।

निर्य्याति प्रथमप्रचारसमये स्फारध्वनड्डिण्डिम-
स्वस्ताधोरणदूरनामितगजेनाऽयं नभोवर्त्मना ।
अभ्रं वा अघनान्तदोलितकरः स्वर्वाहिनीं गाहितुं
रोधस्ताडनकेलिरुग्णदृढ़घनग्रावाश्मिरैरावणः ॥ १० ॥ (द)

आरथमभिनीय । आर्य्य मातले ! (ध) सकलसुरसुन्दरी-
करतलान्दोलितचामरचिकुरचुम्ब्यमानमांसलांसस्थलीसन्दा
नितसन्तानकुसुममालाप्रालम्बेन समदद्दानवविवर्द्दनिकु-
रम्बडम्बरडामरैकहारिणा हरिणा समादिष्टोऽस्मि यथा

---

उद्गच्छद्भिः ऊर्द्ध्वमुखैः आगच्छद्भिः अधोमुखैश्च किरणैः समं युगपद्
द्यावापृथिव्योः ध्वान्तध्वस्तिः अन्धकारविध्वंसनं प्रारम्भि च । गगने
प्रगेऽपि प्रातरेव अपि रत्नायमानाः मन्दाकिनीसद्मनां स्वर्गङ्गाजलसदृशां
पद्मानां प्रकरः समूहः आहृताः पुनरद्भुताः कीर्णाः विस्तारं गताः
छदाः पत्राणि यस्य तथाभूतः सन् विकसति । शार्दूलविक्रीड़ितं
वृत्तम् ।

(द) निर्य्यातीति । रोधसः तटस्य ताड़ने यः केलिः क्रीड़ा ।
वप्रक्रीडेति यावत् । तेन रुग्णाः त्रुटिताः दृढ़घनरूपाणां ग्राव्णां
प्रस्तराणाम् अश्मयः कोणाः यस्य तथाभूतः ऐरावणः अयं सुरगजः
प्रथमप्रचारसमये आद्यगमनकाले स्फारेण महता ध्वनता डिण्डिमेन
त्रस्तेन आधोरणेन हस्तिपालेन दूरं नामिताः गजाः यस्मिन् तथोक्तेन
नभोवर्त्मना अन्तरिक्षमार्गेण अभ्रं मेघं वा स्वर्वाहिनीं मन्दाकिनीं
गाहितुं अघनान्ते दोलितः करः शुण्डादण्डः येन तथाभूतः सन्
निर्य्याति निर्गच्छति स्वावासादिति शेषः । शार्दूलविक्रीड़ितं वृत्तम् ।

(ध) सकलेति । सकलानां सुरसुन्दरीणां करतलैः आन्दोलितेन चालि-
तेन चामरचिकुरेण चामरलोम्ना चुम्ब्यमानायां स्पृश्यमानायां मांसलायां

सखे! दशरथ! गच्छ त्वं मिथिलां पुरीं यदावेदितं मे मर्त्यमण्डलचाराधिकारचतुरेण चारणचक्रेण यदुत शङ्करशरासनसमारोपणपणप्रवर्त्तितसीतास्वयंवरयात्रापरतन्त्रायां मिथिलायां शिथिलाभिमानग्रन्थिमन्थरस्थितिषु सकलपृथ्वीपालेषु।

गात्रं गौराचलेन्द्रस्त्रिनयनवलयं यस्य सिञ्जा भुजङ्गो
विष्णुर्बाणः पुराणां त्रयमभयमभूद् दुःखलभ्यं शरव्यम्।
धन्वी येनेन्दुमौलिः स च भुवनगुरुस्तद्धनुर्धाम धाम्नां
क्रूरं क्रोङ्कारमारात् स्वभुजवलयितं रामभद्रेण भग्नम् ॥११॥(न)

---

स्तूयमानाम् अंसस्थल्यां स्कन्धदेशे सन्दानितः निबद्धः सन्तानकुसुममालानां देवतरुविशेषपुष्पप्रकाराणां प्रालम्बः स्रक् यस्य तादृशेन। समदेति समदस्य मत्तस्य अतएव दानवतः मदजलवर्षिणः द्विरदनिकुरम्बस्य गजराजस्य ऐरावतस्य इत्यर्थः यः डम्बरः गतिविशेषः तस्य डामरेण वैचित्र्येण एकहारिणा अतिमनोहरेण हरिणा इन्द्रेण। मर्त्येति मर्त्यमण्डले मनुष्यलोके यश्चारः विचरणं लोकचरित्रदर्शनमिति यावत्। स एवाधिकारः व्यापारः तत्र चतुरेण पटुना। चारणचक्रेण कीर्त्तिप्रचारिवर्गेण। शङ्करेति शङ्करस्य हरस्य यत् शरासनं धनुः तस्य समारोपणमेव पणः तस्मिन् प्रवर्त्तितां। या सीतायाः स्वयंवर-यात्रा तस्यां परतन्त्रायां आसक्तायां व्यापृतायामित्यर्थः। शिथिलेन खर्वीभूतेन असामर्थ्यादिति भावः अभिमानग्रन्थिना मन्थरा जडा। सङ्कुचिता इति यावत् स्थितिर्येषां तादृशेषु।

(न) गात्रमिति। यस्य धनुषः गात्रं शरीरं गौराचलेन्द्रः कुल-पर्वतराजः सिञ्जा मौर्वी त्रिनयनस्य हरस्य वलयं हस्तालङ्कारभूतं भुजङ्गः वासुकिरिति यावत्। बाणः शरः विष्णुः, शरव्यं वेध्यं दुःखलभ्यं दुष्प्रापम् अभयम् अकुतोभयमित्यर्थः पुराणां त्रयम् आसुरी

(प) गुरुधनुर्ध्वंसजनितामर्षविषमेण वीतत्रासरेणुना रैणुकेयेन सह रामभद्रस्य समरसंरम्भो भवितेति तत्र च तत्प्रतिज्ञाय बभ्रुवरमयोध्यामध्यारोप्य सुरकार्य्यशेषसम्पत्तये पुनररनाकृतेनोपस्थातव्यमिति । तत्रमुचिसूदनसारथे ! कथय स भगवान् पौलोमीवल्लभो भृगुपतिचरितानि बहु मन्यते न वा ।

मातलिः । किं नाम बहु मन्यते न वेति शृणु श्रावयामि ।

आस्थानसद्मनि विलासगृहे विमाने
नेत्रे रथे च सततं सुरचक्रवर्त्ती ।
रामस्य चित्रलिखितानि कुतूहलेन
वीरो विलोकयति पूर्वविचेष्टितानि ॥ १२ ॥ (फ)

---

त्रिपुरीत्यर्थः अभूत् । स च भुवनगुरुः ईश्वरः इन्दुमौलिः येन धनुषा धन्वी धनुर्धरः कीर्त्यते इति शेषः । धाम्नां तेजसां धाम निकेतनं तत् धनुः क्रूरः कठिनः कर्कश इत्यर्थः क्रेङ्कारः कणनं यस्मिन् तद् यथा तथा रामभद्रेण स्वभुजाभ्यां वलयितं मण्डलितं सत् भग्नम् । स्रग्धरावृत्तम् ।

(प) गुर्व्विति । गुरोः पार्व्वतीपतेः धनुर्ध्वंसेन कार्मुकभञ्जनेन जनितः उत्पादितः यः अमर्षः विद्वेषः तेन विषमेण दारुणेन । वीतः निःशेषेण गतः त्रासस्य भयस्य रेणुः धूलिः यस्य तथोक्तेन निर्भयेण इत्यर्थः रैणुकेयेन रेणुका जमदग्निभार्य्या तदपत्येन परशुरामेण । समरस्य संग्रामस्य संरम्भः सम्भ्रमः समावेश इत्यर्थः । प्रतिज्ञाय प्रतिज्ञां विधाय सुरकार्य्याणां सम्पतये सम्पादनाय । नमुचिसूदनसारथे ! नमुचेः असुरस्य सूदनः संहर्त्ता इन्द्रः तस्य सारथिः मातलिः तत्सम्बुद्धौ ।

(फ) आस्थानेति । वीरः सुराणां चक्रवर्त्ती पुरन्दरः आस्थानसद्मनि

यदस्यैव पुरन्दरस्यन्दनस्य चतुर्दिशं (व) मत्तवारणीयफलकेषु रामचित्रं लिखितम् । अनुज्ञया निर्दिशत् । तत्रावहिता दीयतां दृष्टिः । इयं च प्ररोचना भृगुपतिपराक्रममहानाटकस्य यदुत भगवतस्त्र्यम्बकात् कार्मुकोपनिषल्लाभः ।

दशरथः । कथमयं (भ) विशालशिलः शिलोच्चयः । तथापि हिमालय इति प्रालेयपाण्डुराभिः शिखरश्रेणीभिर्लक्ष्यते । मातलिः ।

शैलेन्द्रो हिमवानयं गुरुगुहागर्भस्थविद्याधरी-<br>
गीतत्वच्चरितः कृताश्रमपदो रुद्रेण पत्न्या सह ।<br>
एतस्मिंश्चिरजीविभिः परिगतं दिव्यौषधीसेवनात्<br>
कन्दर्पस्य वपुस्तथा चरितं राजन्ननङ्गस्य च ॥ १३ ॥ (म)

---

संभाव्यते विमानस्यैव क्रीडावेश्मनि, विमाने व्योमयाने जैत्रे जयसाधने रथे च चित्रलिखितानि आलेख्यसमर्पितानि रामस्य पूर्वविचेष्टितानि प्राक्तनकार्य्याणि कुतूहलेन सततं विलोकयति । वसन्ततिलकं वृत्तम् ।

(व) मत्तवारणीयफलकेषु मत्तवारणः प्रासादस्य वरण्डकेषः वारान्डा इति ख्यातः तत्रत्येषु फलकेषु काष्ठादिखण्डेषु । प्ररोचना दर्शनम् । भृगुपतेः परशुरामस्य यः पराक्रमः स एव महानाटकं महान् अभिनेयव्यापारः । कार्मुकोपनिषल्लाभः धनुर्विद्याधिगमः ।

(भ) विशालशिलः विशालाः महत्यः शिलाः यस्मिन् तथाभूतः । शिलोच्चयः पर्वतः । प्रालेयैः हिमैः पाण्डुराभिः धवलाभिः ।

(म) शैलेन्द्र इति । हे राजन् ! गुरूणां गुहानां मध्यस्थाभिः विद्याधरीभिः गीतं तव चरितं यस्य तादृशः एतद्गुहासु विद्याधर्य्यः तव चरितं गायन्तीति भावः । तथा रुद्रेण हरेण पत्न्या पार्वत्या

अन्यतो दर्शयन्। इह धनुर्वेदविद्योपदेशः।

देवस्त्र्यम्बक एष वन्द्यचरणो वृन्दैः सुधाभोजिना-
मत्रास्ते स शरासनोपनिषदं दातुं वृताचार्यकः।
दूरावर्जितमौलयः सरभसाः सद्यः प्रतीच्छन्त्यमी
हेरम्बेण च षण्मुखेन च समं रामादयः सुव्रताः ॥१४॥ (य)

दशरथः। अहो! मनुष्यमुनिमहाभागधेयो भगवान्
भार्गवो यस्य स्वयमर्द्धेन्दुमौलिर्धनुर्वेदविद्याचार्यः।

(र) सौदामिनी। कधं (ल) अधिगदोवदेसरहस्सा सुर-

---

(८) कथमधिगतोपदेशरहस्याः सुरलोकेष्विव इत एते वर्त्तन्ते।

---

सह कृतम् आश्रमपदं यस्मिन् तथाविधः अयं हिमवान् शैलेन्द्रः पर्वतराजः। एतस्मिन् दिव्यानाम् ओषधीनां सेवनात् चिरजीविभिः अमरभावं प्राप्तैरित्यर्थः जनैः वपुष्मतः शरीरिणः अनङ्गस्य अशरीरस्य च कन्दर्पस्य चरितं पादचारणम् परिगतं ज्ञातम्। चिरजीवित्वात् कन्दर्पस्य आगतिः एभिर्दृष्टेतिभावः शार्दूलविक्रीडितं वृत्तम्।

(य) देव इति। सुधाभोजिनाम् अमृतपायिनां देवानां वृन्दैः वन्द्यौ चरणौ यस्य तथोक्तः देवः त्र्यम्बकः अत्र पर्व्वते शरासनोपनिषदं धनुर्वेदं दातुं वृतं गृहीतम् आचार्य्यकं आचार्य्यकर्म्म येन तादृशः सन् आस्ते अधितिष्ठति। अमी च सुव्रताः शुद्धव्रतधारिणः रामादयः भार्गवप्रभृतयः हेरम्बेण गणपतिना षण्मुखेन स्कन्देन च समं सह सरभसाः सहर्षाः साभिनिवेशा वा। रभसो वेगहर्षयोरित्यमरः। तथा दूरम् अत्यन्तम् आवर्जिता आनमिताः मौलयः यैः तथाभूताः सन्तः प्रतीच्छन्ति गृह्णन्ति धनुर्वेदमिति शेषः। शार्दूलविक्रीडितं वृत्तम्।

(र) सौदामिनी पूर्वोक्तायाः चामरधारिण्याः संज्ञा।

(ल) अधिगतम् उपदेशरहस्यं यैः तथाभूताः। सुरलोक-

कोहेलिणो दुद्दो एदे वहन्ति किं उण दूरदेसप्पसरो लक्ख-विक्खेवो णिविडप्पहारित्तणं च रामबाणाणं सविसेसमा-लिहिदं एत्थ (८) ।

मातलिः । अहो ! (व) महदन्तरं प्रज्ञाप्रकर्षस्य । तथाहि ।

उपदिशति समानं कर्म कृत्स्नं पिनाकी
सममपि च यतन्ते कर्त्तुमभ्यासमेते ।
तदपि भृगुकुलेन्दुः काममुत्कृष्यतेऽसौ
ननु भवति विनीतं द्रव्यमेव क्रियाभिः ॥ १५ ॥ (श)

पुरोऽवलोक्य । अति हि नाम (ष) स्वच्छन्दचरितस्या-ऽपि देवस्य माध्यस्थ्यम् । तथाहि ।

---

किं पुनर्दूरदेशप्रसरो लक्ष्यविक्षेपो निबिडप्रहारित्वं च रामबाणानां सविशेषमालिखितमत्र ।

---

अभ्यासेन खेलन्तीति तथोक्ताः । दूरदेशे प्रसरो गतिः येन तथाभूतः । लक्ष्यस्य शरव्यस्य विक्षेपः निक्षेपणम् । निबिडप्रहारित्वं दृढप्रहा-रित्वम् रामस्य परशुरामस्य बाणानां शराणाम् ।

(व) अन्तरं प्रभेदः । प्रज्ञायाः प्रकर्षः उत्कर्षः तस्य ।

(श) उपदिशतीति । पिनाकी हरः कृत्स्नं समग्रं कर्म समानं तुल्यम् उपदिशति । एते च रामादयः समानम् अभ्यासं कर्त्तुं शिक्षि-तुमिति यावत् यतन्ते चेष्टन्ते । तदपि तथा सत्यपि असौ भृगु-कुलेन्दुः भार्गवचन्द्रः कामं सम्यक् उत्कृष्यते चेरम्यादिभ्यः उत्-कृष्टो भवतीत्यर्थः । ननु निश्चितं द्रव्यमेव सामान्यं ग्रहणरूपं वस्तु एव क्रियाभिः वेदविहितानुष्ठानैः विनीतं संस्कृतं भवति सामान्य-वस्तुमात्रेऽपि गुणाधाने उत्कर्षसिद्धिरिति भावः । सामान्येन विशेष-समर्थनरूपोऽयमर्थान्तरन्यासः । मालिनीवृत्तम् ।

(ष) स्वच्छन्दचरितस्य यथेच्छचारिणः पक्षपातसमर्थस्यापीति

बर्हिर्ध्वजेऽपि सति सत्यपि दन्तिवक्त्रे
प्रेमोपधानमवधूय पिनाकपाणिः ।
हस्तेन नित्यधृतवासुकिकङ्कणेन
प्राशप्रियः स्पृशति भार्गवमेव पृष्ठे ॥ १६ ॥ (ख)

पुरतोऽवलोक्य । कथं(ङ) खुरलीखेलनप्रसरत्पृषत्कपङ्क्तीनां त्रिनयनान्तेवासिनां चेतसि विरचितं पदं परस्परस्पर्धया ।

पुनरवलोक्य । कोदण्डपाण्डित्यनिबन्धनः प्रवृत्त एव कलहः ।

दशरथः । एवमेवतत् ।

हुङ्कारारम्भविजृम्भितभ्रुकुटिना भालेन रामे मुनौ
कोदण्डं निविडाङ्गुलोपरिगमादास्फालयत्यग्रतः ।

---

भावः । माध्यस्थम् औदासीन्यं समदर्शित्वमित्यर्थः पुत्रापेक्षया भार्गवस्य प्रकर्षेऽपि न कश्चित् विराग इति तात्पर्य्यम् ।

(ख) बर्हिर्ध्वजे इति । प्राशः प्रशासान् प्रियो यस्य तथाभूतः पिनाकपाणिः हरः बर्हिर्ध्वजे मयूरवाहने कुमारे सत्यपि तथा दन्तिवक्त्रे गजानने सत्यपि च प्रेमोपधानं स्नेहावलम्बं स्नेहपारवश्य-मिति यावत् अवधूय विहाय नित्यं सततं धृतं वासुकिर्नागराज एव कङ्कणः यस्मिन् तथाभूतेन हस्तेन भार्गवमेव न तु हेरम्बादीनिति भावः एवमत्रोऽन्याप्यव्यवच्छेदकः । पृष्ठे स्पृशति स्नेहं परामृशति । वसन्ततिलकं वृत्तम् ।

(ङ) खुरलीति । खुरलीखेलनेन शरविक्षेपाभ्यासरूपक्रीडनेन प्रसरन्त्यः पृषत्कानां शराणां पङ्क्तयः येषां तथोक्तानां त्रिनय-नान्तेवासिनां हरशिष्याणां विरचितं कृतम् । पदं स्थानम् । पर-स्परस्पर्द्धिन एते संवृत्ता इत्यर्थः । कोदण्डेषु धनुःषु यत् पाण्डित्यं वैचक्षण्यं तदेव निबन्धनं हेतुः यस्य तथाविधः ।

(च) हुङ्केति । रामे भार्गवे मुनौ हुङ्कारस्य ककारस्य आरम्भः

ज्यानिर्घोषकषायितोदरजुषां गीर्वाणसेनापतेः
षड्‌क्रौञ्चवसां करोति न करद्वन्द्वं पिधानक्रियाम् ॥१७॥ (घ)

सौदामिनी । एस समरङ्गणसमासण्णकेलासतिहरणि-वेसी भअवं कुसुमलञ्छणो समं विसाहजणणीए देवीए (क) पेक्खदि णंदिप्पमुहसेणावदिपरिवुदाणं कुमारहेरम्बाणं रामेण सह झत्ति समरसंरम्भविअसिदं (८) ।

भागवतिः । न केवलं पश्यति (ख) स्वमनीषिकोत्कर्षिणि मिथ्ये किमपि प्रीयते । यतः ।

---

(८) एष समराङ्गणसमासन्नकैलासशिखरनिवेशी भगवान् कुसुमलाञ्छनः समं विशाखजनन्या देव्या प्रेक्षते नन्दिप्रमुखसेनापति-परिवृतयोः कुमारहेरम्बयो रामेण सह झटिति समरसंरम्भव्यव-सितम् ।

---

उद्रुयोन: तेन विजृम्भिता प्रकटिता भ्रूकुटिः भ्रुवोः कौटिल्यं यस्मिन् तादृशेन भावेन ललाटेन उपलक्षणे हतीया । निविडाङ्गुलीपरि-गमात् निविडया दृढया अङ्गुल्या परिगमात् पर्यसनात् अपतः पुरतः कोदण्डं कार्मुकम् आस्फालयति सति गीर्वाणानां देवानां सेनापतेः कार्त्तिकेयस्य करद्वयं हस्तयुगलं ज्यानिर्घोषेण रामस्य धनुष्टङ्कारेण कषायितं बधिरितम् उदरं जुषन्तीति तथोक्तानां षड्‌क्रौञ्चवसां षडाननकर्णानां द्वादशानामिति भावः पिधानक्रियाम् आच्छादनं करोति । शार्दूलविक्रीडितं वृत्तम् ।

(क) विशाखजनन्या कार्त्तिकेयमात्रा । कुमारहेरम्बयोः स्कन्दगणपत्योः ।

(ख) स्वमनीषिकोत्कर्षिणि स्वस्य मनीषिकया प्रज्ञया उत्कर्षिणि प्राप्तोत्कर्षे ।

सम्यक्कोदण्डविद्या विनयचतुरता कुत्र सोत्सेकरेखा
पुत्रान्तेवासिनोर्मे सपदि परिणतेत्येष वेत्तुं विशेषम् ।
देवः श्रीचन्द्रचूडामणिरचलसुतापाणिपद्मावलम्बी
स्थित्वोद्ग्रीवं विटङ्कात् स्फटिकशिखरिणो वीक्षते निस्तरङ्गः १८

दशरथः । अति हि प्रीयते । यतः ।

नन्दन्नन्दिनि चण्डचण्डचरिते हेलाचलच्चन्द्रम-
स्युद्दामद्विरदास्यहास्यरसवत्याविष्टघण्टामुखे ।
भ्राम्यद्भृङ्गिरिटौ च भङ्गुरगणग्रामे सहैवोमया
संग्रामे प्रहरन्नयं दिशि दिशि प्रेम्णा हरेणेक्ष्यते ॥१९॥ (घ)

मातलिः । इत इतः पश्य द्वाभ्यां तयोरधिष्ठानम् ।

---

(ग) सम्यगिति । एषः देवः श्रीचन्द्रचूडामणिः हरः अचल-सुतायाः पार्वत्याः पाणिपद्मावलम्बी गृहीतकरकमलः निस्तरङ्गः स्थिरदृष्टिः सन् उद्ग्रीवम् उन्नतग्रीवं यथा तथा स्थित्वा स्फटिक-शिखरिणः श्वेतपर्वतस्य विटङ्कात् अग्रात् मे मम पुत्रान्तेवासिनोः पुत्रस्य स्कन्दस्य अन्तेवासिनः शिष्यस्य परशुरामस्य च द्वयोर्मध्ये कुत्र सम्यक् सम्पूर्णा कोदण्डविद्या धनुर्विद्या तथा सोत्सेकरेखा उत्सेकरेखया सह वर्त्तमाना विनयचतुरता च सपदि परिणता इति विशेषं वेत्तुं वीक्षते अवलोकयति स्रग्धरावृत्तम् ।

(घ) नन्दन्निति । नन्दन् नन्दी यस्मिन् तादृशे, चण्डं प्रचण्डं चण्डस्य गणभेदस्य चरितं यत्र तथाभूते हेलया चलन् चन्द्रमा यस्मिन् तथोक्ते, उद्दामः उत्कटः द्विरदास्यस्य गणपतेः यः हास्य-रसः तद्वति, आविष्टः प्रवृत्तः घण्टामुखः गणभेदः यस्मिन् तादृशे, भ्राम्यन् भृङ्गिरीटिः यत्र तथोक्ते, तथा भङ्गुराः पलायनपराः गणानां ग्रामाः समूहा यस्मिन् तथाभूते संग्रामे दिशि दिशि प्रहरन् अयं भार्गवः हरेण उमया सहैव प्रेम्णा स्नेहेन ईक्ष्यते दृश्यते । शार्दूल-विक्रीडितं वृत्तम् ।

दोर्दण्डाञ्चितयाञ्चितोन्नतधनुर्यन्त्रप्रसूतेषव:
शुण्डोद्दण्डपरश्वधा: परिणमद्दन्तार्गलाकोटय: ।
एता: कर्णविकीर्णवज्रकवचा: संरम्भिण: सङ्गरे
हेरम्बस्य हरन्ति हन्त हृदयं द्राक्कोपविक्रान्तय: ॥२०॥ (ङ)
नरनागक्रियामिश्रा हतरुद्राम्बकक्रिया: ।
दुर्धरा हन्त हेरम्बरणव्यापारकेलय: ॥ २१ ॥ (च)
सौदामिनी । (छ) कुम्भरावणरणकर्मनिर्माणपरिकोपितेव

---

(१०) कुम्भराननरणकर्मनिर्माणपरिकोपितेन जामदग्न्यसूनुनो-

---

१०. (ङ) दोर्दण्डेति । दोर्दण्डाञ्चितयेन बाहुदण्डयुगलेन अञ्चितं यत् उन्नतं धनुर्यन्त्रं तस्मात् प्रसूता इषवः शराः यासु ताः, शुण्डाभ्याम् उद्दण्डः परश्वधः परशुः यासु तथोक्ताः, परिणमन्त्यः स्फुरन्त्यः दन्तानाम् अर्गलानामिव कोटयः अग्राणि यासु तथाविधाः, तथा कर्णाभ्यां विकीर्णं वज्रस्य सुदृढस्य कवचम् आवरणविशेषो यासु तादृश्यः एताः सङ्गरे युद्धे संरम्भिणः क्रुद्धस्य हेरम्बस्य गणपतेः द्राक् झटिति कोपविक्रान्तयः सकोपविक्रमाः हन्त हर्षे हृदयं हरन्ति । शार्दूलविक्रीडितं वृत्तम् ।

(च) नरेति । नरस्य नागस्य हस्तिनः क्रियया मिश्राः सम्वलिताः नररूपेण हस्तिरूपेण च उभयथा संमिश्रिताः हता रुद्राणाम् अम्बकानाञ्च गणभेदानां क्रिया व्यापारा येषु तथाविधाः हेरम्बस्य गणनायकस्य रणव्यापारकेलयः संग्रामक्रीडनानि हन्त हर्षे दुर्धराः दुःसहा इत्यर्थः । पथ्यावक्त्रं वृत्तम् ।

(छ) कुम्भराननस्य गणेशस्य रणकर्मणां निर्माणेन प्रबन्धेन परिकोपितेन क्रुद्धेन, गच्छन्तः पलायमानाः गणप्राणा यस्मिन् तत् ।

जमदग्गिसूणुणा उवक्कन्तं किंपि जेण णासक्तगणग्गामं

संमज्जिदं विअ समरङ्गणं पडिहादि ( १० )।

दशरथः। साधु सौदामिनि! साधु यथा (ज) समर्थयसे।

अत्रैते प्रमथाः सरन्ति सभियः कैलासशैलान्तरं

नन्दी भृङ्गिरिटिश्च लूनधनुषावन्वेषुधी मुञ्चतः।

हेरम्बस्य च मुक्तमत्र मधुपैस्त्रासादमाद्यन्मुखं

क्रौञ्चारिः परमेष तिष्ठति हसन् सङ्क्षिप्य शरैः पुङ्खितैः ॥२२॥

पुरोऽवलोक्य। कथं जामदग्न्यस्य पुरतोऽक्षरावली * ।

वाचयति।

त्वं पुत्रस्त्रिपुरद्रुहः पुनरहं शिष्यस्तदेतावता

तुल्योऽप्यस्तु कथं तवायमधिकः कोदण्डशिक्षाविधिः।

---

पक्रान्तं किमपि येन नक्षत्रगणग्रामं संमार्जितमिव समराङ्गणं प्रतिभाति।

---

( ज ) समर्थयसे सम्भावयसि।

( झ ) अत्रेति। अत्र एते प्रमथाः गणाः सभियः भीताः सन्तः कैलासशैलान्तरं कुवेरशैलविवरं सरन्ति समाश्रयन्ति। अत्र नन्दी भृङ्गिरिटिश्च लूनधनुषौ छिन्नकार्मुकौ सन्तौ इषुधी तूणीरौ मुञ्चतः त्यजतः। अत्र मधुपैः भ्रमरैः त्रासात् भयात् अमाद्यन्मुखं अमदजलं हेरम्बस्य मुखं मुक्तम्। एषः क्रौञ्चारिः स्कन्दः सङ्क्षिप्य पुङ्खितैः सपुङ्खैः शरैः परम् अत्यर्थं विद्धोऽपीति शेषः हसन् तिष्ठति।

* अक्षरावली लिपिः।

( ञ ) त्वमिति। त्वं त्रिपुरद्रुहः हरस्य पुत्रः अहं पुनः शिष्यः। तत् तस्मात् एतावता पुत्रत्वेन शिष्यत्वेनेत्यर्थः तुल्योऽपि समोऽपि कोदण्डशिक्षाविधिः धनुर्वेदशिक्षाव्यापारः अस्तु, तव अयं कोदण्डशिक्षाविधिः कथम् अधिकं स्यादिति शेषः। यदि आधेयस्य

तत्राधारनिबन्धनो यदि भवत्याधेयधर्मोदय-
स्तन्नोः स्कन्द ! गृहाण कार्मुकमिदं निर्णीयतामन्तरम् ॥ २३ ॥

मारीचः । (ट) भूकाश्यप ! पुरतः पश्य सहसा षण्मुखं सम्मुखीभूय स्थितवन्तं गजाननं च भृगुपतिः पाशुपतास्त्रेण ज्योतिश्छटाच्छादितरोदःकन्दरकुहरडामरेण हर्षादुपतिष्ठते ।

दशरथः । कथमक्षरावली वाचयति ।

क्रोधोद्बोधव्यतिकरसहङ्निर्भराभ्यासयोग्यो
मद्दोर्दण्डोपगमसदृशस्त्र्यक्षशिष्योचितश्च ।
दृष्टान्तस्ते विबुधमनसां कर्तुमस्ता कबन्धं
चापादस्मात् प्रसरतु शरः सम्मुखः षण्मुखेऽपि ॥ २४ ॥ (ठ)

---

आधेयस्य धर्मस्य उदयः अभ्युन्नतिः आधारनिबन्धनः आश्रयहेतुकः भवति तत् तर्हि भोः स्कन्द ! इदं कार्मुकं गृहाण, अन्तरं प्रभेदः आवयोरिति शेषः निर्णीयतां निश्चीयताम् । शार्दूलविक्रीडितं वृत्तम् ।

(ट) भूकाश्यप ! भुवः पृथिव्याः काश्यप ! मारीच ! रामरूपस्य विष्णोर्जनकत्वादिति भावः । पाशुपतास्त्रेण पशुपतिः देवता अस्य तत् पाशुपतं तदेव अस्त्रं पाशुपतास्त्रं तेन । ज्योतिषां छटाभिः समूहैः छादितं रोदसी द्यावापृथिव्योः कन्दरकुहरं गुहाविवरं येन तथोक्तं डामरं प्रचण्डञ्च तेन ।

(ठ) क्रोधेति । क्रोधस्य कोपस्य उद्बोधः उद्रेकः तस्य व्यतिकरः आतिशयः तस्य सहक् सदृशः अनुरूपः निर्भरः अत्यन्तः यः अभ्यास शिक्षा तद्योग्यः मम दोर्दण्डेन यः उपगमः ग्रहणं तत् सदृशः, त्र्यक्षस्य हरस्य शिष्यः तस्य उचित उपयुक्तः विबुधानां देवानां मनांसि तेषां दृष्टान्तः ग्रहणमहत्त्व षण्मुखे स्कन्देऽपि सम्मुखः अपराङ्मुखश्च

मातलिः । अत्रान्तरे किञ्चिज्जातम् ।

किञ्चित्कोपकषायितेन मनसा यावत् सतीसूनवे
नैयत्यं भृगुनन्दनो निजधनुर्यन्त्रे निधत्ते शरम् ।
हेलास्रस्तदुकूलसंवृतिमती विस्रंसिकाञ्चीलता
तावद्व्याकुलनूपुरं भगवती मध्ये मृडानी स्थिता ॥२५॥ (छ)

दशरथः । पुरतोऽवलोक्य । अयं तु (ढ) प्रकृत्युद्धतो रामः कथमित्थमतिप्रश्रयते । तदस्य त्रिभुवनातिशायि चरिताद्भुतम् । तथा हि ।

दृष्ट्वा रामः किसलयसमं पाणिमुद्यम्य सख्य-
ख्ये भूतां गिरिदुहितरं षण्मुखस्यात्मनश्च ।
संहृत्यास्त्रं विधुतशरधिर्मुक्तकोदण्डदण्डः
पादौ मार्जन्नमति नमता प्राग्जटामण्डलेन ॥ २६ ॥ (ण)

---

इत्यर्थः शरः अद्य सहसा कथम्भूम् आकाशिकं धूमकेतुं कर्तुम्, अमङ्गलनिदानं केतुद्वयं विधातुमित्यर्थः अस्मात् चापात् धनुषः प्रस-रतु निर्गच्छतु । मन्दाक्रान्ता वृत्तम् ।

(छ) किञ्चिदिति । भृगुनन्दनः परशुरामः किञ्चित् ईषत् कोपकषायितेन क्रोधकलुषितेन मनसा उपलक्षितः यावत् सतीसूनवे कार्त्तिकेयाय निजधनुर्यन्त्रे नैयत्यं पाशुपतं शरं निधत्ते संहितवान् तावत् मध्ये भगवती मृडानी पार्वती हेलया स्रस्तेन विगलितेन दुकूलेन वसनेन संवृतिमती अवगुण्ठनवती तथा विस्रंसिनी काञ्चीलता रसनायष्टिर्यस्यास्तथाभूता सती व्याकुलनूपुरं स्खलन्मञ्जीरं यथा तथा स्थिता । शार्दूलविक्रीडितं वृत्तम् ।

(ढ) प्रकृत्युद्धतः स्वभावप्रचण्डः । अतिप्रश्रयते अत्यन्तं विनीतवद् व्यवहरति ।

(ण) दृष्ट्वेति । रामः भार्गवः गिरिदुहितरं पार्वतीं किस-

सौदामिनी । अहो ! प्पसादादिसओ रामम्मि चन्दसेहरस्स (त) तत्थभवं ! अत्तमण्डलाखण्डल ! ता इदो पेक्ख (११) ।

दशरथः । हहा ।

येनात्र खण्डपरशुः परशूत्तमेन
शम्भुः सुमेरुतटताडनखण्डितेन ।
रामाय चापभृते तमसौ कुठार-
मस्मै समर्पयति साञ्जलिसम्पुटाय ॥ २७ ॥ (थ)
दत्ते च विद्यास्थानानि देवस्तस्मै चतुर्दश ।
शतभङ्गीभवद्भद्रा महतां हि प्रसत्तयः ॥ २८ ॥ द)

---

(११) अहो ! प्रसादातिशयो रामे चन्द्रशेखरस्य तत्रभवन् मर्त्य-मण्डलाखण्डल ! तदितः प्रेक्षस्व ।

---

पल्लवं पल्लवनिभम् अतिकोमलमिति भावः पाणिम् उद्यम्य उत्तोल्य संग्रामनिवारणार्थमिति भावः षण्मुखस्य कार्त्तिकेयस्य आत्मनश्च मध्ये सम्यक् भूत्वा स्थितां हृष्ट्वा अस्त्रं संहृत्य विधृतः शरधिः तूणीरो येन तथोक्तः तथा सक्तः परित्यक्तः कोदण्डदण्डः धनुर्यष्टिर्येन तथाविधः सन् प्राक् पूर्वं नमता जटामण्डलेन पादौ मार्जन् स्पृशन् देव्या इति शेषः नमति । मन्दाक्रान्तावृत्तम् ।

(त) तत्रभवन् ! पूज्य ! पूज्यस्तत्रभवान् भवानित्यमरः । मर्त्यमण्डलेषु मनुष्यलोकेषु आखण्डलः इन्द्रः तत्सम्बुद्धौ ।

(थ) येनेति । अत्र पर्वते सुमेरोः तटस्य ताडनेन खण्डितेन इखितेन येन परशूत्तमेन शम्भुः खण्डपरशुः आसीदिति शेषः । असौ शम्भुः आपद्वते साञ्जलिसम्पुटाय कृताञ्जलये अस्मै रामाय च तं कुठारं समर्पयति ददाति । वसन्ततिलकं वृत्तम् ।

(द) दत्ते इति । देवः शिवः तस्मै रामाय चतुर्दश विद्या-

सौदामिनी । सङ्के तदो पहुदि रामो परसुरामो त्ति उच्चदि (१२) ।

मातलिः । इदमग्रतः पश्य ।

यः शृङ्गाग्रैः शरधिमरुधत् क्रौञ्चशैलः सहेलं
यातुः शम्भोर्धनुरुपनिषत्प्राप्तये पादमूलम् ।
सोऽयं कोपाद्वहति विहितं मार्गणैर्भार्गवस्य
छिद्रद्वारं त्रिदिवसरसीहंसयात्रापवित्रम् ॥ २८ ॥ (घ)

अथेदमग्रतः पश्य अयं हि पितृभक्त्यतिशयः परशु-रामस्य यदुत रेणुकाशिरश्छेदः ।

दशरथः । अहह ! शान्तं पापं कथं (ङ) जमदग्न्यपत्यमपि प्रमाद्यति हंहो पुरुहूतसूत ! ।

---

(१२) शङ्के ततः प्रभृति रामः परशुराम इत्युच्यते ।

---

स्थानानि अङ्कप्रभृतीनि । इष्टे इष्टानि च । हि तथाहि महतां प्रसत्तयः प्रसादाः शतं भङ्गः भेदः यासां ताः शतविधा इत्यर्थः भङ्गाः शुभाय भवन्तीति शेषः ।

(घ) य इति । यः क्रौञ्चशैलः शृङ्गाग्रैः सहेलं सावज्ञं यथा तथा, धनुरुपनिषत्प्राप्तये धनुर्वेदाधिगमाय शम्भोः पादमूलं यातुः गन्तुः भार्गवस्य शरधिं पन्थानमरुधत् रुरोध । सोऽयं शैलः कोपात् भार्गवस्य मार्गणैः शरैः विहितं कृतं त्रिदिवसरस्यां मानसे सरसि हंसानां यात्रया गमनेन पवित्रं विशुद्धं छिद्रद्वारं रन्ध्ररूपं द्वारं वहति । मानसयायिनो हंसास्तेनैव छिद्रेण चरन्तीति प्रसिद्धिः । मन्दाक्रान्तावृत्तम् ।

(ङ) जमदग्न्यपत्यं जमदग्नेः सुतः भार्गवः । प्रमाद्यति

सहस्रं हि पितुर्माता गौरवेणातिरिच्यते ।
तत्किं पितृगिरा रामो विधत्ते रेणुकावधम् ॥ ३० ॥ (प)

यद्वा निरपराधवधादेव जमदग्निरपि प्रमाद्यतिस्म । विचिन्त्य । कः पुनरयं मार्गो भार्गवस्य यदिदमपि (फ) प्रकथ्यते ।

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥ ३१ ॥ (ब)

सौदामिनी । कर्णौ (भ) पिधाय । कहं उण भअवदा भग्गवेण सुदं सवणेहिं सुणिअ वा अणुचिदकज्जं अणुट्ठिदं परसुधाराव्वावारेण (१३) ।

---

(१३) कथं पुनर्भगवता भार्गवेण श्रुतं श्रवणाभ्यां श्रुत्वा वाऽनुचितकार्यमनुष्ठितं परशुधाराव्यापारेण ।

---

मत्तो भवति मातृवधादपि न परावर्त्तते इति भावः । पुरुहूतस्य इन्द्रस्य सूत ! सारथे ! ।

(प) सहस्रमिति । माता गौरवेण गुरुत्वेन सहस्रं पितॄन् अतिरिच्यते हि, सहस्रपित्रपेक्षयापि मातुर्गौरवमधिकमिति भावः । तत् तदा रामः पितृगिरा पितृवचनेन रेणुकायाः जनन्याः वधं किं कथं विधत्ते करोति ?

(फ) प्रकथ्यते प्रकर्षेण कथ्यते धर्मशास्त्रतया निबध्यते शास्त्रकारैरिति शेषः ।

(ब) गुरोरिति । अवलिप्तस्य उद्धतस्य कार्याकार्यं हिताहितम् अजानतः उत्पथप्रतिपन्नस्य कुमार्गगामिनः गुरोः पितुरपि परित्यागः विधीयते क्रियते लोकैरिति शेषः ।

(भ) पिधाय आच्छाद्य । श्रुतं मातृवधाज्ञावचनमिति शेषः । परशुधाराव्यापारेण कुठारप्रयोगेण ।

मातलिः। भद्रायतः पश्य।

दशरथः। हहा। कथं (ल) प्रत्यापन्नजीविता पुनरस्य माता।

मातलिः। आश्चर्यमाश्चर्यम्।

यावद्वरं न वृणुते किल जामदग्न्य-
स्तुष्टात् पितुः स्वजननीप्रतिमोचनाय।
तावच्छिरः पृथगपि स्थितमस्य मातु-
र्वेगादुपेत्य विदधात्यकबन्धभावम्॥ ३२॥ (व)

सौदामिनी। (र) तक्खणजणिदजीविदावदाणस्स सोहइ जणणीसिरच्छेदोवि भअवदो भग्गवस्स (१४)।

दशरथः।

यच्छिन्नं जननीशिरः पितृवराद्भूयोऽपि यत् संहितं
तच्छ्लाघ्यस्य पिनाकिनो महदभूच्चित्रं चरित्रं किल।

---

(१४) तत्क्षणजनितजीवितावदानस्य शोभते जननीशिरश्छेदोऽपि भगवतो भार्गवस्य।

---

(ल) प्रत्यापन्नेति प्रत्यापन्नं पुनरधिगतं जीवितं यया तथोक्ता।

(व) यावदिति। जामदग्न्यः परशुरामः तुष्टात् आज्ञापालनादिति शेषः पितुः सकाशात् स्वजनन्याः प्रतिमोचनाय पुनरुज्जीवनाय यावत् वरं न वृणुते किल इति अलीके। तावत् वरप्रार्थनामात्रमेवेत्यर्थः अस्य मातुः शिरः पृथक् स्थितमपि वेगात् उपेत्य उपगम्य स्कन्धदेशमिति शेषः अकबन्धभावम् अपमूर्द्धकलेवरत्वाभावं विदधाति करोति। वसन्ततिलकं वृत्तम्।

(र) तत्क्षणं वधक्षणमेव जनितं लब्धं जीवितावदानं जीवनाख्यं महत् कर्म येन तादृशस्य।

(श) यदिति। यत् जनन्याः शिरः छिन्नं यत् पितृवरात्

तेनैतेन कथाद्भुतेन तु वयं वाचाऽपि लज्जामहे
यद्वा ते गुरवोऽविचिन्त्यचरितास्तेभ्योऽयमस्त्वञ्जलिः १३ (ख)

मातलिः । इदमन्यदृश्यतां कुतूहलम् ।

दशरथः । अयं हि (ग) प्रचण्डदोर्दण्डसहस्रदुःसहो हैहयनरेन्द्रः श्रूयते ।

मातलिः ।

इष्टापूर्त्तपवित्रमाश्रमपदं प्राप्तोऽयमत्रार्जुनो
राजानं जमदग्निरत्रभगवान् सज्जातिथेयोऽर्चति ।
धेनोः कामदुघः कृतोऽत्र च मुनेर्वत्सापहारोऽमुना
प्राणान्मुष्णाति नैष गोग्रहविधावार्चीकिरस्मिन् मुनिः १४ (घ)

---

भूयोऽपि संहितं संयोजितं तत् पिनाकिनः शिष्यस्य भार्गवस्य चित्रम् अद्भुतं महत् चरितं किञ्चिल्लिखितम् अभूत् । तेन प्रसिद्धेन एतेन कथाद्भुतेन अद्भुतकथया वयन्तु वाचापि वक्तुमपीत्यर्थः लज्जामहे । यद्वा अथवा ते गुरवः रामादयः अचिन्त्यचरिताः तेभ्यः गुरुभ्यः अयम् अञ्जलिः अस्तु भवतु कृताञ्जलिस्तान् प्रणमामीति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(ग) प्रचण्डेति । प्रचण्डानां दोर्दण्डानां सहस्रेण दुःसहः । हैहयनरेन्द्रः कार्त्तवीर्य्यार्जुनः ।

(घ) इष्टेति । अत्र अयम् अर्जुनः कार्त्तवीर्य्यः अग्निहोत्रादिकं कर्म इष्टं खातादिकं कर्म पूर्त्तं द्वयोः समाहारः इष्टापूर्त्तं, वापीकूपतड़ागादि देवतायतनानि च । अन्नप्रदानमारामः पूर्त्तमित्यभिधीयते इति मनुः । तेन पवित्रं विशुद्धम् आश्रमपदं जमदग्नेरिति शेषः प्राप्तः । अत्र भगवान् जमदग्निः सज्जातिथेयः आतिथ्ये सज्जः सन् राजानम् अर्जुनम् अर्चति पूजयति । अत्र च अमुना अर्जुनेन कामदुघः अभीष्टप्रसविन्याः धेनोः वत्सापहारः वत्सहरणं कृतः।

सौदामिनी। पुरतोऽवलोक्य (घ) सविचिकित्सम्। अहह! अच्चन्तिअगोक्खोभिदं आचरिदं बाहुसहस्सजुत्तेण सहस्सज्जुणेण जं दाणिं समररच्छामुच्छिदभत्तारपरित्ताणणिमित्तं उवरि णिवेसिदणिअसरीरा पडिव्वदाणं पढमोदाहरणं रेणुआ किवाणधाराप्पहारेहिं तहिं झडिदि ताडिदा (१५)।

दशरथः। कथं महतामपि प्रमादः। तदहो! किमपि (ङ) कन्दलितानुरागाः संसारभोगाः।

मातलिः। पुरतोऽवलोक्य। अयमितो महावीरः (च) पृष्ठास-

---

(१५) अत्यन्तिकगोक्षोभितमाचरितं बाहुसहस्रयुक्तेन सहस्रार्जुनेन यदिदानीं समररथ्यामूर्च्छितभर्तृपरित्राणनिमित्तमुपरि निवेशितनिजशरीरा पतिव्रतानां प्रथमोदाहरणं रेणुका कृपाणधाराप्रहारैस्तत्र झटिति ताडिता।

---

यस्मिन् प्रदेशे आर्चीकिः ऋचीकनन्दनः मुनिः जमदग्निरेव गोप्रहविषो वत्सापहरणव्यापारे प्राणान् मुञ्चति त्यजति च। जमदग्निं वत्सापहारं कर्तुमदित्सन्तम् अर्जुनो निजघानेति पुराणकथानुसन्धेयम्। शार्दूलविक्रीडितं वृत्तम्।

(घ) सविचिकित्सं ससंशयम्। बाहुसहस्रयुक्तेन सहस्रबाहुना अर्जुनेन सहसा हठात् अविविच्य इत्यर्थः। समररथ्यायां संग्रामाङ्गणे मूर्च्छितस्य मोहं गतस्य अर्जुनप्रहारेणेति भावः। भर्तुः जमदग्नेः परित्राणनिमित्तं रक्षार्थम्।

(ङ कन्दलितानुरागाः कन्दलिताः अपवादिताः निन्दिता इत्यर्थः। अनुरागो येषु तथोक्ताः संसारभोगाः सांसारिकभोग्यवस्तूनीत्यर्थः। सांसारिकेषु भोगेषु अनुरागो निन्दनीय इति भावः।

(च) पृष्ठेति। पृष्ठे आसञ्जितः आरोपितः तूणीरो येन तथोक्तः।

ज्जिततूणीरः परमेश्वरोपदिष्टधर्मा सज्जीकृतकार्मुककर्मा परशुधाराज्योतिर्विजृम्भणडामरः समरपरितोषितामरः सकलारण्यकजननिवेदितवृत्तान्तः साक्षादिव कृतान्तः शिखण्डिकेतुकाण्डावलीभिरप्यपह्नुतः शम्भुशेखरसेवानिवृत्तः सरभसमितोऽभ्युपेतः । कथमियमग्रतो वर्णावली । वाचयति ।

विद्वान् दारसखः परं परिणतो नीवारमुष्टिम्पचः
सत्यध्याननिधिर्दधत् प्रहरणं होमार्जुनीच्छेतवे ।
रे दुःक्षत्रिय ! किं त्वया मम पिता शान्तो मया पुत्रवान्
नीतः कीर्त्यवशेषतां तदिह ते धिग्धिक्सहस्रं भुजान् ३५ च

---

परमेश्वरेण शम्भुना उपदिष्टः धर्मः यस्य तादृशः । सज्जीकृतं कार्मुकस्य कर्म येन तथाविधः । परशुधारायाः ज्योतिर्विजृम्भणेन तेजःप्रकाशेन डामरः समुज्ज्वलः । समरेण संग्रामव्यापारेण परितोषिता अमरा येन तादृशः । सकलैः आरण्यकजनैः वन्यैः लोकैः निवेदितः विज्ञापितः वृत्तान्तः अर्जुनकृतपितृनिधनवृत्तरूपः यस्मै तथाभूतः । कृतान्तः यमः । शिखण्डिनः पुच्छप्रान्तः केतवः यासां तथोक्ताभिः काण्डावलीभिः शरश्रेणिभिः अपह्नुतः आच्छन्नः । शम्भुशेखरस्य सेवाया निवृत्तः सरभसं सवेगम् । अभ्युपेतः उपस्थितः ।

(च) विद्वानिति । रे दुःक्षत्रिय ! विद्वान् ज्ञानी दारसखः सस्त्रीकः परम् अत्यर्थं परिणतः वृद्धः नीवारमुष्टिम्पचः नीवारधान्यमुष्टिजीवीत्यर्थः सत्यस्य ध्यानस्य च निधिः आश्रयः मया पुत्रवान् मत्पुत्रकः मम शान्तः शमगुणरतः पिता होमार्जुनीच्छेतवे होमधेनुरक्षणार्थं प्रहरणम् अस्त्रं दधत् त्वया कीर्त्यवशेषतां नीतः निहत इत्यर्थः तत् तस्मात् इह संसारे ते तव सहस्रं भुजान् धिक् धिक् । शार्दूलविक्रीडितं वृत्तम् ।

मातुः प्रहारत्रयमाहितं मे
विनापराधादिह हैहयेन।
निःक्षत्रियां त्वां विनिहत्य तेन
त्रिःसप्तकृत्वो जगतीं करोमि ॥ २६ ॥ (क)

भो भो (ख) निरवद्यवाचस्तपोधनाः! किं मम कोप-
प्रशमं परिमार्गध्वं तदस्मिन् परवान् वर्त्ते।

सा सूतिश्च्यवनान्वये व्रतविधिः सोऽयं च वैखानस-
स्ता एताश्च गुरोरनङ्गदहनात् संस्कारशुद्धाः क्रियाः।
तत्त्वज्ञानमिदं च यत्किल दया भूतेषु धर्मः परः
सर्वं तत् परिहृत्य मादृशजनः क्रोधानलो जृम्भते ॥२७॥ (ग)

---

(क) मातुरिति। इह हैहयेन अर्जुनेन अपराधात् विना मे मातुः प्रहारत्रयं त्रयः प्रहाराः आहितं हत्वा पितरं निहत्य मातरि त्रिः प्रहृतमित्यर्थः। तेन हेतुना त्वां विनिहत्य जगतीं पृथ्वीं त्रिःसप्तकृत्वः एकविंशतिवारं निःक्षत्रियां करोमि। उपजाति-वृत्तम्।

(ख) निरवद्यवाचः अनिन्द्यवचनाः। कोपस्य प्रशमं प्रशान्तिं परिमार्गध्वं प्रार्थयध्वं? शान्तकोपो भवेति भवद्भिरुच्यते इति भावः। अस्मिन् विषये अहं परवान् पराधीनः वर्त्ते भवामि नाहं भवतां वाचः स्पृशामीत्यर्थः।

(ग) सेति। च्यवनस्य भार्गवस्य अन्वये वंशे सा सूतिः उत्पत्तिः ममेति सर्वत्रान्वेति। सः अयं वैखानसः तापसोचितः विधिः अनुष्ठानम्। गुरोः अनङ्गदहनात् हरात् ता एताः संस्कारेण विद्याध्यानेन शुद्धाः पवित्राः क्रियाः अनुष्ठानानि। इदं यत् तत्त्वज्ञानं, यच्च भूतेषु प्राणिषु दया किल एव परो धर्मः। तत् सर्वं परिहृत्य

मातलिः। (घ) सत्यसङ्गरः परशुरामः।

ज्यावल्लीवलयस्थशेखरसकलसुहृद्दीनविज्ञापनायां
दत्त्वा यः कर्णमूले यदुत चिरतरं शिक्षतां राक्षसेन्द्रम्।
सोऽपि क्ष्मास्कन्धबन्धत्रुटितभुजतरुर्भार्गवेणैव रोषात्
कीर्त्तिस्तम्भोपमश्रीः परशुविहृतिभिर्द्राक्कृतः कार्त्तवीर्य्यः॥ ३८ (ङ)

सौदामिनी। सच्चं परसुरामो भअवदो भग्गस्स सिस्सो किं उण भैरवरूवधारिणो ण उण सदासिवस्स कहं अण्णधा से भुअदण्डखण्डणेक्कमल्ला परक्कमारम्भा। (१६)

दशरथः।

---

(१६) सत्यं परशुरामो भगवतो भर्गस्य शिष्यः किं पुनर्भैरवरूपधारिणो न पुनः सदाशिवस्य कथमन्यथाऽस्य भुजदण्डखण्डनैकमल्लाः पराक्रमारम्भाः।

---

त्यक्त्वा पराभूय इत्यर्थः मातृवधेन प्रहारेण जनितः क्रोधानलः क्रोधाग्निः जृम्भते वर्द्धते। शार्दूलविक्रीडितं वृत्तम्।

(घ) सत्यसङ्गरः सत्यप्रतिज्ञः। यत् प्रतिजानीते तत् करोतीत्यर्थः।

(ङ) ज्येति। यः कार्त्तवीर्य्यः ज्या एव वल्ली लता तया वलयी कृतः शेखरः यस्य सकलाः सुहृदः बान्धवाः पुलस्त्यादयः तेषां दीना या विज्ञापना कातरोक्तिरित्यर्थः तस्यां कर्णं दत्त्वा राक्षसेन्द्रस्य सुहृद्-वचांसि श्रुत्वेत्यर्थः चिरतरं दीर्घकालं राक्षसेन्द्रं रावणं शिक्षतां शिक्षो-पयुक्तं वचनमित्यर्थः अये रावण मा पुनरेवं कुर्य्या इत्येवं शिक्षावाक्य-मुक्तवानित्यर्थः यदिति इत्यपूरणार्थमव्ययम् उतेति इत्यर्थसम्बोधन-द्योतकमव्ययम्। कीर्त्तिस्तम्भोपमा श्रीः सम्पद् यस्य तथाभूतः सोऽपि एव कार्त्तवीर्य्यः भार्गवेण रोषात् परशुविहृतिभिः कुठार-

एष त्रिःसप्तकृत्वस्त्रिभुवनतिलको नाशकः क्षत्रियाणां
तावद्धा भूतधात्र्याः क्रतुषु गुणवते काश्यपाय प्रदाता।
स्नाता क्षत्रास्रवापीष्वतनुषु बहुशः क्रोधवह्निप्रशान्त्यै (च)
पित्रोः किञ्च प्रवीरः सपदि वितरिता तन्निवापाञ्जलीनाम् ॥३९॥

पुरोऽवलोक्य। अहो! भार्गवपुङ्गवस्य पराक्रमातिशयो यदियं दशा वर्त्तते महीपालानाम्। तथाहि।

याचन्ते गृहिणीमुखैर्नृपतयः स्वप्राणभिक्षामिमे
वन्दन्तश्चरणाग्रयोर्निपतिताः कण्ठे कुठारान् परे।
लीलादर्पणपाणयो विरचितस्त्रीवेशमेते मताः
किञ्चान्ये विगलन्ति चीवरभृतो ह्यावेदिकाध्यायिनः ॥४०॥(छ)

---

प्रहारैः आकण्ठकण्ठात् त्रुटिताः छिन्ना भुजा एव तरवः यस्य तादृशः द्राक् झटिति गतः। स्रग्धरावृत्तम्।

(च) एष इति। त्रिभुवनतिलकः प्रवीरः एष भार्गवः त्रिःसप्तकृत्वः एकविंशतिवारं क्षत्रियाणां नाशकः निहन्ता क्रतुषु यज्ञेषु गुणवते विदुषे कश्यपाय भूतधात्र्याः पृथिव्याः तावत् प्रदाता दाता बहुशः। बहुशः वारंवारं उत्कटस्य क्रोधवह्नेः प्रशान्तये उपशमाय अतनुषु विस्तृतासु क्षतानां क्षत्रियाणां असृग्वापीषु रुधिरदीर्घिकासु स्नाता। किञ्च सपदि द्रुतं क्षत्रवधानन्तरमेव पित्रोः मातापित्रोः पितरावुद्दिश्येत्यर्थः तामेव क्षतरुधिराण्येव निवापाञ्जलयः अञ्जलि-पूर्णतर्पणजलानि तेषां वितरिता प्रदाता। स्रग्धरावृत्तम्।

(छ) याचन्त इति। इमे नृपतयः गृहिणीनां राज्ञीनां मुखैः स्वप्राणभिक्षां याचन्ते। भार्गवमिति शेषः। परे नृपाः भार्गवस्य कण्ठे स्थितान् कुठारान् वन्दन्तः स्तुवन्तः सन्तः चरणाग्रयोः भार्गवस्येति शेषः निपतिताः। एते क्षत्रियाः विरचितः कृतः स्त्रीवेशः यैस्ते तद्वयसा तथा लीलादर्पणं पाणौ येषां तथाभूताः सन्तः मताः। किञ्च अन्ये राजन्याः

मातलिः । पुलोऽवलोक्य । (ञ) तदिदमतिचरमं चरिता-
द्भुतं परमेश्वरशिष्यस्य परशुरामस्य ।

दत्त्वा पृथ्वीं अजलधिरशनामर्थिने ब्राह्मणाय
स्फारज्योतिःशरविसृतिभिः सिन्धुमुक्ते परान्ते ।
ब्रह्मावासैर् जयपरशुनाश्मिन् समित्काण्डलावः
शिष्यः शम्भोर्विहितवसतिस्तप्यतेऽसौ तपांसि ॥ ४१ ॥ (झ)

दशरथः । किमपरमारम्भपर्यवसानयोरखण्डः (ञ) खण्ड-
परशुशिष्यस्य वीरव्रतनिर्वाहः ।

सौदामिनी । उभअं क्खु एदं अप्पडिहदप्पहावं सुणीमो जं

---

(१७) उभयं खल्वेतदप्रतिहतप्रभावं शृणुमो यच्चीरवल्कोज्झितभावबो-

---

चीवरभृतः कौपीनवन्तः तथा हारिस्थिरायां वेदिकायां शेरते इति
तथाभूताः त्रिमर्गन्ति निपतन्ति शार्दूलविक्रीडितं वृत्तम् ।

( ञ ) अतिचरमं सर्वशेषम् ।

( झ ) दत्त्वेति । असौ शम्भोः शिष्यः भार्गवः अर्थिने याचकाय
ब्राह्मणाय काश्यपाय अजलधिरशनां आसमुद्रामित्यर्थः पृथ्वीं दत्त्वा
स्फाराणि प्रभूतानि ज्योतींषि येषां तादृशैः शरैः या विसृतयः
प्रहाराः ताभिः सिन्धुना मुक्ते शरप्रहारमसहमानेन समुद्रेण परित्यक्ते
इत्यर्थः अस्मिन् परान्ते समुद्रप्रान्ते विहितवसतिः कृतावस्थानः जय
परशुना सरित्कृताखण्डलावः यमकाण्डसमुच्छेदी सन् ब्रह्मावासैः
ऋक्षत्रयैः तपांसि तप्यते चरति । मन्दाक्रान्ता वृत्तम् ।

( ञ ) किमपरम् अपरम् अन्यत् किं वक्तव्यमिति शेषः ।
आरम्भपर्यवसानयोः आद्यन्तयोः अखण्डः अस्खलितः समभावा-
पन्न इत्यर्थः खण्डपरशुशिष्यस्य भार्गवस्य वीरव्रतस्य वीराचारस्य
निर्वाहः निष्पत्तिः ।

(ट) णीललोहिदणिडाललोअणुप्पासी भअवं हुदवहो जं- चक्कोसकोअण्डरहस्सोवदेसणीप्फंदप्पज्जलिदप्पदावप्पसरो परसुरामोत्ति (१७)।

दशरथः। समन्तादवलोक्य। आर्य्य! मातले! (ठ) महावीरचरितावलोकनपरायत्ते चित्ते न किञ्चित्प्रतिभाति। तत्कथय कतमः पुनरयमन्तरिक्षोद्देशो यत्र वर्त्तामहे।

मातलिः। (ड) पुरन्दरनगरीतः सप्तमो मर्त्त्यमण्डलतः प्रथम एष वायुस्कन्धः किं पुनरदूरवर्त्ति वसुधातलादस्मद्रथगतिः। रथवेगनाटितकेन। सेयं विदेहनगरी तदिदं च विदेहपतिमन्दिरं तदवतीर्य्य महाराजदशरथो मामनु-

---

॰चनोल्लासी भगवान् हुतवहो यस्त्र्यक्षीयकोदण्डरहस्योपदेशनिस्यन्दप्रज्व- लितप्रतापप्रसरः परशुराम इति।

---

(ट) नीललोहितस्य हरस्य भाले ललाटे यत् लोचनं तस्मात् उल्लसति उद्गच्छतीति तथोक्तः। हुतवहः अग्निः। त्र्यक्षीयस्य शम्भोः कोदण्डरहस्यस्य धनुर्वेदस्य उपदेशेन निस्यन्दं निश्चलं दृढ- मित्यर्थः यथा तथा प्रज्वलितः प्रतापस्य प्रसरः गतिः यस्य तथाभूतः।

(ठ) महावीरेति महावीरस्य भार्गवस्य चरितावलोकनेन परा- यत्ते पराधीने समासक्ते इत्यर्थः। वर्त्तामहे उपतिष्ठामहे।

(ड) पुरन्दरनगरीतः अमरावत्याः। मर्त्त्यमण्डलतः मनुष्य- लोकात्। वायुस्कन्धः वायोः पवनस्य स्कन्धः स्थानभेदः। विदेह- नगरी मिथिला। विदेहपतिमन्दिरं मैथिलमन्दिरम्। मिथिलेश्वरस्य प्रतीहारः दौवारिकः। अभ्युत्थितः अभिगमनार्थं प्रत्युद्गमनार्थम् उत्थितः।

ज्ञानात् स्वर्गगमनाय सौदामिनीं च । अयं च मिथिलेश्वर-प्रतीहारः प्रत्यभिज्ञाय भवन्तमभ्युत्थितः ।

इन्द्ररथः । अवतीर्य । आर्य्य ! मातले ! भद्रे ! सौदामिनि ! (ठ) साधयतं युवामिति ।

प्रविश्य प्रतीहारः प्रणम्य च । इत इतोऽभ्येतु महाराज-इन्द्ररथः ।

इन्द्ररथः । परिक्रम्य । हंहो सीरध्वजदौवारिक ! अपि (ण) वृत्तविवाहमङ्गलो रामभद्रः ? ।

प्रतीहारः । न केवलं वृत्तविवाहमङ्गलः प्रस्थानोन्मुखश्च वर्त्तते तदर्थं च महाराजसीरध्वजो विश्वामित्रो रामभद्र-लक्ष्मणौ सीताहेमप्रभे च तमिममास्थानमण्डपमधिति-ष्ठन्ति ।

इन्द्ररथः । हृदय ! किमुत्ताम्यसे (त) सवधूटीकं राम-भद्रं पश्य । इति प्रविशतः ।

ततः प्रविशन्ति उपविष्टा यथानिर्दिष्टाः सीरध्वजादयः ।

शतानन्दः सीतायाश्चिबुकमुन्नमय्य ।

(थ) यस्यास्ते जननी स्वयं क्षितिरियं योगीश्वरोऽयं पिता
मातर्मैथिलि ! शिष्यते कथय किं तस्याः सुजातेस्तव ।

---

(ठ) साधयतं गच्छतम् ।

(ण) वृत्तेति । वृत्तं सम्पन्नं विवाहमङ्गलं यस्य तथाभूतः ।

(त) सवधूटीकं वधूटी नवोढ़ा वधूः तया सहितम् ।

(थ) यस्या इति । हे मातः मैथिलि ! स्वयम् इयं क्षितिः पृथिवी यस्यास्ते तव जननी, तथा अयं योगीश्वरो जनकः पिता ।

स्नेहात् केवलमुच्यते पुनरिदं स्त्रीणां पतिर्दैवतं
तद्भूयास्त्वमपास्य धर्ममपरं छायेव रामानुगा ॥ ४२ ॥ (थ)

सीता लज्जते ।

जनकः । वत्से ! वैदेहि ! (द) यदभिधानीयं तदभिहितं कुलगुरुणाऽङ्गिरसेन तथाप्यपत्यस्नेह एव मां वाचालयति ।

अभ्युत्थानमुपागते गृहपतौ तद्भाषणे नम्रता
तत्पादार्पितदृष्टिरासनविधिस्तस्योपचर्या स्वयम् ।
सुप्ते तत्र शयीत तत्प्रथमतो जह्याच्च शय्यामिति
प्राच्यैः पुत्रि ! निवेदिताः कुलवधूसिद्धान्तधर्मा अमी ॥ ४३ ॥ (ध)

शतानन्दः । जानकि ! इदं च (न) प्रसङ्गानुगतं शिक्षसे ।

---

तस्याः सुजातेः सत्कुलोत्पन्नायाः तव किं शिक्ष्यते यद् । केवलं स्नेहात् पुनः इदमुच्यते, पतिः स्त्रीणां दैवतं देवस्वरूपः तत् तस्मात् त्वम् अपरं धर्मम् अपास्य विहाय छाया इव रामानुगा रामस्य अनुगामिनी भूयाः । शार्दूलविक्रीडितं वृत्तम् ।

(द) अभिधानीयं वक्तव्यम् ।

(ध) अभ्युत्थानमिति । हे पुत्रि ! गृहपतौ गृहस्वामिनि उपागते उपस्थिते अभ्युत्थानं, तस्य गृहपतेः भाषणे उक्तौ नम्रता नम्रीभावेन श्रवणम् । आसनविधिः अवस्थाननियमः तस्य गृहपतेः पादयोः अर्पिता दृष्टिः यस्मिन् तथाभूतः पतिपदे दृष्टिं निधाय अवस्थातव्यमित्यर्थः । स्वयं तस्य गृहपतेः स्वामिनः उपचर्या, परिचर्या, तत्र स्वामिनि सुप्ते सति शयीत स्वयमिति शेषः । तस्य पत्युः प्रथमतः उत्थानात् प्राक् इत्यर्थः शय्यां जह्यात् त्यजेत् इति एवंप्रकाराः अमी कुलवधूनां सिद्धान्तधर्माः प्राच्यैः पूर्वदेशीयैः पण्डितैः निवेदिताः कथिताः । शार्दूलविक्रीडितं वृत्तम् ।

(न) प्रसङ्गानुगतं प्रस्तावानुरूपम् ।

निर्व्याजा दयिते ननान्दृषु नता श्वश्रूषु भक्ता भव
स्निग्धा बन्धुषु वत्सला परिजने स्मेरा सपत्नीष्वपि ।
पत्युर्मित्रजने सनर्मवचना खिन्ना च तद्द्वेषिषु
स्त्रीणां संवननं नतभ्रु ! तदिदं श्रेष्ठौषधं भर्तृषु ॥४४॥ (प)

सीता रोदिति ।

जनकः । निःश्वस्य ।

सीते । संवृणु बाष्पवारि भवती मुग्धा ममेदं मनो
व्युत्पत्त्याऽपि हि याज्ञवल्क्यगुरुतः संसारभागे स्थितम् ।
किञ्चान्यत्कथयामि मे हृदयतो धीमुद्रया प्रोषितं
विश्वामित्रमहामुनेरपि पुरो यल्लोचने साश्रुणी ॥४५॥ (फ)

---

(प) निर्व्याजा इति । हे नतभ्रु ! दयिते प्रिये निर्व्याजा कापट्यरहिता, ननान्दृषु नता विनयवती, श्वश्रूषु भक्ता भक्तिमती, बन्धुषु स्वामिनः भ्रात्रादिषु स्निग्धा स्नेहवती, परिजने परिवारे वत्सला सद्भाववती, सपत्नीषु अपि स्मेरा हास्यमुखी, पत्युः मित्रजने सुहृदि सनर्मवचना सपरिहासभाषिणी, तथा तस्य पत्युः द्वेषिषु शत्रुषु खिन्ना विद्वेषवती च भव, तत् प्रसिद्धम् इदं श्रेष्ठौषधं स्त्रीणां भर्तृषु संवननं वशीकरणम् । उक्तरीत्यनुसारिण्यः नार्यः भर्तृकुलानि वश्यतां नयन्तीति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(फ) सीते इति । हे सीते ! बाष्पवारि नयनजलं संवृणु, भवती त्वं मुग्धा बालिका, मम इदं मनः याज्ञवल्क्यगुरुतः याज्ञवल्क्यात् गुरोः व्युत्पत्त्या ब्रह्मज्ञानेनापि संसारभागे संसारांशे स्थितम् । किञ्च अन्यत् अपरं कथयामि, लोचने नेत्रे ममेति शेषः विश्वामित्रमहा-मुनेः पुरः अग्रतः अपि यत् साश्रुणी अश्रुपूर्णे भवत इति शेषः अतः धीमुद्रया लज्जारूपेण सङ्कोचेन कर्त्री मे मम हृदयतः चित्तात् प्रोषितं गतं प्रपूर्वात् वसतेर्भावे क्तप्रत्ययः । तत्त्वज्ञानिनोऽपि मम

जनानन्दः । कथमिव भगवान् कुशिकनन्दनोऽपि (ब) व्रीडाबीजं यस्यास्य ।

सांसारिकैर्वचोभिस्ते सीताविश्लेषजन्मभिः ।
द्रवतीव मनो बाष्पैर्विश्वामित्रमुनेरपि ॥ ४६ ॥ (भ)

रामः । स्वगतम् । कथमियं रोदिति । विभाव्य ।

बाष्पोत्पीडः श्लथपुटतया तावदन्तर्निरुद्ध-
स्तूर्णोत्तीर्णस्तरलनयनस्तारकाभ्यां निपीतः ।
सान्द्रस्यन्दः सपदि चपलैः पक्ष्मभिः प्रान्तकीर्णः
पूर्णस्रोतास्तदनु सुदृशा लोठितोऽवक्रकण्ठम् ॥ ४७ ॥ (म)

---

त्वदर्थम् अश्रुपातेन महामुनिसकाशे लज्जेति भावः । शार्दूलविक्रीडितं वृत्तम् ।

( ब ) व्रीडाबीजं लज्जास्पदम् ।

( भ ) सांसारिकैरिति । राजन् ! ते तव सांसारिकैः सीताविश्लेषजन्मभिः जानकीविरहजनितैः वचोभिः करणभूतैः विश्वामित्रमुनेरपि किं वक्तव्यमन्येषामित्यपिशब्दार्थः । मनः बाष्पैः नेत्रजलैः द्रवतीव गलतीव । पथ्यावक्त्रं वृत्तम् ।

( म ) बाष्पोत्पीड इति सुदृशा सुनयनया मैथिल्या अन्तर्निरुद्ध-स्तावत् बाष्पोत्पीडः अश्रुप्रकरः श्लथपुटतया शिथिलावरणतया तूर्णम् उत्तीर्णः बहिर्निर्गन्तुं प्रवृत्त इत्यर्थः अतएव तरले चपले नयने यस्यास् तथाभूतः ऽपरताभ्यां हार्य्यैः तारकाभ्यां कनीनिकाभ्यां निपीतः निःशेषं पीतः कवलितः, सपदि झटिति सान्द्रस्यन्दः घनद्रुतः अतएव चपलैः पक्ष्मभिः नेत्रलोमभिः प्रान्तेषु कीर्णः प्रसृतः तदनु तत्पश्चात् पूर्णस्रोताः स्रोतस्वान् सन् अवक्रकण्ठम् अकुटिलकण्ठदेशं लोठितः वर्जितः मन्दाक्रान्तावृत्तम् ।

विचिन्त्य। (य) वदन्त्यपि किमपि जानकी समाधाय आनन्दयति मधुरस्य हि मानुषस्य प्रकृतिरेषा। यद्यथा कथमपि रमयति।

सीता। ताद! उम्मिलामण्डवीसुदकित्तीहिं समं गमिस्सं (१८)।

विश्वामित्रः। भो! ता अपि यास्यन्ति।

हेमप्रभा। तव सिक्खिदं भअवदा किंपि (१९)।

शतानन्दः। अति हि मुग्धा जानकी।

प्रतीहारः।

देवो दशरथो राजन्! संबन्धी ते समागतः।
अतश्चतुरथेनायमभ्युत्थानेन पूज्यताम्॥ ४८॥

सर्वे सहसा समुत्थाय यथोक्तं कुर्वन्त्युपविशन्ति च।

जनकः। पुरन्दरस्य सखे! संबन्धिन्! दशरथ!
मया विना विवाहोऽभूदिति चेतसि मा कृथाः।
यदासीत् सन्निधौ तत्र स्वयं कुशिकनन्दनः॥ ४९॥

नेपथ्ये।

उच्चण्डाचन्द्रचूडालिकफलकतटालङ्कृतेरूर्ध्वनेत्रात्
त्रैलोक्याकाण्डरोगज्वरजननगुरोर्मे विहतुं चलस्य।

(१८) तात! ऊर्मिलामाण्डवीश्रुतकीर्त्तिभिः समं गमिष्यामि।
(१९) तव शिक्षितं भगवता किमपि।

(य) वदन्त्यपीति। जानकी किमपि समाधाय मनसि कृत्वा वदन्ती अपि आनन्दयति, हि यतः मधुरस्य मनोहराकृतेः मानुषस्य एषा प्रकृतिः, यत् यथाकथमपि यत् कुत्राप्यवस्थायामित्यर्थः अपि रमयति।

(र). उच्चण्डादिति। कोऽयं त्रैलोक्यस्य त्रिभुवनस्य अकाण्डे

उत्तप्तस्वर्णचूर्णप्रतिकृति विकिरन् दिङ्निकुञ्जेषु तेजः
कोऽयं वेगादुपेतानिव सरति दृशां वर्त्मनो वह्निवत्यः ५० (क)

पुनस्तत्रैव ।

यत्तूणे परशुर्धनुर्गुणनतं पाणौ शराः पञ्चषाः
कृष्णैणाजिनमक्षसूत्रवलयं यज्ञोपवीतं जटाः ।
तन्नूनं जमदग्निजो मुनिरसौ रोषादुपेत्यागत-
स्तुल्यं मूर्त्तिमिवैष बिभ्रदुभयीं वीरस्य शान्तस्य च ५१(ख)

जनकदशरथौ । भगवन्नाङ्गिरस ! सत्कातिथेयो भव भार्गवोऽतिथिर्भवति ।

शतानन्दः । अस्त्यतिथिरयं किं पुनः समरश्राद्धकर्मणि ।

रामः । वत्स ! लक्ष्मण ! निखिलवैखानसवन्द्यो वीर-

---

हरति संहरतीति रोगः स एव ज्वरः तस्य जनने उत्पादने गुरुः तस्य जगत्संहारिण इत्यर्थः मखद्वेषस्य जगन्मण्डलस्य मखिद्विषः प्रमथितुः शङ्करस्य इत्यर्थः उज्ज्वलात् अत्युग्रात् चन्द्रः चूडायां यस्य तादृशस्य अधिकफलकतटस्य ललाटपट्टस्य अलङ्कृतेः अलङ्कारात् कर्त्त-नेत्रात् उत्थः उद्गतः उत्तप्तानां स्वर्णचूर्णानां प्रतिकृति प्रतिरूपं तेजः दिश एव निकुञ्जास्तेषु विकिरन् विक्षिपन् अतएव दृशां चक्षुषां वर्त्मनः प्रतिहन्ता दुर्द्दर्श इत्यर्थः वपुष्मान् शरीरी वह्निरिव अग्निरिव वेगात् सरति आगच्छति ? स्रग्धरावृत्तम् ।

( ख ) यदिति । यत यस्मात् तूणे परशुः धनुः गुणेन मौर्व्या नतं पाणौ पञ्चषाः पञ्च षट् इत्यर्थः शराः, वीरलक्षणान्येतानि । कृष्णैणाजिनं कृष्णमृगचर्म, अक्षसूत्रवलयं रुद्राक्षमाला वलयीकृता, यज्ञोपवीतं यज्ञसूत्रं तथा जटाः, शान्तलक्षणान्येतानि । तत् तस्मात् वीरस्य शान्तस्य च उभयीं मूर्त्तिं तुल्यं बिभ्रत् एष जम-

ग्रामणीः (व) श्रवणपरम्परोत्पादितकौतुकातङ्कमुद्रो भगवान् भार्गवो दिष्ट्या द्रष्टव्यः ।

लक्ष्मणः । आर्ये ! न केवलं द्रष्टव्योऽनुभवितव्यश्च ।

रामः । के वयं भार्गवानुभवे ।

सीता । अपवार्य । पिअसहि ! हेमप्पहे ! चत्तीसखिस्तो खत्तिअअन्तअरो अ परसुरामोत्ति सुणिअ (श) पज्ञविद्कोदूहलसङ्गो पज्जलिदसज्झसरसपरवसा वट्टामि (२०) ।

हेमप्रभा । जुज्जदि पप्फुल्लकोदूहलत्तणं परसुरामदंसणेण उण ससज्झसत्तणं च । भग्गधणुद्दण्डचण्डचरिदस्स पुरदो रामअन्दस्स (२१) ।

---

(२०) प्रियसखि ! हेमप्रभे ! वज्रोमशिष्यः क्षत्रियान्तकरश्च परशुराम इति श्रुत्वा पल्लवितकौतूहलश्रद्धा प्रज्वलितसाध्वसरसपरवशा वर्त्ते ।

(२१) युज्यते प्रफुल्लकौतूहलत्वं परशुरामदर्शनेन पुनः ससाध्वसत्वं भग्नधनुर्दण्डचण्डचरितस्य पुरतो रामचन्द्रस्य ।

---

दम्भितः सुनीमां इपा इन्द्रः भार्गवः रोषात् अधराः उपैति नूनं । सन्धाव्यते इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

(व) श्रवणेति श्रवणपरम्परया कर्णपरम्परया उत्पादिता जनिता कौतुकस्य आतङ्कायाः भयस्य च मुद्रा आविर्भावो येन तथाभूतः ।

(श) पल्लवितेति पल्लविता सञ्जातपल्लवा कौतूहलश्रद्धा कौतुकाभिलाषा यस्याः तादृशी । प्रज्वलितस्य साध्वसरसस्य भयस्य परवशा पराधीना कौतुकभीतिपरतन्त्रा इत्यर्थः ।

(ष) भग्नस्य त्रुटस्य धनुर्दण्डे चण्डं चरितं यस्य तथाभूतस्य ।

ततः प्रविशति सरोषसम्भ्रमो जामदग्न्यः ।

जामदग्न्यः । भोः ! (स) किमसावकाण्डचण्डो निबिडझाङ्कारपूरितरोदसीकन्दरोदरमेदुरो निर्मदनिस्यन्दः । कर्णं दत्त्वा आकर्ण्य । किं ब्रूथ ? दाशरथिना रामेण श्लाघ्यवीर्यं धनुरारोपितमाकृष्टं भग्नं च तदुद्भवः कोदण्डकोटरकुटीरकटुरसो स्फुटष्टङ्कारः । सविषादम् ।

पौलस्त्यस्य तिरस्कृतामरपतेस्ते बाहवो विंशति-
दम्भोलिव्रणगुच्छलाञ्छनभृतो यस्मिन् गताः कुण्ठताम् ।
तद्भग्नं यदि कार्मुकं भगवतो रामेण चूडावता
धिग्धिङ्मां तदिदं नमः परशवे स्वस्त्यस्तु रुद्राय च ॥५२॥(ह)

---

(स) अकाण्डचण्डः सहसा प्रचण्डः । निबिडेन घनेन झाङ्कारेण ध्वनिविशेषेण पूरितं रोदस्योः द्यावापृथिव्योः कन्दरोदरं गुहाभ्यन्तरं येन तथाभूतः मेदुरः गम्भीरश्च निर्मदस्य मदस्य निस्यन्दः निर्गमः । श्लाघ्यवीर्यं शैवम् । कोदण्डं धनुः तस्य कोटरकुटीरे कटुः तीव्रः स्फुटः टङ्कः पाषाणदारणः तस्मात् तज्जनितशब्दादपीत्यर्थः शोभनः उत्कट इत्यर्थः ।

(ह) पौलस्त्यस्येति । तिरस्कृतः अमरपतिः देवेन्द्रः येन तादृशस्य दम्भोलेः कुलिशस्य यः व्रणानां प्रहारक्षतानां गुच्छस्य समूहस्य लाञ्छनं चिह्नं बिभर्तीति तथोक्तस्य पौलस्त्यस्य रावणस्य ते प्रसिद्धा विंशतिः बाहवः यस्मिन् धनुषि कुण्ठतां गताः अशक्ता इति भावः, यदि चूडावता शिखण्डकधारिणा शिशुनेति भावः रामेण भगवतः देवदेवस्य तत् कार्मुकं भग्नं तदा मां धिक् धिक् । परशवे मत्कुठाराय स्वस्ति अस्तु, रुद्राय गुरवे तदिदं नमोऽस्तु च । शार्दूलविक्रीडितं वृत्तम् ।

विचिन्त्य । आत्मानं निर्दिशन् । सत्यसङ्गरस्त्वेष परशुरामः । तन्नैकवारं गुरुष्वपि प्रतिज्ञातमर्थं श्लथयति । यदित्थं कथयन्ति (च) गुणदोषयोर्युगपदापततोर्गरीयसि प्रवर्तितव्यम् ।

अञ्जलिं बद्ध्वा आकाशतः ।

भोः सर्वे च्यवनादयः ! शृणुत मे रामस्य विज्ञापना-
माज्ञां वो न च लङ्घयामि किमु तद्भर्गस्य भग्नं धनुः ।
क्षुण्णक्षत्रियमेकविंशतिमतो वारान् विधातुर्जगद्
द्वाविंशोऽपि ममैष सम्प्रति पुनर्जातः प्रतिज्ञाक्षयः ॥५३॥ (क)

सकरुणं परिक्रम्य । धनुर्भङ्गदर्शनं नाटयित्वा । हा (ख) शङ्करकरान्दोलनदुर्ललित ! हा त्रिपुरदहनडम्बरहठकर्मकर्मठ !

---

(च) गुणदोषयोर्द्वयोः युगपत् समकालम् आपततोः आगच्छतोः मध्ये गरीयसि प्रधाने प्रवर्तितव्यं यत्नः कर्त्तव्यः प्रधानापेक्षया स्थितिरिति नियमादिति भावः ।

(क) भोरिति भोः सर्व्वे च्यवनादयः पूर्वपुरुषाः ! रामस्य मे मम विज्ञापनां शृणुत यूयमिति शेषः । वः युष्माकम् आज्ञां हिंसानिवृत्तिविषयामिति भावः न च लङ्घयामि भर्गस्य तत् प्रसिद्धं धनुः किन्तु कथं भग्नं रामेणेति शेषः । अतः अस्मात् कारणात् एकविंशतिं वारान् जगत् क्षुण्णाः क्षत्रिया यत्र तथाभूतं विधातुः कर्त्तुः मम सम्प्रति एष द्वाविंशोऽपि प्रतिज्ञाक्षयः क्षत्रध्वंसनप्रतिज्ञाक्षयोत्सवः पुनः जातः उपस्थितः । इमां प्रतिज्ञाक्षयोर्ध्वं भवतामाज्ञां पालयिष्यामीति वाक्यार्थः । शार्दूलविक्रीडितं वृत्तम् ।

(ख) शङ्करेति शङ्करस्य करेण यत् आन्दोलनम् आस्फालनं तेन दुर्ललितः सलीलावान् तत्सम्बुद्धौ । त्रिपुरदहनमेव डम्बरहठकर्म प्रचण्डाकृतिकर्म्यापारः तत्र कर्मठः निपुणः तत्सम्बुद्धौ । गोर्वा-

हा गीर्वाणसारपरमाणुनिर्माण ! हा दुर्जनजनकसद्म-दुर्निक्षेप ! हा नतसकलनाक ! पिनाक ! त्वमपोद्दश्य दृश्यसे तदिदमापतितं लूतातन्तुना गन्धगजालानसन्दानं सूचीतुण्डेन वज्रमणिभेदः ।

तथाहि ।

पार्वत्या निजभर्त्तुरायुधमिति प्रेम्णा यदभ्यर्चितं
निर्मोकेण च वासुकेर्निचुलितं यत् सादरं नन्दिना ।
निर्दग्धत्रिपुरेन्धनं धनुरिदं तन् मन्मथोन्माथिनः
शिष्ये सत्यपि रामनामनि मयि द्वेधा कृतं दृश्यते ॥५४॥ (ग

---

णानां देवानां सारस्य बलस्य परमाणुभिः निर्माणं यस्य तत्सम्बुद्धौ । दुष्टो जनः दुर्जनः स चासौ जनकः मैथिलश्चेति दुर्जनजनकः निक्षेपनाशानुमोदनात् दुर्जनत्वं मैथिलस्येति भावः । तस्य सद्मनि गृहे दुर्निक्षेपः अस्थाननिक्षेपः इत्यर्थः तत्सम्बुद्धौ । नताः सकला नाकाः स्वर्गाः तद्वासिन इत्यर्थः यस्य तत्सम्बुद्धौ यत् दृष्ट्वा सर्वे देवा नमन्तीति भावः । आपतितम् उपस्थितं लूतातन्तुना क्षुद्रकीटविशेष-निःसृतजालविशेषेण गन्धगजस्य मत्तहस्तिनः आलानसन्दानं बन्धनस्तम्भवेष्टनं तथा सूचीतुण्डेन सूच्यग्रेण वज्रस्य मणेः हीरकस्य भेदः छिद्रीकरणम् ।

(ग) पार्वत्येति । पार्वत्या देव्या निजस्य भर्त्तुः हरस्य आयुधम् अस्त्रं इति हेतोः यत् धनुः प्रेम्णा स्नेहेन अभ्यर्चितं समूजितम् । नन्दिना वासुकेः नागराजस्य निर्मोकेण यत् सादरं सयत्नं निचुलितम् आच्छादितम् । तदिदं निःशेषेण दग्धं भस्मीकृतं त्रिपुरमेव इन्धनं काष्ठं येन तथाभूतं मन्मथोन्माथिनः मदनारेः हरस्य धनुः रामनामनि शिष्ये मयि सत्यपि विद्यमानेऽपि द्वेधा कृतं द्विखण्डं कृतं दृश्यते । शार्दूलविक्रीडितं वृत्तम् ।

(सक्रोधगर्वं समन्तादवलोक्य ।) भो भोः ! प्रोषितजामदग्न्यं जगद्वीरं मन्यमाना वीरमन्याः ! (घ) अवधानमवधत्त ।

चूडापञ्चकमण्डनः क्व नु शिशुर्बालः क्व चायं मुनिर्
नित्याकुण्ठखुरप्रखण्डितमहत् क्रौञ्चाद्रिगर्भान्तरः ।
तत् सर्वानपि वः स्वयंवरविधौ राज्ञः समेतान् ब्रुवे
रामं रक्षत शक्तिरस्ति यदि वः क्रुद्धः पुनर्भार्गवः ॥५५॥ (ङ)

(कर्णं दत्त्वा आकाशे ।) किं ब्रूथ ? वह्निरिव वह्नेर्भेषजं राम एव रामस्य रक्षिता न परवीर्यरक्षणीयं रघुकुलमिति । (विभाव्य ।) न निजवीर्यरक्षणीयं नापरवीर्यरक्षणीयं रघुकुलं नीललोहितान्तेवासिनि (च) रामेऽभियोक्तरि । (विचिन्त्य ।) अहो ! कालपरिपाको यदश्रुतपूर्वाणि वचांसि श्रूयन्ते यदनालोकितचराणि चालोक्यन्ते । (सखेदम् ।) इदं च दुःसहतरं निकारान्तरम् । (हस्तमवधूय ।)

---

(घ) अवधत्त अवधानं कुरुत ।

(ङ) चूडेति । चूडानां पञ्चकं मण्डनं भूषणं यस्य तादृशः क्षत्रियब्रह्मचारिणां पञ्चचूडत्वस्मरणादिति भावः शिशुः बालः दाशरथिः क्व नु कुत्र खलु युज्यते इति शेषः, अयञ्च मुनिः नित्यं सततम् अकुण्ठेन खुरप्रेण अस्त्रविशेषेण खण्डितं विदारितं महत् महत् क्रौञ्चाद्रेः गर्भान्तरम् अभ्यन्तरम् येन तादृशः मुनिः अहमिति शेषः क्व कुत्र युज्यते इति शेषः । तत् तस्मात् स्वयंवरविधौ समेतान् सर्वानपि राज्ञः वः युष्मान् ब्रुवे कथयामि यदि वः युष्माकं शक्तिरस्ति तदा रामं रक्षत भार्गवः पुनः किन्तु क्रुद्धः कुपितः । शार्दूलविक्रीडितं वृत्तम् ।

(च) अभियोक्तरि आक्रामति । अनालोकितचराणि अदृष्टपूर्वाणि । निकारान्तरम् अन्यविधः परिभव इत्यर्थः ।

अद्यापि धिक्किमिव जीवति भार्गवोऽसौ
बाणावलूनगुहवाहनबर्हदामा।
यस्यावमत्य गुरुदत्तमिमं कुठारं
डिम्भोऽपि राम इति नाम यदस्य हर्त्ता॥ ५६॥ (छ)

कथं दृष्ट्वा आकाशे। किं ब्रूथ? केन न वर्णितं दाशरथेः शाङ्करकार्मुकारोपणं को न विस्मितस्तद्गुणेन। साक्षेपम्। किमुक्तं केन न वर्णितम्। इत्यादि पठति। तच्छृणुत भोः!

यः कर्त्ता हरचापदण्डदलने यश्चानुमन्ता ननु
द्रष्टा यश्च परीक्षिता च य इह श्रोता च वक्ता च यः।
सद्यः खण्डितकण्ठपीठवलयः केलिं करिष्यत्ययं
कीलालोल्लसितस्य तस्य परशुर्भर्गप्रसादीकृतः॥ ५७॥ (ज)

---

(छ) अद्येति। अद्यापि असौ भार्गवः किमिव जीवति गर्हितजीवी सन् प्राणान् धारयति, धिक् मामिति शेषः। यत् यस्मात् बाणेन शरेण अवलूनं गुहवाहनस्य कार्त्तिकेयवाहनस्य बर्हदाम पुच्छरूपं माल्यं येन तादृशस्य यस्य अस्य मम गुरुदत्तं गुरुणा हरेण दत्तम् इमं कुठारम् अवमत्य अवज्ञाय डिम्भोऽपि अर्भकोऽपि. रामः राम इति नाम हर्त्ता बालकोऽपि मम नामलोपं कर्त्तुमुद्यत इत्यर्थः। वसन्ततिलकं वृत्तम्।

(ज) य इति। ननु भोः! यः हरस्य चापदण्डस्य धनुर्यष्टेः दलने भङ्गे कर्त्ता, यश्च अनुमन्ता, अनुज्ञाता यश्च द्रष्टा, यश्च परीक्षिता च इह श्रोता, यश्च वक्ता। अयं भर्गेण प्रसादीकृतः परशुः सद्य सपदि कीलालोल्लसितस्य रुधिरोक्षितस्य तस्य तस्य खण्डितानि छिन्नानि कण्ठवलयानि येन तथाभूतः केलिं करिष्यति। शार्दूलविक्रीडितं वृत्तम्।

(झ) सरभसं परिक्रम्य । भो विदेहेश्वरशुद्धान्तसञ्चारिणः ! कुब्जवामनकिरातवर्षवरसौविदल्लाः ! क्व रामो दाशरथिः । नन्वेष भार्गवोऽभ्युपैति ।

लूनक्षत्रियकण्ठमण्डलगलत्कीलालकुल्याभृत-
प्राग्भारेषु सरःसु यस्त्रिषु रुषा चक्रे निवापक्रियाम् ।
श्रुत्वा धूर्जटिचापदण्डदलनं नाम्नश्च सापत्नकं
रामो राममयं स्वयं गुहसहाध्यायी समन्विष्यति ॥५८॥ (ञ)

रामः । वत्स ! लक्ष्मण ! (ट) दूरत्वादविभावितेनापि तारतरेण वचसा सरोषसम्भ्रमो भार्गवो मुनिः प्रतिभाति ।

जामदग्न्यस्तदेव पठति ।

रामः । सरभसमुपसृत्य । भगवन् ! भार्गव ! सदयं प्रसीद (ठ) सदाचार इति रामोऽभिवादयितुकामः ।

---

(झ) सरभसं सवेगम् । विदेहेश्वरस्य शुद्धान्तचारिणः अन्तःपुरवर्त्तिनः । कञ्चुक्यादि । सौविदल्लाः कञ्चुकिनः । सौविदल्लाः कञ्चुकिन इत्यमरः ।

(ञ) लूनेति । यः रुषा क्रोधेन लूनानां कृत्तानां क्षत्रियाणां कण्ठमण्डलेभ्यः गलद्भिः कीलालैः शोणितैः या कुल्या अल्पा सरित् । कुल्याल्पा कृत्रिमा सरिदित्यमरः । तया भृतः प्राग्भारः प्रकृष्टो भारः येषां तादृशेषु त्रिषु सरःसु निवापक्रियां तर्पणविधिं चक्रे कृतवान्, सोऽयं गुहस्य कुमारस्य सहाध्यायी सब्रह्मचारी रामः भार्गवः धूर्जटेः चापदण्डस्य धनुर्दण्डस्य दलनं भञ्जनं नाम्नः राम इति स्वनाम्नः सापत्नकञ्च श्रुत्वा स्वयं रामं दाशरथिं समन्विष्यति मार्गति । शार्दूलविक्रीडितं वृत्तम् ।

(ट) अविभावितेन अनिर्णीतेन तारतरेण उच्चतरेण ।

(ठ) सदाचारः सताम् आचारः शिष्टानुष्ठानम् ।

जामदग्न्यः । (विहस्य) । नाभिवादनप्रसाद्यो रेणुकासूनुः गरीयान् हि गुरुधनुर्भङ्गापराधः । किं न श्रुतम् ।

अपि कालस्य यः कालः कण्ठे कालो महेश्वरः ।
भार्गवस्तस्य शिष्योऽहं निसर्गनिरवग्रहः ॥ ५९ ॥ (ड)

ततश्च ।

मध्ये नरेश्वरसभं रभसेन येन
भुग्नं धनुस्तडिति च त्रुटितं गुरोर्मे ।
रामेऽपि नाम भजतां भुजदण्डयुग्म-
मुद्दामधामनि तदेतदकाण्डचण्डम् ॥ ६० ॥ (ढ)

रामः । (सविनयम्) । केयमत्युक्तिर्भगवतो (ण) मुग्धबुद्धिषु मादृशेषु पुत्रभाण्डेषु पश्यतु हि तपोराशिः ।

बाह्वोर्बलं न कलितं न च कार्मुकस्य
त्र्यम्बकस्य तनिमा तत एष दोषः ।

---

(ड) अपीति । यः कण्ठे कालः नीलकण्ठः महेश्वरः कालस्यापि कालः संहर्त्ता, तस्य शिष्यः अहं निसर्गनिरवग्रहः स्वभावदुर्वारः भार्गवः ।

(ढ) मध्ये इति । येन मध्येनरेश्वरसभं राजसभामध्ये रभसेन वेगेन मे मम गुरोः ईश्वरस्य भुग्नं त्यक्तं नम्रमित्यर्थः धनुः तडिति झटिति त्रुटितं भग्नं चकारः पादपूरणार्थः । तदेवं अकाण्डचण्डम् अतिप्रचण्डं भुजदण्डयुग्मम् उद्दामधामनि अतितेजोयसि रामेऽपि मय्यपीत्यर्थः भजतां नाम, तेन भुजेन मया सह युध्यस्वेति भावः । वसन्ततिलकं वृत्तम् ।

(ण) मुग्धबुद्धिषु मूढमतिषु पुत्रभाण्डेषु पुत्रसदृशेषु ।

(त) बाह्वोरिति । हे परशुराम ! बाह्वोः भुजयोः बलं न

तच्चापस्य परशुराम ! मम क्षमस्व

शिशोश्च दुर्विलसितानि पुरे गुरूणाम् ॥ ६१ ॥ (त)

जामदग्न्यः । किं नाम तपोराशिरहं न शौर्यराशिः । शिशो (थ) रे निदर्शितलाघव ! राघव ! स्ववर्णनापरं सगर्वमभिहितं तदाकर्णय यत्ते करोमि ।

त्रुटितनिबिडनाडीचक्रवालप्रवाल-

प्रसृतरुधिरधाराचर्चितोच्चण्डकण्ठम् ।

मडमडिति मृडानीकान्तचापस्य भङ्क्तुः

परशुरमरवन्द्यः खण्डयत्वद्य मुण्डम् ॥ ६२ ॥ (द)

---

कथितं न विवेचितं बालकत्वेन नाहं क्षमामीति भावः । त्र्यम्बकस्य कार्मुकस्य तन्मिता तनुत्वम् अल्पसारत्वञ्च न कथित इति शेषः एष च दोषः ततः शिशुतो न च तत् मम चापलं चपलस्य कार्यं क्षन्तव्यमिति शेषः गुरूणां पुरे सन्तोषाय शिशोश्च बालकस्य मम दुर्विलसितानि दुश्चेष्टितानि क्षमस्व गुरूणां विश्वामित्र जनकादीनामनुरोधात् मया मैवं कार्मुकं भग्नं न तु स्वदर्पेण तस्मात् क्षमायोग्योऽहमिति भावः ।

( थ ) निदर्शितलाघव ! निदर्शितं प्रकटितं तपोराशिरिति कथनेन इति भावः लाघवं येन तथोक्तः तत्सम्बुद्धौ । स्ववर्णनापरं निजसामर्थ्यप्रकटनपरकम् ।

( द ) त्रुटितेति । अमराणां वन्द्यः परशुः अद्य मडमडिति शब्दं कुर्वन् इति शेषः मृडानीकान्तचापस्य हरधनुषः भङ्क्तुः खण्डयितुः दाशरथेः त्रुटितेभ्यः छिन्नेभ्यः निबिडेभ्यः घनेभ्यः नाडीचक्रवालेभ्यः शिरासङ्घेभ्यः प्रवालेभ्यः इव प्रसृताभिः निःसृताभिः रुधिरधाराभिः चर्चितः अवलिप्तः उच्चण्डः प्रचण्डः रक्तः कण्ठः यस्मिन् तद् यथा तथा, मुण्डं शिरः खण्डयतु छिनत्तु । मालिनीवृत्तम् ।

रामः ।

स्वायत्तेन कुठारेण स्वाधीने राममूर्द्धनि ।
यथेष्टं चेष्टतामार्य्यस्तवदाज्ञां को निषेधति ॥ ४३ ॥ (ध)

जामदग्न्यः । य: (न) प्रेतनाथस्यातिथ्यमनुभवितुकामः ।

रामः । अञ्जलिं बद्ध्वा ।

अनूचानं भक्त्या भृगुभव । भवन्तं प्रणमति
क्रुधः शान्त्यै रामस्तदिह सुकुमारं कुरु मनः ।
हठान्न्यस्यन् कण्ठे परशुमपि नोत्तेजयसि मां
रघूणां प्रह्वाणः किमपि यदमी गोत्रगुरवः ॥ ४४ ॥ (प)

जामदग्न्यः । विहस्य ।

---

(ध) स्वायत्तेनेति । आर्य्यः भवान् स्वायत्तेन स्वहस्तस्थितेन कुठारेण स्वाधीने स्वस्य भवतः अधीने आदेशवर्त्तिनि रामस्य मूर्द्धनि यथेष्टं चेष्टतां व्यवहरतु, को जनः तव आज्ञां निषेधति निषेद्धुं शक्नोतीत्यर्थः ।

(न) प्रेतनाथस्य यमस्य ।

(प) अनूचानमिति । हे भृगुभव ! भार्गव ! रामः अहमित्यर्थः क्रुधः कोपस्य शान्त्यै प्रशमाय अनूचानं वेदपारगम् अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु य इत्यमरः । भवन्तं भक्त्या प्रणमति । तत् तस्मात् इह अस्मिन् मयि मनः सुकुमारं कोमलं कुरु । हठात् सहसा कण्ठे परशुं कुठारं न्यस्यन्नपि अर्पयन्नपि मां न उत्तेजयसि क्रोधयसि कुठारे कण्ठन्यस्तेऽपि मम क्रोधो न भविष्यतीति भावः । यत् यस्मात् अमी गोत्रगुरवः वंशगुरवः प्रह्वाणः ब्राह्मणाः रघूणां रघुवंश्यानां किमपि अनिर्वचनीयवस्तूनीत्यर्थः रघुकुलेषु ब्राह्मणाः कृतापराधा अपि सततं पूज्यन्ते इति भावः । शिखरिणीवृत्तम् ।

ब्रह्मा यो धर्मसूनुर्विशिखविलिखनच्छिन्नक्रौञ्चाद्रिकुञ्ज:
स्कन्दावस्कन्ददायी क्षतरणरसिकक्षत्त्रियच्छेदकेलि:।
दत्तोर्वीनव्यभिक्ष: शरविधुतपयोराशिलब्धाश्रमोऽहं
श्रेष्ठ: श्रीकण्ठशिष्यो धनुषि कृतरतिर्ब्राह्मणो रैणुकेय: ६५ (फ)

शतानन्द:। किमुच्यते (ब) वीरवर्गवरिष्ठ: श्रीकण्ठशिष्य:।

जामदग्न्य:। यदिहापि राजन्यपोते भार्गवो धनुर्धारयति तदसावस्यैवापराधो यदुत्फुल्लफणं फणावन्तं न पश्यति। स तस्यैव दोष:।

तत:।

बालकर्पूरनिष्पेषमयं निरपिषत् त्रयम्।
मम क्रीड़ां च चण्डीशचापं च स्वं च जीवितम्॥ ६६॥ (भ)

---

(फ) ब्रह्मा योति। अहं ब्रह्माख्या: पार्वत्या: धर्मसूनु: धर्मपुत्र:, विशिखै: शरै: विलिखनेन छिन्न: क्रौञ्चाद्रे: कुञ्ज: येन तथाभूत:, स्कन्दस्य कार्त्तिकेयस्य अवस्कन्द: पराभव: तस्य दायी कार्त्तिकेयविजेता इत्यर्थ:, क्षत: रणरसिकानां संग्रामचतुराणां क्षत्रियाणां छेदेन विनाशेन केलि: क्रीड़ा येन तथाविध:, दत्ता उर्वी पृथ्वी एव नव्या नवीना कदाचित् केनाप्यदत्तत्वादिति भाव: भिक्षा काश्यपायेति शेष: येन तादृश:, शरै: विधुते निराकृते पयोराशौ समुद्रे लब्धाश्रम: कृताश्रमपद: पृथिव्यां दत्तायां तत्र वासस्य अयुक्तत्वात् समुद्रगर्भे वास इति बोध्यम्। श्रेष्ठ: सर्वोपरी: श्रीकण्ठस्य हरस्य शिष्य:, धनुषि कृता रति: अनुरागो येन स: धनुर्वेदज्ञ इत्यर्थ: रैणुकेय: रेणुकासुत: ब्राह्मण। स्रग्धरावृत्तम्।

(ब) वीरवर्गेषु वरिष्ठ: श्रेष्ठ:। राजन्यपोते क्षत्रियशिशौ रामे इत्यर्थ:। अस्यैव रामस्यैव। उत्फुल्ला फणा यस्य तादृशं संजीवितफणं फणावन्तं पन्नगम्।

(भ) बालेति। अयं दाशरथि: मम क्रीड़ां क्ष्मालाभ विमुखता-

जनकः। कथं (म) संन्यस्तशस्त्रग्रहणस्यापि मम पुनः शस्त्रग्रहणक्षणो वर्त्तते। नेपथ्याभिमुखमवलोक्य। कः कोऽत्र भोः! धनुर्धनुः।

पुरुषः प्रविश्य धनुरुपनीय निष्क्रान्तः।

जनकः। धनुरादाय।

त्र्यक्षीयचापमवमत्यरि राक्षसेन्द्रे
शस्त्रत्यजाऽपि धृतमेव मया त्वमासीः।
रामाय कार्मुक! पुनः परिरिप्स्यसेऽद्य
वत्सेऽपि वाञ्छितवतेऽनुचितं चरित्रम्॥ ६७॥ (य)

समाधाय।

प्रणमति जनकस्त्वां देवि! दिव्यास्त्रविद्ये!
मम धनुषि पुराणे सन्निकर्षं कुरुष्व।

---

जनितामिति भावः, त्र्यक्षीयस्य हरस्य चापं धनुश्च, स्वं जीर्णमय एतत् स्वयं पक्वकर्पूरमिश्रं पक्वकर्पूरमिव निरपिषत् अखण्डयत्।

(म) संन्यस्तं परित्यक्तं शस्त्रग्रहणं येन तादृशस्य योगित्वादिति भावः। शस्त्रग्रहणस्य क्षणः समयः भिषोर्जामातुः रक्षणीयत्वादिति भावः।

(य) त्र्यक्षीयेति। हे कार्मुक! राक्षसेन्द्रे रावणे त्र्यक्षीयस्य चापं धनुः अवमत्यरि अधिक्षिपति सति शस्त्रत्यजा क्षतशस्त्रत्यागेनापि मया त्वं धृतम् आसीः, अद्य पुनः वत्सेऽपि अर्भकेऽपि रामे अनुचितं चरित्रं चेष्टितं वाञ्छितवते रामाय भार्गवाय भार्गवात् रामं रक्षितु-मिति भावः परिरिप्स्यसे ध्रियसे। वसन्ततिलकं वृत्तम्।

(र) प्रणमतीति। हे दिव्यास्त्रविद्ये! देवि! जनकः त्वां प्रणमति, मम पुराणे धनुषि सन्निकर्षम् अधिष्ठानं कुरुष्व। नरस्य

परिभवति मदग्रे भार्गवो रामभद्रं

प्रहिणु तदिह बाणान् वार्द्धकं मां दुनोति ॥६८॥ (र)

दशरथः । सम्बन्धिन् । जनक ! (ल) क्षतं क्षतं कार्मुकपरिग्रहेण किमिति प्रादुर्भूतसाहसावतंसमपि जामातरमवजानासि । पश्य ।

यस्योत्पत्तिर्दिनकरकुले यं महाभागधेयं

विश्वामित्रो धनुरुपनिषद्येकशिष्यं व्यधत्त ।

श्रीकण्ठीये बलमविकलं यस्य चापे च दृष्टं

तस्मान्यस्माद्यदि परिभवः स्वस्ति वीरव्रताय ॥ ६९ ॥ (व)

विश्वामित्रः । महाराजसीरध्वज ! यथाह सम्बन्धी ते दशरथः । बहुरपनीय जामदग्न्यं प्रति ।

---

मम पुरतः भार्गवः रामभद्रं परिभवति । तत् तस्मात् इह भार्गवे बाणान् प्रहिणु पातय, वार्द्धकं वृद्धत्वं मां दुनोति तापयति वृद्धस्य मम बाणप्रयोगे अक्षमत्वात् तव साहाय्यप्रार्थनेति भावः ।

(ल) क्षतं क्षतम् अलमलम् । प्रादुर्भूतः प्रकटितः धनुर्भङ्गेनेति भावः साहसस्य पराक्रमप्रकाशस्य अवतंसः अलङ्कारविशेषः येन तादृशम् ।

(व) यस्येति । दिनकरस्य कुले सूर्य्यकुले यस्य उत्पत्तिः जन्म । विश्वामित्रः यं महाभागधेयं महाभाग्यवन्तं धनुरुपनिषदि धनुर्वेदे एकशिष्यम् अद्वितीयं छात्रं व्यधत्त कृतवान् । श्रीकण्ठीये चापे हरधनुषि यस्य अविकलं सम्पूर्णं बलं दृष्टम्, तस्य रामस्य यदि अन्यस्मात् जनात् परिभवः पराभवः स्यादिति शेषः तदा वीरव्रताय स्वस्ति शुभमस्तु वीरव्रतं परित्यक्तमिति भावः । मन्दाक्रान्ताछन्दः ।

रामः शिष्यो भृगुभव ! भवान् भागिनेयीसुतो मे
वामे बाहावुत तदितरे कार्मुकः को विशेषः ।
दिव्यास्त्राणां तव पशुपतेरस्य मत्तस्तु लाभ-
स्तत् त्वां याचे विरम कलहादार्य्यकर्मारभस्व ॥७०॥ (ग)

जामदग्न्यः । मातुर्मातुल ! न (ङ) किञ्चिदन्तरं भवतो भवानीवल्लभस्य च न किञ्चिदन्तरं क्षत्रियवटोस्त्वदन्तेवासिनः क्षत्रियान्तकरस्य शङ्करशिष्यस्य वा ।

शतानन्दः । (च) अतिनिरर्गलवाग् भार्गवो यद्युक्तमपि नानुबध्यते ।

जामदग्न्यः । किञ्च भोः ! (छ) स्वभुजोपार्जितब्रह्मभाव ! न शस्त्रग्रहणाधिकारः सम्बन्धमनुबध्यते ।

---

(ग) रामेति । हे भृगुभव ! रामः दाशरथिः मे शिष्यः, भवान् मे भागिनेयीसुतः भागिनेय्यास्तनयः । वामे उत अथवा तदितरे दक्षिणे बाहौ कार्मुकः कार्मुके कः विशेषः प्रभेदः न कोऽपीत्यर्थः । तव पशुपतेः सकाशात् अस्य दाशरथेस्तु मत्तः सकाशात् दिव्यास्त्राणां लाभः अधिगमः, तत् तस्मात् त्वाम् अहं याचे प्रार्थये कलहात् विवादात् विरम, आर्य्यं शिष्टानुष्ठेयं कर्म आरभस्व कुरुष्व । मन्दाक्रान्तावृत्तम् ।

(ङ) अन्तरं प्रभेदः । क्षत्रियवटोः राजन्यकुमारस्य रामस्य । सोल्लुण्ठोक्तिरियम् ।

(च) अतिनिरर्गलवाक् यथेच्छवादी ।

(छ) स्वभुजेति स्वेन भुजेन उपार्जितः अधिगतः ब्रह्मभावः ब्राह्मण्यं येन तत्सम्बुद्धौ । एतेन काल्पनिकं ब्राह्मण्यं तवेति सोत्प्रासोक्तिरनुभवनीया ।

रामः। ब्रह्मर्षे! जामदग्न्य! कः पुनरयं शस्त्रग्रहणाधिकारो यत्र त्वय्यपि तिरस्कारः।

जामदग्न्यः। सभ्रुकुटीभङ्गम्। आः (च) क्षत्रियखेट! बटो! वाचाटोऽसि।

भग्नरुद्रधनुःखण्डप्रोतेन शिरसा तव।
मुण्डधारी व्रती चाहमुपस्थास्ये कपालिनम्॥७१॥ (क)

रामः। भगवन्! किं पुनरिमाः (ख) सर्वंकषा रोषवाचः।

सर्वत्यागी परिणतवयाः सप्तमः पद्मयोनेः
शिष्यः शम्भोरिति च यदि वः प्रश्रयी रामभद्रः।
तत् किं भीमा भ्रुकुटिघटना तामिमां नास्मि सोढा
सोढा वीरव्रतविधिमयं यद्गुरुर्व्रीडमेति॥७२॥ (ग)

---

(च) क्षत्रियखेट! क्षत्रियाधम!।

(क) भग्नेति। मुण्डधारी मुण्डितशिराः व्रती व्रतपरायणश्च अहं भग्ने रुद्रधनुषि प्रोतेन निखातेन तव शिरसा कपालिनं हरम् उपस्थास्ये अर्च्चयिष्यामि।

(ख) सर्वंकषाः मर्मच्छेदिन्यः।

(ग) सर्वत्यागीति। सर्वत्यागी पृथिव्या दानात् त्यक्तसर्वस्वः निस्पृह इत्यर्थः परिणतवयाः स्थविरः पद्मयोनेः ब्रह्मणः सप्तमः अधस्तनसप्तपूरणपुरुषः शम्भोः शिष्यश्च भवानिति शेषः इत्येवं कारणात् रामभद्रः अहमित्यर्थः वः युष्माकं प्रश्रयी, विनयी युष्मान् प्रति सविनयं व्यवहरतीत्यर्थः। तत् भीमा भीषणा भ्रुकुटिरचना किं किमर्थं क्रियते इति शेषः भीषणाया भ्रुकुट्याः पात्रं नाहमिति भावः। अपि अहं ताम् इमां भ्रुकुटिरचनां न सोढा न सोढुं शक्नोमीत्यर्थः। वीरव्रतविधिं वीराचारानुष्ठानं सोढा वक्ष्यामि वीरोचितमाचरिष्यामीत्यर्थः यत् यस्मात् अयं गुरुः विश्वामित्रः व्रीडं

जामदग्न्यः । ततः किम् ।

रामः । ततश्चेदम् ।

यस्याचार्य्यकमिन्दुमौलिरकरोत् स ब्रह्मचारी चिरं
जातो यत्र गुहश्चकार च भुवं यश्चीतवीरव्रताम् ।
तत्कोदण्डरहस्यमद्य भगवन् ! दृष्टैष रामः स ते
हेलोज्जृम्भितजृम्भकेण धनुषा क्षत्रं च नालम्बयम् ॥ ७३॥ (च)

जामदग्न्यः । साधु रे क्षत्रियडिम्भ ! साधु साधु मातुर्मातुलशिष्य ! साधु साधु (ङ) ताड़िततोड़काकुटुम्बक ! साधु साधु भग्नभर्गचापासन ! साधु साधु रेणुकेयरणोदासक ! साधु, किन्तु ।

चापं वृषाकपिनिरस्तसमस्तसारं
द्वेधा विधाय रघुनन्दन ! मा स्म दृप्यः ।

---

लज्जाम् एति प्राप्नोति विश्वामित्रं गुरुं प्रति तत्र परिहासेन लज्जावान् दृष्टुं नाहं शक्ष्यामीति भावः । मन्दाक्रान्तावृत्तम् ।

(च) यस्येति । इन्दुमौलिः शिवः यस्य आचार्य्यकम् आचार्य्यकर्म अकरोत् यत्र आचार्य्यकर्मसमये इत्यर्थः चिरं सब्रह्मचारी जातः गुहः कार्त्तिकेयः भुवं यस्य गीतं वीरव्रतं यस्यां तथाभूतां चकार च । हे भगवन् ! अद्य एष सः रामः तस्य ते तव तत्कोदण्डरहस्यं धनुर्वेदशिक्षां दृष्टा दृष्यति, हेलया अवलीलया उज्जृम्भितानि जृम्भकाणि नटास्त्राणि अस्त्राणि येन तादृशेन धनुषा क्षत्रं क्षात्रं तेजः न लम्बयं न आश्रयम् । शार्दूलविक्रीड़ितं वृत्तम् ।

(ङ) ताड़ितं निहतं ताड़कायाः कुटुम्बकं येन तत्सम्बुद्धौ ।

(च) चापमिति । हे रघुनन्दन ! वृषाकपिना हरेण निरस्तः निष्काषितः समस्तः समग्रः सारो यस्मात् तादृशं चापं धनुः द्वेधा

वैकुण्ठकार्मुकमकुण्ठकठोरभाव-
मारोपयैतदिह चेत् तव शक्तिरस्ति ॥ ७४ ॥ (घ)

इति धनुरर्पयति।

लक्ष्मणः। पुरोभूयादाय च धनुः। आर्य्य! आर्य्य! (ङ) आर्य्यालाभपणैकप्रणयिनि शङ्करकार्मुकारोपणे के नामान्ये दोर्द्दण्डचण्डिममात्रारोप्ये तु वैष्णवे धनुषि सति पदातिलवे लक्ष्मणे न प्रभुरार्य्यः।

सीता। सस्मितम्। वच्छ! लक्खण! सुलक्खणोसि जो राहवकुलोचिदचरिदधुरं धारेसि (२२)।

विश्वामित्रः। रामभद्रे भग्नधूर्जटिधनुषि ज्यायसि कनीयसो भ्रातुरुचितमेव माधवीयं चापमारोपयितुं भङ्क्तुं वा।

---

(२२) वत्स! लक्ष्मण! सुलक्षणोऽसि यो राघवकुलोचितचरितधुरं धारयसि।

---

विधाय भङ्क्त्वा नाम दृप्तः दर्पं मा कुरु। चेत् यदि इह धनुर्वेदरहस्ये तव शक्तिरस्ति तदा अकुण्ठः कठोरभावः यस्य तादृशम् एतत् वैकुण्ठस्य नारायणस्य चापं धनुः आरोपय मौर्व्या सङ्गमय। वसन्ततिलकं वृत्तम्।

(ङ) आर्य्येति आर्य्यायाः मैथिल्या लाभ एव पणः तस्य प्रणयिनि सम्बन्धिनि। अन्ये आर्य्यादपरे के नाम? न केऽपि शक्ता इत्यर्थः। दोर्द्दण्डस्य बाहुदण्डस्य चण्डिमा चण्डत्वं तेन आरोप्ये आरोपणीये यस्य बाहोश्चण्डत्वमस्ति स एव इदमारोपयितुं शक्नोतीति भावः। वैष्णवे विष्णुदेवताके। पदातिलवे क्षुद्रपदातौ लक्ष्मणे मयि विद्यमाने आर्य्यः न प्रभुः नाधिकारी, न हि दासजननिर्वाह्ये कर्म्मणि प्रभोरावश्यकत्वमिति भावः।

लक्ष्मणः । आरोपयति ।

शतानन्दः ।

दोर्दण्डन्यासलीलानमदटनि तडत्कारि नारायणीयं
सद्यः सज्जीकृतज्यं विरचयति धनुर्लक्ष्मणे श्यामलक्ष्म ।
रामस्याद्यस्य दत्तं मुखशशिनि पदं कालिकालाञ्छनेन
न्यस्तं नव्यस्य भव्ये कुमुदवनभुवा द्राक् स्मितज्योत्स्नया च ॥५। (ज)

विश्वामित्रः । योगिन् ! जनक ! सखे ! दशरथ ! रामभद्रभ्रातृत्वमति हि (झ) निर्व्यूढमिक्ष्वाकुकुललक्ष्मणो लक्ष्मणस्य ।

हेमप्रभा । सहि ! जाणइ ! पेक्ख देवरस्स दे भत्तु-सरिसं परक्कमं ता सुभणिदं अज्जेण णिहलिदसङ्करसरासणे

२२) सखि ! जानकि ! प्रेक्षस्व देवरस्य ते भर्तृसदृशं पराक्रमं

(ज) दोर्दण्डेति । लक्ष्मणे सद्यः तत्क्षणं दोर्दण्डयोर्न्यासस्य अर्पणस्य या लीला विलासः तेन आनमन्ती अटनी कोटी यस्य तादृशम् अतएव तडत्कारि तडत्कारध्वनियुक्तं सज्जीकृता ज्या यत्र तादृशं नारायणीयं वैष्णवं धनुः विरचयति आरोपयति सति आद्यस्य प्रथमस्य रामस्य भार्गवस्य मुखशशिनि कालिकालाञ्छनेन कालिम्ना श्यामलक्ष्म पदं दत्तं नव्यस्य नवीनस्य रामस्य दाशरथेः मुखशशिनि द्राक् झटिति कुमुदवनभुवा स्मितज्योत्स्नया पदं न्यस्तं अर्पितम् । स्रग्धरावृत्तम् ।

(झ) निर्व्यूढं सम्पन्नम् । इक्ष्वाकोः कुलं तस्य लक्ष्मणः चिह्नभूतस्य दृष्टान्तरूपस्येत्यर्थः ।

जेट्ठे कणिट्ठभादुणो समुचिदं जेव्व वेकुण्ठबाणासणविणा-सणम्। अण्णं कधेमि (२३)।

धणुविब्भमोमज्झणिविट्ठमुट्ठिणिबन्धरणन्तणिअदण्डम्।
चलइ जीदग्गणिवडन्तचडुलगुणघग्घरूसम् ॥ ७६ ॥ (ञ)
बम्हण्डभण्डभिन्दणवाउलपडुरवगुणमिस्सो।
सन्धिज्जइ पअडपओदमण्डलाडम्बरुड्डामरो ॥ ७७ ॥ (ट)

---

तत् सुभणितमार्य्येण निर्द्दिष्टितमरुणरामने ज्येष्ठे कनिष्ठभ्रातुः समु-चितमेव वैकुण्ठबाणासनविनाशनम्। अन्यत् कथयामि।

धनुर्विभ्रममध्यनिविष्टमुष्टिबन्धरणन्निजदण्डम्।
चलति ज्यायां पतत्पटुगुणघर्घरोद्घोषम्॥
ब्रह्माण्डभाण्डभेदव्यापृतपटुरवगुणमिश्रः।
सन्धीयते प्रकटपयोदमण्डलाडम्बरोड्डामरः॥

---

(ञ) धनुरिति। धनुः भार्गवस्येति शेषः विभ्रमेण हेलया मध्ये निविष्टो यो मुष्टिः करस्येति भावः तेन निबन्धेन हेतुना रणत् ध्वनत् निजस्य स्वस्य दण्डः यस्य तादृशं तथा ज्यायां पराजयस्य भार्गवस्य निपतत् आविर्भवत् पटुकस्य चपलस्य गुणस्य मौर्व्याः घर्घरस्य ध्वनिविशेषस्य उद्घोषः यस्य तथाभूतं सत् चलति च्यवति।

(ट) ब्रह्माण्डेति। ब्रह्माण्डमेव भाण्डं तस्य भेदने व्यापृतः उद्यतः पटुः महान् रवो यस्य तादृशेन गुणेन मौर्व्या मिश्रः संवलितः धनुर्दण्ड इति शेषः प्रकटस्य प्रचण्डस्य पयोदमण्डलस्य जलधरसमूहस्य आडम्बरः गर्ज्जनं तद्वत् उड्डामरः प्रचण्डस्वनः सन्धीयते परामृश्यते आक्रम्यते रामेणेति शेषः।

सवणन्तघडिअगुणलट्ठिणीबिडकुडिलन्तकोडिकुण्डलिअम् ।
झणझणइ झत्ति पुणरुत्तिमञ्जुसिञ्जारवं चावम् ॥७८॥ (ठ)

भुअजुअलदण्डमण्डलिअचण्डकोअण्डदण्डभङ्गभवो ।
पिण्डिजुइ अह व बह्मण्डभण्डए कडुकडक्कारो ॥७९॥ (ड)

इअ वलइअसन्धिअक्कट्ठिअस्स धणुहो णरेन्दसदणेसु ।
रहुउलविक्कममेक्कं कहइ व्व विद्दलणटङ्कारो ॥८०॥ (ढ)

---

श्रवणान्तघटितगुणयष्टिनिविडकुटिलान्तकोटिकुण्डलितम् ।
झणझणायते झटिति पुनरुक्तमञ्जुसिञ्जारवं चापम् ॥
भुजयुगलदण्डमण्डलितचण्डकोदण्डदण्डभङ्गभवः ।
पिण्ड्यते अथ च ब्रह्माण्डभाण्डे कटुकटत्कारः ॥
इति वलयितसन्धि आकृष्टस्य धनुषो नरेन्द्रसदनेषु ।
रघुकुलविक्रममेकं कथयतीव विदलनटङ्कारः ॥

---

(ठ) श्रवणेति । चापं कार्मुकं भार्गवदत्तं वैष्णवमिति शेषः श्रवणान्ते कर्णान्ते घटिता आकृष्टा गुणयष्टिर्यस्य तथाभूतं निविडं दृढं यथा तथा कुटिलान्ता वक्रान्ता कोटिः यस्य तथोक्तं कुण्डलितं चक्रीकृतं आकर्षणेनेति भावः पुनरुक्तम् अधिकः मञ्जुः मनोज्ञः सिञ्जारवः मौर्वीध्वनिर्यस्य तथाविधं सत् झटिति झणझणायते ।

(ड) भुजेति । अथ च अधुनापि भुजदण्डयुगलेन मण्डलितः आकर्षणेन चक्रीकृतः यः चण्डः प्रचण्डः कोदण्डदण्डः धनुर्यष्टिः तस्य भङ्गात् भवतीति तथाभूतः ब्रह्माण्डभाण्डे जगदन्तरे कटुः तीव्रः कटत्कारः ध्वनिविशेषः पिण्ड्यते घनीभूतः श्रूयते इत्यर्थः ।

(ढ) इतीति । इति इत्थं नरेन्द्रसदनेषु राजवेश्मसु वलयितसन्धि चक्रीकृतसन्धि यथा तथा आकृष्टस्य धनुषः विदलनटङ्कारः भङ्गध्वनिः एकम् अद्वितीयं रघुकुलस्य विक्रमं कथयतीव ।

जनकः ।

हरधनुषि हठाधिरोपणेन
क्षितितनयापरिभाषितः पणोऽभूत् ।
विहितमपरिभाषितं पणत्वं
पुनरिदमूर्मिलया मुरारिचापे ॥ ८१ ॥ (ष)

हस्तमुद्यम्य भोः सम्बन्धिन् ! दशरथ ! साऽपि वत्सा ममोर्मिला पारितोषिकं लक्ष्मणस्यास्तु ।

दशरथः । अस्तु ।

विश्वामित्रः । ते अपि माण्डवी श्रुतकीर्त्तिश्च कुशध्वज-दुहितरौ भरतशत्रुघ्नयोः स्ताम् ।

शतानन्दः । आं किमपि प्रियं नः ।

जामदग्न्यः । अति हि दशरथडिम्भौ (त) प्रगल्भेते तदेतदपरं समरसंरम्भक्षमां मिथिलोपकण्ठक्षमामवतराम इत्यवतरति ।

---

(ष) हरेति । हरस्य धनुषि हठाधिरोपणेन सहसा ज्या-संयोगेन क्षितितनयायाः सीतायाः परिभाषितः प्रतिज्ञातः पणः अभूत् यः हरधनुः आरोपयिष्यति स एव पृथ्वीसुतां परिणेष्यतीति एवं पणः कृतोऽभूत् इति वाक्यार्थः । पुनः ऊर्मिलया मम दुहित्रा इति शेषः अपरिभाषितम् अप्रतिज्ञातं पणत्वं मुरारेः विष्णोः चापे धनुषि विहितम् । वैष्णवधनुर्भङ्गेनानेन अगणितामपि ऊर्मिलां परितुष्टो लक्ष्मणाय ददामीति भावः । पुष्पिताग्रावृत्तम्, अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रेति लक्षणात् ।

(त) प्रगल्भेते स्पर्द्धेते ।

नेपथ्यं प्रति। अये माठर! धनुर्धनुः।

प्रविश्य शिष्यः। इदं धनुः।

जामदग्न्यः। आदाय।

हर्षोन्मुक्तामृतार्द्रैर्द्युसदनसुमनोदामसम्पर्कजीव-
मद्बाणक्षुण्णवीराद्भुतरणमहारम्भनर्मायितानि।
वर्त्तन्तां नव्यपत्युत्सुकविबुधवधूवाञ्छितच्छेदखेद-
व्याधूताविद्धपाणिप्रविचलवलयास्फालकोलाहलानि॥८२॥(घ)

ततश्च।

विधाय धरणीबन्धमराममपलक्ष्मणम्।
अन्ततो गुरुपादानां गन्ताऽस्मि निजमाश्रमम्॥८३॥(ङ)

---

(घ) हर्षेति। हर्षेण आनन्देन उन्मुक्तानां विक्षिप्तानाम् अमृतार्द्राणां सुधालिप्तानां द्युसदनसुमनोदाम्नां देवपुष्पमाल्यानां सम्पर्केण स्पर्शेन जीवन्तः मम बाणैः क्षुण्णाः निहताः वीराः येषु तादृशानि अतएव नव्येषु अभिनवेषु पतिषु संग्रामहतवीरेष्विति भावः उत्सुकाः याः विबुधवध्वः सुरसुन्दर्यः तासां वाञ्छायाः अभिलाषस्य नवपतिलाभविषयस्येति भावः छेदेन भङ्गेन आलिङ्गनस्पर्शेन तेषां पुनरुज्जीवितत्वादिति भावः यः खेदः दुःखं तेन व्याधूताः चालिताः आविद्धाः शिरसि आहत्य दुःखार्थैः ये पाणयः कराः तेषु प्रविचलानि चञ्चलानि यानि वलयानि हस्तभूषणानि तेषाम् आस्फालस्य कोलाहलानि कलकलध्वनयः अद्भुतः महान् यः रणमहारम्भः संग्राममहोद्योगः तस्य नर्मायितानि नर्मवदाचरितानि सन्ति वर्त्तन्तां भवन्तु। स्रग्धरावृत्तम्।

(ङ) विधायेति। धरणीबन्धं भूतलम् अरामं रामशून्यम् अपलक्ष्मणं लक्ष्मणरहितञ्च विधाय गुरुपादानाम् अन्ततः अहं निजम् आश्रमं गन्ता गमिष्यामि।

राम:। भगवन्! भार्गव!

करस्थे सति कोदण्डे तूणीरस्थेषु पत्रिषु।
विधत्स्व स्वयमेवौर्य्यं किं वीरस्य विकत्थया ॥ ८४ ॥ (ख)

इति परिक्रम्य निष्क्रान्ता: सर्वे।

भार्गवभङ्गो नाम चतुर्थोऽङ्कः।

---

## अथ पञ्चमोऽङ्कः।

---

अत: परमुन्मत्तदशाननो भविष्यति।

प्रविश्य मायामयः परिक्रम्य च साक्षेपम्। अहो! (क) निसर्ग-निरर्गलचरितैकनिबन्धन! विधे! इदमुपालभ्यसे कः पुनः प्रकारस्तव यद्रत्नाकरेऽपि क्षारभावः सुधादीधितावपि लाञ्छनच्छाया पुलस्त्यापत्येऽपि मतिविपर्य्यासो यदादिष्टोऽस्मि राक्षसराजेन यदुत गच्छ त्वं रघुराजधानीमयोध्यां तत्र च चण्डीशकोदण्डनिर्दलनलब्धजानकीजनितगर्वगरिमा प्रथमदाशरथिर्वाच्य:।

---

(ख) करस्थे इति। कोदण्डे धनुषि करस्थे हस्तवर्त्तिनि इति तथा पत्रिषु शरेषु तूणीरस्थेषु सत्सु स्वयमेव वीर्य्यं विक्रम: शौर्य्यं बलं विधत्स्व प्रकटय वीरस्य विकत्थया आत्मश्लाघया किम्? न खलु वीरा: विकत्थन्ते इति भाव:।

---

(क) निसर्गेति। निसर्गेण प्रकृत्या निरर्गलं यथेच्छं चरितं चेष्टितं निबध्नाति सङ्घटयतीति तत्सम्बुद्धौ। उपालभ्यसे अधिक्षिप्यसे।

मैथिली यदि धनुर्ध्वजो भवे-
त्तद्गुणात् प्रथमतस्तदीशिनः ।
राम ! विद्धि तव मोहमित्यमुं
विष्टपत्रयपतेर्ममास्तु सा ॥ १ ॥ (ख)

किञ्च रे राजन्यपोत ! न श्रवणगोचरं गता राक्षसराज-
प्रतिज्ञेयम् । कुम्भकर्णेत्यादि पठति । भद्र ! मायामय ! स
इत्यभिहितस्तामर्पयिष्यति सा तु तदर्पिता ।

अस्मद्विक्रमचेष्टितानि निखिलत्रैलोक्यहेलाजय-
प्रह्वीभूतसुरासुराणि भवतो भूमेः सुता शृण्वती ।
पत्यौ द्वेषकषायितेन मनसा स्निग्धा मयि स्थास्यति
स्त्रीणां प्रेम यदुत्तरोत्तरगुणग्रामस्पृहाचञ्चलम् ॥ २ ॥ (ग)

---

रत्नानामाकरे उत्पत्तिक्षेत्रे सागरेऽपि क्षारभावः लवणाक्तत्वम् । ब्रह्मच्छाया कलङ्कचिह्नम् । पुत्रस्तस्य अपत्ये राघवेऽपि मतिविपर्यासः बुद्धिवैलक्षण्यम् । चण्डीशस्य कोदण्डखण्डनेन धनुर्भङ्गेन कन्यया जानक्या जनितः उत्पादितः गर्वस्य अहङ्कारस्य गरिमा गौरवं यस्य तादृशः प्रथमदाशरथिः दाशरथीनां दशरथापत्यानां प्रथमः ज्येष्ठः राम इत्यर्थः ।

(ख) मैथिलीति । राम ! मैथिली जानकी धनुषः हरकार्मुकस्य ध्वजः पणः तद्गुणात् तस्मिन् गुणारोपणात् भवेत् यदि, तत् तदा प्रथमतः पूर्वम् ईशिनः प्रभोः पणजयित्वादिति भावः । तव तत् सीतारूपं वस्तु इति इत्यं तव मोहं भ्रमं विद्धि जानीहि, सा सीता विष्टपत्रयस्य त्रिभुवनस्य पतेः मम अस्तु भवतु मम त्रिभुवनस्वामित्वात् सीतायास्तदन्तर्गतत्वाच्च ममैव तस्यां प्रभुत्वमिति भावः ।

(ग) अस्मदिति । भूमेः पृथिव्याः सुता जानकी भवतः सकाशात् निखिलस्य समस्तस्य त्रैलोक्यस्य हेलया अनायासेन यः

विचिन्त्य । तत्कथमसौ निसर्गनिशाचरशत्रुर्वसिष्ठविश्वामित्रसनाथ इत्थमभिधातव्यो भवति सोऽयं (घ) कालकूटकवलनग्रहस्तदिदं यमदंष्ट्राङ्कुरशलाकाकर्षणम् । विभाव्य भवतु तदिदमसमञ्जसं चेष्टितं देवस्य नयज्ञानवते माल्यवते निवेदयामि स खल्वस्माकं मतिनौविप्लवे कर्णधारः । सपरिक्रममवलोक्य । कथमयममात्यो माल्यवान् किमपि चिन्तयन् लेखहस्त आस्ते । विभाव्य । तन्महाराजरावणदुर्नीतिपरम्परायत्तचित्तेनानेन भवितव्यं न हि तरणिकिरणस्पर्शादन्यो व्याधिरिन्दीवरवनस्य ।

सुखिनः परसौख्येन परदुःखेन दुःखिताः ।
जायन्ते कवयः काव्ये नयतन्त्रे च मन्त्रिणः ॥ ३ ॥

ततः प्रविशति यथानिर्दिष्टो माल्यवान् ।

---

अथः तेन पक्षीभूता मक्षीभूताः वराकाः सुराः असुराश्च येषु तानि अस्माकं विक्रमचेष्टितानि स्ववती पत्यौ स्वामिनि रामे द्वेषकषायितेन विद्वेषकलुषितेन मनसा उपलक्षिता मयि स्निग्धा स्नेहवती च स्यादिति भविष्यतीत्यर्थः यत् यस्मात् स्त्रीणां प्रेम उत्तरोत्तरस्य परपरस्य गुणग्रामेषु स्पृहया चञ्चलं चपलं भवति । सामान्येन विशेषसमर्थनरूपोऽयमर्थान्तरन्यासः । शार्दूलविक्रीडितं वृत्तम् ।

(घ) कालकूटेति कालकूटस्य कवलने भक्षणे ग्रहः आग्रहः बल एतदर्थः, यमस्य दंष्ट्राङ्कुर एव शलाका तस्याः आकर्षणं रामसमीपे दूत्यं रावणवचनं हालाहलपानमिव यमनदंष्ट्राकर्षणमिव भयावहमिति भावः । असमञ्जसम् अयुक्तम् । मतिरेव नौस्तरणिः तस्या विप्लवे विपर्यासे कर्णधारः नाविकः । तरणिकिरणस्पर्शात् सूर्यकरस्पर्शात् । इन्दीवरवनस्य नीलोत्पलकाननस्य ।

माल्यवान् । मिथिलापुरीनिवासिना (क) स्पशेन लेखः प्रहितस्तदमुं निरूपयामि । उन्मुच्य वाचयति । स्वस्ति लङ्कायां मतिमन्तं माल्यवन्तं विदेहनगरीतः कश्चित् सविनयमवबोधयति श्रेयोऽन्यत् ।

सीतास्वयंवरविधौ धनुरीश्वरस्य
चक्रीकृतं भुजबलेन बभञ्ज रामः ।
श्रुत्वा च तन्मुनिवृषो वृषकेतुशिष्यो
रोषाज्ज्वलन्निव पुरीं मिथिलामवाप ॥ ४ ॥ (ख)

तदेतद् वा विदितमेव । इदमिदं निवेद्यते तत्र च (ग) शरनिकरवर्षणे क्षितितलनिघर्षणे सुभटवर्षणे कातरमनोधर्षणे परस्परप्रतिहतिमर्षणे कीलालप्रकर्षणे लोमहर्षणे च महारम्भे समरसंरम्भे ।

---

(क) स्पशेन चरेण । अपसर्पश्चरः स्पश इत्यमरः ।

(ख) सीतेति । रामः सीतायाः स्वयंवरविधौ भुजबलेन चक्रीकृतं ईश्वरस्य शिवस्य धनुः बभञ्ज । मुनिवृषाः तापसेन्द्रः वृषकेतोः हरस्य शिष्यः भार्गवः तत् श्रुत्वा रोषात् ज्वलन्निव मिथिलां पुरीम् अवाप प्राप्तवान् । वसन्ततिलकं वृत्तम् ।

(ग) शरेति शरनिकराः बाणपरम्पराः वृष्यन्ते अस्मिन्निति यथोक्ते अधिकरणे ल्युट् । एवमुत्तरत्रापि बोध्यम् । क्षितितलं निघृष्यते अस्मिन्निति तादृशे, सुभटाः सुवीराः वृष्यन्ते अस्मिन् शरपरम्पराभिरिति तथोक्ते, कातराणां भीतानां मनांसि धृष्यन्ते आकुलीक्रियन्ते अस्मिन् तथाविधे, परस्परस्य प्रतिहतिः प्रतिघातः मृष्यते प्रतिक्रियते अस्मिन् इति तादृशे, कीलालानि रुधिराणि प्रकृष्यन्ते निःसार्यन्ते अस्मिन्निति तथाभूते, लोमहर्षणे रोमाञ्चोत्पादिनि महारम्भे महोद्योगे समरसंरम्भे संग्रामव्यापारे ।

शम्भोः शिष्यं कुशिकमुनितः प्राप्तविद्योपविद्यः
क्षुण्णक्षत्रं दशरथभुवामग्रणीः क्षत्रियाणाम् ।
वृद्धं बालस्तपनकुलजं भास्वतो वंशजन्मा
रामं रामो व्यजयत गतिच्छेदिना सायकेन ॥५॥ (ञ)

विचिन्त्य । महती वार्त्ता । विभाव्य । तस्यापि कलत्रे रावणराजोऽनुरज्यत इति न सुग्रीवकं तर्कयामि ।

मायामयः । विलोक्य । कथमधीतलेखस्तद्यावदुपसर्पामि ।

परिक्रम्य । कनिष्ठमातामह ! मायामयोऽभिवादयते ।

माल्यवान् । अपि सुखं भद्रस्य महाराजरावणः किं कुरुते ।

मायामयः । (झ) यदपङ्कजासनसम्भवान्वयः कुरुते ।

माल्यवान् । किमिव ।

मायामयः । यदादिष्टोऽस्मीति पठति ।

माल्यवान् । हसित्वा । (ञ) वृद्धबुद्धिर्हि प्रथमं पश्यति चरमं कार्यदुर्योगोऽवतरति यन्मया धूर्जटिधनुरधिक्षेपणात्ः

---

(ञ) शम्भोरिति । कुशिकमुनितः विश्वामित्रात् प्राप्ताः अभिमताः विद्याः धर्मशास्त्राणि उपविद्याः धनुर्वेदरहस्यानि येन तादृशः, दशरथभुवां दाशरथीनां क्षत्रियाणाम् अग्रणीः श्रेष्ठः, भास्वतः सूर्य्यस्य वंशे जन्म यस्य तथोक्तः बालः शिशुः रामः गतिच्छेदिना स्वर्गगमनरोधकेन सायकेन शरेण शम्भोः शिष्यं क्षुण्णक्षत्रं क्षत्रियान्तकं तपनकुलजं वृद्धं रामं परशुरामं पराजितवान् । मन्दाक्रान्तावृत्तम् ।

(झ) अपङ्कजेति पङ्कजं पद्मम् आसनं यस्य सः पद्मासनः ब्रह्मा तस्मात् सम्भवतीति तथोक्तः अन्वयः वंशः यस्य सः न भवतीति तथोक्तः । ब्रह्मकुलजो यत् न करोति तत् कुरुते इत्यर्थः ।

(ञ) वृद्धेति वृद्धानां बुद्धिः प्रथमं कार्य्यसम्भावनायाः प्राक्

प्रभृति मतिचक्षुषा दृष्टमेव यदुत दशकन्धरोऽनुभाव्यति सीताहरणम् ।

मायामयः । ततस्ततः ।

माल्यवान् । ततश्च मया मन्दोदरीपितुर्मायागुरोर्मयस्य प्रथमशिष्यो विशारदनामा यन्त्रकारः सबहुमानं नियुक्तः सीताप्रतिकृतिकरणाय विरचिता च सा तेन रावणोपच्छन्दनार्थमभिहितं च ।

सूत्रधारचलद्दारुगात्रेयं यन्त्रजानकी ।
वक्त्रस्थशारिकालापा लङ्केन्द्रं वञ्चयिष्यति ॥ ६ ॥ (ट)

मायामयः । सकौतुकम् ।

दृष्टा मातामहेनासौ कीदृशी यन्त्रजानकी ।

माल्यवान् ।

मायामय ! मया दृष्टा यादृशी सत्यजानकी ॥ ७ ॥

तस्मादेव च सीताधात्रेयिकाऽपि कारिता सिन्दूरिका नाम । प्रतिशिरश्च पराक्रमस्य । तद्देवस्य मिथिलागमनं वीतविघ्नोपशमनं तद्वचनादुचितं तदुपवर्णनं तेन च

---

पश्यति अवलोकयति जानातीत्यर्थः, कार्य्यस्य दुर्योगः दुरवस्था चरमं पश्चात् अवतरति द्रष्टुमिति शेषः अनुभाव्यति चिन्तयिष्यति । रावणोपच्छन्दनार्थं रावणस्य वञ्चनार्थम् ।

(ट) सूत्रेति । सूत्रधारस्य चलत् दारुगात्रं काष्ठमयं शरीरं यस्याः तादृशी तथा वक्त्रस्था मुखाभ्यन्तरवर्त्तिनी या शारिका तया आलपतीति तथाविधा इयं यन्त्रजानकी कल्पितमैथिली लङ्केन्द्रं रावणं वञ्चयिष्यति ।

(ठ) कृतकसंविधानेन निरन्तरप्रेमोपार्जनं च सत्यापयितु-मिदानीं निशाचरपतिर्वाच्यः। देव! परपरिणीताऽपि सा।

तव त्रिलोकीविजयैकजन्मभि-
र्गुणैरुदारैरनुरञ्जितापि सा।
अनभ्यनुज्ञाजनितं करग्रहं
निषेधते हन्त नतेन मौलिना ॥ ८ ॥ (ड)

मायामयः। अप्येवं प्रतिपत्स्यते दशाननः।

माल्यवान्। (ढ) प्रतिपत्स्यते वचसा न मनसा। उभौ

परिक्रामतः।

माल्यवान्। तदिति (ण) प्रतिपद्यवते दर्शनीयम्।

मायामयः। एवं कृते किं कृतं भवति।

माल्यवान्। शृणु यत् कृतं भवति सीताप्रतिकृतिदर्शनेन दशाननः प्रलोभितो भवति प्रलोभनेन च काललाभः

---

(ठ) कृतकसंविधानेन कपटानुष्ठानेन। सत्यापयितुं सत्यं कर्त्तुम्। परपरिणीता परेण त्वदन्येन रामेण परिणीता ऊढापि।

(ड) तवेति। सा जानकी तव त्रिलोकीविजयेन एकं केवलं जन्म येषां तथाभूतैः उदारैः गुणैः अनुरञ्जिता प्रलोभितापि हन्त इयं नतेन मौलिना शिरसा अनभ्यनुज्ञया अनुज्ञां विना जनितं कृतं करग्रहं पाणिग्रहणं निषेधते निवारयति मम अनुमतिं विना भवता नाहं बलात् कर्त्तव्योऽपि अनिच्छतीति भावः। वंशस्थविलं वृत्तं, वदन्ति वंशस्थविलं जतौ जराविति लक्षणात्।

(ढ) प्रतिपत्स्यते स्वीकरिष्यति।

(ण) प्रतिपद्यवते स्वीकृतवते तस्मै निशाचरपतये दर्शनीया सीताप्रतिकृतिरिति शेषः। प्रलोभयामस अनुष्ठानसंकृतिं अन्व-

कालक्षाभो हि नयविदां प्रयोगग्राम कम्दलयति प्रयोग-
परतन्त्वा च कार्य्यसिद्धिः ।

मायामयः । यथादिष्टमार्य्येण ।

माल्यवान् । प्रयोगस्तमस्य कालो विलम्बनीयः (त) सत्या-
पनाय ।

मायामयः । यदादिशत्यार्य्यः ।

माल्यवान् । तद्गच्छ त्वं यथाभिमतसिद्धये । अहमपि
(थ) मन्त्रिमण्डपिकामध्यासिष्य इति निष्क्रान्तौ । विष्कम्भकः ।

ततः प्रविशति रावणः प्रहस्तश्चामरधारिणी च ।

रावणः ।

न प्रीते परमेश्वरेऽपि शिरसां छेदेन होमेन वा
ज्यावल्लीनहनेन चामरपतौ हारार्गलासङ्गिनि ।
संयत्यैलविलात्तथा न च हृते विश्वातिथौ पुष्पके
दृष्ट्वा जनकात्मजेत्यथ यथा लङ्केश्वरो मोदते ॥८॥(द)

---

श्चयति विवेचयितुं ददाति । प्रयोगपरतन्त्वा अनुष्ठानपराधीना ।

(त) सत्यापनाय सत्यकरणाय ।

(थ) मन्त्रिमण्डपिकां सचिवशालाम् ।

(द) नेति । अथ इदानीं जनकात्मजा दृष्टा इति हेतोः यथा लङ्केश्वरः रावणः मोदते हृष्यति शिरसां छेदेन वा होमेन परमेश्वरे शूलिनि प्रीते प्रसन्नेऽपि अमरपतौ देवेन्द्रे ज्यावल्लीनहनेन मौर्व्विलतायाः बन्धनेन हारस्य अर्गलासङ्गिनि हारार्गलायां मौर्व्यां बद्धे च इत्यर्थः संयति संग्रामे ऐलविलात् कुवेरात् विश्वातिथौ सर्व्वगामिनीये पुष्पके विमाने हृतेऽपि च तथा न लङ्केश्वरो मोदते इत्यनेनान्वयः । शार्दूलविक्रीडितं वृत्तम् ।

शिचिन्त्य । हंहो हृदय ! न (ध) प्रवर्त्तव्यं यदाबेदितममृतमयाचरं मायामयेन । यथा किल ।

सौधादुद्विजते त्यजत्युपवनं द्वेष्टि प्रभामैन्दवीं
द्वारात्त्रस्यति चित्रकेलिसदसो वेषं विषं मन्यते ।
आस्ते केवलमब्जिनीकिसलयप्रस्तारशय्यातले
सङ्कल्पोपनतत्वदाकृतिरसायत्तेन चित्तेन सा ॥ १० ॥

तत्प्रहस्त ! शीघ्रं प्रवेशय जानकीं न कालहरणक्षमाः प्रियजनसमागममहोत्सवाः ।

प्रहस्तः । निष्क्रम्य सीताविभ्द्रूरिबामायामयैः सह प्रविष्टः ।

मायामयः । इयं सा ।

रावणः । इयं सा । विभाव्य ।

चक्षुः खेरमवारिजं कुवलयं वक्त्रस्य मित्रं विधु-
र्भ्रूलेखा स्मरतोरणं स्मितलवो लीलालतापल्लवः ।
उच्छिष्टं कलकण्ठवाक् च वचसां यस्याः तदेणीदृशः
सर्वाङ्गीणमहो विधेः परिणतं विज्ञानचित्रं चिरात् ॥११(प)

---

( ध ) प्रवर्त्तव्यं त्वरणीयम् ।

( न ) सौधादिति । सा सीता सङ्कल्पेन कल्पनया उपनता उपस्थिता या त्वदाकृतिः तव शरीरं तस्यां यो रसः अनुरागः तदायत्तेन तदधीनेन चित्तेन उपलक्षिता सौधात् हर्म्यात् उद्विजते, उपवनं त्यजति, ऐन्दवीं चान्द्रीं प्रभां द्वेष्टि, चित्रकेलिसदसः चित्रस्य क्रीडाग्रहस्य च द्वारात् त्रस्यति बिभेति, वेषं परिच्छदं विषं मन्यते च । केवलम् अब्जिनीकिसलयप्रस्तारशय्यातले पद्मपत्रशयनीये आस्ते तिष्ठति । शार्दूलविक्रीडितम् ।

( प ) चक्षुरिति । एणीदृशः मृगाक्ष्याः सीतायाः चक्षुः अस्य

सिन्दूरिका। देव! दसाणण! चावारोहणदिअहम्मि ईसि दिट्ठाइं आणई तुज्झ वअणाइं कुणइ एह्निं (फ) दंसण-उणरुत्तपेम्माइं (२४)।

रावणः। भद्रे! जानासि मदनपराधीनं जनमवस्था-पयितुम्।

सिन्दूरिका। अण्णधा वा रक्खसचक्कवत्तिणो विसवी-अदि (२५)।

रावणः। सोल्लासम्। तत्क्षणं येन युगपदनुभवामि विंशतिधा श्रोत्रामृतम्।

सिन्दूरिका। इदं विसवीअदि (२६)। संस्कृतमाश्रित्य।

शय्यां ध्यामपि चन्द्रिकां गमयति प्राहत्य चीनांशुकं
स्वस्मै कुप्यति पञ्चमं रचयते यत्नाच्छमालाय च।

---

(२४) देव! दशानन! चापारोपणदिवसे ईषद्दृष्टानि जानकी तव वदनानि करोति इदानीं दर्शनपुनरुक्तप्रेमाणि।

(२५) अन्यथा वा राक्षसचक्रवर्त्तिनो विश्वास्यते।

(२६) इदं विश्वास्यते।

---

रिजम् अजस्रं करं विकसितं कुवलयं नीलोत्पलम्। वक्त्रस्य मुखस्य मित्रं विधुः चन्द्रः। भ्रूलेखा भ्ररस्य कामस्य तोरणम्। किमस्य तथः सिन्दुः लीलालतायाः विलासवल्लर्याः पल्लवः। वचसाम् उच्छिष्ट कलकण्ठवाक् कोकिलध्वनिः। तत् तस्मात् यद्दे मन्ये विधेः विधातुः विज्ञानचित्रं कृष्टिनैपुण्यं चिरात् क्रमागतसृष्टिव्यापा-रेणेत्यर्थः सर्वाङ्गीणं सर्वाङ्गसम्पूर्णं यथा तथा परिणतं परिपक्वम्। अहो इति आश्चर्ये। शार्दूलविक्रीडितं वृत्तम्।

(फ) दर्शनानां पुनरुक्तेन पौनःपुन्येन प्रेमाणि। पुनः पुनः

यश्चान्यत्परिहृत्य पक्ष्मलदृशस्त्वत्संकथास्वादरो
लोकस्तत्र निरर्गलं प्रलपति त्वं ब्रूहि किं मन्यसे ॥१२॥ (ब)

राघवः । सहर्षम् । ततस्ततः ।

सिन्दूरिका । भूयः संस्कृतमाश्रित्य ।

एतस्याः स्मरसंज्वरः करतलस्पर्शैः परीक्ष्यो न यः
स्निग्धेनाऽपि जनेन दाहभयतः शोषप्रदः पाथसाम् ।
निर्वीर्य्यीकृतचन्दनौषधिविधौ तस्मिंस्तड़त्कारिणो
लाजस्फोटममी स्फुटन्ति मणयो विश्वेऽपि हारस्रजाम् १३ (भ)

---

ते वदनानि पश्यतीति भावः । विंशतिधा दशसु मुखेषु श्रोत्राणां विंशतिसंख्यकत्वादिति भावः ।

(ब) यदिति । चीनांशुकं प्रावृत्य आच्छाद्य मुग्धां मनोज्ञां चन्द्रिकां यत् गमयति यापयति अतिक्रामतीत्यर्थः पञ्चमं स्वरमिति शेषः रचयते उच्चरते स्वकं निजाय कण्ठनालाय यत् कुप्यति जानकीति शेषः त्वदावृतचित्ताया अस्याश्चन्द्रिकायास्तथा पञ्चमस्वरस्य कोकिलस्वरत्वेन विरहोद्दीपकत्वादिति भावः । पक्ष्मलदृशः घनरोमशचक्षुषः अस्याः अन्यत् परिहृत्य त्वत्संकथासु तव आलापेषु यत् आदरः, लोकः तत्र विषये निरर्गलं निर्बाधं यथा तथा प्रलपति सीते ! कथमेषा तव मनोविकारितिति कथयति त्वं किं मन्यसे विवेचयसि ब्रूहि । शार्दूलविक्रीडितं वृत्तम् ।

(भ) एतस्या इति । एतस्याः मैथिल्याः यः स्मरसंज्वरः कामसन्तापः पयसां जलानां शोषप्रदः शोषक इत्यर्थः अतएव स्निग्धेन वत्सलेनापि जनेन बन्धुजनेनेत्यर्थः अपि दाहभयतः दाहभयात् करतलस्पर्शैः न परीक्ष्यः न द्रष्टुं शक्य इत्यर्थः, निर्वीर्य्यीकृताः चन्दनानाम् औषधानाञ्च विधयः येन तादृशे तस्मिन् स्मरसंज्वरे हारस्रजां मुक्तादाम्नां अमी विश्वे सर्वे मणयः अपि उरःस्थिता इति शेषः । तड़त्का-

रावणः। अयि सीताधात्रेयिके! तत्किमिति मैथिली मां प्रति (म) साचीकृतवक्त्रमास्ते।

धात्रेयी। णवाणुराओ एत्थ अवरज्झइ ण उण पिअसही जदो (२७)।

वक्कं च वत्तितंसं णिमेन्ति देहेण झत्ति वलिएण।
पढमुवणअवल्लहसङ्गमेण णडिआओ मुद्धमहिलाओ ॥१४॥ (य)

रावणः। किमुच्यते सीतायाः प्रियसखी खल्वसि (र) केतकसम्पर्कि सिचयमपि किमप्यामोदाय। सीतां प्रति। अयि! स्वागतं जनकराजजन्मनो जनस्य।

सीता। सख्याः कर्णे। एवमेवम्।

---

(२७) नवानुरागोऽत्रापराध्यति न पुनः प्रियसखी। यतः।
वक्त्रं च वर्त्तितांसं नियमयन्ति देहेन झटिति वलितेन।
प्रथमोपनतवल्लभसङ्गमेन नटिता मुग्धमहिलाः॥

---

रिवः तड़्दिति शब्दं कुर्वन्तः सन्तः ताजस्फोटं ताजगदित्यर्थः स्फुटति। शार्दूलविक्रीड़ितं वृत्तम्।

(म) साचीकृतवक्त्रं वक्रीकृतवदनम्।

(य) वक्त्रमिति। मुग्धाः अप्रौढाः महिलाः नार्य्यः प्रथमोपनतेन वल्लभसङ्गमेन प्रियसङ्गेन नटिताः लज्जिताः झटिति वलितेन वलितेन देहेन उपलक्षिताः सन्तः वर्त्तितांसं विवर्त्तितस्कन्धं यथा तथा वक्त्रं नियमयन्ति वदनं परावर्त्तयन्ति।

(र) सिचयं प्रान्तदेशः।

सिन्दूरिका । लङ्केश्वर ! (ल) सखीसञ्चारिताक्षरा जाणई विस्रवेदि अज्ज साअदं मन्दोदरीदइददंसणेण । (२८) ।

रावणः । स्वगतम् । वाढं स्निह्यति मयि वैदेही (व) ईर्ष्यायितं हि स्त्रीणां प्रकाशकं प्रेमभरस्य । विहस्य प्रकाशम् । ननु जानकीदयितदर्शनेनेति सम्प्रति वक्तव्यं भवति । सहर्षम् । हंहो हृदय ! मनोरथानामुपरि वर्त्तसे । यतः ।

> प्रेमरम्यमुभयोः समं दिशोः
> कामिनां यदिह चापपिच्छवत् ।
> एकतस्तु न चकास्ति साध्वपि
> श्यामपृष्ठमिव बर्हिणश्छदम् ॥ १५ ॥ (श)

सीता । स्वगतम् । एवमेवं भण ।

---

(२८) लङ्केश्वर ! सखीसञ्चारिताक्षरा जानकी विश्रवदति अद्य स्वागतं मन्दोदरीदयितदर्शनेन ।

---

(ल) सखीति सख्यां सञ्चारितानि अक्षराणि कथा यया सा ।

(व) ईर्ष्यायितं सेर्ष्याचरणं प्रेमभरस्य प्रेमातिशयस्य प्रकाशकं व्यञ्जकम् ।

(श) प्रेमेति । इह संसारे कामिनां मध्ये यत् चापपिच्छवत् मयूरपिच्छमिव उभयोः दिशोः समं तुल्यं प्रेम्णा रम्यं यः कामी उभयोः प्रेम्णा बद्ध इति भावः, तत् कामिरूपं वस्तु इत्यर्थः साध्वपि समानुरागमपीत्यर्थः एकतः एकस्यां दिशि नायिकायाश्च श्यामपृष्ठं बर्हिणः नीलकण्ठस्य छदं पत्रमिव न चकास्ति न शोभते । इन्द्रवज्रावृत्तम् । स्यादिन्द्रवज्रा यदि तौ जगौ ग इति लक्षणात् ।

त्रिजटा। (च) विसज्जिअलज्जाकण्ठबन्धं अप्पणा भत्ता जदो सअंदूदी दूदीणं वरिट्ठा (२९)।

सीता। यथाकृतम्। जधा समत्थिदं लङ्केस्सरेण ता एत्थ वत्थुणि मए विरइदाइं कदिचि वअणाणि सुणी-अदु (३०)।

एक्कदिसारम्मेणवि अलं सिणेहेण सिहिदलच्छविणा।
थुणिमो समदोवासं पेच्छं अ पिच्छोवमं पेम्मम् ॥१६॥ (ञ)

रावणः। तर्हि (ह) घनप्रेमनिविड़प्रेमा दशकण्ठो विजयते।

सीता। सुदरं जअदि दसकण्ठो (३१)।

---

(२९) विसर्जितलज्जाकण्ठबन्धमात्मना भर्त्ता यतः स्वयं दूती दूतीनां वरिष्ठा।

(३०) यथा समर्थितं लङ्केश्वरेण। तदत्र वस्तुनि मया विर-चितानि कतिचित् वचनानि श्रूयन्ताम्।

एकदिक्रम्येणापि अलं स्नेहेन शिखिदलच्छविना
स्तुमः समदिपार्श्वं प्रेक्ष्यं च पिच्छोपमं प्रेम ॥

(३१) सुतरां जयति दशकण्ठः।

---

(च) विसर्जितेति विसर्जितः परित्यक्तः लज्जायाः कण्ठबन्धः कण्ठालिङ्गनं यस्मिन् तत् यथा तथा लज्जां परित्यज्येति भावः।

(ञ) एकेति। एकस्यां निशायां रम्येण उज्ज्वलेन शिखिदल-च्छविना मयूरपिच्छकान्तिना स्नेहेन अलं, समदिपार्श्वं तुल्योभयपक्षं प्रेक्ष्यं सुदृश्यं पिच्छोपमं प्रेम स्तुमः प्रशंसामः।

(ह) घनः सान्द्रः निविड़ः दृढ़ः प्रेमा यस्य तथाविधः।

विन्दूरिका। लङ्केश्वर! (ल) सखीसञ्चारिदक्खरा जाणई विस्सवेदि अज्ज साअदं मन्दोदरीदइददंसणेण। (२८)।

रावणः। स्वगतम्। वाढं स्निह्यति मयि वैदेही। (व) ईर्ष्यायितं हि स्त्रीणां प्रकाशकं प्रेमभरस्य। विहस्य प्रकाशम्। ननु जानकीदयितदर्शनेनेति सम्प्रति वक्तव्यं भवति। सहर्षम्। हंहो हृदय! मनोरथानामुपरि वर्त्तसे। यतः।

प्रेमरम्यमुभयोः समं दृशोः
कामिनां यदिह चापपिच्छवत्।
एकतस्तु न चकास्ति साध्वपि
श्यामपृष्ठमिव बर्हिणच्छदम्॥ १५॥ (श)

सीता। सरोषा कर्णे। एवमेवं भण।

---

(२८) लङ्केश्वर! सखीसञ्चारिताक्षरा जानकी विज्ञापयति अद्य स्वागतं मन्दोदरीदयितदर्शनेन।

---

(ल) सखीति सख्यां सञ्चारितानि अक्षराणि कथा यया सा।

(व) ईर्ष्यायितं सेर्ष्याचरणं प्रेमभरस्य प्रेमातिशयस्य प्रकाशकं व्यञ्जकम्।

(श) प्रेमेति। इह संसारे कामिनां मध्ये यत् चापपिच्छवत् मयूरपिच्छमिव उभयोः दृशोः समं तुल्यं प्रेमणा रम्यं यः कामी उभयोः प्रेमणा बद्ध इति भावः, तत् कामिरूपं वस्तु इत्यर्थः साध्वपि समानुरागमपीत्यर्थः एकतः एकस्यां दिशि नायिकायाञ्च श्यामपृष्ठं बर्हिणः नीलकण्ठस्य छदं पत्रमिव न चकास्ति न शोभते। इन्द्रवज्रावृत्तम्। स्यादिन्द्रवज्रा यदि तौ जगौ ग इति लक्षणात्।

चन्द्रिका। (घ) विसज्जिअलज्जाकण्ठबन्धं अप्पणा भण जदो सअंदूदी दूदीणं वरिट्ठा (२९)।

सीता। सयाक्तम्भम्। जधा समत्थिदं लङ्केस्सरेण ता एत्थ वत्थुणि मए विरइदाइं कदिचि वअणाणि सुणी-अदु (३०)।

एक्कदिसारम्मेणवि अलं सिणेहेण सिहिदलच्छविणा।
थुणिमो समदीवासं पेच्छं अ पिच्छोवमं पेम्मम् ॥१६॥ (स)

रावणः। तर्हि (ह) घनप्रेमनिविड़प्रेमा दशकण्ठो विजयते।

सीता। सुदरं अअदि दसकण्ठो (३१)।

---

(२९) विसर्जितलज्जाकण्ठबन्धमात्मना भण यतः स्वयं दूती दूतीनां वरिष्ठा।

(३०) यथा समर्थितं लङ्केश्वरेण। तदत्र वस्तुनि मया विर-चितानि कतिचित् वचनानि श्रूयन्ताम्।

एकदिक्रम्येणापि अलं स्नेहेन शिखिदलच्छविना
स्तुमः समद्विपार्श्वं प्रेक्ष्यं च पिच्छोपमं प्रेम ॥

(३१) सुतरां जयति दशकण्ठः।

---

(घ) विसर्जितेति विसर्जितः परित्यक्तः लज्जायाः कण्ठबन्धः कण्ठालिङ्गनं यस्मिन् तत् यथा तथा लज्जां परित्यज्येति भावः।

(स) एकेति। एकस्यां दिशायां रम्येण उज्ज्वलेन शिखिदल-च्छविना मयूरपिच्छकान्तिना स्नेहेन अलं, समद्विपार्श्वं तुल्योभयपक्षं प्रेक्ष्यं सुदृश्यं पिच्छोपमं प्रेम स्तुमः प्रशंसामः।

(ह) घनः सान्द्रः निविड़ः दृढ़ः प्रेमा यस्य तथाविधः।

समपेम्मरसं समरूवजोव्वणं समविलासवेसट्टम् ।
समसुहदुःखं च जणं समपुण्णेहिं जणो लहइ ॥१७॥ (च)

रावणः । अहो ! (क) सूक्तिपाको जनकसुतायाः । यतः ।

स्वादूनां प्रथमाय रूपविभवं मिथ्या मिथस्तन्वते
प्रेम्णे स्वस्ति मनोभवैकसुहृदे यस्य प्रसादादिह ।
दम्पत्योरनपेक्षितप्रियसखीचित्रप्रकारोक्तयो-
र्जायन्ते प्रहरान्तरेऽपि शतशः कोपप्रसादोदयाः ॥१८॥ (ख)

सीरध्वजात्मजे ! देवि ! तदिदं विज्ञाप्यसे ।
दृग्लीलासु सकौतुकं यदि मनस्तस्मै दृशां विंशति-
र्निःसन्धौ परिरम्भणे रतिरथो दोर्मण्डली दृश्यताम् ।

---

( १७ ) समप्रेमरसं समरूपयौवनं समविलासर्थिशिष्टम् ।
समसुखदुःखं च जनं समपुण्यैर्जनो लभते ॥

---

( च ) समेति । स्पष्टम् ।

( क ) सूक्तिपाकः शोभनायाः उक्तेः पाकः परिपक्वता ।

( ख ) स्वादूनामिति । स्वादूनां स्वाद्यरसानां प्रथमाय श्रेष्ठाय मिथः परस्परं रूपविभवं सौन्दर्यप्रभावं मिथ्या तन्वते विस्तारयते रूपेण किं प्रेमैव सार इति व्यज्यते इत्यर्थः मनोभवस्य कामस्य एकसुहृदे अद्वितीयमित्राय प्रेम्णे स्वस्ति शुभमस्तु इह संसारे यस्य प्रेम्णः प्रसादात् प्रभावात् अनपेक्षिताः प्रियसखीनां चित्रप्रकाराः विचित्राः उक्तयः येषु तथाविधाः दम्पत्योः स्त्रीपुंसयोः शतशः बहुश इत्यर्थः कोपप्रसादोदयाः क्रोधप्रसादानाम् उदयाः प्रहरान्तरेऽपि जायन्ते । प्रेमप्रभावात् क्षणान्तरेऽपि विना सखीनामनुरोधवचांसि मानभङ्गः स्यात् यूनोरिति भावः । शार्दूलविक्रीडितं वृत्तम् ।

( ग ) दृगिति । हे वैदेहि ! यदि दृग्लीलासु दृष्टिभङ्गिषु

प्रेमा चेत्परिचुम्बने दशमुखी वैदेहि ! सज्जा पुरः
पौलस्त्यस्य च राघवस्य च महत् पश्योपचारेऽन्तरम् ॥१९॥(ग

अपिच जानकि ! लङ्कास्वामित्वे सति ।

मदनघभुजदण्डग्रामचण्डप्रताप-
प्रतिहतदयितानां खेचरीणां शिरःसु ।
तव करपुटचेष्टासज्जसेवाञ्जलीनां
चरणनखशिखाली शेखरीभावमेतु ॥ २० ॥ (घ)

---

सकौतुकं मनः ते इति शेषः सर्वत्र योज्यम् । तत् तदा मे दृशां विंशतिः वीक्ष्यतां दृश्यताम् अथ यदि निःसङ्गौ गाढ़े दृढ़ार्थः परिरम्भणे रतिः अभिलाषः तदा मे दोर्मण्डली भुजसमूहो वीक्ष्यतां चेत् यदि परिचुम्बने प्रेमा अनुरागः तदा मे दशानां मुखानां समाहारः दशमुखी पुरः अग्रतः सज्जा प्रस्तुतेत्यर्थः । अतः उपचारे सेवायां पौलस्त्यस्य रावणस्य च राघवस्य रामस्य च महत् अन्तरं प्रभेदं पश्य । रामो हि द्वाभ्यां नेत्राभ्यां बाहुभ्याञ्च मुखेनैकेन च तव मनोरथं पूरयति अहन्तु विंशत्या लोचनैः विंशत्या बाहुभिः दशभिर्मुखैश्च ते मनोरथं पूरयामीति अन्तरस्य महत्त्वमिति भावः । शार्दूलविक्रीड़ितं वृत्तम् ।

(घ) मदिति । मम अनघानाम् अपापानां शुभानामित्यर्थः बाहुदण्डग्रामाणां भुजदण्डसमूहानां विंशतेर्भुजानामित्यर्थः चण्डैः उग्रैः प्रतापैः प्रतिहताः पराजिताः दयिताः पतयः यासां तासां अतएव करपुटैः सज्जाः देयाञ्जलयः याभिः तादृशीनां खेचरीणां देवीनां शिरःसु तव चरणनखानां शिखाली शिखाश्रेणिः शेखरीभावं शिरोदामत्वम् एतु गच्छतु । मम लङ्कायाः स्वामिनीं त्वां देव्यः सेविष्यन्ते इति भावः । मालिनीवृत्तम् ।

सीता । अं दसाणण ! अं (ङ) पुरिसविसेसपरिसं-
कुक्करिसिणीओ जेव्व पुरन्धीओ होन्ति (३२) ।

राघवः । किञ्चिदुपसृत्य । सुन्दरि ! किमद्यापि सन्दि-
ह्यते । तदेहि ।

लीलोद्याने यदि सुरपतेरस्ति वाञ्छा विहर्तुं
मेरोः शृङ्गे यदि च विसरत्तारकाचन्द्रदाम्नि ।
चञ्चाभोगोद्भ्रमरपुलकां देहि वैदेहि ! तस्मै
लङ्काभर्त्तुर्निविडितकुचामादरादङ्कपालीम् ॥२१॥ (च)

इति भावयति । सचमत्कारम् । (छ)कथमयमसूर्य्यः संस्पर्शः ।

---

(३२) यां दशानन ! यां पुरुषविशेषपरिशङ्कोत्कर्षिण्य एव पुरन्ध्र्यो भवन्ति ।

---

(ङ) पुरुषेति पुरुषविशेषात् या परिशङ्का भयं तया उत्-
कर्षिण्यः उत्कर्षभाजः । पुरन्ध्र्यः स्त्रियः । पुरुषविशेषात् भयेन
महामात्यानामपि माननीया भवन्ति तत्प्रेयस्य इति भावः ।

(च) लीलेति । यदि सुरपतेः इन्द्रस्य लीलोद्याने नन्दने,
यदि च विसरत् विस्तारं गच्छत् तारकाणां चन्द्रस्य च दाम माल्यं
यस्मिन् तादृशे चन्द्रताराभिरलङ्कृते इत्यर्थः मेरोः शृङ्गे शिखरे
विहर्त्तुं वाञ्छा अभिलाषः अस्ति तवेति शेषः, तत् तदा हे वैदेहि !
चञ्चुः विशालः यः आभोगः विस्तारः तस्मिन् उद्भ्रमराः उत्फुल्लाः
पुलकाः लोमाञ्चाः यस्यां तादृशीम् अङ्कपालीम् उत्सङ्गदेशम् आद-
रात् लङ्काभर्त्तुर्मे मम देहि आलिङ्गनम् इत्यर्थः । मन्दाक्रान्ता-
वृत्तम् ।

(छ) असूर्य्यः अश्लीकः ।

रूपसम्पदमरीषु नेदृशी
सर्प एष च दृषत्सहोदरः ।
तन्मतिर्मम विदेहजन्मनो
मां परीक्षितुमियं विजानतः ॥ २२ ॥ (ज)

पुनर्निरूप्य। अये! सारिकाधिष्ठितवक्षं सीताप्रतिकृतियन्त्रम्। अहो! मतिमान् मायामयश्छलितोऽसि जनकराजपुत्र्याः प्रतिकृतिसमर्पणेन तद्गच्छ मद्विनोदार्थमिमां भवनस्थां कुरु। इति सीतामिन्दूरिके मायामयश्च निष्क्रान्ताः।

रावणः। मदनाकूतमभिनीय। प्रभञ्जनिके! लीलोद्यानमार्गमादिश येन (झ) युगपदुपस्थितरात्रिन्दिवे युगपदभ्युदितसूर्य्याचन्द्रमसि युगपद्विभक्तसर्वर्त्तुनि तत्र सीताविरहदुःखिनमात्मानं विनोदयामि। भोः प्रहस्त! तदितो गत्वा सन्निधीयतां शिशिरः पदार्थसार्थो विप्रकृष्यतां तदितरः।

प्रहस्तः। परिक्रामन्।

---

(ज) रूपेति। अमरीषु देवीषु ईदृशी रूपसम्पत् न अस्तीति शेषः, एष च सर्पः दृषत्सहोदरः पाषाणसदृशः, तत् तस्मात् विजानतः विदेहजन्मनः जनकस्य मां परीक्षितुम् इयं मतिः ईदृशी बुद्धिः उत्पन्नेति शेषः। इन्द्रवज्रावृत्तम्।

(झ) युगपत् समकालम्। उपस्थितेति उपस्थितं रात्रिन्दिवं यत्र तादृशे। विभक्ताः विभज्य स्थापिताः सर्वे ऋतवः यस्मिन् तथाभूते। सन्निधीयताम् उपस्थाप्यतां शिशिरः शीतलः पदार्थसार्थः वस्तुसमूहः। विप्रकृष्यतां निराक्रियतां दूरीक्रियतामित्यर्थः तस्मात् शिशिरात् इतरः अन्यः उष्णपदार्थ इत्यर्थः।

कस्त्वं चैत्र किमत्र पुष्पधनुषः का शक्तिरिन्दोरपि
व्यावर्त्तस्व वसन्तवात ! विरम त्वं काकलोपक्रम ! ।
देवेऽस्मिन् दशकन्धरे भवत मा संरम्भगर्भक्रमाः
प्रागल्भी भवतां हरौ विजयिनो तस्मिन्नहल्यापतौ ॥ २३ ॥ (ञ)

निष्क्रान्तः । नेपथ्ये ।

राहो ! तर्जय भास्करं वरुण ! हे निर्वाप्यतां पावकः
सर्वे वारिमुचः ! समेत्य कुरुत ग्रीष्मस्य दर्पच्छिदम् ।
प्रालेयाचल ! चन्द्र ! दुग्धजलधे ! हेमन्तमन्दाकिनि !
द्राग्देवस्य गृहानुपेत भवतां सेवाक्षणो वर्त्तते ॥ २४ ॥ (ट)

प्रतीहारी । इदो इदो एदु देवो इमं कोलुज्जाणम् (२२)

उभौ प्रविशतः ।

---

(२२) इत इत एतु देवः एतत्क्रीडोद्यानम् ।

---

(ञ) कस्त्वमिति । हे चैत्र ! मधुमास ! त्वं कः ? अत्र अस्मिन् लङ्कापुरे पुष्पधनुषः कामस्य किम् ? इन्दोश्चन्द्रस्यापि का शक्तिः ? हे वसन्तवात ! मलयसमीर ! व्यावर्त्तस्व निवर्त्तस्व, हे काकलीपक्रम ! कोकिल ! त्वं विरम, अस्मिन् दशकन्धरे देवे संरम्भगर्भक्रमाः संरम्भः कोपः । संरम्भः सम्भ्रमे कोपे इत्यमरः । गर्भे यस्य तादृशः क्रमः व्यापारः येषां तथाभूताः मा भवत यूयमिति शेषः । तस्मिन् अहल्यापतौ अहल्याजारे इत्यर्थः हरिरिव इन्द्रे भवतां विजयिनी विजयसाधनी प्रागल्भी पराक्रमः अस्तु इति शेषः । शार्दूलविक्रीडितं छन्दः ।

(ट) राहो इति । हे राहो ! भास्करं सूर्यं तर्जय निर्भर्त्सय ग्रसेत्यर्थः । हे वरुण ! पावकः अग्निः निर्वाप्यताम् । हे वारिमुचः ! जलदाः ! । सर्वे यूयं समेत्य मिलित्वा ग्रीष्मस्य दर्पच्छिदम्

रावणः। भद्रे! सकलर्तुसमलङ्कृतानुद्यानोद्देशान् द्रष्टुमिच्छामि।

प्रतीहारी। ता इदो इदो एदु दसाणणदेवो (२४)।

रावणः। परिक्रामति।

प्रतीहारी। एसो (ठ) सलिलसोणदुव्वहविअडपुण्डरीअम-ण्डलो जलद्दासंदाणिदसुन्दरीदेहकन्दलसलीलपरिरम्भपज्ज-लिदकामिअणाणुक्को गिम्हो (२५)।

रावणः। अये! ग्रीष्मः। इह हि।

यावद्बालं कमलकलिकाः प्रातरेव स्फुटन्ति
श्यामामध्ये विकचयति चेन्नीलमब्जं मृगाङ्कः।

---

(२४) तदित इत एतु दशाननदेवः।

(२५) एष सलिलशोषदुर्वहविकटपुण्डरीकमण्डलो जलार्द्रासन्दा-नितसुन्दरीदेहकन्दलसलीलपरिरम्भप्रज्वलितकामिजनानुकूलो ग्रीष्मः।

---

कह्लारमालम् उपयमभिलर्णैः कुरुत। हे प्रालेयाचल! हिम-मेघ! हे चन्द्र! हे दुग्धजलधे! हे क्षीरनिधे! हे हेमन्त! हे मन्दा-किनि! सुरनदि! द्राक् झटिति देवस्य रावणस्य स्वहान् उपेत आगच्छत यूयमिति शेषः, भवतां युष्माकं सेवायाः अयः समयः वर्त्तते। शार्दूलविक्रीडितं वृत्तम्।

(ठ) सलिलेति सलिलस्य जलस्य शोषेण दुर्वहविकटानि दूरोद्वहस्थलानि पुण्डरीकमण्डलानि सिताम्बुजानि यस्मिन् तादृशः। जलार्द्रेति जलार्द्राभिः सजलैः अञ्चलैः सन्दानितानां सेवितानां सुन्दरीदेहकन्दलानां कामिनीगात्रनिचयानां सलीलपरिरम्भेण सवि-लासालिङ्गनेन प्रज्वलितेषु आनन्दमुकुलितेषु कामिजनेषु अनुकूलः शीतलः उष्णत्वेन अप्रतीयमान इत्यर्थः।

(ड) यावदिति। अमुष्मिन् अरठितः परिचितः अतिलोम

ग्रीष्मेऽस्मिन् जरठितरवौ रागिणां गात्रदेशाः
सद्यः शुष्कैरिव च सलिलैः संक्लिद्यन्ते जलार्द्राः ॥२५॥ (ड)

अपि च । (ढ)

कर्णे स्मेरं शिरीषं शिरसि विकचितस्रग्लताः पाटलिन्यः
कण्ठे माला विशाला वपुषि च नलिनीमूलकाण्डाः कलापाः ।
सामोदं चन्दनाम्भः स्तनभुवि नयने स्नानमाञ्जिष्ठपृष्ठे
गात्रं स्रोतज्जलार्द्रं जयति मृगदृशां ग्रैष्मिको वेष एषः ॥२६॥

तापातिरेकमभिनीय ।

---

ऽत्रार्थः रविः यस्मिन् तादृशे ग्रीष्मे कमलकलिकाः प्रातरेव यावत्यावं यावन्ति नामानि यावद्यावमित्यव्ययीभावः । चेत् यदि स्फुटन्ति विकसन्ति तथा यामामध्ये रात्रिमध्ये मृगाङ्कः चन्द्रः नीलम् अब्जं नीलोत्पलमित्यर्थः चेत् विकचयति विकासयति तदा रागिणां कामिनां गात्रदेशाः जलार्द्राः सजलव्यजनानि सद्यः तत्क्षणं शुष्कैः सलिलैरिव संक्लिद्यन्ते पुनः पुनः सलिलैः आर्द्रीक्रियन्ते इति भावः । मन्दा-क्रान्तावृत्तम् ।

(ढ) कर्णे इति । मृगदृशां हरिणाक्षीणाम् एषः ग्रैष्मिकः नैदाघः वेषः जयति । कः कोऽसावित्याह कर्णे इति कर्णे स्मेरं विकसितं शिरीषं शिरीषकुसुमम् । शिरसि पाटलिन्यः पाटलकुसुमग्रथिताः विकचितस्रग्लताः विकसितमाल्यवल्ली । कण्ठे विशाला दीर्घा माला मुक्ताहारः । वपुषि गात्रे नलिन्याः मूलकाण्डाः मूलखण्डानि कलापा भूषणानि वा काञ्चयः । स्तनभुवि कुचपरिसरे सामोदं सौरभ-युक्तं चन्दनाम्भः चन्दनजलं नयने नेत्रयुगलं स्नानं रञ्जितमित्यर्थः माञ्जिष्ठं मञ्जिष्ठारागः पृष्ठे ययोः तादृशे । तथा गात्रं शरीरं स्रोतद्भिः पतद्भिः जलैः आर्द्रम् । स्रग्धरावृत्तम् ।

मयि शिशिरतरोपचारयोग्ये
द्वितयमिदं युगपच सह्यमेव ।
जरठितरविदीधितिश्च कालो
दयितजनेन समं च विप्रयोगः ॥ २७ ॥ (च)

तदग्रतो दर्शय ।

प्रतीहारी । पदान्तरे स्थित्वा । एस (त) णीसेसमिलिदबन्धवो भग्गपथिअमग्गो लङ्गलीकुसुमालिङ्गिदचङ्गत्तणो विआसजज्जरिअजरठकेसरकुडुम्बडम्बरो कुसुमाउहविलासविक्कमेक्कारम्भो वरिसारम्भो (२६) ।

रावणः । अपि वर्षा ऋतुः । इह हि ।

---

(२६) एष निःशेषमिलितबान्धवो भग्नपथिकमार्गो लाङ्गलीकुसुमालिङ्गितसौन्दर्यो विकासजर्जरजरठकेसरकुटुम्बडम्बरः कुसुमायुधविलासविक्रमैकारम्भो वर्षारम्भः ।

---

(च) मयीति । शिशिरतरस्य अतिशीतलस्य उपचारस्य सेवायाः योग्ये मयि जरठितः परिणतः अतितीव्रः रविदीधितिर्यत्र तथाभूतः कालः दयितजनेन प्रियजनेन मैथिल्या इति भावः समं सह विप्रयोगः विरहश्च इदं द्वितयं युगपत् समकालं न सह्यमेव । पुष्पिताग्रावृत्तम् ।

(त) निःशेषेति निःशेषं मिलिताः प्रवासात् प्रतिनिवृत्ताः बान्धवाः प्रियजनाः यस्मिन् तथोक्तः वर्षासु पथिकानां स्वदेशागमनस्य प्रसिद्धत्वादिति भावः । भग्नाः नष्टाः पथिकानां मार्गाः गतागतयोः पन्थानः यत्र तादृशः । लाङ्गलीकुसुमैः लाङ्गल्याख्यतरुपुष्पैः आलिङ्गितं प्राप्तं सौन्दर्यं यस्मिन् तथाभूतः, वर्षासु लाङ्गल्यः स्फुटन्तीति प्रसिद्धिः । विकासेन जर्जरन् स्खलन् जरठानां चिरविकसितानां

पञ्चेषोर्गुणघोषणाय गुणकस्त्रैलोक्यचिन्तातिथे-
स्तूर्य्यं ताण्डवसंविधासु शिखिनां हंसप्रवासानकः ।
सूतिस्वस्त्ययनं विदूरवसुधारत्नाङ्कुराणामयं
गम्भीरस्तनितध्वनिर्जलमुचां रोदोऽन्तरं गाहते ॥ २८ ॥ (थ)

अपि च ।

सम्पिण्डीकृतजीर्णजीरककणश्रेणीश्रियः केशरान्
स वक्तं परितो निरन्तरदलैर्द्रोणीनिवेशैस्त्रिभिः ।
प्रान्तभ्रान्तमधुव्रतीवलयितं स्वस्ति प्रियासङ्कटे
गन्धग्राह्यमवाप्तवृत्ति दलति क्रीडावने केतकम् ॥२९॥ (द)

सोत्कण्ठम् ।

---

केशरकुटुम्बानां बकुलवृक्षाणां डम्बरः विस्तारः यस्मिन् तथाभूतः । कुसुमायुधस्य कामस्य यो विलासविक्रमस्य लीलाचेष्टितस्य एकःसत्य आरम्भः उद्योगः यस्मिन् तथाविधः ।

(थ) पञ्चेषोरिति । त्रैलोक्यस्य चिन्तातिथेः मनोभवस्य पञ्चेषोः कामस्य गुणघोषणाय अयं गुणकः अग्रदूतः शिखिनां मयूराणां ताण्डवसंविधासु नर्त्तनव्यापारासु तूर्यं वाद्यभेदः, हंसानां प्रवासाय प्रवासगमनाय इत्यर्थः आनकः पटहरवः वर्षासु हंसाः पृथिवीं विहाय मानसं यान्तीति प्रसिद्धेः । तथा विदूरवसुधायाः विदूराख्यप र्वत- भूमेः रत्नाङ्कुराणां मणिमयशलाकानां सूतेः उत्पत्तेः स्वस्त्ययनं शुभसूचकं वचनं विदूरभूमिर्नवमेघशब्देन रत्नानि प्रसूते इति प्रसिद्धिः विदूर- भूमिर्नवमेघशब्दादुद्भिन्नया रत्नशलाकयेवेति कालिदासः । अयं जलमुचां जलदानां गम्भीरः स्तनितानां गर्जितानां ध्वनिः रोदोऽन्तरं द्यावा- पृथिव्योरन्तरालं गाहते पूरयतीत्यर्थः । स्रग्धरा वृत्तम् ।

(द) सम्पिण्डीकृतेति । सम्पिण्डीकृतानां एकत्र स्थितानां

विरम जलदकाल ! स्वस्ति ते भद्र ! भूया-
दनुचितपरिवारस्त्वं तवैते तथा हि ।
विरहमविरहं वा नानुरुन्धन्ति मेघाः
सुखिनमसुखिनं वा सर्वमुत्कण्ठयन्ति ॥ ३० ॥ (ध)

तदग्रतो दर्शय ।

प्रभञ्जिका पदान्तरे स्थित्वा । एस (न) करन्दिओदारसुन्दरी

---

(२७) एषा करन्दिकावतारसुन्दरी दलितनीलेन्दीवरवना बन्धू-

---

जीर्णानां पुरातनानां नीरजवनानां शोभाः श्रीरिव श्रीर्येषां तादृशान् केशरान् किञ्जल्कान् किञ्जल्कः केशरोऽस्त्रियामित्यमरः । परितः सर्वतः केशराणां पर्यन्तेषु दलार्धैः द्रोण्याः काकाम्बु-वाहिन्याः द्रोणी काकाम्बुवाहिनीत्यमरः । इव निवेशः संस्थानं येषां तादृशैः त्रिभिः निरन्तरैः अविच्छिन्नैः दलैः सन्नद्धं व्याप्तं प्रान्तेषु भ्रान्तिभिः भ्रमन्तीभिः मधुव्रतीभिः भ्रमरीभिः वलयितम्, आवृतम् । प्रियासङ्कटे प्रियायाः सीतायाः सङ्कटे वियोगे सति शुभं विनोदकमिति यावत् गन्धप्रायं गन्धेन विकासोन्मुखत्वेन प्रतीयमानमित्यर्थः अवाप्ता वहिरङ्गा वृत्तिः विकासव्यापारः यस्य तथाविधं विकासोन्मुखमिति भावः केतकं केतकीकुसुमं क्रीडावने दलति विकसति । शार्दूलविक्रीडितं वृत्तम् ।

(ध) विरमेति । हे जलदकाल ! वर्षर्तो ! विरम निव-र्तस्व, हे भद्र ! ते तव स्वस्ति शुभं भूयात् त्वम् अनुचितः अयोग्य इत्यर्थः परिवारो यस्य तथाविधः तथाहि तव एते मेघाः विरहं वा अविरहं न अनुरुन्धन्ति न पश्यन्ति न विवेचयन्तीत्यर्थं, सुखिनं प्रियासङ्गेन सुखायन्तं वा असुखिनं प्रियाविरहतप्तं सर्वं जनं उत्कण्ठ-यन्ति व्याकुलयन्ति । वसन्ततिलकं वृत्तम् ।

(न) करन्दिकेति । करन्दिकानां शम्बविशेषाणाम् अवतारेषु

दलिदणीलेन्दीवरवणो बन्धूअविच्छाइदमहिन्दकोअण्डो विरलीकिदकेअइकुसुमवासप्पसरो मणोहरीकिदणीसेससरसो सरओ (२७)॥

राघवः। अयि ! शरत्।

अवतरति घनात्ययः किमन्य-
द्विकसितकुङ्कुमकेसरावतंसः।
परिसरपुलिनेषु निम्नगानां
सपदि समागतराजहंसयूथः॥ ३१॥ (प)

अपिच।

---

बविच्छायितमहेन्द्रकोदण्डा विरलीकृतकेतकीकुसुमवासप्रसरा मनोहरीकृतनिःशेषसराः शरत्।

---

विकाशेन सुन्दरी रमणीया दलितानि विकाशं गतानि नीलेन्दीवराणां वर्णानि यस्याः तथोक्ता। बन्धूकैः पुष्पविशेषैः विच्छायितं विवर्णीकृतम् अनुकृतमित्यर्थः महेन्द्रकोदण्डम् इन्द्रधनुः यस्यां तथोक्ता विरलीकृताः ह्रासं गमिताः केतकीकुसुमानां वासप्रसराः सौरभसञ्चारा यस्यां तथाभूता मनोहरीकृतानि निःशेषाणि सरांसि यस्यां तादृशी।

(प) अवतरतीति। अन्यत् किम्? नान्यत् किमपीत्यर्थः सपदि झटिति विकसितः कामिनीकपोलेषु शोभां गतः कुङ्कुमकेसर एव अवतंसः कर्णभूषणविशेषः यत्र तथोक्तः तथा निम्नगानां नदीनां परिसरपुलिनेषु प्रान्तसैकतेषु समागतानि सम्मिलितानि राजहंसयूथानि यस्मिन् तथाविधः घनात्ययः शरदृतुः अवतरति आविर्भवति। पुष्पिताग्रा वृत्तम्।

कुर्वाणाः कैरवाणां मधुकरहरणं कूजितं रञ्जयन्तो
हंसालीकण्ठनालीष्वविकलकमलामोदमैत्रीपवित्राः ।
शेफालीफुल्लपालीपरिमलमिलनाचुम्बिताश्चञ्चरीकैः
कह्लाराह्लादकाराः कुवलयसुहृदः शारदा वान्ति वाताः ॥२१॥ (क)

साभिलाषम् ।

कुवलयमप्सु दिवीन्दुः सिन्धुषु पुलिनानि वाक् च हंसीषु ।
इत्यवयवैर्विभक्तां सीतां दर्शयति शरदेषा ॥२२॥ (ख)

तापमभिनीय । सोऽयमपरः शरन्नामा ग्रीष्मः । तदग्रतो दर्शय ।

प्रतीहारी । पदान्तरे स्थित्वा । एस (ग) अणहिणन्दिदलोआ-

---

(१८) एष अभिनन्दितलोकमण्डलमण्डनः प्रसारिणीरम्य-

---

(क) कुर्वाणा इति । कैरवाणाम् उत्पलानां मधुकराणां हरणं कुर्वन्तः हंसालीनां हंसश्रेणीनां कण्ठनालीषु कूजितं रवं रञ्जयन्तः रञ्जितं कुर्वन्तः अविकलानां प्रफुल्लानां कमलानां पद्मानां कलमानामिति पाठे धान्यानाम् आमोदेन सौरभेण या मैत्री सङ्गः तेन पवित्राः विशुद्धाः रम्या इत्यर्थः शेफालीनां फुल्लाः विकसिताः या पाल्यः राजयः तासां परिमलैः गन्धैर्मिलन्तीति तथोक्ताः चञ्चरीकैः भ्रमरैः चुम्बिताः आघ्राता इत्यर्थः कह्लाराणां रक्तोत्पलानां कह्लारं रक्तसौगन्धिके इत्यमरः । आह्लादं विकाशं कुर्वन्तीति तादृशाः तथा कुवलयानां नीलोत्पलानां सुहृदः सङ्गिनः शारदाः वाताः वायवः वान्ति वहन्ति । स्रग्धरावृत्तम् ।

(ख) कुवलयमिति । एषा शरत् अप्सु जलेषु कुवलयं नीलोत्पलं दिवि आकाशे इन्दुः चन्द्रः सिन्धुषु नदीषु पुलिनानि सैकतानि हंसीषु वाक् च इति एवं रूपैः अवयवैः अङ्गैः नेत्रादिभिः विभक्तां विभज्य निर्मितां सीतां दर्शयति प्रकाशयति । आर्यावृत्तम् ।

(ग) अनभिनन्दितेति । अनभिनन्दितम् अनादृतं शोकक

मज्जदुन्मज्जज्जनो प्रसरत्सौरभ्यलोध्ररजःपुञ्जपिञ्जरितदिङ्मुखो ऽनियन्त्रितक्रौञ्चीकुलकोलाहलाडम्बरकरम्बितसीमान्तो हेमन्तो (१८)।

रावणः। अये! हेमन्तः।

इह हि वहति कामं कामकोदण्डयष्टिं
द्रविडयुवतिगण्डश्यामिकां लोध्रकारः।
चिरविरहितहंसीकण्ठकाण्डावपाण्डुः
स्फुरति च रुचिमत्ता पर्वणां पुण्ड्रकस्य ॥ २४ ॥ (म)

अपि च।

---

लोध्ररजः पुञ्जपिञ्जरितदिङ्मुखोऽनियन्त्रितक्रौञ्चीकुलकोलाहलाडम्बर-करम्बितसीमान्तो हेमन्तः।

---

विषादेन मज्जनम् उन्मज्जनं सलिलादिति भावः यस्मिन् तथाविधः अनाहतजलप्रवेश इत्यर्थः प्रसारिभिः विस्तारं गतैः सौरभ्यैः सान्द्रैः लोध्राणां लोध्राख्यतरुकुसुमानां रजःपुञ्जैः परागवृन्दैः पिञ्जरितानि पिङ्गलीकृतानि दिशां मुखानि येन तथोक्तः। अनियन्त्रितानाम् अप्रतिबद्धानां क्रौञ्चीकुलानां कोलाहलाडम्बरैः कलरवसमूहैः करम्बितः स्पृष्टः सीमान्तः जनपदपर्यन्तभागः यस्मिन् तथाभूतः।

(म) इहेति। इह हेमन्ते लोध्रकारः भाण्डारो कामस्येति शेषः। द्रविडयुवतीनां द्राविडतरुणीनां गण्डस्येव श्यामिका मालिन्यं यस्यां तथाभूतां कामस्य कोदण्डयष्टिं धनुर्दण्डं निश्चितं कामं वहति हेमन्ते कामधनुषः प्रयोगाभावेन मालिन्यमिति भावः। किञ्चेति चार्थः। पुण्ड्रकस्य इक्षुविशेषस्य पर्वणां ग्रन्थ्यन्तर्गतांशानां रुचिमत्ता दीप्तिः चिरविरहितानां हंसीनां कण्ठकाण्डवत् अवपाण्डुः अतिधवला सती स्फुरति राजते। मालिनी वृत्तम्।

लम्पाकीनां किरन्तश्चिकुरविरचनां रल्लकानाच्छादयन्त-
श्चुम्बन्तश्चन्द्रभागासलिलमविकलं भूर्जकाषैकचण्डाः ।
एते कस्तूरिकैणप्रणयसुरभयो वल्लभा बाह्लवीनां
कौन्तालीकेलिकाराः परिचयितहिमं हैमना यान्ति वाताः ॥२५॥ (य)

तापमभिनीय ।

सर्वाङ्गमदनोद्दाहः स कोऽपि मम वर्त्तते ।
अप्येष हन्त हेमन्तो यत्रोष्णसमयायते ॥ २६ ॥ (र)

तदग्रतो दर्शय ।

---

(य) लम्पाकीनामिति । लम्पाकीनां तद्देशभवनारीणां चिकुराणां कुन्तलानां चिकुरः कुन्तलो वालः कचः केशः शिरोरुह इत्यमरः । विरचनां किरन्तः कारयन्त इत्यर्थः हेमन्ते ताः केशविन्यासं कुर्वन्तीति प्रसिद्धिः । रल्लकान् मृगभेदान् आच्छादयन्तः आच्छादयन्त इत्यर्थः, चन्द्रभागाया नद्याः सलिलम् अविकलं सम्यक् चुम्बन्तः स्पृशन्तः, भूर्जानां भूर्जत्वचां काषे घर्षणे कम्पने इत्यर्थः एकचण्डाः अतिपटवः भूर्जत्वचः कम्पयन्त इत्यर्थः कस्तूरिकैणानां गन्धमृगाणां प्रणयेन सङ्गेन सुरभयः मृगनाभिगन्धा इत्यर्थः बाह्लवीनां बाह्लदेशीयानां नारीणां वल्लभाः प्रियाः तथा कौन्तालीनां तद्देशभवयुवतीनां केलिकाराः हैमनाः हेमन्तभवा वाताः वायवः यान्ति । स्रग्धरावृत्तम् ।

(र) सर्वेति । स प्रसिद्धः कोऽपि अनिर्वचनीयः मम सर्वेषु अङ्गेषु मदनस्य कामस्य उद्दाहः सन्तापः वर्त्तते । यत्र कामोपतापे सति हन्त खेदे एषः हेमन्तोऽपि उष्णसमयायते निदाघवत् आचरति । पथ्यावक्त्रं वृत्तम् ।

प्रतीहारी । पटान्तरे स्थित्वा । एस (ख हिमुल्लसिदतरुणदमण-अकन्दलो णिविडणिवडन्ततुहिणकणुक्केरणिव्विण्णगन्धवहप-रिरम्भो अवअंसीकिदतअणतरणिकिरणुक्केरो पुरावरद्धपञ्च-विच्छाअमिअलञ्छणो णिज्जिदणीसेससिरी सिसिरो (३८) ।

रावणः । अये ! शिशिरः । इह हि ।

वह्नेः शक्तिर्जलमिव गता दर्शनाद्दाहहन्ते-
र्नित्योत्कम्पो नवमरुवके वर्त्तते पुष्पकार्य्यम् ।
शीतात्त्रासं दधदिव रविर्याति याम्यां तथामी-
नीहारार्त्तैरिव च दिवसाः साम्प्रतं सङ्कुचन्ति ॥३७॥ (ख)

---

(३८) एष हिमोल्लसिततरुणदमनककन्दो निविडनिपततुहिन-कणोत्करनिर्विण्णगन्धवहपरिरम्भोऽवतंसीकृततरणिकिरणोत्करः पु-रापरद्धपञ्चविच्छायमृगलाञ्छनो निर्जितनिःशेषश्रीः शिशिरः ।

---

(क) हिमेति । हिमेन प्राचुर्येण उल्लसितः उल्लासं गतः तरुणानां अभिनवानां दमनकानां कुन्दवृक्षाणां कन्दलः नवाङ्कुरः यस्मिन् तथाभूतः, निविडेन घनेन निपतता तुहिनकणानां हिम-बिन्दूनां उत्करेण समूहेन निर्विण्णं हिमनिपातेन शिलष्टतया एकान्ता-सहनादिति भावः निर्वाधं यथा तथा सङ्घर्षितः दुष्प्राप इत्यर्थः परिरम्भः दम्पत्योरन्योन्यालिङ्गनं यत्र तथाविधः, अवतंसीकृतः आहृतः तरणेः सूर्य्यस्य किरणोत्करः मयूखमाला यस्मिन् तादृशः, पुरापरद्धपञ्चः सु विच्छायः शिशिरातपत्वात् मलिनः मृगलाञ्छनः चन्द्रः यस्मिन् तादृशः, निर्जिता निःशेषाणां सर्वेषां वस्तूनां श्रीः सौन्दर्यं येन तथोक्तः सर्वपदार्थश्रीहारक इत्यर्थः ।

(ख) वह्नेरिति । दाहहन्तेः दहनव्यापारस्य अदर्शनात् वह्नेः शक्तिः दाहिकाशक्तिः जलमिव गता, नित्यः उत्पत्तिः उदयः यस्य

अपि च ।

चूडागर्भनिवेशि दामविकलं मुक्ताफलं भूषणं
स्त्रीणां कुङ्कुमपिच्छिलः स्तनभरो गूढोदरं मन्दिरम् ।
छिन्नाः स्थूलपटाः प्रसर्पदगुरुग्रामश्च धूमोद्गमः
सम्भोगाय भवन्ति चात्र कृतिनां दीप्ता विलासाग्नयः ॥ ३८ ॥ (ग)

अपरम् ।

नगरपरिघदीर्घा बाहुदण्डा ममैते
विजितकलभकुम्भा सा च तस्याः कुचश्रीः ॥
तव शिशिर ! समीरेणैव नीहारसार-
स्त्वयमिति हि समेतं दुर्लभं रावणेन ॥ ३९ ॥ (घ)

तदग्रतो दर्शय ।

---

तादृशे सततोदयशालिनीत्यर्थः नगे मरुवके वृक्षविशेषे पुष्पकाले कुसुमोत्पत्तिः । रविः सूर्यः शीतात् त्रासं भयं दधदिव धारयन्निव कृशानोः अग्नेः आशां दिशं पूर्वदक्षिणयोरन्तरमित्यर्थः याति, गच्छति, दिवसाश्च नीहारार्त्तैरिव शीतपीड़ितैरेव साम्प्रतं सङ्कुचन्ति ह्रस्वीभवन्ति । शार्दूलविक्रीड़ितं वृत्तम् ।

( ग ) चूड़ेति । अत्र शिशिरे स्त्रीणां चूड़ागर्भेषु निविशतीति तथोक्तं दामविकलं मालाशून्यं मुक्ताफलं भूषणम् अलङ्कारः स्तनयोः भरः परिसरः कुङ्कुमैः पिच्छिलः आहत इत्यर्थः मन्दिरं गृहं गूढं हिमागमभयात् आच्छादितम् उदरं यस्य तथाभूतं छिन्नाः द्वौ वा त्रयो वा स्यूताः घनाः पटाः वस्त्राणि तथा प्रसर्पन्तः अगुरूणां ग्रामाः यस्मिन् तादृशः धूमोद्गमश्च तथा दीप्ताः उज्ज्वला विलासाग्नयः प्रायक्रीड़ाद्रव्याणि च कृतिनां पुण्यवतां सम्भोगाय भवन्ति । शार्दूल-विक्रीड़ितं वृत्तम् ।

( घ ) नगरेति मम एते बाहुदण्डाः नगरस्य परिघवत्

प्रतीहारी । पटान्तरे स्थित्वा । एस (स)फलिदफलिणीवण-न्तरो णिरन्तरपल्लविदकङ्केलिलदाहरुओ णिविडुग्गीदकल-कण्ठिकण्ठो कुडजगण्ठिजडिलपुण्णाअणिवहो भग्गकुसु-मिदसोहञ्जणसाही मरुअसंदेहारोविदसअलप्पवसन्तो वसन्तो (४०) ।

रावणः । अये ! वसन्तः । इह हि ।

---

(४०) एष फलितफलिनीवनान्तरो निरन्तरपल्लवितकङ्केलि-लताहरुको निविडोद्गीतकलकलकण्ठीकण्ठः कुटजग्रन्थिजटिलपुन्नागनिवहो भग्नकुसुमितशोभाञ्जनशाखी मरुवसन्देहारोपितसकलप्रवसन् वसन्तः ।

---

वर्णिता इव दीर्घाः । तस्याश्च या कुचयोः स्तनयोः श्रीः शोभा निर्जितः करभस्य करियावकस्य कुम्भो यया तादृशी । हे शिशिर ! तव च एष समीरः कथं नीहारसारः हिममय इत्यर्थः इति त्वयं समेतं मिलितं रावणेन दुर्लभं हि दुष्प्रापमेव ईदृशे शिशिरे काले मदुपाङ्गभिसक्षाः कुचकलशमर्दनं न प्राप्यते इति भावः । मालिनी-वृत्तम् ।

(स) फलितेति । फलितं सञ्जातफलं फलिनीनां वनान्तरं विशेषः यस्मिन् तथाविधः, निरन्तरं नीरन्ध्रं यथा तथा पल्लविताः सञ्जातपल्लवाः कङ्केलिलतानां हरुका वाटयः यत्र तथोक्तः. निवि-डम् अनवरतम् उद्गीतः उद्गीर्णतपरः कलकण्ठीनां कोकिलानां कण्ठो यस्मिन् सः, कुटजानां ग्रन्थिषु जटिलाः पुन्नागानां तरु-विशेषाणां निवहाः समूहा यत्र तथाविधः, भग्नाः कुसुमिताः पुष्पिताः शोभाञ्जनशाखिनः यत्र तथाभूतः तथा मरुवसन्देहम् आरो-पिताः सकलाः प्रवसन्तः पथिकाः यस्मिन् तादृशः ।

सूते सम्प्रति दुग्धमुग्धसुभगं पुष्पोद्गमं मल्लिका
बाह्लीकीदशनव्रणारुणदलैः पत्रैरशोकोऽर्चितः।
भृङ्गीलङ्घितकोटि किंशुकमिदं किञ्चिद्विलम्बायते
माञ्जिष्ठैर्मुकुलैश्च पाटलितरोरन्यैव काचिल्लिपिः ॥४०॥ ङ)

किञ्च।

सपदि सखीभिर्निभृतं विरहवतीस्त्रातुमत्र भज्यन्ते।
सहकारमञ्जरीणां शिखोद्गमप्रत्ययः प्रथमे ॥ ४१ ॥ (च)

सम्यङ्निरूप्य सोत्कण्ठम्। (क) सीतावयवशोभासंवादात्तद्
द्विगुणप्रणयिनी मे मधुलक्ष्मीः। तथाहि।

---

(ङ) सूतेति। सम्प्रति वसन्ते मल्लिका दुग्धमिव मुग्धं सुन्दरं सुभगं सर्वजनप्रियं पुष्पोद्गमं पुष्पचयं सूते विकासयति। अशोकः बाह्लीकीनां तद्राख्यदेशभवसुन्दरीणां दशनव्रणानि दन्तक्षतानि इव अरुणानि दलानि पत्रांशाः येषां तादृशैः पत्रैः। अर्चितः अलङ्कृत इत्यर्थः। इदं भृङ्ग्या लङ्घिता आक्रान्ता कोटिर्यस्य तादृशं किंशुकं पलाशपुष्पं किञ्चित् ईषत् विलम्बायते वृन्तात् शिथिलमिव भवते। पाटलितरोः माञ्जिष्ठैः मञ्जिष्ठारागोज्ज्वलैः मुकुलैः अन्यैव अन्यविधा एव काचित् अनिर्वचनीया लिपिराकृति रित्यर्थः। शार्दूलविक्रीड़ितं वृत्तम्।

(च) सपदीति। अत्र वसन्ते सखीभिः सहचरीभिः विरहवतीः विरहिणीः त्रातुं रक्षितुं प्रथमे आद्याः सहकारमञ्जरीणां शिखानाम् उद्गमप्रत्ययः सपदि झटिति दृष्टैवेत्यर्थः भज्यन्ते भग्नाः क्रियन्ते। आर्य्या वृत्तम्।

(क) सीतेति। सीतायाः अवयवानाम् अङ्गानां या शोभा सौन्दर्यं तत्संवादात् तत्सादृश्यात् तस्या अपि द्विगुणा अधिका प्रणयिनी अतिप्रेयसीत्यर्थः। मधुलक्ष्मीः वासन्ती श्रीः।

लावण्यार्द्धं मधूकान्यनुवदति दृशावुत्पलानां सनाभी
दन्तश्रीर्मल्लिकाभिः सह चरति सुहृत्सौरभं केसरस्य ।
वैदेह्याः पाटलानां सुजनयति रुचं किञ्च विम्बाधरोष्ठः
क्रीडाभिश्चित्र ! चैत्र ! त्वमसि तदिह मे वल्लभो दुर्लभश्च॥४२ (ख)

प्रभञ्जनिका । चलं द्दमिणा । उत्कण्ठाकारीणं धुरन्धरो एसो ( ४१ ) ।

राघवः । उत्कण्ठामभिनीय ।

घर्मर्त्तो ! दमय वसन्तमुत्कयन्तं

सन्तापमभिनीय ।

द्राग्ग्रीष्मं स्थगयतु वार्मुचामनेहा ।

---

( ४१ ) अलमनेन । उत्कण्ठाकारिणां धुरन्धर एषः ।

---

( ख ) लावण्यार्द्धमिति । वैदेह्याः सीतायाः लावण्यस्य अर्द्धं मधूकानि पुष्पाणि अनुवदति अनुकरोति मधूक पुष्पं लावण्यार्द्धस्य सदृशमित्यर्थः । दृशौ नेत्रे उत्पलानां नीलोत्पलानां सनाभी सोदरे नीलोत्पलं नेत्रसदृशमित्यर्थः । दन्तानां श्रीः शोभा मल्लिकाभिः सह चरति मल्लिकाकुसुमश्रीः दन्तसदृशी इत्यर्थः, सौरभं शरीरसौगन्ध्यं केशरस्य वकुलस्य सुहृत् मित्रम् । किञ्च विम्बाधरोष्ठः पाटलानां पाटलपुष्पाणां रुचं कान्तिं सुजनयति अनुकरोतीत्यर्थः तत् तस्मात् हे चित्र ! मनोज्ञ ! चैत्र ! मधुमास ! त्वं क्रीड़ाभिः तत्तन्मधूकादिभिः मैथिल्यनुकरणरूपाभिः मे मम वल्लभः प्रियः दुर्लभश्च असि भवसि । स्रग्धरावृत्तम् ।

( ग ) घर्मर्त्तो इति । हे घर्मर्त्तो निदाघ ! उत्कयन्तम् उत्कण्ठयन्तं प्रियाविरहादिति भावः वसन्तं दमय स्वाविर्भावेन दूरी कुरुष्व इत्यर्थः । वार्मुचां मेघानाम् अनेहा कालः वर्षर्त्तुरित्यर्थः द्राक्

उत्कण्ठामभिनीय ।

त्वं वर्षाः शमय वसन्त !

भूयः सन्तापमभिनीय ।

वारिदान्तं ।

हेमन्तः सह शिशिरेण हन्त हन्तु ॥ ४२ ॥ (ग)

प्रभञ्जनिका । देव ! दिट्ठं सअलं (घ) रिदुचक्कवालं ता किम्पि मअरन्दमुञ्चन्तबहल सीअरासारं सअं परिब्भमन्त-जंन्ततालविन्तं णिग्गन्थिदग्गन्थिलकणअकदलिआकवललुद्ध-गन्धहरिणणाहिकोससुअन्धदसदिसं जाणइविरहवेदणावि-णोदत्थाणत्थरअणसिलाचउक्किअं अलङ्करेदु देवो (४२) ।

रावणः । यदभिरुचितं भवत्यै । परिक्रामितकेन सहेदम् ।

---

(४२) देव ! दृष्टं सकलमृतुचक्रवालं तत्किमपि मकरन्द-मुञ्चद्बहलसीकरासारां स्वयं परिभ्रमद्यन्त्रतालवृन्तां निर्ग्रन्थितग्रन्थि-लकनककदलिकाकवललुब्धगन्धहरिणनाभिकोषसुगन्धदशदिशां जानकी-विरहवेदनाविनोदस्थानरत्नशिलाचतुष्किकामलङ्करोतु देवः ।

---

झटिति ग्रीष्मं स्थगयतु स्वाविर्भावेन निराकरोतु । हे वसन्त ! शर-त्तो ! त्वं वर्षाः शमय स्वाविर्भावेन शान्तिं नय । हेमन्तः शिशि-रेण सह हन्त खेदे वारिदान्तं शरदृतुं हन्तु स्वाविर्भावेन नाशयतु ।

(घ) ऋतुचक्रवालम् ऋतूनां ग्रीष्मादीनां चक्रवालं मण्डलम् । मुञ्चद्बहलमकरन्दसीकरासारां मुञ्चन्तः वर्षन्तः बहलाः मकरन्दानां पुष्प-रसानां सीकरासाराः बिन्दुधारासम्पाताः यस्यां तादृशीं स्वयं विना भृत्य-जनचालना मितिभावः परिभ्रमत् चलत् यन्त्रतालवृन्तं यस्यां तथाभूताम् । निर्ग्रन्थितेति । निर्ग्रन्थितानां ग्रन्थिरहितानां ग्रन्थिलानां ग्रन्थियुक्ता-नाञ्च कनककदलीनां कवले ग्रासे लुब्धा ये गन्धहरिणाः कस्तूरिमृगाः

आत्तश्रान्तमिदं विषण्णममुना नीचैरनेन स्थितं
कम्प्रोऽस्मिन्निह जृम्भितं प्रलपितं चैतेन तूष्णीमदः ।
एतद्ध्यानपरं घनोऽत्र पुलकः स्रस्तं च बाष्पैरितः
सीतादुर्विनयेन मे दशमुखी हा ! धिक्कथं वर्त्तताम् ॥४४॥ (ङ)

प्रभञ्जनिका । स्वगतम् । अधा मअणो आणवेदि । प्रवेशनाटितकेन । अअं रअणचउक्किआवेदिपल्लङ्को ता उवविसदु देवो (४३) ।

राघवः । उपविश्य सकोपम् ।

---

(४३) यथा मदन आज्ञापयति । अयं रत्नचतुष्किकावेदिपल्यङ्कस्तदुपविशतु देवः ।

---

तेषां नाभिकोणेन मणनाभिना इत्यर्थः सुगन्धा दश दिशः यस्याः तथाभूताम् । जानकीति जानक्याः सीतायाः विरहवेदनाविनोदस्थानं रत्नशिला मणिप्रस्तरः यस्यां तादृशीं चतुष्किकां चत्वरभूमिम् ।

(ङ) आत्तेति । इदं मे मुखम् आत्तश्रान्तं गृहीतश्रमं वियोगप्रलापादिति भावः, अमुना मुखेन विषण्णं विषादः अवलम्बित इत्यर्थः अनेन मुखेन नीचैः मन्दं स्थितं, अस्मिन् मुखे कम्पः, इह अस्मिन् मुखे जृम्भितम्, एतेन मुखेन प्रलपितम्, अदः मुखं तूष्णीं स्थितमिति शेषः । एतत् मुखं ध्यानपरं चिन्तापरम् अत्र मुखे घनः सान्द्रः पुलकः रोमाञ्चः, इत इत्यव्ययम् इदमित्यर्थः मुखं बाष्पैः स्रस्तं स्रुतम् । हा इति शोकसूचकं धिगिति निन्दासूचकमव्ययम् । मे मम दशानां मुखानां समाहारः दशमुखी सीतादुर्विनयेन जानकीतिरस्कारेण कथं केन प्रकारेण वर्त्ततां तिष्ठतु ? शार्दूलविक्रीडितं वृत्तम् ।

तां गाढं प्रहरस्व मां परिहरन्

सावज्ञम्।

तां मां च मा वा वधीः

सानुकम्पम्।

तां हन्तुं परिकल्पितैरपि शरैर्मामेव वा ताडय।

सानुरागम्।

यद्वा मन्मथ! तां च मां च युगपद्विध्येः समग्रायुधो

येनाहं जनकात्मजा च सदृशं प्रेम प्रपद्यावहे॥४५॥ (च)

तद्भद्रे! सन्निधापय (छ) शिशिरोपचारसामग्रीः।

प्रभञ्जनिका। देव! देवदाओ आअदाओ। तण्णिवेदिदा दाव सिसिरोवआरसामग्गी सव्वा सण्णिहिदा ता किं णाम ण चिन्तिदोवणदं (ज) लङ्केस्सरस्स? (४४)।

---

(४४) देव! देवता आगताः। तन्निवेदिता तावत् शिशिरोपचारसामग्री सर्वा सन्निहिता तत् किं नाम न चिन्तितोपनतं लङ्केश्वरस्य?।

---

(च) तामिति। हे मन्मथ! मां परिहरन् परित्यजन् तां जानकीं गाढ़ं दृढ़ं प्रहरस्व वा अथवा तां माञ्च मा वधीः न प्रहर। वा अथवा तां हन्तुं परिकल्पितैः सुनिर्मितैः अपि शरैः मामेव ताड़य प्रहर। यद्वा अथवा समग्रायुधः समग्रशरवर्षी सन् युगपत् समकालं ताञ्च माञ्च विध्येःप्रहर, येन अहं जनकात्मजा सीता च सदृशम् अनुरूपं प्रेम प्रपद्यावहे प्राप्नुवः आवामिति शेषः। शार्दूलविक्रीड़ितं वृत्तम्।

(छ) सन्निधापय उपस्थापय। शिशिरोपचारसामग्रीः शीतसेवनद्रव्याणि।

(ज) चिन्तितोपनतं चिन्तितं सत् उपनतम् उपस्थितम्।

रावणः । पुरोऽवलोक्य ।

सलिलकलशपाणिर्जायतां मन्दरस्त्री
तुहिनगिरिकुटुम्बिन्यस्तु नीहारहस्ता ।
सपदि मलयजाया चन्दनाम्भो निधत्तां
व्यजतु चमरदण्डैः किञ्च नेपालपाली ॥ ४६ ॥ (झ)

किञ्चित्तापमभिनीय । अलमलं भवतीभिः । पर्वतकलत्राणि यूयं युष्मदङ्गसङ्गः सुतरां तापाय । अन्यतोऽवलोक्य ।

यासां जन्म विवस्वतो भगवतश्चण्डाच्च मार्त्तण्डत-
श्चण्डीशेक्षणतश्च मन्मथमथस्ताः सन्तु हर्म्याद्बहिः ।
याः सार्द्धं सुधया समं कमलया साकं मृगाङ्केण च
क्षीराब्धेरमराङ्गनाः समभवंस्तास्त्वन्तिके सन्तु मे ॥४७॥ (ञ

(झ) सलिलेति । मन्दरस्य पर्वतभेदस्य स्त्री सलिलकलशः पाणौ यस्या स्ताद्दशी जायतां भवतु जलकुम्भं स्थापयतु इत्यर्थः । तुहिनगिरेः हिमाचलस्य कुटुम्बिनी गृहिणी मेनेत्यर्थः नीहारहस्ता प्रालेयपाणिः अस्तु नीहारं स्थापयतु इत्यर्थः । मलयस्य पर्वतविशेषस्य जाया पत्नी सपदि झटिति चन्दनाम्भः चन्दनवारि निधत्तां धारयतु । किञ्च नेपालपाली नेपालदेशीयपर्वतराजपत्नी चमरदण्डैः चामरैः व्यजतु वीजयतु । मालिनीवृत्तम् ।

(ञ) यासामिति । यासां नारीणामिति शेषः चण्डात् अतितीव्रात् भगवतः विवस्वतः दीप्तिमतः मार्त्तण्डात् सूर्य्यात् तथा मन्मथमथः मदनदाहकात् चण्डीशेक्षणतः हरस्य तृतीयनेत्रादित्यर्थः जन्म उत्पत्तिः, ताः हर्म्यात् प्रासादात् बहिः सन्तु सूर्य्याग्निसम्भवा नार्य्यः मम प्रासादं नागच्छन्तु इत्यर्थः । याः अमराङ्गनाः अप्सरस इत्यर्थः सुधया अमृतेन सार्द्धं तथा कमलया लक्ष्म्या मृगाङ्केण चन्द्रमसा च समं क्षीराब्धेः क्षीरसमुद्रात् मथ्यमानादिति शेषः समभवन्, अप्सु-

ततश्च ।

रम्भा रम्भादलाग्रैर्व्यजतु विहरतां दावदानेन हारा
तारा ताराधिपश्रीरधितनु तनुतां चन्दनस्यन्दमेकम् ।
प्रम्लोचा मोचपाकच्छविरवतु बिसन्यासभङ्ग्या ममाङ्गा-
न्यङ्कुद्राद्राग्जलार्द्रामुरसि च दधती मेनका मे न का च ॥ ४८ (ट

पुनः सन्तापितकेन । यासां मद्विजितवल्लभविरहिणीनां (ठ) भवतीनां सन्निधिरपि सन्तापाय किं पुनरुपचारः । अन्यतो-ऽवलोक्य ।

---

त्सयु,ः ताः तु एत्र मे मम अन्तिके समीपे सन्तु भवन्तु आगच्छन्तु इति यावत् । शार्दूलविक्रीडितं वृत्तम् ।

( ट ) रम्भेति रम्भा तदाख्यः अप्सरोविशेषः रम्भादलाग्रैः कदलीपत्राग्रैः व्यजतु हारा नाम सुरसुन्दरी दावदानेन विहरतां चेष्टतां यथा तापशान्तिर्भवेत् तथा चेष्टतामित्यर्थः ताराधिपश्रीः चन्द्रकान्तिः तारा अधितनु तनुषु एकं केवलं चन्दनस्यन्दं चन्दन-विलेपनं तनुतां करोतु । मोचपाकस्य पक्वरम्भायाः छविरिव छविर्यस्याः तादृशी प्रम्लोचा नामाप्सराः मम अङ्गानि बिस-न्यासभङ्ग्या मृणालविरचनक्रमेण अवतु रक्षतु । अङ्कुद्रा नाम अप्सराः द्राक् झटिति जलार्द्रां तालवृन्तं दधती मम अङ्गानि तथा मेनका मे उरसि स्थितेति शेषः मम अङ्गानि का च कापि अन्या न मम अङ्गानि अवतु इत्यनेनान्वयः सर्वत्र बोध्यः । स्रग्धरावृत्तम् ।

( ठ ) मया विजिताः वल्लभाः यासां ताः अतएव विरहिण्यः तासां सन्निधिः समीपावस्थानं सन्तापाय विरहतापितत्वादिति भावः । उपचारः अङ्गलेपनादिसेवनमित्यर्थः ।

पार्श्वं मुञ्चतु वेत्त्यनङ्गगृहिणी नाङ्गोपचारक्रियां (ड)
चण्डी चामरभूषणैर्व्यजतु मां द्वात्रिंशता पार्थिवैः ।
भास्वत्पत्नि ! सरोरुहैरलमलं घर्मा यदेषां प्रियाः
स्वान्दारानय सन्निधिं जलनिधे ! नद्यस्तवान्तःपुरम् ॥४९॥

सहर्षमवलोक्य ।

पादौ पीडय ताम्रपर्णि ! सुरले ! हस्तौ हृदि स्थाप्यतां
भोः कावेरि ! मृणालदाम वितर द्राङ्नर्मदे । वीजय ।
त्वं गोदावरि ! देहि चन्दनरसं हे तापि ! तापोष्मणः (ढ)
शान्त्यर्थं सृज यन्त्रवारि विरही लङ्केश्वरः सीदति ॥ ५० ॥

---

(ड) पार्श्वमिति । अनङ्गगृहिणी कामपत्नी रतिरित्यर्थः पार्श्वं ममेति शेषः मुञ्चतु त्यजतु, यतः सा अङ्गोपचारक्रियां शरीरसेवां न वेत्ति न जानाति । चण्डी देवी चामराणि भूषणानि येषां तैः सचामरैरित्यर्थः द्वात्रिंशता पार्थिवैः एतेन चण्ड्या द्वात्रिंशत् पार्थिवत्वं सूचितं मां व्यजतु वीजयतु । हे भास्वत्पत्नि ! सूर्य्यकान्ते ! सरोरुहैः कमलैः अलम् अलं कमलोपाचारैः तव मत्सेवनं व्यर्थमिति भावः । यत् यस्मात् घर्मा निदाघाः एषां सरोरुहाणां प्रियाः सूर्य्यकिरणसंसर्गेन विकाशादिति भावः हे जलनिधे ! स्वान् निजान् दारान् नदीरित्यर्थः सन्निधिं ममेति शेषः नय प्रापय, यतः नद्यः तव अन्तःपुरम् अन्तःपुरचारिण्य इत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ।

(ढ) पादाविति । हे ताम्रपर्णि ! पादौ चरणौ ममेति सर्वत्र योज्यं पीडय सेवस्व, हे सुरले ! हृदि वक्षसि हस्तः स्थाप्यतां भोः कावेरि ! मृणालदाम वितर देहि, हे नर्म्मदे ! द्राक् झटिति वीजय । हे गोदावरि ! त्वं चन्दनरसं देहि, हे तापि !

भूयः सन्तापमभिनीय । एता अपि(थ)मदनाङ्कुरितमदङ्ग-सङ्गात्परिक्लथयन्ति । सक्रोधम् । प्रभञ्जनिके ! मत्प्रसाददुर्ल-लिताः खल्वेते ममाप्याज्ञां न गणयन्ति तदादिश्यन्तां किङ्करा यदुत ।

कम्पाघातैः सुरभिरभितः सत्वरं ताडनीयो
गाढाक्रान्तं मलयमरुतः शृङ्खलादाम दत्त ।
कारागारे क्षिपत तरसा पञ्चमं रागराजं
चन्द्रं चूर्णीकुरुत च शिलापट्टके पिष्टबिम्बम् ॥५१॥ (त)

द्वाराभिमुखमवलोक्य । काः पुनरिमा द्वारि ।

---

तापोपशमः शान्त्यर्थं यन्त्रवारि सृज यतः वङ्गेश्वरः विरही सन् सीदति क्लिश्यति । शार्दूलविक्रीडितं वृत्तम् ।

( थ ) मदनेति । मदनेन अङ्कुरितस्य सन्तप्तस्य मदङ्गस्य मद्देहस्य सङ्गात् संसर्गात् परिक्लथयन्ति तापयन्तीति यावत् । मदिति मम प्रसादेन अनुग्रहेण दुर्ललिताः स्वाधीनाः ।

( त ) कम्पेति । सुरभिः सुगन्धः अभितः सर्वतः कम्पाघातैः कम्पयन्ति वेपयन्ति एभिरिति कम्पाः वेपथुजनकाः ये आघाताः प्रहाराः तैः सत्वरं शीघ्रं ताडनीयः युष्माभिरिति शेषः । यथा यावो न निःसरेदिति भावः, मलयमरुतः मलयसमीरस्य गाढाक्रान्तं दृढ़-संयमं यथा तथा शृङ्खलादाम बन्धनरज्जुं दत्त यूयमिति शेषः । यथा न वहेदिति भावः, पञ्चमं रागराजं स्वरविशेषं तरसा बलेन कारा-गारे क्षिपत बध्नीतेत्यर्थः यथा सङ्गीतं न स्यादिति भावः, किञ्चेति-चार्थः शिलापट्टके पिष्टं बिम्बं मण्डलं यस्मिन् तद्यथा तथा चन्द्रं चूर्णीकुरुत । मन्दाक्रान्ता वृत्तम् ।

प्रभञ्जनिका। वारुणी (च) लक्ष्मी सरस्वती। (४५)

रावणः। सावज्ञम्।

दूरे तिष्ठतु वारुणी विरहिणां का नाम रत्नस्पृहा
लक्ष्मीः क्षीरमहोदधेरपि सुता स्वाहेव दाहे पटुः।
वाचालासि सरस्वति! व्रज स्थानात् कः सूक्तिगोष्ठीक्षणो
सत्त्वं न ममास्य किञ्च न मुदे सीताप्रसादं विना ॥५२॥ (ङ)

ऊर्ध्वमवलोक्य स्वगतम्। तथाप्येवं तावत्। प्रकाशम्।

रे रे (ध) विबुधापसदाः! किमिदं येन शिशिरोपचारं कर्त्तु-मुद्दिष्टा उष्णोपचारं रचयथ तर्हि विस्मृतो वः प्रकृत्यमर्षणो

---

(४५) वारुणी लक्ष्मी सरस्वती।

---

(च) वारुणी वरुणः जलाधिपः तत्सम्बन्धिनी शक्तिः वारुणी।

(ङ) दूरे इति। वारुणी रत्नाकरस्य स्वामित्वेन रत्नान्यादाय रावणमुपचरितुमागतेति भावः दूरे तिष्ठतु विरहिणां जनानां रत्नेषु स्पृहा का। नैव रत्नस्पृहेत्यर्थः लक्ष्मीः क्षीरमहोदधेः सुतापि स्वाहा अग्निपत्नीव दाहे भस्मीकरणे पटुः समर्था लक्ष्मीमन्तो हि सततं सोम्राक्षोभवन्तीति भावः। हे सरस्वति! वाणि! त्वं वाचाला बहुभाषिणी असि, अतः स्थानात् व्रज गच्छ सूक्तैः शोभनावाः उक्तैः वचसः या गोष्ठी सभा तस्याः क्षणः समयः न ममेति शेषः इदानीं सुभाषितपरम्परया न मे तृप्तिरिति भावः यत् यतः अद्य अधुना सीता प्रसादं विना किञ्च किमपि मम मुदे हर्षाय न सत्त्वं नैव हर्षायेत्यर्थः। शार्दूलविक्रीडितं वृत्तम्।

(ध) विबुधापसदाः देवाधमाः। शिशिरोपचारं शैत्यप्रक्रियाम् उद्दिष्टाः नियुक्ताः। उष्णोपचारम् उत्तापमेवां रचयथ

दशकण्ठः । विचिन्त्य । यद्वा प्रसादचिन्तकाः खल्वेते मम तत्र तेषु पक्षमभिधास्ये । जलार्द्रामभिनीय ।

चन्द्र ! ज्योत्स्नाजलार्द्रामपनय यदिदं दह्यते देहदाहैः

सेकमभिनीय ।

(न)क्षीराब्धे ! दुग्धसेको मदनहुतभुजा पिण्डभावं बिभर्त्ति ।

नलिनोपचारमभिनीय ।

हेमाम्भोज ! (प)स्रजस्ते विशद ! महते शोषपोषाय निष्ठाः

हिमतापानुभवमभिनीय ।

(फ) प्रालेयाद्रे ! दवीयांस्तव हिमदवथुर्दृष्ट एवाम्बुजेषु ५३

प्रभञ्जनिका । अहो ! मन्मथवामता (ब) अहो ! दैवप्रति-

---

(४६) अहो ! मन्मथवामता अहो! दैवप्रतिकूलता यदिदानीं रमणीयमप्युद्वेजनीयं शिशिरमप्युष्णं प्रतिभाति ।

---

कूलय । प्रकृत्यमर्षणः स्वभावकोपनः जलार्द्रां जलसिक्ताचन्दनस्रजम् अभिनीय अनुभूय ।

(न) क्षीराब्धे इति । हे क्षीराब्धे ! क्षीरनिधे ! दुग्धसेकः तव दुग्धेन गात्रलेपनं मदनहुतभुजा कामाग्निना पिण्डभावं घनीभावं बिभर्त्ति अग्न्युत्तापेन दुग्धं घनीभवतीति प्रसिद्धिः ।

(प) हे विशद निर्मल ! हेमाम्भोज ! स्वर्णकमल ! ते तव स्रजः माल्यानि महते वृहत्कार्याय शोषपोषाय दहनवृद्धये निरतिशयं तिष्ठन्तीति निष्ठाः ।

(फ) हे प्रालेयाद्रे ! हिमाचल ! दवीयान् अतिदूरवर्त्ती ते तव हिमदवथुः हिमतापः हिमप्रादुर्भाव इत्यर्थः अम्बुजेषु एव दृष्टः न तु मयीति भावः । एव शब्दोऽन्यव्यवच्छेदकः । स्रग्धरावृत्तम् ।

(ब) मन्मथवामता कामस्य प्रातिकूल्यम् ।

प्रभञ्जनिका । वारुणी (ग) लक्ष्मी सरस्वई । (४५)

रावणः । सावज्ञम् ।

दूरे तिष्ठतु वारुणी विरहिणां का नाम रत्नस्पृहा
लक्ष्मीः क्षीरमहोदधेरपि सुता स्वाहेव दाहे पटुः ।
वाचालासि सरस्वति ! व्रज यतः कः सूक्तिगोष्ठीक्षणो
यल्लक्ष्यं न मनाग्धि किञ्च न मुदे सीताप्रसादं विना ॥५२॥ (ङ)

अर्ध्वं नयमालोक्य स्वगतम् । तथाप्येवं तावत् । प्रकाशम् ।
हंहो (घ) विबुधापसदाः ! किमिदं येन शिशिरोपचारं कर्तु-
मुद्दिष्टा उष्णोपचारं रचयथ तर्हि विस्मृतो वः प्रभुत्वमर्षणो

---

( ४५ ) वारुणी लक्ष्मी सरस्वती ।

---

( ग ) वारुणी वरुणः जलाधिपः तत्सम्बन्धिनी शक्तिः वारुणी ।

( ङ ) दूरे इति । वारुणी रत्नाकरस्य स्वामित्वेन रत्नाद्या-दाय रावणमुपचरितुमागतेति भावः दूरे तिष्ठतु विरहिणां जनानां रत्नेषु स्पृहा का । नैव रत्नस्पृहेत्यर्थः लक्ष्मीः क्षीरमहोदधेः सुतापि स्वाहा अग्निपत्नीव दाहे भस्मीकरणे पटुः समर्था लक्ष्मीमन्तो हि सततं शोकाकोभवन्तीति भावः । हे सरस्वति ! वाणि ! त्वं वाचाला बहुभाषिणी असि, अतः यतः व्रज गच्छ सूक्तेः शोभनायाः उक्तेः वचसः या गोष्ठी सभा तस्याः क्षणः समयः न भवेति शेषः इदानीं सुभाषितपरम्परया न मे तृप्तिरिति भावः यत् यतः अद्य अधुना सीता प्रसादं विना किञ्च किमपि मम मुदे हर्षाय न लक्ष्यं नैव हर्षायेत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

( घ ) विबुधापसदाः देवाधमाः । शिशिरोपचारं शैत्य-प्रक्रियाम् उद्दिष्टाः नियुक्ताः । उष्णोपचारम् उत्तापसेवां रचयथ

दग्धकण्ठः। विचिन्त्य। यद्वा प्रसादचिह्नकाः खल्वेते मम तत्र तेषु पक्षमभिधास्ये। जलार्द्रामभिनीय।

चन्द्र! ज्योत्स्नाजलार्द्रामपनय यदिदं दह्यते देहदाहैः सेकमभिनीय।

(न) क्षीराब्धे! दुग्धसेको मदनहुतभुजा पिण्डभावं बिभर्त्ति। स्विन्नोपचारमभिनीय।

हेमाम्भोज! (प) स्रजस्ते विशद! महते प्लोषपोषाय निष्ठाः हिमतापानुभवमभिनीय।

(फ) प्रालेयाद्रे! दवीयांस्तव हिमदवथुर्दृष्ट एवाम्बुजेषु ५३

प्रभञ्जिका। अहो! मन्मथवामता (ब) अहो! दैवप्रति-

---

(४६) अहो! मन्मथवामता अहो! दैवप्रतिकूलता यदिदानीं रमणीयमप्युद्वेजनीयं शिशिरमप्युष्णं प्रतिभाति।

---

कूलय। प्रकृत्यमर्षणः स्वभावकोपनः जलार्द्रां जलसिक्ततालवृन्तव्यजनमभिनीय अनुभूय।

(न) क्षीराब्धे इति। हे क्षीराब्धे! क्षीरनिधे! दुग्धसेकः तव दुग्धेन गात्रलेपनं मदनहुतभुजा कामाग्निना पिण्डभावं घनीभावं बिभर्त्ति अग्न्युत्तापेन दुग्धं घनीभवतीति प्रसिद्धिः।

(प) हे विशद निर्मल! हेमाम्भोज! स्वर्णकमल! ते तव स्रजः माल्यानि महते उत्कटाय प्लोषपोषाय दहनवृद्धये निरतिशयं तिष्ठन्तीति निष्ठाः।

(फ) हे प्रालेयाद्रे! हिमाचल! दवीयान् अतिदूरवर्त्ती ते तव हिमदवथुः हिमतापः हिमप्रादुर्भाव इत्यर्थः अम्बुजेषु एव दृष्टः न तु मयीति भावः। एष श्लोकोऽन्ययव्यवच्छेदकः। स्रग्धरावृत्तम्।

(ब) मन्मथवामता कामस्य प्रातिकूल्यम्।

छलदा जं दाविं रमणिज्जं वि उव्वेअणिज्जं सिसिरं वि उह्णं
पडिहाअदि। (४६)

रावणः। साभ्यर्थनावष्टम्।

शेषाहे! त्वत्फणानां पिबतु दशशती मारुतं चैत्रमित्रं
राहो! जिह्वालता ते शशधरवपुषश्चन्द्रिकामेव लेढु।
सङ्कोचं पुष्पवन्तौ! सपदि वितरतं पङ्कजेन्दीवराणां
त्वां याचे पञ्चबाणः पुरदहन! पुनर्दह्यतामर्द्धदग्धः ॥५४॥(भ)

विचिन्त्य। कथममी तापोत्कर्षेऽपि मम (म) प्रत्यनीकप्रोत्साहनेनापि न विरमन्ति तदेवं तावत्। साक्षेपम्।

मास्म श्वाससटाः समीर! विरतः का कैतवी रावणे
धाराश्रूणि कणीकुरुष्व वरुण! त्वक्कि क्षयः खल्विदम्।
हंहो पावक! तापमस्यय तनौ त्वत्तो जगद्दाहिका
ह्यावर्त्तस्व वसन्त! हन्त मदनः स्वार्थेन वीतायुधः ॥५५॥ (य)

---

(भ) शेषाहे इति। हे शेषाहे! अनन्तनाग! तव फणानां दशशती फणसहस्रमित्यर्थः चैत्रस्य मधुमासस्य मित्रं मारुतं मलयसमीरमित्यर्थः पिबतु। हे राहो! ते तव जिह्वा एव लता शशधरवपुषः चन्द्रमूर्त्तेरेव चन्द्रिकां लेढु आस्वादयतु। हे पुष्पवन्तौ! दिवाकरनिशाकरौ! सपदि द्रुतं पङ्कजानां पद्मानाम् इन्दीवराणाम् उत्पलानाञ्च सङ्कोचं वितरतं विधत्तम्। हे पुरदहन! त्रिपुरारे! त्वां याचे अभ्यर्थये अर्द्धदग्धः न तु सम्यक् तत्कारणे कथं तस्य प्रादुर्भाव इति भावः पञ्चबाणः कामः पुनः दह्यतां भस्मीक्रियताम्। स्रग्धरावृत्तम्।

(म) प्रत्यनीकेति। प्रत्यनीकाः रिपवः तेषु प्रोत्साहनेन अपकारार्थं प्रवर्त्तनेन।

(य) मास्मेति। हे समीर! पवन! श्वासानां निश्वासानां

स्मरणम्। तत्कः पुनरत्र प्रकारस्तापोपशमने। विचिन्त्य। भवत्वेवं तावत्। प्रकाशम्।

हे संवर्त्ताः! कुरुत करकावृष्टिभिर्मां विकीर्णं
द्राक्सम्भूय व्यजनचरितं धत्त कल्पान्तवाताः!
क्रीडावापी भव हिमगिरे! बुध्नबन्धाद्विलीनो
लङ्काभर्त्तुर्मनसिजशिखी नान्यथा शंशमीति ॥५६॥(२)

सविशेषतापमूर्ध्वमवलोक्य। किञ्च।

---

सटाः परम्पराः अनवरतदीर्घनिश्वासा इत्यर्थः। मा स्म न भवन्तु इति यावत् रावणे विरतः व्यापिनीत्यर्थः कैतवी कापट्यं का? वञ्चयं रावणं मां कैतवेन मा प्रतारयस्वेति भावः। हे वरुण! जलाधिप! धाराम्बुभिः निरन्तराम्बुधाराः कणीकुरुष्व यथा मे निरन्तरम् अम्बुधारा न निपतेयुस्तथा कुरु इत्यर्थः खलु यतः इदं अम्बुपात इत्यर्थः त्वत् कौतुकः तव विलसितमित्यर्थः। हंहो पावक! अग्ने! तनौ मम शरीरे तापम् अत्यय शाम्यय यतः त्वत्तः जगद्दाहिका जगतां दाह इत्यर्थः दहतेर्भावे नकप्रत्ययः। हे पवन! व्यावर्त्तस्व निवर्त्तस्व स्वप्रादुर्भावादिति शेषः येन तव अप्रादुर्भावेन मदनः कामः शीर्णं विगतम् आयुधम् अस्त्रम् पुष्परूपं यस्य तथाविधः स्यात् हन्तेति खेदसूचकम् अव्ययम्। शार्दूलविक्रीडितं वृत्तम्।

(२) हे संवर्त्ता इति। हे संवर्त्ताः! महामेघविशेषाः करकावृष्टिभिः शिलावर्षणैः मां विकीर्णं आच्छन्नं कुरुत येन मे तापोपशमः स्यादितिभावः। हे कल्पान्तवाताः प्रलयपवनाः! यूयं सम्भूय मिलित्वा द्राक् झटिति व्यजनचरितं तालवृन्तकार्य्यं धत्त कुरुत, हे हिमगिरे! बुध्नं मूलमेव बन्धः तस्मात् आरभ्य यबर्थे पञ्चमी, आमूलादित्यर्थः विलीनः द्रवीभूतः सन् क्रीडावापी केलिसरः भव। अन्यथा लङ्काभर्त्तुः रावणस्य मनसिज शिखी कामाग्निः न शंशमीति न सम्यक् शाम्यतीत्यर्थः। मन्दाक्रान्तावृत्तम्।

सूचीकृतासु तरुणेन्दुकरच्छटासु
नक्षत्रविम्बमयमौक्तिकगुम्फनाभिः ।
सीतावियोगविधुरस्य नवीनमार्गः
सम्पाद्यतां दशमुखस्य विलासहारः ॥ ५७ ॥ (क)

अथवा किमेभिः क्षुद्रनक्षत्रमणिभिः । ततश्च ।

हस्तद्वयीनिविडपीडितपार्वणेन्दु-
निस्यन्दितामृतरसेन निषिच्य किञ्चित् ।
अङ्गानि मे स्मरमहाज्वरतापभाञ्जि
स्वस्मै स्वयं ननु भिषज्यति राक्षसेन्द्रः ॥ ५८ ॥ (ख)

प्रभञ्जनिका । (अ) देवस्स देवेण वेज्जत्तणं पडिवस्सं मुअल-
ञ्छणस्स उण का वत्ता । (४७)

---

(४७) देवस्य देवेन वैद्यत्वं प्रतिपक्षं मृगलाञ्छनस्य पुनः का वार्त्ता ।

---

(क) सूचीति । सीतावियोगेन विधुरस्य व्याकुलस्य दशमुखस्य तापशान्तये इति शेषः सूच्यग्राणि सूचीकृताः तासु तरुणस्य इन्दोश्चन्द्रस्य करच्छटासु किरणश्रेणीषु नक्षत्रबिम्बमयानि एव मौक्तिकानि तेषां गुम्फनाभिः विरचनाभिः नवीनमार्गः नूतनप्रकारः विलासहारः केलिहारः सम्पाद्यतां क्रियतां भृत्यान् प्रति उक्तिरियम् ।

(ख) हस्तेति । राक्षसेन्द्रः हस्तद्वय्या हस्ताभ्यां निविडं यथा तथा पीडितः यः पार्वणेन्दुः पूर्णचन्द्रः तस्मात् निस्यन्दिते । अमृतरसेन स्मरमहाज्वरतापभाञ्जि कामसन्तप्तानि मे अङ्गानि किञ्चित् निषिच्य स्वस्मै स्वयं ननु निश्चितं भिषज्यति भिषगिवाचरति आत्मानं चिकित्सतीत्यर्थः । वसन्ततिलकं वृत्तम् ।

रावणः। यद्वा किमनेनापि (च) सीतावदनबन्धुना विधुरीकृतेन। चन्द्रं प्रति सकरुणम्।

हंहो चन्द्र! विमुच्यतां चरणयोः पर्य्यन्तसेवाक्रम-
स्त्वं पीयूषरसस्य रागशशिनः पात्रं तु लङ्केश्वरः।
तन्मे वक्त्रपरम्परापरिचिताः श्वासं करिष्यन्त्यमी
मा कश्चिद्भवतोऽपि विम्बवलये श्वासाश्चमत्कारिणः॥५९॥(छ)

मदनवेदनामभिनीय।

आः काम! मय्यपि विमुञ्चसि नाम बाणान्
किं रावणो न विदितः शमितामरो यः
यद्वा स एष तव राघवपक्षपात-
स्त्वामसौ प्रतिकरिष्यति चन्द्रहासः॥६०॥(ज)

---

(च) देवस्य स्वस्य अर्थे इति शेषः। प्रतिपक्षम् अङ्कीकृतं कुरङ्गलाञ्छनस्येति कुरङ्गलाञ्छनस्य चन्द्रस्य निपीड़ितस्य इत्यर्थः का वार्त्ता समाचारः प्राणरक्षणोपाय इति भावः।

(च) सीतावदनस्य बन्धुः मित्रं तेन प्रियवस्तुनः मित्रस्य प्रियत्वादिति विधुरीकृतेन क्लेशितेनेत्यर्थः।

(छ) हंहो इति। हंहो! चन्द्र! चरणयोः पर्य्यन्तसेवाक्रमः आचरणसेवन परम्पराविमुच्यतां त्यज्यताम्। त्वं पीयूषरसस्य अमृतरसस्य पात्रम् आश्रयः, लङ्केश्वरस्तु रागशशिनः प्रेमसुधांशोः पात्रमिति शेषः, तत् तस्मात् मे मम वक्त्रपरम्पराभिः वदनश्रेणिभिः परिचिताः अमी श्वासाः निश्वासमरुतः चमत्कारिणः अद्भुतवस्तुनः भवतोऽपि विम्बवलये प्रतिविम्बमण्डले कञ्चित् श्लेषं दाहं मा करिष्यन्ति न प्रतिविम्बं दहन्तु इति भावः। शार्दूलविक्रीड़ितं वृत्तम्।

(ज) आ इति। आ इति विरक्तिसूचकं सम्बोधनसूचकम् वा। आः काम! मयि अपि बाणान् शरान् विमुञ्चसि नाम रावणः किं न

हभञ्जिका । (घ) विडजणमाणसणिवासिणं विब्भमच्छग्गुणगोरविअं मणहरीकिदकादम्बरीमदुम्माणं पञ्चबाणं विणासअन्तेण देवेण दिज्जदु णिहुअणविआणविसेसाणं जलञ्जली ॥ (४८)

रावणः । विरम विरम । मकरध्वज ! यन्निवारितोऽपि मां प्रहरसि तदवगतस्तवार्थः । यत्किल ।

किं करिष्यति कोपेन देवो मे दशकन्धरः ।
यदनङ्गतया नास्मि चन्द्रहासासिगोचरः ॥ ६१ ॥ (क)

तत्किं न जानासि रावणः (ख) सर्वङ्कषप्रभाव इति ।

---

(४८) विटजनमानसनिवासिनं विभ्रमषाड्गुण्यगौरवितं मनोहरीकृतकादम्बरीमदोन्मानं पञ्चबाणं विनाशयता देवेन दीयतां त्रिभुवनविज्ञानविशेषाणां जलाञ्जलिः ।

---

विदितः त्वयेति शेषः यः शमिताः अमरा देवाः येन तथाविधः । यद्वा स एव तव राघवे रामे पक्षपातः स्नेहः तत् तस्मात् असौ चन्द्रहासः समासिरित्यर्थः त्वां प्रतिकरिष्यति । वसन्ततिलकं वृत्तम् ।

(घ) विटजनानां विलासिनां मानसेषु निवासी तं विभ्रमस्य विलासस्य षाड्गुण्यं सन्ध्यादिकं तेन गौरवितं गौरवशालिनं मनोहरीकृतेन कादम्बरीमदेन उच्चैः महान् मानो यस्य तथाविधम् त्रिभुवनस्य सुरतस्य विज्ञानानां विशेषाः तेषां सम्बन्धविवक्षया षष्ठी ।

(क) किमिति । देवः दशकन्धरः कोपेन मे किं करिष्यति ? न किमपीत्यर्थः यत् यस्मात् अनङ्गतया शरीरशून्यतया चन्द्रहासस्य असेः गोचरः लक्ष्यं नास्मि न भवामि । पथ्यावृत्तम् ।

(ख) सर्वङ्कषेति । सर्वङ्कषः सर्वं शरीरिणं अशरीरिणं वा कषति नाशयतीति तथोक्तः प्रभावः शक्तिः यस्य तादृशः । तादृशो वराकः ।

विचिन्त्य । यद्वा मत्प्रसाद्दुर्ललितोऽयं सर्वदा तपस्वी तदेक-
वारमपराधमस्य क्षमे । अर्द्धमवलोक्य सहर्षोल्लासं च ।

हे पाकशासन ! विसर्जय वारिवाहां-
स्त्वं कार्त्तिकेय ! कुरु दूरतरं मयूरम् ।
हे शक्र ! संहर निजानि तडिन्महांसि
लङ्केश्वरो विरहितः सहते न वर्षाः ॥ ६२ ॥ (ग)

अग्रतोऽवलोक्य । के पुनरमी ।

प्रभञ्जनिका । देव ! सेवागता भुजङ्गमा आत्मानं दर्शय-
न्ति । (४९)

रावणः ।

हे पन्नगाः ! किमपि रोषविषस्वरूपं
रूपं तु वेणिमनुयाश्यति वल्लभायाः ।
तेनैव दुर्धरतरस्त्वरते क्षपाको
युष्मानियं नमति तेन च मौलिमाला ॥ ६३ ॥ (घ)

---

(४९) देव ! सेवागता भुजङ्गमा आत्मानं दर्शयन्ति ।

---

(ग) हे पाकेति हे पाकशासन ! इन्द्र ! वारिवाहान्
मेघान् विसर्जय परित्यज, हे कार्त्तिकेय ! त्वं मयूरं दूरतरं कुरु
दूरीकुरु । रे शक्र ! इन्द्र ! निजानि स्वकीयानि तडिन्महांसि,
वैद्युततेजांसि संहर, यतः विरहितः सीताविरही लङ्केश्वरः वर्षाः
न सहते । चतुर्थपादवाक्यस्य पादत्रयवाक्यानां हेतुत्वेन निर्देशात्
काव्यलिङ्गमलङ्कारः । तदुक्तं हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते
इति । वसन्ततिलकं वृत्तम् ।

(घ) हे पन्नगा इति । हे पन्नगाः ! नागाः ! रूपं युष्माकमिति

परिक्रामन्नन्यतोऽवलोक्य । कथमियं (ङ) केलिकमलिनी ।

सहर्षम् ।

नवमरकतपात्रीरोचिषः पत्रपङ्क्ती-
स्तव कमलिनि ! वन्दे चक्षुषोश्चार्पयामि ।
यदिह नयनलेह्यं दोर्लतामध्यरोध-
स्तनतटपरिणाहं सूचयन्ति प्रियायाः ॥६४॥ (च)

अन्यतोऽवलोक्य । अये ! कथममी ब्रह्मविमानहंसाः सीताविभ्रमगमनमनुकृत्य (छ) परिक्रामन्तो मामात्मानं रोदयन्ति । साक्षेपम् । भोः ! क्षीरजलपृथक्करणपाण्डित्य-

---

शेषः । रोषविषसदृशं तु मम क्रोधाग्निपोषोत्पादकमित्यर्थः । तु अपि वल्लभायाः सीतायाः वेणिं केशपाशं अनुयाति अनुकरोति तेन क्रोधवह्न्युत्पादकत्वेन हेतुना इत्यर्थः एषः कलापः असिः त्वरते सुखान् निहन्तुमिति शेषः तेन च वल्लभाया वेण्यनुकरणेन च एवं मौलिमाला मम शिरःश्रेणी सुखान् नमति प्रणमतीत्यर्थः वसन्ततिलकं वृत्तम् ।

(ङ) केलिकमलिनी क्रीडापद्मिनी ।

(च) नवेति हे कमलिनि ! तव मरकतपात्रीणां मरकतभाजनानां रोचिरिव, रोचिर्यासां ताः पत्राणां दलानां पङ्क्तीः श्रेणीः वन्दे प्रणमामि चक्षुषोश्च अर्पयामि ददामि, यत् यस्मात् इह नयनलेह्यं दृष्टिप्रियं प्रियायाः सीताया दोर्लतयोः भुजलतयोः मध्यं रुध इत्यर्थः रुणद्धीति तथोक्तः यः स्तनतटयोः परिणाहः विस्तारः तं सूचयन्ति विन्यासविशेषेण शोभयन्तीत्यर्थः एताः पत्रपङ्क्तय इति शेषः । मालिनी वृत्तम् ।

(छ) अनुकृत्य चोरित्वा परिक्रमन्तः गच्छन्तः । क्षीरजलयोः दुग्धपानीययोः पृथक् करणे यत् पाण्डित्यं नैपुण्यं तेन संक्रीताः

संगृहीताः सितशकुनयः ! कथं लुण्ठाकता । विचिन्त्य ।
भवतु नलिनासनमेव तावदभिदधे । अञ्जलिं बद्ध्वा ।

हंहो पितामह ! निषेध विमानहंसान्
लीलागतं स्नुगदृशस्त इमे हरन्ति ॥
नोचेन्ममोपदिश तेषु यदाचरामि
त्वं येन दण्डनविधेः प्रथमप्रणेता ॥ ६५ ॥ (ञ)

विलोक्य । कथं सत्वरं मामवलोक्य स्थितास्त्वमथो मन्नयाग्रतिस्तेयं (झ) परित्यक्तमेतैः । तन्न प्रत्यादिशामि । यदित्थं कथयन्ति सकृद्विहितदोषं दोषेभ्यो विनिवर्त्तमानं साधुवद्वीक्षेत । अन्यतोऽवलोक्य । रे पुरन्दर ! मम पुरतः सीतामालिङ्गसि तन्न यमहल्याम् मुनिपत्नी । चन्द्रहास ! इत इत एष विडौजसि समादिश्यसे ।

---

व्याहताः लोकैरिति शेषः । सितशकुनयः हंसाः । लुण्ठाकता तस्करता चौर्य्यवृत्तिरित्यर्थः । नलिनासनं पद्मयोनिम् ।

(ञ) हंहो इति । हंहो पितामह ! विधातः ! विमानहंसान् भवद्यानवाहिनो मरालान् निषेध निवारय, ते तव इमे हंसाः स्नुगदृशः सीतायाः लीलागतं विलासगमनं हरन्ति चोरयन्ति । नोचेत् यदि न वारयसि इत्यर्थः तदा तेषु हंसेषु यत् आचरामि यथा तान् दण्डयामीति भावः । तत् मे उपदिश, वद, येन हेतुना त्वं दण्डविधेः शासनविधानस्य प्रथमः आद्यः प्रणेता स्रष्टा त्वमेव प्रथमं दण्डविधिं प्रवर्त्तितवानित्यर्थः । वसन्ततिलकं वृत्तम् ।

(झ) गतिस्तेयं विलासगमनचौर्य्यं तत् तस्मात् न प्रत्यादिशामि दण्डयामि एतानिति शेषः । यत् यस्मात् कथयन्ति वदन्ति बुधा इति शेषः । विहितदोषं कृतापराधं वीक्षेत पश्येत् । विडौजसि विशति

प्रभञ्जनिका। पुरतः स्थित्वा। देव! कहिं इह महेन्दो कहिं वा सीदा ?। (५०)

रावणः। निपुणं निरूप्य। हन्त हन्त! सादृश्यादिप्रलब्धोऽस्मि (ञ)। इन्दीवराकारोऽयं न विकस्वरलोचनः मघीरमणः। जलचन्द्रप्रतिमैषा तरङ्गदीर्घा न वैदेही।

प्रभञ्जनिका। स्वगतम्। भस्सदो दंसिय प्पवञ्चिदामि से हिअभावक्खेवम्। प्रकाशम्। इदो इदो पेक्खदु दसाणणो देवो। (५१)

रावणः। साक्षेपम्। भाः पन्नगाः! प्रियतमामादाय पातालं प्रविशथ वैनतेय! वैनतेय! (ट) निवारयैतान् यथा ममापि रावणस्य सहायापेक्षा। तदेषोऽहमेव परिसर्पामि। इति संरम्भते।

---

(५०) देव! क्वेह महेन्द्रः क्व वा सीता ?।

(५१) भस्मतो दर्शयित्वा प्रपञ्चयाम्यस्य हृदयावक्षेपम्। इत इतः प्रेक्षतां दशाननो देवः

---

विषं व्याप्नोतीति विट् तादृशं ओजः बलं यस्य स तस्मिन् इन्द्रे विडौजाः पाकशासन इत्यमरः। समासिद्धवत्ते प्रेक्षसे।

(ञ) विप्रलब्धः वञ्चितः। इन्द्रोति इन्दीवरस्य नीलोत्पलस्य आकारः अवयवः। विकस्वराणि लोचनानि यस्य तथोक्तः मघीरमणः इन्द्रः। जलेति। जले चन्द्रस्य प्रतिमा प्रतिबिम्बम्। तरङ्गेण दीर्घा दीर्घवत् प्रतीयमाना इत्यर्थः।

(ट) वैनतेय! गरुत्मन्! परिसर्पामि धावामि। संरम्भते कुप्यति।

प्रभञ्जनिका। पादयोर्निपत्य। कहिं एत्थ पञ्चगा कहिं एत्थ जाणई। (५२)

रावणः। निरूप्य। यथाह भवती।

अयं तोयावर्त्तो वत न वितलं नागवसतेः?
अयं वीचीच्छेदो न खलु फणिनामेष निवहः?।
इयं भृङ्गश्रेणी न पुनरलकानां विरचना?
इदं हेमाम्भोजं विकसति न सीतामुखमिदम्? ॥६६॥ (ठ)

विचिन्त्य। तदितः स्थलकमलिनीमतो विलासकरिमृगपक्षिजातांश्च लीलोद्यानैकदेशान्निरूपयामि। परिक्रामितकेनावलोक्य।

सारङ्ग! दृष्टिलसिते कलभाषिते च
पुंस्कोकिल! सितसरोरुह! सौरभे च।
दिव्येभ! विभ्रमगतौ च सदैव यस्याः
शिष्याः स्थ तां कथयत स्वगुरुं प्रियां मे॥ ६७॥ (ड)

---

(५२) कुत्र पन्नगाः कुत्र जानकी।

---

(ठ) अयमिति वत खेदे अयं तोयानां जलानामावर्त्तः भ्रमिः आदावर्त्तोऽम्भसां भ्रम इत्यमरः। न नागानां वसतिः वितलं पातालभेदः? अयं खलु निश्चितं वीचीनां तरङ्गाणां छेदः भङ्गिविशेषः, नैषः फणिनां नागानां निवहः शरीरं? इयं भृङ्गश्रेणी भ्रमरावली, अलकानां केशानां प्रियाया इति शेषः। विरचना विन्यासः न पुनः, इदं हेमाम्भोजं स्वर्णकमलं विकसति, सीताया मुखमिदं न? शिखरिणी छन्दः।

(ड) सारङ्गेति। हे सारङ्ग! मृग! त्वं दृष्टिलसिते दर्शनविलासे, हे पुंस्कोकिल! त्वं कलभाषिते मधुरभाषणे, हे सितसरोरुह!

विलोक्य । कथममी मद्वयात्सर्वेऽप्यप्रतिपत्तिमुखास्ति-ष्ठन्ति (ढ) केवलमैरावतो मदवशात्कण्ठगर्जं करोति जाने प्रेयस्यां यावदपहृतमनेन भवत्वेनमेव तावदाभाषे ।

कुम्भाभ्यां कुचसम्पदूरुविभवो हस्तेन लीलागतं
लीलोचङ्क्रमितेन गण्डतलयोः कान्तिश्च दन्तद्युता ।
स्वःस्तम्बेरमनाथ ! पक्ष्मलदृशो यस्यास्त्वयेदं हृतं
तां मे दर्शय येन सम्मदवता स्तेयं मया क्षम्यते ॥६८॥ (ण)

विलोक्य । कथं मामनादृत्य निजप्रियामभ्रमु (त) प्रति

---

श्वेतकमल ! त्वं सौरभे सौगन्ध्ये, हे दिव्येभ ! ऐरावत ! त्वञ्च विभ्रम-गतौ गतिविलासे सदैव वत्साः सीतायाः शिष्याः छात्राः स्थ भवथ तां कथयत् गुरुङ्गुरु मे प्रियां जानकीं कथयत कुत्र स्थितेति वदत गुर्वाकमन्तेवासित्वात् गुरोरवस्थानस्य अवश्यं ज्ञातव्यत्वादिति भावः । वसन्ततिलकं वृत्तम् ।

(ढ) अप्रतिपत्तिमुखाः अप्रतिपत्तिः किं कर्त्तव्यविमूढता मुखे विषादसूचके इति भावः येषां तादृशाः ।

(ण) कुम्भाभ्यामिति । हे स्वःस्तम्बेरमनाथ दिव्यैरावत ! त्वया यस्याः पक्ष्मलदृशः प्रशस्तरोमराजिशोभितनयनायाः प्रियायाः कुच-सम्पत् स्तनसमृद्धिः कुम्भाभ्यां ऊरुविभवः ऊर्वोर्विलासः हस्तेन शुण्डादण्डेन लीलागतं विलासगतिः लीलोचङ्क्रमणेन क्रीडा-गतिविशेषेण, गण्डतलयोः कपोलदेशयोः कान्तिश्च दन्तद्युता दशन-कान्त्या इदमित्यव्ययं इदं अनेन प्रकारेणेत्यर्थः हृतं सामान्यत्वान्नपुं-सक मिति बोध्यं तां मम प्रियां मे मह्यं दर्शय, सम्मदवता हर्षदायि-नेत्यर्थः येन प्रियादर्शनेन मया स्तेयं प्रियायास्तत्चौर्यं तवेति शेषः क्षम्यते । शार्दूलविक्रीडितं वृत्तम् ।

(त) अभ्रमुं सपत्नीम् । कात्यायनीति कात्यायन्याः केसरी

प्रहस्तः । साक्षेपम् । रेरे कात्यायनीकेसरिकिशोर ! शिक्ष येनम् । विचिन्त्य । अथवा शिक्षितचर एवायम् ।

कण्ठार्पितमहापाशश्चरणार्पितशृङ्खलः ।
बध्यते शुकरी हारि कोऽस्त्यन्यो दण्डडम्बरः ॥६८॥ (घ)

अन्यतोऽवलोक्य । कथमद्यापर्वणि ( ङ ) चन्द्रग्रहणं वसुमतीवर्त्ति तदेतदद्भुतम् ।

प्रभञ्जनिका । देव ! किसणपक्खदिअसेसु चन्दग्गहणं ति झति जुत्तं ण पडिहाअदि । (५३)

रावणः । प्रभञ्जनिके ! यथात्थ । सम्यग्विलोक्य किञ्चिद्विहस्य च ।

जितनवनवनीतं धाम नो चन्द्रिकेयं ?
स्मितकुवलयनीले लक्ष्मी नो कलङ्कः ? ।

---

( ५३ ) देव ! कृष्णपक्षदिवसेषु चन्द्रग्रहणमिति झटिति युक्तं न प्रतिभाति ।

---

सिंहः तस्य किशोरः शावकः तत्सम्बुद्धौ । शिक्षितचरः पूर्वं शिक्षितः चरट् भूतपूर्वे इति चरट् प्रत्ययः ।

( घ ) कण्ठेति कण्ठे अर्पितः महान् पाशो यस्याः सः, चरणयोरर्पिता शृङ्खला यस्य तादृशः शुकरी दिव्येभः ऐरावत इत्यर्थः हारि मनोज्ञेति शेषः बध्यते, अन्यः अपरः दण्डस्य डम्बरः प्राबल्यं कः अस्ति ? नैवास्तीत्यर्थः ।

( ङ ) अपर्वणि पौर्णमास्यतिरिक्ते काले इत्यर्थः । वसुमतीवर्त्ति क्षितितलस्थम् ।

( च ) जितेति जितं नवं नवनीतं येन तादृशं धाम कान्तिः,

सरलभुजगभङ्गिर्वेणिरेषा न राहुः ?
मुखमिदमिह तस्या नेव राकामृगाङ्कः ? ॥७०॥ (ध)

विचिन्त्य । क्व पुनरत्र सीतावदनेन्दुरपि । विहस्य । आर्त्तं ध्यानानीतया सीतया मुहुर्मुहुर्विप्रलभ्यामहे । अन्यतोऽवलोक्य । अयं विलासकुरङ्गाग्रणीः (न) समीरणसारङ्गः । विचिन्त्य । कथं जानकीनयनलीलामलिम्लुचः । साक्षेपम् ।

याह्योऽसि मारुत ! हृते त्वन्मृगेण तदीक्षणे ।
स्वामी भृत्यापराधेन दण्डनीय इति स्थितिः ॥७१॥ (प)

पुरतोऽवलोक्य । (फ) सरीसृपचक्रवर्त्तिन् ! वासुके ! गण्डूषयेनं यद्वा समानपरिग्रहदोषं चन्द्रमपि तावदाक्षिपामि ।

---

इयं चन्द्रिका ज्योत्स्ना नो ? सितं विकसितं यत् कुवलयं नीलोत्पलं तद्वत्नीले चक्षुषी एते कलङ्कः नो ? सरलः यः भुजङ्गः तस्येव भङ्गिर्यस्यास्तादृशी वेणिः एषा, राहुर्न ? इदमिह तस्याः सीताया मुखम्, एष राकामृगाङ्कः पूर्णशशधरः न ? मालिनीवृत्तम् ।

(न) विलासकुरङ्गाणां क्रीडामृगाणाम् अग्रणीः श्रेष्ठः समीरणसारङ्गः वातमृगः । जानकीति जानक्याः नयनलीलायाः मलिम्लुचः तस्करः ।

(प) याह्य इति । हे मारुत ! तव मृगेण वातमृगेणेत्यर्थः तस्याः ईक्षणे नयने हृते चोरिते सति याह्यः दण्डनीयोऽसि यतः भृत्यानामपराधेन स्वामी दण्डनीयः भवति इति स्थितिः लोकमर्य्यादा यस्य भृत्योऽपराध्यति तस्य स्वामी दण्ड्यते इति दण्डनियम इति भावः ।

(फ) सरीसृपाणां पन्नगानां चक्रवर्त्तिन् ! सम्राट् ! गण्डूषय ग्रिस एनं मारुतम् । समानेति समानः परिग्रहेण आश्रयदानेन

रजनीश ! विमुञ्च लाञ्छनैणं
दयितालोकनहृन्ममैष वध्यः ।
यदि चास्य परिग्रहं दधीथा-
स्तदितो मूढ ! दशाननं न पश्येः ॥ ७२ ॥ (ब)

सैंहिकेय ! सैंहिकेय (भ) ! कवलीकुरु कुरङ्गलाञ्छनम् ।

प्रभञ्जनिका । (म) केलीकन्दोट्टवणविसट्टवण्णं परिपक्ककप्पूरपिण्डपण्डुरम्मं सुअलञ्छणमुच्छिन्दाणेण देवेण मणस्सिणीमाणमुद्दाविद्दावणे किं कादव्वम् । ( ५४ )

रावणः । भवति प्रभञ्जनिके ! सर्वदैव प्रसादपात्रं ममैषः । तदेकवारं तावच्छ्वयामि ।

---

( ५४ ) केलीकमलवनविकसितवर्णं परिपक्वकर्पूरपिण्डपाण्डुरं मृगलाञ्छनमुच्छिन्दता देवेन मनस्विनीमानमुद्राविद्रावणे किं कर्त्तव्यम् ।

---

दोषो यस्य तादृशं यायुर्यथा मृगस्य आश्रयदानेन दोषी, तथा चन्द्रमा अपीति भावः । आक्षिपामि तिरस्करोमि ।

( ब ) रजनीशेति । हे रजनीश ! निशाकर ! लाञ्छनैणं कलङ्करूपम् एणं मृगं विमुञ्च, दयिताया आलोकनं हरतीति तथाविधः एषः मृगः मम वध्यः । यदि च अस्य मृगस्य परिग्रहं दधीथाः, हे मूढ ! तत् तदा इतः अस्मिन् लोके दशाननं न पश्येः न द्रक्ष्यसीत्यर्थः त्वं निपातितः सन् मम दर्शनं न प्राप्स्यसीति भावः ।

( भ ) सैंहिकेय ! राहो ! कुरङ्गलाञ्छनं चन्द्रं कवलीकुरु ग्रस ।

( म ) केलीकमलवनस्येव विकसितः वर्णः कान्तिर्यस्य तादृशं परिपक्वः सदृशः यः कर्पूरपिण्डः तद्वत् पाण्डुरः शुभ्रकान्तिः मनस्विनीनां मानिनीनां मानमुद्राया मानरूपस्य प्रबलावरोधस्य विद्रावणे ताडने ।

हे चन्द्रमस्त्यज मृगं कुरु रावणाज्ञां
तत्कारिणस्तव गुरुद्वितयेन योगः ।
तस्मै विलीननयनकान्त्यपहारदोषो
लुप्तश्च ते भवति बिम्बमलाञ्छनं च ॥ ७२ ॥ (य)

पुरतोऽवलोक्य । जानकि ! जानकि ! किमिव मयापकृतं यदवगुण्ठ्य स्थितासि । यद्वा (र) प्रसादरसोन्मुखमनसोऽपि विलासहेतोः कामिन्यः कुप्यन्ते तत्प्रसादयामि । इति प्रणमति ।

प्रभञ्जनिका । का उण एत्थ जाणई ? । (५५)

रावणः । इयमियम् ।

प्रभञ्जनिका । कहिं सा ? । (५६)

रावणः । कथं व्यापारवम् । हा हतोऽस्मि मन्दभाग्यः ।

इयं लता कापि निरन्तरच्छदा
प्रसूनगन्धाहृतषट्पदावलिः ।

---

(५५) का पुनरत्र जानकी ?।
(५६) क्व सा ?।

---

(य) हे चन्द्रम इति । हे चन्द्रमः ! मृगं त्यज, रावणस्य आज्ञां कुरु पालय । तत्कारिणः रावणाज्ञापालिनः तव गुरुद्वितयेन योगः भवेदिति शेषः किं किं तत् गुरुद्वयमित्याह तदिति च: मैथिल्या नयनकान्तेः अपहारदोषः चौर्यदोषः लुप्तश्च गतश्च बिम्बं तव मण्डलम् अलाञ्छनम् अकलङ्कं भवति च । वसन्ततिलकं वृत्तम् ।

(र) प्रसादेति । प्रसादरसे प्रसन्नतायाम् उन्मुखं मनो यासां ताः ।

(ल) इयमिति । निरन्तरा अविच्छिन्नाः छदाः दलाः यस्याः

अधो दधाना हरितं नवांशुकं

न मैथिली नीलदुकूलगुण्ठना ॥ ७४ ॥ (ख)

अन्यतोऽप्यवलोक्य। कथममी चकोराः शकुन्तयः।
अहो! चारुचरितं (ग) चित्रमेतेषामन्यविहङ्गमवर्गासाधारणं यत्किल चन्द्रिकाचान्तिचातुर्य्यम्। तान् प्रति।

अयि पिबत चकोराः! कृत्स्नमुन्नामिकण्ठ-

क्रमकवलनचञ्चच्चन्द्रकान्तीरभिन्नाः।

विरहविधुरितानां जीवितत्राणहेतो-

र्भवति हरिणलक्ष्मा येन तेजोदरिद्रः ॥ ७५ ॥ (घ)

किञ्च रे हतशकुनयः!

---

तादृशी, प्रसूनानां पुष्पाणां गन्धैः आहूताः आकृष्टाः षट्पदानाम् आवलयः यया तथोक्ता कापि लता दृश्यम्। हरितं हरिद्वर्णं नवांशुकं नववसनम् अधो दधाना परिदधाना दृश्यते; नीलं दुकूलं गुण्ठनम् आच्छादनं यस्यास्तादृशी मैथिली जानकी न। वंशस्थविलं वृत्तम्।

(ग) चारु मनोज्ञं चरितं यत्र तत् चित्रम् आश्चर्य्यम्। चन्द्रिकायाः चान्तिः पानं तत्र चातुर्य्यं नैपुण्यम्।

(घ) अयीति। अयि इति। कोमलामन्त्रणे। हे चकोराः! उन्नामी उन्नतः यः कण्ठक्रमः तेन यत् कवलनं ग्रसनम् तस्मिन् चञ्चन्त्यः राजन्त्यः याश्चन्द्रस्य कान्तयः ताः अभिन्नाः पृथक् स्थिताः अपीति अध्याहार्य्यं कृत्स्नं समग्रं पिबत, येन युष्माकं पानेन हरिणलक्ष्मा मृगाङ्कः विरहविधुरितानां वियोगार्त्तानां जीवितत्राणाय तेजोभिः रश्मिभिः दरिद्रः रहितः भवति। मालिनीवृत्तम्।

चेतोभुवश्चरितविभ्रमसंविधानं
नूनं न गोचरमभूद्दयिताननं वः ।
तत्कान्तिसम्पदमवाप्स्यथ चेच्चकोराः !
पानोत्सवं किमकरिष्यत चन्द्रिकासु ? ॥ ७६ ॥ (च)

प्रविश्य पटाक्षेपेण विलग्नाया लतापाशगुण्ठना शूर्पणखा साक्रन्दं पादयोर्निपत्य । अज्ज ! (छ) एक्कमादुक ! पेक्ख तक्खअचूडा-मणी उप्पाडिदो वडवाणलजालाकलापअं घुम्मिदं दस-कण्ठकणिट्ठबहिणीए णासाहिदम् (५७) । इति चिरं उद्वाय रोदिति ।

राघवः । सक्रोधम् ।

(५७) आर्य एकमातृक ! प्रेक्षस्व तक्षकचूडामणिरुत्पाटितो वड-वानलज्वालाकलापकं घूर्णितं दशकण्ठकनिष्ठभगिन्या नासाहितम् ।

(च) चेत इति । चेतोभुवः मनसिजस्य चरितविभ्रमस्य संवि-धानम् आश्रयभूतं दयितायाः प्रियायाः सीताया आननं वः युष्माकं गोचरं न अभूत् नूनं मन्ये, हे चकोराः ! चेत् यदि तस्याः कान्तिसम्पदं लावण्यमयूखम् अवाप्स्यथ, तदा चन्द्रिकासु किं पानोत्-सवम् अकरिष्यत ? नैव अकरिष्यतेत्यर्थः ।

(छ) एकमातृक ! एका माता यस्य तत्सम्बोधने सहोदर इत्यर्थः, तक्षकस्य नागपतेः चूडामणिः शिरोरत्नम् उत्पाटितः समुद्धृतः, वडवानलस्य ज्वालाकलापकं शिखासमूहः घूर्णितः निर्वापित इत्यर्थः । नासाहृतम् अमङ्गलम् । रावणभगिन्याः शूर्प-णखाया नासाच्छेदः तक्षकचूडामणिहरणमिव तथा वाडवाग्नि-निर्वापणमिवेति भावः ।

पौलोम्याप्यत्र वीरे समरभुवि भयाद्याचिते भर्तृभिक्षां
वैदेह्योद्दत्तशौर्य्यव्रतमदनजिते यद्यभूमप्यवज्ञा ।
तत्किं कस्यापि तस्य त्वयि विधुरमिदं कुर्वतः कर्म भग्न-
स्वर्गेभोद्दामदानस्रुतिरयमपि मे विस्मृतश्चन्द्रहासः ॥७७॥ (छ)

तद्वत्से ! कथय ।

परस्परविघट्टनामुखरदन्तपत्रान्तर-
प्रवृत्तरसनं महाकटकटारवैर्भैरवैः ।
इदं मम महोद्भटं सभयशेषवक्त्रेक्षितं
प्रचण्डकुटिलोत्कटभ्रुकुटि भुग्नभालं मुखम् ॥ ७८ ॥ (ज)

---

(छ) पौलोम्येति । हे वत्से ! पौलोम्या शच्यापि समरभुवि संग्रामस्थले भयात् भर्तृभिक्षां स्वामिप्राणभिक्षां याचिते प्रार्थिते, वैदेह्या सीतया दत्तं शौर्य्यव्रतं पराक्रमः यस्मै तादृशेन मदनेन जिते पराभूते इन्द्रजयिनि किन्तु कामविजिते इत्यर्थः अत्र वीरे मयि यदि अवज्ञा अभूत् इन्द्रविजयी अपि कामजितोऽयं किमस्माकं करिष्यतीत्येवं रूपा अपमानना अभवत् तद् भवतु इति शेषः किन्तु त्वयि इदं विधुरम् अत्याहितं कर्म कुर्वतः कस्यापि तस्य मे मम भग्ना स्वर्गेभस्य ऐरावतस्य उद्दामा उत्कटा दानानां मदजलानां स्रुतिः स्रावः येन तादृशः अयं चन्द्रहासः असिः किं विस्मृतः ? स्रग्धरावृत्तम् ।

(ज) परस्परेति । परस्परविघट्टनया अन्योन्यसंघर्षेण मुखराः सशब्दा दन्ता एव पत्राणि तेषाम् अन्तरे अभ्यन्तरे प्रवृत्ता चलिता रसना जिह्वा यस्य तथोक्तम् । भैरवैः भीषणैः महद्भिः कट कटारवैः महोद्भटं अतिभीषणं सभयैः भययुक्तैः शेषवक्त्रैः अवशिष्टैर्नवभिरितरैः मुखैः ईक्षितं दृष्टम् इदं मम मुखं प्रचण्डा कुटिला उत्कटा भीषणा

शूर्पणखा । स्वगतम् । रहुउलराअहाणीपरिट्ठिदे राम-लक्खणे अहिसारअन्ती अणिच्छन्तेहिं तेहिं बलक्कारक्कमेण एत्थावत्था कइस्सि कधं जेट्ठभादुणो कधइस्सं ता एव्वं दाव । प्रकाशम् । देव ! अओज्झाणअरीए रामेत्ति खत्तिअकुमारो अत्थि । (५८)

रावणः । स्वगतम् । अस्ति यः सीतायाः पतिः । प्रकाशम् । किं तस्य ।

शूर्पणखा । तस्स भरिआ भुवणेक्कसुन्दरी सीदा णाम(५९)।

रावणः । सानन्दमात्मगतम् । त्रिभुवनसुन्दरीति वक्तव्ये भुवनसुन्दरीत्याह । प्रकाशम् । ततः किं तस्याः ।

शूर्पणखा । लङ्केस्सरस्स समुचिदत्ति अवहरन्ती तेहिं कवाल-घट्टजोग्गा कदह्मि (६०) ।

रावणः । अये ! दाशरथिविनाशाय कारणद्वयी

---

(५८) रघुकुलराजधानीपरिस्थितौ रामलक्ष्मणावभिसरन्ती अनिच्छद्भ्यां ताभ्यां बलात्कारक्रमेणेदृशावस्था कृतेति कथं ज्येष्ठभ्रातुः कथयिष्यामि तदेवं तावत् देव ! अयोध्या नगर्यां राम इति क्षत्रियकुमारोऽस्ति ।

(५९) तस्य भार्या भुवनैकसुन्दरी सीता नाम ।

(६०) लङ्केश्वरस्य समुचितेति अपहरन्ती ताभ्यां कापालिक-व्रतयोग्या कृतास्मि ।

---

भ्रुकुटिर्यत्र तथाभूतं तथाभुग्नभालं कुटिलललाटं यत्र तो इति शेषः । पृथ्वी वृत्तम् ।

सम्भ्रान्ता सीता शूर्पणखा च । प्रकाशम् । वत्से ! मा विषीद निर्जित जामदग्न्यशस्त्रव्यापार एवासौ ततश्च ।

तुम्रद्दोर्दण्डखण्डोड्डमरपुरुपतत्कण्ठकोष्ठप्रकोष्ठं
स्फारस्फिक्पृष्ठपीठं हठदलितशिराकन्धराकाण्डखण्डम् ।
सस्तम्भं घनविस्रं घटदिति विघटन्मुण्डपिण्डं प्रचण्ड-
चण्डीशोग्रचण्डदंष्ट्राक्रकच इव दृढं चन्द्रहासस्तृणेढु॥७९॥(क)

इति परिक्रम्य निष्क्रान्तः ।

॥ उन्मत्तदशाननो नाम पञ्चमोऽङ्कः ॥

---

(क) तुम्रदिति । चण्डीशस्य हरस्य उग्रचण्डः उत्कटः दंष्ट्रा एव क्रकचः शस्त्रविशेष इव प्रचण्डः चन्द्रहासः तुम्रत् स्खलत् दोर्दण्डखण्डं यस्मात् तथोक्तः उड्डमरं तीव्रं तथा पुरु भीषणं यथा तथा पतन् कण्ठः कोष्ठः उदरं प्रकोष्ठः कूर्पराधोभागश्च यस्मिन् तत्, तथा हठदलितं सहसा छिन्नं शिराणां कन्धराकाण्डस्य ग्रीवास्कन्धस्य खण्डं यस्मिन् तत् तथा घटदिति विघटत् ध्वंसत् मुण्डस्य पिण्डं अंशः यस्मिन् तत् यथा तथा स्फारं विशालं स्फिक् पृष्ठपीठं यस्य तथाभूतं सस्तम्भं स्तम्भितं विघा-र्दनिचयमिति यावत् घनविस्रं घनितविस्रं तं राममिति शेषः तृणेढु हिनस्तु जग्धराक्षसम् ।

पञ्चमोऽङ्कः समाप्तः ।

# अथ षष्ठोऽङ्कः ।

अतः परं निर्दोषदशरथो भविष्यति ।

ततः प्रविशतः शूर्पणखामायामयौ ।

शूर्पणखा । अज्ज ! अहिस्सादं तए मादामहस्स (क) तक्कालसम्मिदं जधा किल रामे सुबद्धवेरा सुप्पणहा कुलउत्तओ माआमओ ता दुवेवि एदे कज्जसिद्धीए कारवेत्ति णिउत्ता (१) ।

मायामयः । बुद्धिप्रकर्षं प्रति किमुपवर्ण्यते तत्रभवतो माल्यवतः । किमभीष्टं चन्द्रमसः कुमुद्वतीवल्लभस्येति (ख) ।

नीतितन्त्रे द्वयं दृष्टं सिद्धये ह्यत्यवस्तुनः ।
समानः कार्ययोगश्च प्रभुशक्तिश्च निश्चला ॥ १ ॥ (ग)

तदेहि दशाननमातामहमेवोपतिष्ठावहे ।

---

(१) आर्य ! अभिज्ञातं त्वया मातामहस्य तत्कालसम्मितं यथा किल रामे सुबद्धवैरा शूर्पणखा कुलपुत्रको मायामयश्च तावेतौ कार्यसिद्धेः कारणे इति नियुक्तौ ।

---

(क) मातामहस्य माल्यवतः ।

(ख) किमिति । कुमुद्वतीवल्लभस्य चन्द्रमसः किम् अभीष्टं केन वर्णयितुं शक्यते इति भावः ।

(ग) नीतीति । ह्यत्यवस्तुनः कार्यरूपस्य विषयस्य सिद्धये सम्पादनाय नीतितन्त्रे नीतिशास्त्रे समानः कार्ययोगश्च निश्चला प्रभुशक्तिश्च एतत् द्वयं दृष्टं कारणत्वेनेति भावः

# अथ षष्ठोऽङ्कः ।

अतः परं निर्दोषदशरथो भविष्यति ।

ततः प्रविशतः शूर्पणखामायामयौ ।

शूर्पणखा । अज्ज ! अहिस्सादं तए मादामहस्स (क) तक्कालमन्तिदं जधा किल रामे सुबद्धवेरा सुप्पणहा कुलउत्तओ माआमओ ता दुवेवि एदे कज्जसिद्धीए कारवेन्ति णिउत्ता (१) ।

मायामयः । बुद्धिप्रकर्षं प्रति किमुपवर्ण्यते तत्रभवतो माल्यवतः । किमभीष्टं चन्द्रमसः कुमुदतीवल्लभस्येति (ख) ।

नीतितन्त्रे द्वयं दृष्टं सिद्धये कृत्यवस्तुनः ।
समानः कार्ययोगश्च प्रभुशक्तिश्च निश्चला ॥ १ ॥ (ग)

तदेहि दशाननमातामहमेवोपतिष्ठावहे ।

---

(१) आर्ये ! अभिज्ञातं त्वया मातामहस्य तत्कालमन्त्रितं यथा किल रामे सुबद्धवैरा शूर्पणखा कुलपुत्रको मायामयश्चौ द्वावप्येतौ कार्यसिद्धेः कारणे इति नियुक्तौ ।

---

(क) मातामहस्य माल्यवतः ।

(ख) किमिति । कुमुदतीवल्लभस्य चन्द्रमसः किम् अभीष्टं केन वर्णयितुं शक्यते इति भावः ।

(ग) नीतीति । कृत्यवस्तुनः कार्य्यरूपस्य विषयस्य सिद्धये सम्पादनाय नीतितन्त्रे नीतिशास्त्रे समानः कार्य्ययोगश्च निश्चला प्रभुशक्तिश्च एतत् द्वयं दृष्टं कारणत्वेनेति भावः

शूर्पणखा । एवं करश्च (२) । परिक्रम्यावलोकितकेन ।

मायामयः ।

नैर्ऋताधिपकार्याणामुपायापायकर्मणि ।

आर्यो यस्माल्यवानास्तेऽव्यस्तलक्ष्येण चक्षुषा ॥ २ ॥ (घ)

ततः प्रविशति माल्यवान् ।

माल्यवान् । स्मृतिमभिनीय शूर्पणखानिकारदर्शनसमुत्तेजितोऽपि दशकण्ठो रघुराजधानीयात्रातो निवर्त्तितस्तावदिदमुपदिश्य चारकैर्यदुत देवस्य वैदेह्या संदिष्टं यथा । (ङ)

स्वयं मया प्रेमपरीक्षणाय

प्रवर्त्तितः स्वाकृतियन्त्रयोगः ।

अथाहमेवागणितैरहोभि-

र्दशाननान्तं नियतं प्रवत्स्ये ॥ ३ ॥ (च)

---

(२) एवं कुर्मः ।

---

(घ) नैर्ऋतेति । यत् यस्मात् आर्य्यः मान्यवरः माल्यवान् नैर्ऋताधिपस्य दशाननस्य कार्य्याणाम् उपायस्य अपायस्य च कर्मणि अनुष्ठाने प्रवृत्ते सतीति शेषः अव्यस्तलक्ष्येण निश्चयेन इत्यर्थः । चक्षुषा आस्ते तिष्ठति किमपि कार्य्यतत्त्वं चिन्तयतीति भावः ।

(ङ) शूर्पणखेति । शूर्पणखाया निकारस्य अवमाननस्य नासाच्छेदनरूपस्य दर्शनेन समुत्तेजितः संक्रुद्धः रघुराजधान्यामयोध्यायां यात्रातः संग्रामार्थं प्रयाणात् । चारकैः चरैः । सन्दिष्टं वाचिकं प्रदत्तम् ।

(च) स्वयमिति । मया प्रेमपरीक्षणाय दशाननो मयि कीदृशः

विचिन्त्य।

इत्थं मिथ्या विप्रलब्धोऽपि देव-
स्त्यक्त्वावेशं सोदरीवैकृतेऽपि।
जातः सीतासङ्गमायत्तचित्तो
न्यक्कृत्यान्यज्जृम्भते मन्मथाज्ञा॥ ४॥ (छ)

वृतिमाटितकेन। न जाने किं वृत्तं वा कैकेयीदशर-
थयोः। उपसर्पितकेन।

मायामयः। जयति जयत्यार्य्यः

शूर्पणखा। जअदु जअदु कणिट्ठमादामहो (२)।

---

(२) जयतु जयतु कनिष्ठमातामहः।

---

प्रेमवानिति विश्रामाय स्वयं स्वाकृतियन्त्रप्रयोगः यन्त्ररूपनिजाकृतिप्र-
योगः प्रवर्त्तितः विहितः। अथ इदानीम् अहं अगणितैः असं-
ख्यातैः एव अहोभिः दिनैः अतिशीघ्रमिति यावत् नियतं निश्चितं
दशाननस्य अन्तं समीपं समीपे इत्यर्थः प्रवत्स्ये प्रकर्षेण निवसतया
यत्सामीप्यमित्यर्थः। उपेन्द्रवज्राहत्तम्।

(छ) इत्थमिति। इत्थम् अनेन प्रकारेण मिथ्या विप्रलब्धः प्रता-
रितः अपि देवः दशाननः सोदर्य्याः शूर्पणखायाः वैकृते नासाच्छेदन-
विकृतिकरणेऽपि आवेशं क्रोधावेगं त्यक्त्वा सीतायाः सङ्गमे आयत्तम्
अधीनं चित्तं यस्य तादृशः जातः। तथाहि मन्मथस्य कामस्य आज्ञा
आदेशः अन्यत् कार्य्यं न्यक्कृत्य अभिभूय जृम्भते प्रकाशते कार्य्यान्तरात्
प्रबलीभवतीति भावः। अत्र कारणेन कार्य्यसमर्थनरूपोऽर्थान्तर-
न्यासोऽलङ्कारः। तदुक्तं क्वचित् विशेषः सामान्यात् सामान्यं वा
विशेषतः। कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते। साधर्म्येणेतरे-
णार्थान्तरन्यासोऽष्टधा ततः इति। इन्द्रवज्राहत्तम्।

माल्यवान् । अथ तत्र किं वृत्तम् ? ।

मायामयः । यथादिष्टमार्येण ।

माल्यवान् । सङ्क्षेपम् तद्विस्तारतः कथ्यताम् ।

मायामयः । अथैकदा दयितस्नेहमय्या तया समममु-रानीकविजयाय पूरितसुहृन्मनोरथे दशरथे त्रिपिष्टपतिल-कभूतं पुरुहूतं प्रभाववति समुपस्थितवति तद्रूपधारिणौ कुवलयदलाभिरामं रामं सपदि छलयितुमयोध्यां शूर्पण-खाऽहं च प्राप्तवन्तौ । विहितजनरञ्जनेन वृन्दारकवन्दिव्य-ञ्जनेन गीतसंस्तुतसहचरेण निशाचरेण (ञ) ।

दैत्यग्रामं रणपरिगमे कुर्वता नामशेषम्
येन न्यस्ता दिशि दिशि यशःकन्दलीनां प्ररोहाः ।
हासज्योत्स्नां सुरपतिवधूवक्त्रचन्द्राय दत्त्वा
सार्धं दारैर्दशरथनृपः स्वां पुरीं सोऽयमेति ॥ ५ ॥ (झ)

---

(ञ) दयितेति । दयिते स्वामिनि स्नेहमय्या अतिप्रणयिन्या तया कैकेय्या समं सह असुराणां अनीकस्य सैन्यस्य विजयाय पूरितः सम्पादितः सुहृदः देवराजस्य मनोरथः अभिलाषः येन तथाविधे । त्रिपिष्टपस्य त्रिभुवनस्य तिलकभूतं ललाटभूषणस्वरूपं पुरुहूतम् इन्द्रम् । प्रभाववति अतिप्रभावसम्पन्ने । तद्रूपेति तयोः कैकेयीदशरथयोः रूपधरौ । कुवलयदलाभिरामं नीलोत्पलदलश्यामतया अभिरामं मनोहरम् । विहितजनरञ्जनेन कृतलोकप्रीतिना वृन्दारकाणां देवानां वन्दी स्तुतिपाठकः तद्व्यञ्जनेन तद्वेषधारिणा इत्यर्थः । गीतेन संस्तुतः सहचरः येन तथाभूतेन निशाचरेण छद्मोपितर्मिति शेषः ।

(झ) दैत्यग्राममिति । येन रणपरिगमे संग्रामव्यापारे दैत्यानां ग्रामं समूहं नामशेषं कुर्वता विनाशयता इत्यर्थः सता दिशि दिशि यशः-

माल्यवान्। ततस्ततः?।

शूर्पणखा। तदो तस्स वअणप्पसरणमाअण्णिअ (ज) सव्वदो वज्जन्तणिरवज्जतुरं गाअन्तगन्धव्वजणचुम्बिअ-णच्चन्तणटीसत्थं उब्भिज्जन्तविअडद्धअवडाआजुअं तोरण-णिबज्झन्तचित्तवन्दणमालअं सच्छरत्थाचत्तरचउप्पहप्प-इण्णपिट्ठातअचुण्णं तं पुरं चउद्दिसं आसि (४)।

माल्यवान्। ततस्ततः?।

मायामयः। ततश्च यावत् मायाकैकेयी शूर्पणखा माया-दशरथो मायामयश्च यथास्थानमुपविष्टौ तावत्कैकेय्याः

---

(४) ततस्तस्य वचनप्रसरणमाकर्ण्य सर्वतो वाद्यमानिरवद्यतूर्यं गायद्गन्धर्वजनचुम्बितनृत्यन्नटीसार्थम् उद्भिद्यमानविकटध्वजपताकायुगं तोरणनिबध्यमानचित्रचन्दनमालकं स्वच्छरथ्याचत्वरचतुष्पथप्रकीर्णपिष्टातकचूर्णं तत् पुरं चतुर्दिशमासीत्।

---

कन्दलीनां कीर्त्तिपताकानां प्ररोहाः अङ्कुराः न्यस्ताः अर्पिताः सोऽयं दशरथो नृपः सुरपतेः वध्वाः शच्याः वज्रचन्द्राय सुखशयिने हास-ज्योत्स्नां दत्त्वा शत्रुविजयेन देवराजमहिषीं सन्तोष्य इति यावत् दारैः पत्न्या कैकेय्या सार्द्धं सह स्वां पुरीं अयोध्याम् एति आगच्छति।

(ज) वचनप्रसरणं वाक्यावलीम्। वाद्यत् निरवद्यम् अनिन्द्यं तूर्यं यत्र तत् गायद्भिः गन्धर्वजनैः चुम्बिताः नटीनां नर्त्तकीनां सार्थाः यस्मिन् तथाभूतम् उद्भिद्यमानं उत्थाप्यमानं विकटं ध्वजापताकायुगं यस्मिन् तथोक्तं तोरणेषु निबध्यमाना चित्रा चन्दनमाला यस्मिन् तादृशं तथा स्वच्छेषु परिष्कृतेषु रथ्याचत्वरचतुष्पथेषु प्रकीर्णानि पिष्टातकचूर्णानि यत्र तथाविधम्।

प्रियसखी मन्थरा नाम तद्रूपधारिणी शूर्पणखापरिचारिकेव वद्दा मामुपेत्योक्तवती।

माल्यवान्। किम्?।

मायामयः। इदम्।

यत्त्वयाऽस्या महाराज! प्रतिपन्नं वरद्वयम्।
व्योमयानासहचरी कैकेयी याचतेऽद्य तत्॥६॥ (ट)

यथाभिहितं किं तत्। उक्तं च मन्थरया।

वरेणैकेन लभतां रघुराज्यं सुतो मम।
चतुर्दश समा रामो वने वन्येन तिष्ठतु॥७॥ (ठ)

माल्यवान्। सहर्षम्। ततस्ततः?।

शूर्पणखा। विहस्य सुदसच्चदसरहेण (ड) वि मायामएण तधा करुणं विरोइदुं प्रउत्तं जधा जदि णाम तरुणो परं ण रोवदिदा गावगणठ ठीणं परं जदि ण दलइ हिअअम्। (५)

---

(५) श्रुतसत्यदशरथेनापि मायामयेन तथा करुणं प्ररोदितुं

---

(ट) यदिति। हे महाराज! त्वया अस्याः कैकेय्याः यत् वरद्वयं प्रतिपन्नम् अङ्गीकृतम् अद्य व्योमयानानाम् अन्तरीक्षप्रयाणे सहचरी सङ्गिनी कैकेयी तत् याचते।

(ठ) वरेणेति। एकेन वरेण मम सुतः भरत इति शेषः रघुराज्यं लभताम्। अन्येन वरेण रामः चतुर्दश समाः वत्सरान् वने अरण्ये वन्येन वन्यद्रव्येण इत्यर्थः तिष्ठतु वसतु।

(ड) श्रुतेति। श्रुतं सत्यं येन तादृशेन दशरथेन। परं केवलम्। ग्रावपर्व्वतीनां ग्रन्थिबद्धपाषाणानामित्यर्थः।

माल्यवान् । विहस्य भद्र ! मायामय ! त्वमेव शेषं कथय कविमुखादेव शृणुमः (ढ) ।

मायामयः । विहस्य ।

तथा मया प्रस्तुतमार्य्य ! रोदितुं
निबद्धधाराप्रसरेण चक्षुषा ।
स्थिता यथा स्वर्गनदीव दक्षिणे
यथा च वामे यमुनेव चक्षुषि ॥ ८ ॥ (ण)

माल्यवान् । किं हि दुष्करं स्वामिभक्ते ? किमसाध्यं वैदग्ध्यस्य ? (त) ततस्ततः ? ।

मायामयः । तदिति प्रतिपन्नवता (थ) मया निर्वासितो राजपुत्रः प्रवृत्तश्च गन्तुं वनाय ।

शूर्पणखा । लक्खणजाणईमेत्तपरिवारस्स से किदा जात्ता । (६)

---

प्रवृत्तं यथा यदि नाम तरवः परं न रोदिताः । पाषाणीनां परं यदि न दलति हृदयम् ।

(६) लक्ष्मणजानकीमात्रपरिवारस्यास्य कृता यात्रा ।

---

(ढ) कविमुखादिति । कवेः काव्यकर्त्तुः तव मुखात् ।

(ण) तथेति । हे आर्य्य ! मया निबद्धः निर्गलित इत्यर्थः धाराणां प्रसरः यस्मात् तादृशेन चक्षुषा तथा रोदितुं प्रस्तुतं प्रवृत्तं यथा दक्षिणे चक्षुषि ममेति शेषः स्वर्गनदी मन्दाकिनीव यथा च वामे चक्षुषि यमुनेव स्थिता । उपेन्द्रवज्रावृत्तम् ।

(त) वैदग्ध्यस्य चातुर्य्यस्य ।

(थ) प्रतिपन्नवता अङ्गीकृतवता ।

मायामयः । आर्य्ये ! किमपि द्विषतामुदात्तजनचरित-मावर्जकं (द) पश्य ।

क्रूरक्रमा किमपि राक्षसजातिरेका
तत्रापि कार्य्यपरतेति मयि प्रकर्षः ।
रामेण तु प्रवसता पितुराज्ञयैव
बाष्पाम्बुसामहमपीह कृतो रसज्ञः ॥ ९ ॥ (ध)

अपि च । दशकण्ठमातामह !

अप्युज्झतो निजगृहान् सुखसारबन्धून्
कान्तारवासमनसः पितृशासनेन ।
रामस्य सा स्थितवती मुखमेत्य लक्ष्मीः
पद्मस्य या शरदि या च निशाकरस्य ॥ १० ॥ (न)

---

(द) द्विषतामपि शत्रूणामपि उदात्तजनानां महात्मनां चरितं आवर्जकं नामकम् आकर्षकमिति यावत् ।

(ध) क्रूरेति । एका केवला राक्षसजातिः किमपि क्रूरः क्रमः नियमः यस्यास्तादृशी राक्षसजातिरेव तावत् अनिर्वचनीयनिष्ठुरप्रकृतिरित्यर्थः । तत्रापि तादृश्यां जात्यामपि कार्य्यपरता कार्य्येषु दृष्टेषु तत्परता भवतु इति हेतोः मयि प्रकर्षः कार्य्यतत्पर इति मां सर्वे प्रशंसन्तीति भावः । रामेण तु पितुराज्ञया आदेशेन एव प्रवसता अरण्यं गच्छता अहमपि तादृशनिष्ठुरस्वभावोऽपीत्यर्थः इह संसारे बाष्पाम्बु-साम् अश्रुजलानां रसज्ञः आस्वादाभिज्ञः कृतः रामं प्रवसन्तं दृष्ट्वा अहमपि सास्रं प्रारोदमिति भावः । वसन्ततिलकं वृत्तम् ।

(न) अपीति । शरदि पद्मस्य या, निशाकरस्य च या लक्ष्मीः, सा सुखसारा बन्धवः येषु तान् निजगृहान् उज्झतः त्यजतोऽपि तथा पितृशासनेन पितुराज्ञया कान्तारे दुर्गमे अरण्ये यः वासः तस्मिन्

शूर्पणखा । तदो अम्हे तं पविसाविअ सव्वदसरहागम-णसङ्किणो झडिदि जणरूआ भविअ किं हविस्सदित्ति जाणिदुं तक्खणं तहिं जेव्व ठ्ठिआ अह तत्थ पउत्ता पोरलोअस्स हलहवुल्लावा (प) जधा केहिं वि किरकेकईदस-रहरूवधारीहिं छलिदो रामभद्दोत्ति । (७)

माल्यवान् । ततस्ततः ? ।

मायामयः । ततश्च वामदेवप्रभृतिभिर्यथावृत्तमभिधाय सपदोपग्रहं वारितोऽपि तदिदमभिधाय स्थितः ।

मया मूर्ध्नि घ्राते पितुरिति धृतं शासनमिदं
स यज्ञो रक्षो वा भवतु भगवान् वा रघुपतिः ।
निवर्त्स्ये सोऽहं भरतललितरक्षां निजपुरीं
समाः सम्यङ्नीत्वा वनभुवि चतस्रश्च दश च ॥ ११ ॥ (फ)

---

(७) ततो वयं तं प्रवास्य सत्वरदशरथागमनशङ्किनो झटिति जनरूपा भूत्वा किं भविष्यतीति ज्ञातुं तत् क्षणं तत्रैव स्थिताः । अथ तत्र प्रवृत्ताः पौरजनस्य मन्दोल्लापा यत् काभ्यामपि कृतकैकयीदशरथरूप-धारिभ्यां छलितो रामभद्र इति ।

---

मनो यस्य तादृशस्य रामस्य मुखमेत्य प्राप्य स्थितवती । एतादृशा-वस्थायामपि रामस्य मुखश्रीर्न मलिनासीदिति भावः । वसन्ततिलकं वृत्तम् ।

(प) मन्दोल्लापाः मन्दा अल्पाः शनैः शनैः प्रयुक्तत्वादिति भावः उल्लापाः संलापाः ।

(फ) मयेति । मया घ्राते मम मूर्द्धि पितुरिति हेतोः इदं शासनं

कार्यशेषनिष्पत्तये यथोचितं मातामह एव आनाप्नोति । इति निष्क्रान्ताः । विष्कम्भकः ।

ततः प्रविशति मातलिसारथिना रथेन कैकेय्या सह दशरथः ।

दशरथः । आर्य मातले ! कियद्दूरमद्यापि रघुराजधानी ? ।

मातलिः । य एष दृश्यते सरयूसरितः स्रोतसा परिक्षिप्तप्राकारो (ब) धरणितलैकदेशः सा तु इयमयोध्या । रथवेगमाटितकेन ।

कैकेयी । पणमामि भअवदिं सरऊं जा पुव्वं दीसमाणा णअणपेऊसगण्डूसकवलं (भ) करेन्ती आसि सा संपदं हलाहलकवलपडिरूवा पडिहासदि किं पुण मे अज्जउत्तदंसणे वि अकारणपज्जाउलं हिअअं ता अदि वच्छाणं

---

पृतं स्त्रीतं स पितृरूपधारी यक्षो वा रक्षो राक्षसो वा, भगवान् रघुपतिः पिता वा अथवा रघुवंशपतिः सूर्यः वा भवतु इति शेषः सः प्राप्तपितृनिदेशः अहं वनभुवि अरण्यवर्त्मे यतस्तः इम च समाः वत्सरान् सम्यक् नीत्वा यापयित्वा भरतेन कृता रक्षा यस्यास्तादृशीं निजपुरीम् अयोध्यां निवर्त्तिष्ये । शिखरिणीवृत्तम् ।

(ब) परिक्षिप्तेति । परिक्षिप्तः वेष्टितः प्राकारो वरणः यस्य तथाभूतः प्राकारो वरणः साल इत्यमरः ।

(भ) नयनेति । नयनयोः पीयूषगण्डूषस्य सुधाञ्जलेः कवलं ग्रासम् । हालाहलस्य कालकूटस्य यत् कवलं तत् प्रतिरूपा तदनुकारिणी ।

रामभद्दभरदलक्खणसत्तुग्घाणं वधूणं च सीदामण्डवीउ-
म्मिलासुदकित्तीणं दंसणेण णिव्वासइस्सदि (८)।

दशरथः । अयि कैकेयि ! ।

एतच्छ्रान्तविचित्रचत्वरपथं विश्रान्तवैतालिक-
श्लाघाश्लोकमगुञ्जिमञ्जुमुरजं विध्वस्तगीतध्वनि ।
व्यावृत्ताध्ययनं निवृत्तसुकविक्रीड़ासमस्यं नम-
द्विद्वद्वादकथं कथं पुनरिदं मौनव्रते वर्त्तते ॥ १२ ॥(म)

अवनतरथनाटितकेन ।

---

(८) प्रणमामि भवतीं सरयूं या पूर्वं दृश्यमाना नयनपीयूषगण्डू-षकवलं कुर्वन्ती आसीत् सा साम्प्रतं हालाहलकवलप्रतिरूपा प्रतिभाति । किं पुनर्मेऽयोध्यादर्शनेऽप्यकारणपर्याकुलं हृदयं तत् यदि वत्सानां रामभद्रभरतलक्ष्मणशत्रुघ्नानां वधूनां च सीतामाण्डव्यूर्मिलाश्रुतकीर्त्तीनां दर्शनेन निर्वासयिष्यति ।

---

(म) एतदिति । एतत् नगरं श्रान्तानि उत्सवनिवृत्तानि विचित्राणि चत्वरपथानि यस्मिन् तत् तथोक्तं विश्रान्ताः रहिताः वैतालिकानां वन्दिनां श्लाघाश्लोकाः स्तोत्रालापाः यस्मिन् तत् तथाविधम्, अगुञ्जिनः निःशब्दाः मञ्जुमुरजा मनोज्ञवाद्यभेदाः यत्र तत् । विध्वस्ता विनष्टा गीतध्वनयः यस्मिन् तथोक्तं व्यावृत्तं निवृत्तम् अध्ययनं शास्त्रपाठः यत्र तथाभूतं निवृत्ताः सुकवीनां क्रीड़ासमस्याः कौतुकप्रश्नाः यत्र तादृशं तथा नमन्ती निवर्त्तमाना विदुषां वादकथा तर्कवितर्कव्याहारः यत्र तथाभूतम्, अतः इदं किं पुनः मौनव्रते वर्त्तते तिष्ठति ? शार्दूलविक्रीड़ितं वृत्तम् ।

मातलिः। मन्ये महाराज! सम्भावयस्व (य) सदनमह-मपि विडौजसं विडौजसमुपतिष्ठामि इति निष्क्रान्तः।

परिक्रामितकेन दशरथः। कः कोऽत्र भोः?।

नेपथ्ये अयमहं काम्पिल्लः सौविदल्लः।

दशरथः। आह्वय सुमन्त्रवामदेवौ।

प्रविश्य वामदेवः। स्वस्ति महाराजदशरथाय देव! सन्नि-हितोऽत्र सुमन्त्रः।

दशरथः। अनाकर्णितकेन एतच्छ्रान्तम् इत्यादि पुनः पठति।

वामदेवः। साम्रं स्वगतं च।

हे महाषि! निजां विमुञ्च वसतिं द्राग्देहि यात्रां बहिः

राजानं प्रति।

देव! स्तम्भय चेतनावचनयोरप्येति शुष्काशनिः।

दम्पती। आकूतं नाटयतः।

वामदेवः।

त्वद्रूपाद्विपिनाय चीवरधरो धन्वी जटी शासनं
रामः प्राप्य गतः क्रुतश्चन वनं सौमित्रिसीतासखः॥१२॥(र)

---

(य) सम्भावयस्व प्रविश। निविडं दृढम् ओजः बलं यस्य तम्।

(र) हे महाषि इति। हेमहाषि मम सहचरि! निजां वसतिं महा-न्तर्यामित्यर्थः विमुञ्च त्यज, द्राक् झटिति बहिः यात्रां देहि। हे देव! स्तम्भय आत्मानं स्थिरीकुरुष्व। चेतनावचनयोरपि शुष्काशनिः शुष्कं कुलिशम् एति पततीत्यर्थः भवतश्चेतनां मम वचनञ्च नाशयतीत्यर्थः। रामः सौमित्रिसीतासखः सीतालक्ष्मणाभ्यां सहेत्यर्थः विपि-नाय वनगमनाय चीवरधरः वल्कलधरः धन्वी धनुष्पाणिः जटी जटा-

उभौ मूर्च्छतः ।

वामदेवः । देव ! समाश्वसिहि समाश्वसिहि । देवि कैकेयि ! समाश्वसिहि समाश्वसिहि ।

दशरथः । केन पुनः कारणेन ? ।

वामदेवः । येन केकयकुलस्योपरि दुर्यशःपांशुपातः ।

कैकेयी । ण हु जादभरदस्स दुच्चरिदं किंपि अथवा दसरहत्थरिन्दो से पिदा (९) ।

वामदेवः । शान्तं क्व पुनः सुधादीधिति भ्रातपस्रग्धी । (ख)

दशरथः । स्फुटं कथय पर्य्याकुलोऽस्मि ।

वामदेवः । केकयस्य सुतया वरयुग्मं
याचितोऽसि भवता च वितीर्णम् । (ग)

दशरथः । किं तत् ? ।

वामदेवः ।

यत्त्विलास्तु भरतो युवराजः

कैकेयी । हा हदम्हि मन्दभाइणी (१०) ।

दशरथः । किम् ? ।

---

(९) न खलु जातभरतस्य दुश्चरितं किमपि । अथवा दशरथनरेन्द्रोऽस्य पिता ।

(१०) हा हतास्मि मन्दभागिनी ।

---

यान् मनुः स्वरूपात् तद्रूपधारिणः कृतवान् अभात् प्राण बालानिति शेषः वर्णं मतः । शार्दूलविक्रीडितं वृत्तम् ।

(ख) आतपस्रग्धी सूर्यरश्मिवर्षी ।

(ग) वितीर्णं दत्तम् ।

वामदेवः ।

स प्रयातु वनमद्य च रामः ॥ १४ ॥

दशरथः । हा हा ! धिक्कष्टम् ।

नरेन्द्रो वृद्धः स्त्रीवश इति मयि न्यस्तमयशो
निषस्था दौरात्म्येष्विति मलिनिता केकयसुता ।
मतं तस्याप्यस्मिन्निति च भरते लक्ष्म लिखितं
न जाने वा कोऽस्मिन् रघुकुलकलङ्के कविरभूत् ॥१५॥(अ)

का पुनस्तौ कैकेयीदशरथौ ? ।

वामदेवः । रामभद्रं प्रवासयितुम् ।

कैकेयी । ता किंत्ति ण वारिदो वच्छो मे रामभद्दो ।(११)

वामदेवः । निवेदितवृत्तान्तः सपादोपग्रहं वारितोऽपि तदिदमभिधाय स्थितः ।

मया मूर्ध्नि न्यस्ते पितुरिति वृतं शासनमिदं
स यज्ञो रक्षो वा भवतु भगवान् वा रघुपतिः ।
निवर्त्स्यत्येषो सोऽहं भरतकृतरक्षां निजपुरीं
समाः सम्यङ्नीत्वा वनभुवि चतस्रश्च दश च ॥ १६ ॥

---

(११) तत् किमिति न वारितो वत्सो मे रामभद्रः ।

---

(अ) नरेन्द्र इति । वृद्धो नरेन्द्रः नरपतिः स्त्रीवश इति मयि अयशः न्यस्तम् अर्पितं दौरात्म्येषु दुराचारेषु निषस्था स्थिता इति केकयसुता मलिनिता कलङ्किता दुराचारिणीति कैकेय्याम् अयशः पातितमिति भावः । तस्यापि भरतस्य अस्मिन् विषये मतमस्तीति भरते लक्ष्म कलङ्कः लिखितं चित्रितं पातितमित्यर्थः । अस्मिन् रघुकुलकलङ्के कः कविः प्रणेता अभूत् न वा नैव जाने । शिखरिणीवृत्तम् ।

दशरथः । हा हा वत्स रामभद्र ! अति हि नाम असाम्प्रतिकता (ष)यत्तवापि गुरुजनात्यतिक्रमः ।

कैकेयी । हा ! हदाऽसि तीए दुज्जसदाईए सुठ्ठु चउत्थीचन्दो (स) दिट्ठोत्ति ।

सकरुणं भअवदि ! रामभद्दसासुए ! सीदाजणणि ! वसुन्धरे ! रन्धं देहि(ह) अअं पणइजणो मांगादि रहुउलवधूसमागमे पडिक्खिदा ण जीविदुं पारिस्सं । हा जाद भरद ! अलिअदुज्जसकलङ्किदा, कधं दे मुहं दंसइस्सं हा जाद ! संभाविदोऽसि दुक्खेण हा अम्ब ! विडम्बिदाऽसि हा कोसल्ले ! सल्लिदाऽसि हा सुमित्ते ! सरीरमेत्तीकिदाऽसि(१२) इति रोदिति ।

---

(१२) हा हतासि तया दुर्यशोदायी सुष्ठु चतुर्थीचन्द्रो दृष्ट इति । भगवति ! रामभद्रश्वश्रु ! सीताजननि ! वसुन्धरे ! रन्ध्रं देहि अयं प्रणयिजनो याचते । रघुकुलवधूसमागमे प्रतिक्षिप्ता न जीवितुं पारयिष्ये । हा जात भरत ! अलीकदुर्यशःकलङ्किता कथं ते मुखं दर्शयिष्यामि । हा तात ! सम्भावितोऽसि दुःखेन । हा अम्ब ! विडम्बितासि । हा कौशल्ये ! शल्यितासि । हा सुमित्रे ! शरीरमात्रीकृतासि ।

---

(ष) असाम्प्रतिकता अयौक्तिकता ।

(स) चतुर्थीचन्द्रः भाद्रीयचतुर्थ्यामुदितः चन्द्रः नष्टचन्द्र इत्यर्थः ।

(ह) रन्ध्रं छिद्रम् अवकाशमित्यर्थः । प्रतिक्षिप्ता निन्दिता कलङ्किता इत्यर्थः । सम्भावितः निन्दितः । विडम्बिता प्रतारिता । शल्यिता विद्धशल्या । शरीरमात्रीकृता अतिक्लेशिता पुत्रवियोगेनेति भावः ।

ततः प्रविशतः कौशल्यासुमित्रे ।

कौशल्या । सहि सुमित्ते ! अलं संतप्पिदेण संपदं मो जादरामभद्दो दिणणाहस्स उले उप्पण्णो जेण मायागुरुज्जणस्स वि सासणणिव्वाहणेण (ग) बालराहवेण भविअ जरापरिणदराहवाणं पच्छाकदं चरिदम् ।(१३)

सुमित्रा । अइ (क) अलिआवट्ठम्भसुत्थिदे ! किदं वाआवित्थरेण एहि पढमपतन्तदूसहमहादुक्खं महाराअं संभावेह्म(१४) इति परिक्रामतः ।

दशरथः । सवस्तीचिरं परिक्रम्य । अयि हृदय ! (ख)साक्षविलायं विलीयस्व कौशल्यासुमित्रे द्रक्ष्यति ।

---

(१३) सखि सुमित्रे ! अलं सन्तापितेन साम्प्रतं स जातरामभद्रो दिननायकस्य कुले उत्पन्नो येन मायागुरुजनस्यापि शासननिर्वाहणेन बालराघवेण भूत्वा जरापरिणतराघवाणां पश्चात् कृतं चरितम् ।

(१४) अयि ! अलीकावष्टम्भसुस्थिते ! कृतं वाचा विस्तरेण । एहि प्रथमपतद्दुःसहमहादुःखं महाराजं सम्भावयामः ।

---

( ग ) शासननिर्वाहणेन आज्ञापालनेन ।

( क ) अलीकेति । अलीकेन वृथा अवष्टम्भेन धैर्येण सुस्थिते सुखिनि ! । प्रथमेति प्रथमं पतद् दुःसहं महादुःखं यस्य तादृशम् । सम्भावयामः सान्त्वयामः ।

( ख ) साक्षेति । अक्षाणि इन्द्रियाणि तैः सह साक्षं तत् यथा तथा विलीय साक्षविलायम् आभीक्ष्ण्ये णमुल्प्रत्ययः । इन्द्रियैः सह स्वयं विलीयस्व विनश्य । यतः कौशल्यासुमित्रे द्रक्ष्यते । कथं कौशल्यायाः सुमित्रायाश्च मुखं द्रक्ष्यामीति भावः ।

कैकेयी । सम्मुखमुत्थाय । अइ हिअअणिहिददूसहदुःख-सल्ले कोसल्ले ! अइ (ग)रामाणुसरणसलक्खणलक्खणपवित्ते सुमित्ते ! एसा रामणिव्वासिणी भरददुज्जससंपादिणी केकेई सीददु (१५) इति सर्वा रुदन्ति ।

दशरथः । सखे वामदेव ! अथ तदाकर्ण्य किमभिहितं वत्सलक्ष्मणेन ? ।

वामदेवः । (घ) हृदयकरीषङ्कषं कथमपि लक्ष्मणवचनं देवादेश इति निवेद्यते ।

तातः प्रेम यतः करोत्यनुचितं त्याज्यः स पूज्योऽपि सन् (ङ)
कैकेय्याः कुचरित्रमित्यमथ चेत्तत्राऽस्मि कुण्ठक्रमः ।
आर्यश्चेद्भरतो विकर्त्तनकुले कर्त्तुं कलङ्कं स्थितो
गुञ्जज्ज्यामुखरं धनुर्ननु मयाप्यद्यैव सम्भाव्यते ॥ १७ ॥

(१५) अयि हृदयनिहितदुःसहदुःखशल्ये कौशल्ये ! । अयि रामानुसरणसलक्षणलक्ष्मणपवित्रे सुमित्रे ! एषा रामनिर्वासिनी भरतदुर्यशस्सम्पादिनी कैकेयी सीदतु ।

---

(ग) रामेति । रामस्य अनुसरणेन अनुगमनेन सलक्षणः सुलक्षणसम्पन्नः यः लक्ष्मणः तेन प्रसूतेनेति भावः पवित्रे विशुद्धे । सीदतु क्लेशं प्राप्नोतु ।

(घ) हृदयेति । हृदयमेव करीषं शुष्कगोमयं कषति इत्यर्थः तादृशम् । देवस्य आदेशः प्रत्यक्षरूपा आज्ञा इति हेतोः ।

(ङ) तात इति । तातः पिता यतः यस्मात् अनुचितं गर्हितं प्रेम प्रणयं कैकेय्यामिति शेषः करोति, अतः सः पूज्योऽपि सन् त्याज्यः । कैकेय्या [illegible] ।

ऊर्मिला। किं पुण अविदिदवुत्तन्तो मायामअमुण्णअ-हाणं वक्कलक्खणो (१६)

दशरथः। रामभद्रेण किं प्रतिपन्नम्।

वामदेवः। इदं कथ्यते।

तातादेशात् कियदिदमहो! यद्वनान्ते निवासो
यस्मिन् सेव्याः प्रशमनिधयो धाम निःश्रेयसानाम्।
आर्ये कार्ये किमु पितृगिरा गाढमूढाचलेन्द्रै-
र्बद्ध्वा सेतुं लवणजलधौ हेलया सञ्चरामि ॥ १८ ॥(च)

दशरथः। प्रकृतिसुकुमारया तु जानक्या किमभिहितम्?।

वामदेवः। वत्से जानकि! (छ) पितृश्वशुरसम्पादितस्वस्थ-

---

(१६) किं पुनरविदितवृत्तान्तो मायामयमृगलक्षणानां वल्कलक्षणः।

---

(च) तातादेशादिति। तातस्य पितुरादेशात् इदं कियत्, यत् वनान्ते निवासः, पितुरादेशेन वनवासः अतितुच्छ इति भावः यस्मिन् वनान्ते निःश्रेयसानां शुभानां धाम निकेतनं प्रशमनिधयः शमैकधना मुनय इत्यर्थः सेव्याः। एककार्ये अपि किमु पितुराज्ञामिति भावः पितृगिरा पितुर्वचसा किं वक्तव्यं गाढमूढाचलेन्द्रैः गाढं सुदृढं यथा तथा मूढैः स्थापितैः अचलेन्द्रैः पर्वतश्रेष्ठैः लवणजलधौ सेतुं बद्ध्वा हेलया अवलीलया सञ्चरामि भ्रमामि। मन्दाक्रान्तावृत्तम्।

(छ) पित्रिति। पित्रा जनकेन श्वशुरेण च सम्पादिता स्वस्था प्रजानुयायिनी स्थितिः यस्याः तथाभूता। गर्भेश्वरीभिः अन्तःपुरवर्त्तिनीभिः। उभयक्रमेण पितृश्वशुरोभयकुलक्रमेण महत्तरिकाभिः अतिमान्याभिः नारीभिरित्यर्थः। कण्ठावरोधात् शोकजनितबाष्पेणेति भावः।

स्थितिरिहस्थैव त्वं रामभद्रागमनं प्रतिपालय । गर्भेश्वरीभिर्भवादृशीभिर्दुरतिक्रमणीया विन्ध्यमहीधरभुव इत्युभयक्रममहत्तरिकाभिरभिहिता यदुक्तवती सीता तदिह पत्रिकायामास्ते सा दृश्यतां कण्ठावरोधात्स्वाचनीयान्यक्षराणि इति पत्रिकां क्षिपति ।

सुमित्रा । गृहीत्वा वाचयति ।

किं तादेण णरिन्दसेहरसिहालीढग्गपादेण मे ?
किं वा मे ससुरेण वासवसहासीहासणद्धासिणा ? ।
उद्देसा गिरिणो अ ते वणमही सा चेअ मे वल्लहा
कोसल्लातणअस्स जत्थ चलणे वन्दामि णन्दामि अ (१७) ॥ (ज)

कौशल्या । संस्तभ्यात्मानम् ।

रामे वणाअ चलिदे पिदुसासणेण
तं लक्खणे अणुगदे सह जाणईए ।

---

(१७) किं तातेन नरेन्द्रशेखरशिखालीढाग्रपादेन मे ?
किं वा मे श्वशुरेण वासवसभासिंहासनार्द्धासिना ? ।
उद्देशा गिरयश्च ते वनमही सा चैव मे वल्लभा
कौशल्यातनयस्य यत्र चरणौ वन्दे च नन्दामि च ।

---

(ज) किमिति । नरेन्द्राणां राज्ञां शेखरशिखाभिः आलीढं स्पृष्टम् अग्रपादं पादाग्रं यस्य तथाभूतेन तातेन पित्रा मे किम् ? । वासवस्य इन्द्रस्य सभायां यत् सिंहासनं तदर्द्धासिना इन्द्रेण सह एकासनोपविष्टेन इत्यर्थः मे श्वशुरेण वा किम् ? यत्र स्थिताहं कौशल्यातनयस्य रामस्य चरणौ वन्दे च नन्दामि हृष्यामि च इति शेषः ते गिरयः उद्देशाः प्रदेशाः, सा च वनमही आरण्यभूमिः मे मम वल्लभाः प्रियाः ।

आणन्दवाहसमए विहुरासुपूर-
मुक्कन्तएहिं णअणेहिं विडम्बिदह्मि (१८) ॥ २० ॥ (झ)

विचिन्त्य सकरुणप्रमोदम् ।

किं अण्णेण सुदेण णाम जणणीतारुण्णणिव्वासिणा ?
एक्कं मण्णध जादमत्थ विमले रामं रहूणं कुले ।
रज्जं वज्जिअ तादसासणपरो को पत्थिदो काणणं
किं वुड्ढेण वि राहवेण चरिदं एदं किदं केणवि ? (१९) ॥ (ञ)

---

(१८) रामे वनाय चलिते पितृशासनेन
तं लक्ष्मणेऽनुगते सह जानक्या ।
आनन्दवाष्पसमये विधुरास्रपूर-
मुज्झद्भ्यां नयनाभ्यां विडम्बितास्मि ।

(१९) किमन्येन सुतेन नाम जननीतारुण्यनिर्वासिना ?
एकं मन्यध्वं जातमत्र विमले रामं रघूणां कुले ।
राज्यं वर्जयित्वा तातशासनपरः कः प्रस्थितः काननं
किं वृद्धेनापि राघवेण चरितमिदं कृतं केनापि ? ॥

---

(झ) रामे इति । आनन्दवाष्पसमये पितृशासनप्रतिपालनात् रामस्येति भावः । विधुरं कातरताव्यञ्जकम् अस्रपूरम् उज्झद्भ्यां त्यजद्भ्याम् । विडम्बिता प्रतारिता वञ्चिता इत्यर्थः ।

(ञ) किमिति । अन्येन जननीतारुण्यनिर्वासिना मातृयौवनविनाशिना पुत्रेण इत्यर्थः पुत्रप्रसवेन मातुर्यौवनापगमादिति भावः । सुतेन किं प्रयोजनमिति शेषः ? न किमपि प्रयोजनमित्यर्थः अत्र विमले निर्मले रघूणां कुले एकं केवलं जातं रामं मन्यध्वम् । कः अपरः रामादन्य इत्यर्थः तातस्य शासनपरः आज्ञावर्त्ती सन् राज्यं वर्जयित्वा काननं प्रस्थितः ? न कोऽपीत्यर्थः । किं केनापि वृद्धेन राघवेण रघुवंश्येन इदं चरितं कृतं ? न केनापीत्यर्थः ।

दशरथः। क्व पुनस्तापसगृहस्थवेषयोर्विनिमयः कृतो वत्सेन।

वामदेवः।

छिन्नं दाम जटाकृतास्तव सुतस्यास्मिन् घनाः कुन्तलाः (ट)

दशरथः। हहो हृदय! किमद्यापि श्रोष्यसि।

वामदेवः।

छित्त्वा चात्र दुकूलमत्र वसितं रामेण तद्वल्कलम्। (ठ)

कैकेयी। एस पोम्मराअमणिणो कंचणबन्धविद्धंसणेण वारिआक्खेवणपरिक्खेवो (२०) (ड)।

वामदेवः।

भ्रातुस्तोलितमत्र चानुविहितं सौमित्रिणाऽपि व्रतं (ढ)

दशरथः। वत्स लक्ष्मण! त्वच्चरितेनामुना विषीदति प्रसीदति च मे मनः।

---

(२०) एष पद्मरागमणेः काञ्चनबन्धविध्वंसनेन वारिजाक्षेपणपरिक्षेपः।

---

(ट) छिन्नेति। अस्मिन् प्रदेशे तव सुतस्य रामस्य कर्त्तरि षष्ठीप्रयोगः। दाम माला छिन्ना त्यक्ता घनाः निविडाः कुन्तलाः केशाः जटाः कृताः।

(ठ) छित्त्वेति। अत्र च प्रदेशे दुकूलं वसनं छित्त्वा विहाय रामेण तत् वल्कलं चीरं वसितं परिहितम्।

(ड) काञ्चनबन्धनस्य स्वर्णवेष्टनस्य विध्वंसनेन परित्यागेन वारिजं शम्बूकम् एव आक्षेपणम् आभरणं तस्मिन् परिक्षेपः निक्षेपः रचनमिति यावत्।

(ढ) भ्रातुरिति। अत्र च सौमित्रिणा सुमित्रानन्दनेन लक्ष्मणेनापि भ्रात्रा रामेण तोलितम् अवलम्बितं व्रतं चीरधारणादिकम् अनुविहितं कृतम्।

वामदेवः ।

भर्त्तुर्यानुगताविह क्षितिभुवा श्वश्रूजनो वन्दितः ॥२२॥ (ण)

कैकेयी । सासूणं परं अहं मन्दभाइणी जा (त)पवसन्त-रामभद्दवहूपादवन्दणेण वञ्चिदा (२१) ।

वामदेवः । इयमपरा विषादहर्षयोरुत्कर्षसीमा ।

याः स्नेहाज्जनकेन वेणिरचनां नीताः स्वयं विभ्रमात् (थ)
मैत्रेय्या परिचुम्बिताः प्रणमने या याज्ञवल्क्येन च ।

कैकेयी । सोत्कम्पम् । ता किं तासम् (२२) ।

वामदेवः ।

ताः सीताप्यतिकान्तकुन्तलसटाः कर्त्तुं जटाः प्रस्तुता ।
पादौ मूर्ध्नि निधाय संभ्रमवशात् सौमित्रिणाऽस्मिन् धृताः॥२३॥

---

(२१) श्वश्रूणां परमहं मन्दभागिनी या प्रवसद्रामभद्रवधूपादवन्दनेन वञ्चिता ।

(२२) तत् किं तासाम् ।

---

(ण) भर्त्तुरिति । इह च क्षितिभुवा जानक्या भर्त्तुः स्वामिनः अनुगतौ अनुगमनार्थं श्वश्रूजनः कौशल्यादिः वन्दितः ।

(त) परं केवलं प्रवसन्त्या प्रयाणं गच्छन्त्या रामभद्रवध्वा सीतया पादवन्दनेन वञ्चिता पादावनभिवन्द्य मम परित्यागादिति भावः ।

(थ) या इति । जनकेन स्नेहात् स्वयं न तु अपरहस्तेनेत्यर्थः विभ्रमात् भङ्गिक्रमेण याः वेणिरचनां नीताः प्रापिताः, याः मैत्रेय्या याज्ञवल्क्यपत्न्या याज्ञवल्क्येन च प्रणमने प्रणामकरणे पादलग्ना इति शेषः परिचुम्बिताः, सीतापि ताः अतिकान्तकुन्तलसटाः अतिमनोहर-केशकलापाः जटाः कर्त्तुं प्रस्तुता प्रवृत्ता । अस्मिन् प्रदेशे सौमित्रिणा

कैकेयी । अम्मो ! पच्चुज्जीविदम्हि अज्ज वामदेव ! वक्कलणिवेसणपसारिदहत्थे (द) रामभद्दे वच्छए किं पडिवज्जिस्सासि (२३) ।

वामदेवः । देवि ! जनकजाता यत् प्रतिपद्यते । पश्य ।

सीताप्युपाहिततरुत्वचि रामभद्रे
वल्कांशुकं हृदयसीम्नि समर्पयन्ती ।
कौशल्यया चरणयोः प्रणिपत्य शीघ्र-
माघ्राय मूर्ध्नि विहृता शपथैस्तैस्तैः ॥ २४ ॥ (ध)

दशरथः । रामजननि ! महदुपकृतं(न)यद्द्विधा भवदाशितं हृदयं दशरथस्य ।

---

(२३) अहो ! प्रत्युज्जीवितास्मि आर्य वामदेव ! वल्कलनिवेशनप्रसारितहस्ते रामभद्रे वत्सा किं प्रतिपन्नमासीत् ।

---

पादौ मैथिल्या इति शेषः मूर्ध्नि निधाय सम्भ्रमवशात् आवेगात् धृताः जटाः कर्त्तुं न दत्ता इति भावः शार्दूलविक्रीडितं वृत्तम् ।

(द) वल्कलेति । वल्कलस्य निवेशनाय परिधानाय प्रसारितः हस्तः येन तथाभूते । प्रतिपन्नं विहितम् ।

(ध) सीतेति । सीतापि रामभद्रे उपाहिता परिहिता तरुत्वक् वल्कलं येन तथाभूते सति हृदयसीम्नि हृत्प्रदेशे वल्कांशुकं वल्कलवसनं समर्पयन्ती कौशल्यया शीघ्रं सत्वरं चरणयोः प्रणिपत्य मूर्ध्नि आघ्राय तैस्तैः शपथैः यदि त्वं वल्कलं धारयेः, तदा मद्वधपातकिनी भवितासि इत्यादिरूपैः दिव्यैः विहृता निवर्त्तिता । वसन्ततिलकं वृत्तम् ।

(न) द्विधा भवत् द्विखण्डं गच्छत् ।

वामदेवः । किं नाम भारितं हृदयमद्यापि बहु श्रोतव्यमस्ति । पश्य ।

दयितमनुसरन्तीं मैथिलीमीक्षमाणा
स्वहितमनुयियासुर्जानकी सा कनिष्ठा ।
गुरुगुरुजनलज्जानम्रवक्त्राम्बुजेन
भ्रुकुटिपुटनिबन्धाद्वारिता लक्ष्मणेन ॥ २५ ॥(प)

दशरथः । किमुच्यते सच्चरितेषु रामभद्रस्यान्तेवासी लक्ष्मणः । ततस्ततः ? ।

वामदेवः ।

निष्कर्णिकाऽस्तवलयोज्झितहारयष्टि-
र्निर्नूपुराऽपहृताङ्गदमेखला च ।
त्वत्कः प्रसाद इति केवलमेव वेणी
चूडामणिं निदधती चलिता वधूस्ते ॥ २६ ॥ (फ)

---

(प) दयितमिति । दयितं प्रियम् अनुसरन्तीम् अनुगच्छन्तीम् मैथिलीम् ईक्षमाणा पश्यन्ती सा कनिष्ठा जानकी जनकदुहिता ऊर्मिलेत्यर्थः स्वहितं स्वामिनं लक्ष्मणम् अनुयियासुः अनुगन्तुमिच्छुः । लक्ष्मणेन गुर्वी या गुरुजनेषु लज्जा तया नम्रं वक्त्राम्बुजं वदनकमलं यस्य तादृशेन सता भ्रुकुटिपुटनिबन्धात् भ्रूभङ्गिबन्धनेनेत्यर्थः वारिता निवर्त्तिता । मालिनीवृत्तम् ।

(फ) निष्कर्णिकेति । ते तव वधूः सीता निष्कर्णिका कर्णभूषणरहिता, अस्तवलया त्यक्तवलयभूषणा, उज्झिता त्यक्ता हारयष्टिर्यया तादृशी, निर्नूपुरा मञ्जीरहीना, अपहृते परित्यक्ते अङ्गदमेखले केयूरकाञ्ची यया तथाभूता [illegible] च त्वत्कः त्वदीयः त्वत्का प्रसा-

ततश्च ।

स्मर्तव्यासि चिरं चकोरदयिते ! दात्यूहि ! तुभ्यं नमो
दृष्टस्त्वं शितिकण्ठ ! संहर गिरो गच्छाम्यहं सारिके ! ।
हे लीलाशुक ! विस्मरिष्यसि न मामेकैकमत्यादरा-
दित्यामन्त्र्य तया विलासवयसां विश्वे वयं रोदिताः ॥२७ (ब)

कैकेयी । पिअकेलिसउन्ता ज्जेव्व मे वच्छा (२४) । (भ)

वामदेवः ।

केलीहंसो गतिमनुसरन् कारितः पञ्जरे यत्
पश्चाल्लग्ना प्रमदहरिणी वारिता यत् सखीभिः ।
यद्वैदेह्या गृहशुकगिरो नादृताश्च व्रजन्त्या
तत्के नास्यां पुरि न रुदितं नोदितः साधुवादः ॥२८॥ (म)

---

(२४) प्रियकेलिशकुन्तैव मे वत्सा ।

---

रेव दत्त इत्यर्थः प्रसादः पारितोषिकमिति हेतोः क्षेमो चूडामणिं
निदधती धारयन्ती चलिता प्रस्थिता ।

(ब) स्मर्तव्येति । हे चकोरदयिते चकोरि ! चिरं स्मर्तव्या असि
मयेति शेषः अहं त्वां चिरं स्मरिष्यामीत्यर्थः । हे दात्यूहि ! तुभ्यं
नमः, हे शितिकण्ठ मयूर ! त्वं दृष्टः मयेति शेषः, गिरः वाचः संहर
मा आलप इत्यर्थः । हे सारिके ! अहं गच्छामि, हे लीलाशुक ! मां
न विस्मरिष्यसि इति इत्यम् अत्यादरात् विलासवयसां क्रीडापक्षिणाम्
एकैकम् आमन्त्र्य सम्भाष्य तया सीतया विश्वे सर्वे वयं रोदिताः ।
शार्दूलविक्रीडितं वृत्तम् ।

(भ) प्रियेति । प्रियाः केलिशकुन्ताः क्रीडापक्षिणः यस्याः तथोक्ता ।

(म) केलीति । व्रजन्त्या कान्तमनुसरन्त्या वैदेह्या गतिमनुसरन्

विचिन्त्य । देव ! अयमपरः सूते धारावसेको (ष) यदिद-मपि राजपुत्रीवचनं निवेद्यते ।

तुभ्यं स्वस्ति विलासवापि ! भवतीं प्रेक्षे पुनर्दर्शनं (र)
क्रीडाक्रीड ! विसृज्यसेऽद्य कथितं हे केलिदोले ! तव ।
वासागार ! नमोऽस्तु ते गुणनिकाः ! सर्वाः सुखं स्थीयताम्
एषा वः परिचारिका वनभुवं रामानुगा गच्छति ॥२८॥

दशरथः । हा रघुकुलचन्द्र ! रामचन्द्र ! कोऽयं दिलीपकुले चरितविपर्यासः (ल) ।

वृत्तो दशरथः सोऽयमुपास्ते गृहमेधिताम् ।

---

केलीहंसः क्रीडामरालः यत् पञ्जरे चारितः स्थापित इत्यर्थः, पश्चात् लग्ना अनुसरन्ती प्रमदहरिणी प्रमत्तहरिणी सखीभिः यत् वारिता निवर्त्तिता, यच्च स्फुटशुकस्य गिरः वाचः न आदृताः, तत् तस्मात् अस्यां पुरि केन जनेन न रुदितम् ? केन वा साधुवादः न स्फुटितः उच्चारितः ? । मन्दाक्रान्तावृत्तम् ।

(ष) धारावसेकः धारस्य अवसेकः अर्पणम् ।

(र) तुभ्यमिति । हे विलासवापि ! क्रीडासरसि ! तुभ्यं स्वस्ति शुभमस्तु इति शेषः, भवतीं त्वां पुनर्दर्शनं पुनर्दृष्टेत्यर्थः प्रेक्षे सम्भावये इत्यर्थः । हे क्रीडाक्रीड ! लीलोद्यान ! अद्य त्वं विसृज्यसे मयेति शेषः । हे केलिदोले ! तव कथितं त्वया सह सम्भाषितम् । हे वासा-गार ! वासभवन ! ते तुभ्यं नमः अस्तु, हे सर्वा गुणनिकाः ! पुनः-पुनरुक्ताः मत्केलिनिकेतनानि इत्यर्थः सुखं स्थीयताम् एषा वः युष्माकं परिचारिका सेविका रामानुगा राममनुगच्छन्ती वनभुवं गच्छति । शार्दूलविक्रीडितं वृत्तम् ।

(ल) चरितविपर्यासः चारित्रवैपरीत्यम् ।

त्वया तु चीरकण्ठेन वनवासो निषेव्यते ॥ ३० ॥ (व)

वामदेवः। सखे! भूकाश्यप! रामभद्रप्रवसनव्यसने (श)
तु पौराणां कथं कथ्यतां विक्लवता।
गाढोरःस्थलताडनत्रुटिच्युतैर्हारावलीमौक्तिकैः
सन्दिग्धीकृतबाष्पबिन्दु रुदितं पौराङ्गनाभिस्तथा।
आमूलश्लथपक्षतिस्थितिनतग्रीवाग्रतुण्डं यथा
वीथीपञ्जरवर्त्तिभिः शुककुलैरप्युत्कमुत्कूजितम् ॥ ३१ ॥ (ष)

दशरथः।

हे प्राणाः! स गतो रामस्तदनु व्रजत द्रुतम्।
जरसा जर्जरैरङ्गैः शक्तिर्दशरथस्य का? ॥ ३२ ॥ (स)

---

(व) वृद्ध इति। सोऽयं वृद्धो दशरथः स्वैकमेधितं गार्हस्थ्यम् उपास्ते सेवते, चीरकण्ठेन दुग्धपोष्येण तु त्वया वनवासः निषेव्यते आश्रीयते।

(श) रामेति। रामभद्रस्य प्रवसनम् अरण्यगमनमेव व्यसनं विपद् तस्मिन् विक्लवता व्याकुलता।

(ष) (३१) गाढ़ेति। पौराङ्गनाभिः पुरवासिनीभिः नारीभिः गाढ़ं दृढ़ं यत् उरःस्थलेषु ताडनम् आघातः तेन या त्रुटिः छेदः तया च्युतैः पतितैः हारावलीनां मौक्तिकैः सन्दिग्धीकृता संशयिता बाष्पबिन्दवः यस्मिन् तत् यथा तथा, तथा रुदितं, यथा वीथीपञ्जरवर्त्तिभिः रथ्या-पञ्जरस्थितैः शुककुलैरपि आमूलात् श्लथा या पक्षत्योः स्थितिः तया नतं ग्रीवाग्रेषु तुण्डं यस्मिन् तत् यथा तथा उत्कम् उत्कण्ठितञ्च यथा तथा उत्कूजितं रुदितमित्यर्थः। शार्दूलविक्रीडितं वृत्तम्।

(स) हे प्राणा इति। हे प्राणाः! स राम गतः, तदनु तत् पश्चात् द्रुतं व्रजत गच्छत। जरसा वार्द्धक्येन जर्जरैः अङ्गैः दशरथस्य का शक्तिः? युष्माकं रक्षणे इति भावः।

सन्तापमभिनीय। अयि रामजननि कौशल्ये !

शशिकान्तः कथं ग्रावा भजते वह्निरत्नताम् ?।

रामस्तु चन्दनं भूत्वा जातो मे दावपावकः ॥२३॥ (छ)

वामदेवं प्रति। सखे ! ततस्ततः ?।

वामदेवः। ततश्च कृतानुगमनाग्रहग्रन्थिमपि भरतं निज-पादुकाराधनाय नन्दिग्रामे निवेश्य पितृरहितराज्यरक्षणे शत्रुघ्नं स्वशपथैः संस्थाप्य मां च तच्चिन्तने नियुज्य सुमन्त्रमात्रपरिकरः प्रस्थितस्ते पुत्रः (ज)।

ततः प्रविशति सुमन्त्रः।

सुमन्त्रः। आर्यावर्त्तमतिक्रम्य दक्षिणां दिशं प्रवसता कुमाररामभद्रेण च निवर्त्तितोऽस्मि द्राघीयसीं च तीर्थयात्रां कृत्वा पुनरयोध्यां प्राप्तस्तत्र जाने महाराजदशरथः स्वर्ग-नगरीतो निवर्त्तितो न वेति। राजप्रवेशितनाटितकमवलोक्य। कथमागत एव भगवतो मघोनः सखा ? उपसृत्य। स्वस्ति महाराजदशरथाय देव! सुमन्त्रसञ्चारिताश्वरो दुस्तरका-न्तारपथिको रामभद्रोऽभिवादयते (झ)।

---

(छ) शशीति। शशिकान्तः चन्द्रकान्तः ग्रावा मणिः कथं वह्नि-रत्नतां सूर्यकान्ततां भजते ? रामस्तु चन्दनं भूत्वा मे मम दावपावकः दावानलः जातः।

(ज) कृतेति। कृतः अनुगमने आग्रहग्रन्थिः यत्नातिशयः येन तादृशम्। पितृरहितस्य राज्यस्य रक्षणे रक्षाकार्ये। सुमन्त्र-मात्रपरिकरः सुमन्त्रसारथिरित्यर्थः।

(झ) आर्यावर्त्तमिति। आर्या अत्र आवर्त्तन्ते वसन्तीति आ-

दशरथः। सवाष्पस्तम्भम्। पूर्णवनवासव्रतो भवतु मे वत्सः (ख)।

राघवः। अपि कुशलं तस्य सकलस्य रामभद्रस्य लक्ष्मणस्य च ? (२५)।

सुमन्त्रः। कथं न नाम कुशलं येषां चरितानि जनानामाशिषो भवन्ति (ग)।

दशरथः। सखे सुमन्त्र ! निवेदय वैदेहिकत्वं गर्भरूपायाम्।

सुमन्त्रः। देव ! रघुराजधानीत इदं निवेद्यते।

सद्यः पुरीपरिसरेऽपि शिरीषमृद्वी
गत्वा जवाच्चिचतुराणि पदानि सीता।
गन्तव्यमस्ति कियदित्यसकृद् ब्रुवाणा
रामाश्रुणः कृतवती प्रथमावतारम् ॥ २४ ॥ (घ)

---

(२५) अपि कुशलं तस्य सकलस्य रामभद्रस्य सलक्ष्मणस्य च ?।

---

र्य्यावर्त्तः विन्ध्यहिमाचलयोरन्तरवर्त्ती भूभागः आर्य्यावर्त्तः पुण्यभूमिर्मध्यं विन्ध्यहिमागयोरित्यमरः। द्राघीयसीम् अतिदीर्घां बहुदूरवर्त्तिनीमित्यर्थः। मघोनः इन्द्रस्य। सुमन्त्रे सञ्चारितानि प्रेषितानि अक्षराणि वाचिकवर्णानि येन तथोक्तः।

(ख) पूर्णेति। पूर्णं वनवासव्रतं यस्य तादृशः।

(ग) आशिषः शुभसाधनानि। वैदेहिकत्वं प्रकाशितत्वं गर्भरूपायां पुत्रायाम्।

(घ) सद्य इति। शिरीषमृद्वी शिरीषकुसुमकोमला सीता पुरो-

रामः । वत्से ! जानकि ! लीलाभवनमणिकुट्टिमकेलिपरिक्रमणदुर्ललिता (ङ) भवित्वा पामरीजनयोग्ये निपतितासि (२६) ।

दशरथः । अहह ! निष्करुणो विधिः । मालतीमुकुलेन कूलं कषयति । ततस्ततः ? ।

लक्ष्मणः । पुरीपरिसरत्यागि तु ।

रूढोलपस्तृतवतीषु वसुन्धरासु
दाक्षिण्यतः प्रचलितामवलोक्य सीताम् ।
रामाग्रयेऽपि परिपन्थिनि यत्तदुक्त्या
सौमित्रिणाऽध्वपथ एव कृतो निवासः ॥ ३५ ॥ (च)

---

(२६) वत्से जानकि ! लीलाभवनमणिकुट्टिमकेलिपरिक्रमणदुर्ललिता भूत्वा पामरीजनयोग्ये निपतितासि ।

---

परिसरे नगरीविभागेऽपि जवात् वेगात् त्रिचतुराणि पदानि गत्वा गन्तव्यं कियदस्तीति असकृत् पुनःपुनः अनुवाचा वदन्ती सती रामस्य अश्रुणः वाष्पसलिलस्य प्रथमावतारं प्रथमं पातं कृतवती । वसन्ततिलकं वृत्तम् ।

(ङ) लीलेति । लीलाभवनेषु क्रीडाप्रासादेषु ये मणिकुट्टिमाः रत्नमयाभ्यन्तरभूमयः तेषु केलिपरिक्रमणे सविलासचङ्क्रमणे दुर्ललिता आदरवती कृताभ्यासा इत्यर्थः । पामरीजनानां नीचमहिलानां योग्ये प्रदेशे इति शेषः ।

(च) रूढेति । रूढैः जातैः उलपैस्तृणविशेषैः स्तृतम् आच्छादनं विद्यते यासां तादृशीषु वसुन्धरासु वनभूमिषु इत्यर्थः दाक्षिण्यतः

कैकेयी। सोम्ममुह जाद लक्खण! अवसरमन्तणअ! किं भणामि (छ) (२७)।

सुमन्त्रः। तत्र च कुशशयने निशामतिवाह्य प्रत्यूष एव पुनः प्रवृत्ता गन्तुं तत्र च।

मन्दचरणपातं गम्यतां भूः सदर्भा
विरचय सिचयान्तं मूर्ध्नि घर्मः कठोरः।
तदिति जनकपुत्री लोचनैरश्रुगर्भैः
पथि पथिकवधूभिर्वीक्षिता शिक्षिता च॥ २६॥ (ज)

कतितिथेऽपि च प्रयाणे भागीरथ्याः परं पारं निश्चित्य प्रचलिताः। सन्तताध्वपरिश्रान्तया च सीतया कलमगो-

(२७) सौम्यमुख जात लक्ष्मण! अवसरमन्त्रणक! किं भणामि।

दक्षिणभागेन प्रचलितां सीताम् अवलोक्य रामस्य आशये अभिप्राये परिपन्थिनि विरोधिनि अपि रामस्यानिच्छायामपीत्यर्थः सौमित्रिणा लक्ष्मणेन यत्तदुक्त्या यत्किञ्चित् कथनेन राममनुमान्य इत्यर्थः अर्द्धपथ एव निवासः कृतः। वसन्ततिलकं वृत्तम्।

(छ) अवसरमन्त्रणक! अवसरे यथा समये मन्त्रयतीति अवसर-मन्त्रणकः तत्सम्बुद्धौ।

(ज) मन्दचेति। सदर्भा कुशास्तृता भूः मन्दाः मन्दः चरण-पातो यस्मिन् तद् यथा तथा शनैः शनैरिति यावत् गम्यतां यतः घर्मः निदाघः कठोरः अतितीव्रः तत् तस्मात् मूर्ध्नि शिरसि सिचयान्तं वसन-प्रान्तं विरचय अर्पय। पथिकवधूभिः पान्थमहिलाभिः पथि जनक-पुत्री सीता इति इत्थं शिक्षिता, अश्रुगर्भैः सवाष्पैः लोचनैः वीक्षिता दृष्टा च। मालिनीवृत्तम्।

पीजनः कौतुभावसुलभेन विस्रम्भेण मार्गं पृष्टः। निवेदितं च तेन (झ)।

पुरो भूः शालेयी कलमपरिपाकोत्सुकशुका
पुरः फुल्लाम्भोजा तिलकयति वो वर्त्म सरसी।
अथाग्रे सीमान्तो हलदलितमुस्तासुरभय-
स्ततोऽदूराद्दिव्या नयनविषयं यास्यति सरित् ॥३७॥ (ञ)

रामः। कथं सा सा अस्माकं पुराणसगुरस्य भगवतो भगीरथस्य जयपताका गङ्गादेवी हिमशैलमुखाद्रो सुवन्ती आसि तस्मिं दाव संपत्तं राहवकुडुम्बं तदो तदो ? (ट) (२८)।

---

(२८) कथं सा साऽस्माकं पुराणगुरस्य भगवतो भगीरथस्य जयपताका गङ्गा देवी हिमवच्छिखरात् स्रवमाणा आसीत् तस्यां तावत् संप्राप्तं राघवकुटुम्बम्। ततस्ततः ?।

---

(झ) कतितिथे कतिपयदिवसीये। कलमगोपीजनः धान्यरक्षित्रीवर्गः विस्रम्भेण विश्वासेन तेन कलमगोपीजनेन।

(ञ) पुर इति। पुरः अग्रतः कलमानां धान्यानां परिपाके उत्सुकाः शुकाः यत्र तादृशी शालेयी शालिः धान्यं तद्वत्त्विनी शालिपूर्णा इत्यर्थः भूः क्षेत्रम्। पुरः अग्रतः फुल्लानि अम्भोजानि यस्यां तथाभूता सरसी वः युष्माकं वर्त्म मार्गं तिलकयति अलङ्करोति। अथ अनन्तरम् अग्रे पुरतः सीमानः भूप्रदेशाः हलैः लाङ्गलैः दलिताभिर्मर्दिताभिर्मुस्ताभिः सुरभयः सुगन्धाः। ततः परम् अदूरात् दिव्या सरित् नयनविषयं दृष्टिपथं यास्यति। शिखरिणीवृत्तम्।

(ट) हन्तेति। हन्तेत्य मध्येः नमिवंशस्य कथात्। राघवकुटुम्बं रघुपरिवारः अस्तीति शेषः।

सुमन्त्रः । ततश्च त्रियामासमये समासाद्य त्रिस्रोतसं नावमारूढाः ।

कैकेयी । साकूतम् । भअवदि भाईरधि ! भईरधाराहणं समरिअ सुहुत्तारा होइ (ठ) (२९) ।

दशरथः । ससम्भ्रमम् । अयि सुमन्त्र ! प्रस्तुतकर्णधारा (ड) नौः ? ।

सुमन्त्रः । किमुच्यते लक्ष्मणमितं निषादाधिपतिर्गुहः कर्णधारः ।

कौशल्या । तदोतदो ? (३०) ।

सुमन्त्रः ।

शम्भोर्मौलौ शशितिलकिते लब्धकेलिप्रचारां
स्रोतःसूत्रैः कृतविरचनां भूर्भुवःस्वस्त्रयस्य ।
तामुत्तीर्य त्रिदशसरितं लोचनैरश्रुगर्भै-
रन्तर्वेदीप्रवचनविदां ते पदं प्राप्तवन्तः ॥ ३८ ॥ (ढ)

---

(२९) भगवति भागीरथि ! भगीरथाराधनं स्मृत्वा सुखोत्तारा भव ।

(३०) ततस्ततः ? ।

---

(ठ) सुखोत्तारा अनायासतरणीया ।

(ड) कर्णधारः नाविकः ।

(ढ) शम्भोरिति । शशिना तिलकिते सञ्जाततिलके शम्भोः हरस्य मौलौ शिरसि लब्धः कृतः केलिप्रचारः क्रीड़ाविहारः यया तां स्रोतांसि सूत्राणीवेति तैः भूर्भुवः स्वस्त्रयस्य त्रिभुवनस्य कृतं विरचनं यया तथोक्तां त्रिलोकव्यापिनीं मन्दाकिनी गङ्गा भोगवती-

राक्षसः। अह्मो! सुहावे ठिदा ते जणा तदोतदो ? (२१)।

सुमन्त्रः। ततश्च पश्चिमेन प्रयागं रात्रिमेकामतिवाह्य समुत्तीर्य्य कलिन्दनन्दिनीं नानाधातुविचित्रं चित्रकूटाचलं गताः ? (च)।

दशरथः। देवि दक्षिणकोशलाधिपतिपुत्रि ! सुकुमारा राजपुत्री दुःसञ्चारा चित्रकूटगिरेररण्यानी (त)।

सुमन्त्रः। तत्र च।

आर्द्रैरपाकृतनवोटजानां
सौमित्रिणा नीतफलोदकानाम् ।
कथाप्रसङ्गस्मृतबान्धवानां
तेषामभूत्तत्र चिरं प्रवासः ॥ ३८ ॥ (थ)

---

(२१) अहो ! सुखाने स्थितास्ते जनाः ।

---

रूपेणेति भावः। तां त्रिदशसरितं देवनदीम् उत्तीर्य्य ते रामादयः अश्रुगर्भैः साश्रुभिः लोचनैः उपलक्षिताः सन्तः अन्तर्वेदीप्रवचनविदां तापसानामित्यर्थः पदं स्थानं प्राप्नुवन्तः। मन्दाक्रान्तावृत्तम् ।

(च) प्रयागं पश्चिमेन प्रयागस्य पश्चिमे इत्यर्थः कलिन्दनन्दिनीं यमुनाम् ।

(त) दक्षिणकोशलेति। दक्षिणकोशलानां अधिपतेः राज्ञः पुत्रि ! कौशल्ये इत्यर्थः दुःसञ्चारा दुःखेन सञ्चर्य्यते इति तथाभूता ।

(थ) आर्द्रैरिति। तत्र चित्रकूटे आर्द्रैः अपक्वैः उपायैः आकृतं नवम् उटजं कुटीरं यैः तथोक्तानां सौमित्रिणा लक्ष्मणेन आनीतानि फलानि उदकानि जलानि च येषां तादृशानां तथा कथाप्रसङ्गेन स्मृता

किञ्च।

त्वक्तारवी निवसनं मृगचर्म शय्या

गेहं गुहा विपुलपत्रपुटा घनाश्च।

मूलं दलं च कुसुमं च फलञ्च भोज्यं

पुत्रस्य जातमटवीगृहमेधिनस्ते॥ ४०॥ (द)

कौशल्या। अज्ज ! कधेसु कीदिसं पुसं वणवासिणीए सीदाए घरिणित्तणं (२२)।

सुमन्त्रः। इदं निवेद्यते।

यदाखाद्यं सीता वितरति तदग्रे स्वगृहिणे

सुमित्रापुत्राय प्रणिहितमशेषं च तदनु।

यदामं वा नामं यदनतिरसं यच्च विरसं

फलं वा मूलं वा रचयति तु तेन स्वमशनम्॥४१॥ (ध)

---

(२२) आर्य ! कथय कीदृशं पुण्यं वनवासिन्याः सीताया गृहिणीत्वम्।

---

बान्धवाः पित्रादयः यैः तादृशानां तेषां रामादीनां चिरं दीर्घकालं प्रवासः अवस्थितिः अभूत्।

(द) त्वगिति। अटवीगृहमेधिनः वनगृहिणः ते तव पुत्रस्य रामस्य तारवी तरुसम्बन्धिनी त्वक् वल्कलमित्यर्थः। निवसनं परिधानं मृगचर्म शय्या, विपुलानि पत्रपुटानि यासु ताः घनाः निविडाश्च गुहाः पर्वतकन्दराः गेहं सदनं मूलं दलं पत्रं कुसुमञ्च फलञ्च भोज्यं खाद्यं जातम्। वसन्ततिलकं वृत्तम्।

(ध) यदेति। यत् फलमूलादिकम् आखाद्यं सुखादमित्यर्थः, सीता अग्रे तत् स्वगृहिणे रामाय वितरति ददाति। तदनु तत्पश्चात्

कौशल्या । पुत्ति सीदे ! कहिं पुण महाराजराजजादाए भविअ णिसग्गदरिद्दघरिणित्तणं तए सिक्खिदम्(न)(२२) ।

दशरथः । देवि ! दैवं शिक्षयति ।

लक्ष्मणः । इदमपरमावेद्यते हृदयशरीरकषं वचो यद्-ताध्वखेदजनकेषु प्रयाणकेषु (प) ।

उत्थाय संभ्रमवशस्खलितोत्तरीया
कृत्वा धनुर्निचुलके मृगयानिवृत्तौ ।
सीताऽञ्चलेन तरलेन समुल्लसन्ती
रामाननाद्भ्रमितपक्ष्मरजः प्रमार्ष्टि ॥ ४२ ॥ (फ)

---

(२२) पुत्रि सीते ! कुत्र पुनर्महाराजजातया भूत्वा निसर्गदरिद्र-गृहिणीत्वं त्वया शिक्षितम् ।

---

सुमित्रापुत्राय लक्ष्मणाय प्रतिहितम् अवशिष्टम् अशेषम् समस्तम् आस्वाद्यमिति शेषः वितरतीति शेषः । यत् आमम् अपक्वं वा नामम् अथवा पक्वमित्यर्थः, यत् अनतिविरसम् अतिवैरस्यरहितं यत्र विर-सम् अस्वादु फलं वा मूलं तेन समम् अशनं भोजनं रचयति कल्पयति । शिखरिणीवृत्तम् ।

(न) निसर्गदरिद्रगृहिणीत्वं आजन्मदरिद्रस्य रमणीत्वम् ।

(प) हृदयशरीरकषं चित्तगोमयदाहकं प्रयाणकेषु गमनेषु ।

(फ) उत्थायेति । मृगयानिवृत्तौ मृगयायाः प्रत्यावृत्तौ सत्यां रामस्येति शेषः सीता सम्भ्रमेण आवेगेन स्खलितम् उत्तरीयं यस्यास्ता-दृशी तथा समुल्लसन्ती प्रियदर्शनेन उल्लासिनी सती उत्थाय निचुलके तदाख्ये वृक्षविशेषे धनुः कृत्वा प्रियहस्तात् गृहीत्वा संस्थाप्य रामाननात् रामस्य मुखात् तरलेन चालितेन अञ्चलेन नमितं पक्ष्मरजः नेत्रलोम-पतितं पांशुं प्रमार्ष्टि अपनयति । वसन्ततिलकं वृत्तम् ।

दशरथः । ततस्ततः ? ।

सुमन्त्रः । ततश्च (य) जानकीहरणकृतोद्यमविराधविध्वंसनेन सीतागात्रनिवेशितनखरोल्लेखस्य च धाराधरवायसस्य काणीकरणेन सुस्थान्याश्रमपदानि विधाय दक्षिणं महाकान्तारमधिकृत्य प्रस्थितास्ते ।

दशरथः । अयि सुमन्त्र ! नववधूटीलक्ष्मणयोः(भ)प्रथमपथिकता विक्लवयति ।

सुमन्त्रः । किं नाम विक्लवयति न पुनरानन्दयति ।

धरणितलनिषण्णं वत्सविश्रान्तिहेतो-
र्व्यजति जनकपुत्री वाससः पल्लवेन ।
अगणितनिजखेदः पादसंवाहनाभिः
परिचरति प्रहृष्टं लक्ष्मणो रामभद्रम् ॥ ४२ ॥ (म)

---

(य) जानकीति । जानक्या हरणे कृतः उद्यमो येन तादृशस्य विराधस्य तन्नाम्नः राक्षसस्य विध्वंसनेन वधेन । सीताया गात्रेषु निवेशितः अर्पितः नखरोल्लेखः येन तादृशस्य धाराधरनाम्नः वायसस्य काकस्य काणीकरणेन ऐषिकास्त्रेण एकनेत्रपातेन इत्यर्थः ।

(भ) प्रथमपथिकता नूतनपान्थता विक्लवयति व्याकुलयति ।

(म) धरणीति । जनकपुत्री वत्सयोः रामलक्ष्मणयोः विश्रान्तिहेतोः विश्रमार्थं वाससः वसनस्य पल्लवेन प्रान्तेन अञ्चलेनेत्यर्थः धरणितलनिषण्णं वृक्षमूलस्थितं रामं व्यजति वीजयति । लक्ष्मणः अगणितः निजस्य खेदः श्रमः येन तथाभूतः सन् स्वं श्रममगणयित्वेत्यर्थः पादसंवाहनाभिः प्रहृष्टं सानन्दं रामभद्रं परिचरति सेवते । मालिनीवृत्तम् ।

रामः । हा देव ! कहिं उण गब्भेसरेहिं(ख)भविअ जाण-ईलक्खणेहिं पहिअजणजोग्गं गुरुसुस्सूसणं सिक्खिदम्(२४) ।

ऊर्मिला । उचिदकारित्तणे पत्थुदसिक्खिदाइं महा-भाअजणचरित्ताइं (२५) ।

दशरथः । जाने जानकीतोऽपि प्रसादवान् वत्सलक्ष्मणे रामभद्रः ।

सुमन्त्रः । यथादिष्टं देवेन ।

ताराप्रेङ्खणपीतबाष्पपयसो यत्नेन सञ्चारिताः
सीतायाः सविधस्थितेषु च मृगद्वन्द्वेषु वीरुत्सु च ।
बाले वर्त्मकृते प्रवासिनि उत्सृज्य गम्भीरतां
सौमित्रौ निपतन्ति वत्सलतया पुत्रस्य ते दृष्टयः ॥४४॥(र)

---

(२४) हा देव क ! पुनर्गर्भेश्वराभ्यां भूत्वा जानकीलक्ष्मणाभ्यां पथिकजनयोग्यं गुरुशुश्रूषणं शिक्षितम् ।

(२५) उचितकारित्वेऽस्तुतशिक्षितानि महाभागजनचरित्राणि ।

---

(ख) गर्भेश्वराभ्यां गृहस्वामिना गृहस्वामिन्या च इत्यर्थः ।

(र) तारेति । यत्नेन सञ्चारिताः अतएव तारायाः नेत्रकनीनिकायाः प्रेङ्खणेन चालनेन पीतं बाष्पपयः अश्रुजलं याभिः तथाभूताः ते तव पुत्रस्य रामस्य दृशः सीतायाः सविधस्थितेषु समीपवर्त्तिषु मृगद्वन्द्वेषु च वीरुत्सु लतासु च तथा अवात् वेगात् गच्छतेत्यर्थः गम्भीरतां धैर्यम् उत्सृज्य परित्यज्य प्रवासिनि अनुगामिनि बाले शिशौ सौमित्रौ लक्ष्मणे च वर्त्मकृते अध्वपरिश्रमहेतोः वत्सलतया सस्नेहमित्यर्थः निपतन्ति मत्कृते विपुलरयं कियन्तं क्लेशं प्राप्नोतीति सदयं लक्ष्मणे दृष्टिं पातयति रामभद्र इति भावः । शार्दूलविक्रीडितं वृत्तम् ।

सुमन्त्रः । इदं कथ्यते यथा सञ्चरति ।

मुष्णत्यग्रे किसलयचयं लक्ष्मणो याति सीता
पादाम्भोजे विसृजदसृजी तत्र सञ्चारयन्ती ।
रामो मार्गं दिशति च ततस्तेऽखिलेनाऽपि चाह्ना
शैलोत्सङ्गप्रचयिनि पथि क्रोशमेकं वहन्ति ॥ ४७ ॥(क)

ततश्च ।

जरदजगरश्वासश्वासप्रनष्टमृगाङ्गनं
हरिनखमुखन्यासादस्तद्विपोज्झितचीत्कृतम् ।
शबरवनितोत्खातैः कन्दैः स्फुटस्थपुटान्तरं
तदनु सरितां बन्धुं विन्ध्यं गतास्त इमे गिरिम् ॥ ४८ ॥ (ख)

---

(क) मुष्णातीति । लक्ष्मणः अग्रे किसलयचयं मुष्णाति विक्षि-पति, सीता तत्र किसलयाचिते प्रदेशे विसृजन्ति निःसरन्ति असृञ्जि शोणितानि याभ्यां तादृशे पादाम्भोजे चरणकमले सञ्चारयन्ती विक्षि-पन्ती सती याति गच्छति । रामः मार्गं पन्थानं दिशति च दर्शयतीत्यर्थः ततः अनन्तरं ते सर्वे अखिलेनापि समग्रेणापि अह्ना दिवसेन शैलोत्सङ्गप्रचयिनि पथि एकं क्रोशं वहन्ति चलन्ति । मन्दा-क्रान्तावृत्तम् ।

(ख) जरदिति । तदनु तदनन्तरं ते इमे रामादयः जरताम् अजगराणां श्वासात् प्रनष्टाः पलायिताः मृगाङ्गनाः यस्मात् तादृशं हरीणां सिंहानां नखमुखानां न्यासात् प्रहारात् अस्तैः विद्रुतैः द्विपैः करिभिः उज्झितं त्यक्तं कृतमित्यर्थः चीत्कृतं यस्मिन् तथाभूतं तथा शबरवनिताभिः किरातीभिः उत्खातैः कन्दैः स्फुटं स्थपुटस्य विषमोन्नतप्रदेशस्य अन्तरं यस्य तथाविधं सरितां नदीनां बन्धुं विन्ध्यं गिरिं गताः । हरिणीवृत्तं न समरसलागः षड्वेदैर्हयैर्हरिणीमतेति लक्षणात् ।

कोसल्ला । जा(ग) कविञ्जलकेलिजुज्झे वि विब्भन्ती आसि सा कधं पुण वाणरमुक्कवुक्कारवसङ्किदपहिअं किराअजालभल्लाहदवेल्लमाणअच्छभल्लकीलालकवलणकेलिकोदूहलिदकेसरिकिसोरदीहजीहालिहिज्जन्तपोम्मरामखाणिं विंझगिरिं पेक्खन्ती सुण्हा मे पदाइं धारइस्सदि। हा हद देव्व ! सान्तं केलिकदलीकन्दली मत्तकरिसुण्डावेढं सहावीअदि हंहो ! दिलीपकुलदेवदाओ ! सुरक्खिदं कुणध वणे राहवकुडुम्बम् (२९) ।

---

(२७) या कपिञ्जलकेलियुद्धेऽपि विभ्यत्यासीत् सा कथं पुनर्वानरमुक्तबुक्कारवशङ्कितपथिकं किरातजालभल्लाहतवेल्लदच्छभल्लकीलालकवलनकेलिकौतूहलितकेसरिकिशोरदीर्घजिह्वालिह्यमानपद्मरागखनिं विन्ध्यगिरिं प्रेक्षमाणा स्नुषा मे पदानि धारयिष्यति । हा हत दैव ! शान्तं केलिकदलीकन्दली मत्तकरिशुण्डावेष्टनं साह्यते हंहो ! दिलीपकुलदेवताः ! सुरक्षितं कुरुत वने राघवकुटुम्बम् ।

---

(ग) कपिञ्जलेति । कपिञ्जलानां पक्षिभेदानां केलियुद्धे क्रीडायुद्धे । वानरेति । वानरैः मुक्तैर्बुक्कारैः शङ्किताः पथिका यस्मिन् तादृशं किरातेति किरातजालानां व्याधसङ्घानां भल्लैः अस्त्रविशेषैः हताः प्रहृताः अतएव वेल्लन्तः व्यथया विघूर्णन्तः ये अच्छभल्लाः भल्लूकाः तेषां कीलालस्य जलस्य कीलालममृतं जलमित्यमरः । कवलनं पानमेव केलिः तेन कौतूहलितैः तद्दर्शनेन कौतुकाविष्टैरित्यर्थः केसरिकिशोरकैः सिंहशिशुभिः दीर्घजिह्वाभिः लिह्यमानः आस्वाद्यमानः पद्मरागाणां खनिः आकरः यत्र तथाभूतम् । साह्यते सह्यं क्रियते त्वयेति शेषः ।

दशरथः। किं करोतु वराकी सा पुनर्मालतीकलिका दर्भगुच्छग्रथनाकदर्थनां (घ) क्षमते।

सुमन्त्रः। शृणु यथा क्षमते।

मूले मूले पथि विटपिनां खेदिनी दीर्घमास्ते
शुष्यत्कण्ठी पिबति सलिलं निर्झरे निर्झरे च।
जातत्रासा निमिषति दृशं कन्दरे कन्दरे च
स्थाने स्थाने वहति च मतिं बद्धवासाभिलाषा॥४९॥(ङ)

निःश्वस्य। देव! इदं पुनरतिकष्टतरं श्रावयामि।

विन्ध्याध्वानो विरलसलिलास्तर्षिणी तत्र सीता
यावन्मूर्छां कलयति किल व्याकुले रामभद्रे।
द्राक्षौमित्रिः पुटककलशीं मालुधानीदलानां
तावत्रासी दधनतिभृतां वारिणा नैर्झरेण॥५०॥(च)

---

(घ) दर्भाणां कुशानां गुच्छग्रथने माल्यबन्धने या कदर्थना क्लेशः तां क्षमते सहते।

(ङ) मूले इति। पथि विटपिनां तरूणां मूले मूले खेदिनी श्रान्ता सती दीर्घम् आस्ते उपविशति। शुष्यन् कण्ठो यस्याः तादृशी सती निर्झरे निर्झरे सलिलं पिबति च, जातत्रासा सभया सती कन्दरे कन्दरे प्रतिगुहं दृशं निमिषति निमीलयति च। स्थाने स्थाने बद्धः वासे अभिलाषो यया तादृशी सती मतिं वहति च। मन्दाक्रान्तावृत्तम्।

(च) विन्ध्येति। विन्ध्यस्य अध्वानः पन्थानः विरलानि अल्पानि सलिलानि येषु तथाभूताः, तत्र तर्षिणी तृषार्त्ता सीता यावत् मूर्छां कलयति प्राप्नोति, किल तावत् रामभद्रे व्याकुले सति सौमित्रिर्लक्ष्मणः द्राक् झटिति मालुधानीनां लताविशेषाणां ये दलाः पत्राणि तेषां

सर्वे समुत्तिष्ठन्ति ।

कौशल्या । लक्खण लक्खण ! (छ) उवणेहि ! चलणकमलाइं सीसेन ते धारइस्सं (३८) ।

कैकेयी । सहि कोसल्ले ! उट्ठेहि उट्ठेहि कहिं एत्थ रामो लक्खणो वा, अदिक्कन्तं (ज) क्खु भणीअदि (३९) ।

दशरथः । एष विषादहर्षयोरन्तरे वर्त्ते ।

कौशल्या । हा रामभद्द ! केण उण दिणअरकुलकुमारएण भविअ विंझगिरिवासदुःखं अणुभूदम् (४०) ।

सुमित्रा । सहि कोसल्ले ! ण सव्वो रामभद्दो (४१) ।

कैकेयी । णअरे णअरे (झ) कैकेयी (४२) ।

---

(३८) लक्ष्मण ! लक्ष्मण ! उपनय चरणकमले शीर्षेण ते धारयिष्यामि ।

(३९) सखि कौशल्ये ! उत्तिष्ठोत्तिष्ठ कुत्र रामो लक्ष्मणो वा अतिक्रान्तं खलु भण्यते ।

(४०) हा रामभद्र ! केन पुनर्दिनकरकुलकुमारकेण भूत्वा विन्ध्यगिरिवासदुःखमनुभूतम् ।

(४१) सखि कौशल्ये ! न सर्वो रामभद्रः ।

(४२) नगरे नगरे कैकेयी ।

---

घटकमेव कवर्यो नैर्झरेण वारिणा अतिक्रान्तां परिपूरितां दधत् धारयन् सन् तावत् प्राप्तः उपस्थितः । मन्दाक्रान्तावृत्तम् ।

(छ) उपनय अर्पय ।

(ज) अतिक्रान्तम् अतीतं भण्यते कथ्यते सुमन्त्रेणेति शेषः ।

(झ) नगरे नगरे कैकेयी कलङ्किनीति घुष्यते इति भावः ।

कौशल्या । तदो तदो ? (४३) ।

सुमन्त्रः । ततश्च ।

विहितशयनोऽनेकन्यासैरनोकहपल्लवैः
कलितकलशीपालिः कुम्भीदलैश्च पुटीकृतैः ।
अथ विरचितः किञ्चित्तालप्रभेऽह्नि सुतेन ते
परिसरसरिज्जम्बूकुञ्जे निकेतपरिग्रहः ॥ ५१ ॥ (ञ)

दशरथः । सविशेषकरुणम् । ततस्ततः ? ।

सुमन्त्रः । तदित्थं कतिथिषे च प्रयाणे ।

गिरिषु जयपताका विन्ध्यशैलस्य पाणि-
र्द्विपकुलनिचिताशाः प्रेयसी पश्चिमाब्धेः ।
नयनपथमथागान्नर्मदा देव ! तेषां
शिशिरितजलमिन्दोश्चन्द्रिकेव प्रसूता ॥ ५२ ॥ (ट)

(४३) ततस्ततः ।

---

(ञ) विहितेति । अथ ते तव सुतेन परिसरसरितः प्रान्तवर्त्तिन्याः नद्याः जम्बूकुञ्जे किञ्चित् ईषत् ताले तालद्रुमे प्रभा सूर्यरश्मिर्यस्य तादृशे अह्नि अपराह्णे इत्यर्थः तदैव तालद्रुमोपरिभानुमयूखोत्पतना-दिति भावः । अनेके बहवः न्यासाः निक्षेपा येषां तथाभूतैः अनोकहानां तरूणां पल्लवैः विहितं प्रस्तुतं शयनं शय्या यस्मिन् तादृशः, पुटीकृतैः कुम्भीनां लताविशेषाणां दलैः कलितः निर्मितः कलशीनां जलकुम्भानां पालिः श्रेणिर्यस्मिन् तथाविधः निकेतपरिग्रहः आवासकुटीरूपाश्रयः विर-चितः कृतः । हरिणीवृत्तम् ।

(ट) गिरिष्विति । हे देव ! अथ अनन्तरं गिरिषु जयपताका विन्ध्यशैलस्य पाणिः हस्तस्वरूपा इत्यर्थः द्विपकुलैः हस्तिवृन्दैः निचि-

रघवः। या किल भगवत्यार्य्यावर्त्तदक्षिणापथयोर्विभाग-रेखा (ठ)।

सुमन्त्र। ततश्चाहमनुगमनकृताग्रहग्रन्थिरपि (ड) देव-द्रोहं निगदता रामभद्रेण चिनिवृत्तये स्थापितः। किञ्च देव!

कृत्वा पाणी शिरसि जटिले पद्मकोशायमानौ
रामेण प्राक्प्रणतिविनयो देव! विज्ञापितस्ते।
बाष्पस्तारातरलनयनस्तम्भितोऽप्युज्जिहानः
पश्चात् मुक्तः श्वसितविधुतो वन्दितेनाननेन ॥५३॥(ढ)

कौशल्या। भज्ज! तए विमुक्को रामभद्दो (४४)।

(४४) आर्य! त्वया विमुक्तो रामभद्रः।

तम् आलोचितम् अस्याः यस्याः तादृशी पश्चिमाब्धेः पश्चिमसागरस्य प्रेयसी पश्चिमसागरगामिनीति भावः नर्मदा इन्दोश्चन्द्रात् प्रसूता चन्द्रिकेव तेषां रामादीनां शिशिरितं शीतलीकृतं अक्षम् चक्षु यस्य तादृशम् आनन्दजन्यं नेत्रजलं शिशिरं भवति नर्मदादर्शने तेषामान-न्दोदय इति भावः नयनपथं दृष्टिगोचरम् अगात् प्राप। मालिनी-वृत्तम्।

(ठ) विभागरेखा प्रभेदसीमा इत्यर्थः।

(ड) अनुगमनेति। अनुगमने कृतः आग्रहग्रन्थिः निर्बन्धातिशयः तेन तादृशः। देवद्रोहं महाराजस्य अनिष्टम् अप्रियाचरणमि-त्यर्थः निगदता कथयता। स्थापितः नियोजितः।

(ढ) कृत्वेति। हे देव! रामेण प्राक्पूर्वं जटिले जटायुक्ते शिरसि पद्मकोशायमानौ कमलकोरकोपमौ पाणी कृत्वा अञ्जलिं विधाय इत्यर्थः ते तव प्रणतिविनयः प्रणामरूपं वस्तु विज्ञापितः

सुमन्त्रः । देवि ! सर्वे वयं रामभद्रेण परित्यक्ताः ।

कौशल्या । तदोतदो ? (४५) ।

सुमन्त्रः । ततश्च ।

नीत्वा कालं तरुणतरणिं स्निग्धजम्बूनिकुञ्जे
धाराक्लृप्तोन्नमितसिकतासद्मनां क्रीडनेन ।
रेवां देव ! स्खलितचरणा पिच्छिलाभिः शिलाभि-
स्तामुत्तीर्णा पथिकतरलन्यस्तहाहा वधूस्ते ॥५४॥ (ख)

सुमित्रा । तदोतदो ? (४६) ।

---

(४५) ततस्ततः ।

(४६) ततस्ततः ।

---

निवेदितः प्रणामः विज्ञापित इत्यर्थः । पश्चात् वन्दितेन सर्वजन-पूजितेन आननेन मुखेन तारया तरलाभ्यां चञ्चलाभ्यां नयनाभ्यां स्तम्भितोऽपि रुद्धोऽपि उज्जिहानः उद्गच्छन् स्खलितेन निश्वासेन विधुतः स्पन्दितः वाष्पः अश्रुजलं मुक्तः । मन्दाक्रान्तावृत्तम् ।

(ख) नीत्वेति । हे देव ! धीरा ते तव वधूः स्निग्धे जम्बूनिकुञ्जे क्लृप्तानां रचितानाम् उन्नमितानां सिकतासद्मनां वालुकारचितगृहाणां क्रीडनेन बालुकाभिः गृहविरचनरूपेण क्रीडनेनेत्यर्थः । तरुणः तीव्रः तरणिः सूर्य्यः यस्मिन् तादृशं कालं मध्याह्नसमयमित्यर्थः । नीत्वा अतिशाद्य पिच्छिलाभिः मसृणाभिः शिलाभिः स्खलितचरणा अतएव पथिकतरलैः पथिकेषु पान्थेषु तरलैः अधीरैः परदुःखासहिष्णुभिरिति भावः । न्यस्तः मुक्तः हाहा हा हेति शोकजनकरवः यस्यास्तादृशी सती सीताया नर्मदातरणं दृष्ट्वा पथिकैः दुःखार्त्तैः हाहारवः कृत इति भावः । तां रेवां नर्मदाम् उत्तीर्णा मन्दाक्रान्तावृत्तम् ।

सुमन्त्रः । ततोऽहं तानवलोकयन्नर्वाक्कूल एव तां रजनीमुषितस्ते तु परपारे । अथान्येद्युः । (त)

जित्वा बाष्पं किमपि कलया स्फारितैर्नेत्रपात्रै-
रर्वाक्कूले विहितवसतिं वीक्षमाणाः क्षणं माम् ।
ते दिग्भागं स्तिमितवचसो नर्मदायाः परस्ता-
ल्लोपामुद्रापतितिलकितं देव ! गन्तुं प्रवृत्ताः ॥ ५५ ॥(थ)

दशरथः । वत्स रामभद्र ! मन्ये ममेव मलयाचलवासिनः प्रियवयस्यस्य जटायोरपि सर्वङ्कषो भविष्यसि ।(द)

ततः प्रविशति गगनादवतरणनाटितकेन चन्द्रहासव्यथो रत्नशिखण्डः ।

चन्द्रहासप्रहारोत्थां जयन् मूर्च्छां नभोऽनिलैः ।

---

(त) अर्वाक्कूले अपरतटे ।

(थ) जित्वेति । हे देव ! ते रामादयः कलया शनैः शनैरित्यर्थः किमपि केनापि प्रकारेणेत्यर्थः बाष्पं नेत्रवारि जित्वा निरुध्य इत्यर्थः स्फारितैः प्रसारितैः नेत्रपात्रैः अर्वाक्कूले विहिता कृता वसतिः येन तं कृतावस्थानमित्यर्थः मां क्षणं वीक्षमाणाः पश्यन्तः तथा स्तिमितवचसः निःशब्दाः दुःखेन मौनिन इत्यर्थः सन्तः स्तिमितपयस इति पाठे स्तिमितं स्थिरं पयः जलं यस्यास्तादृश्याः नर्मदायाः परस्तात् परपारे लोपामुद्रायाः पतिः अगस्त्यः तेन तिलकितं सञ्जाततिलकम् अलङ्कृतमित्यर्थः वनमिति शेषः गन्तुं प्रवृत्ताः । मन्दाक्रान्तावृत्तम् ।

(द) सर्वङ्कषः सर्वसुखविध्वंसीत्यर्थः । यथा त्वद्वियोगेन मम सर्वसुखनिवृत्तिः तथा त्वदर्थं क्लिश्यन् जटायुरपि सर्वसुखविरहितो भविष्यतीति सम्भावयामीति भावः ।

दशरथः। अपि शिवाः पन्थानो वत्सानां सुशकुनया (ल) सीतया।

सुमन्त्रः। देव! रामचन्द्रदर्शनमेव सर्वेषामपि (व) सुशकुनम् करुणाकौतुकाभ्यामागताभिर्वैखानसवधूभिर्हस्तचिवुकेन चिवुके चुम्बन्तीभिरभिहिता सीता पुत्रि पतिव्रते वैदेहि! अप्रमत्तजनसञ्चारणीयानि गिरिकान्ताराणि तस्मादवेदनावत्यप्यनुरामभद्रं सञ्चर किं न पश्यसि?

वप्रे यूथं चरति करिणां कन्दरास्वच्छभल्लाः
कुञ्जे सिंहैः स्थितिरुपहिता द्वीपिभिर्मेखलासु।
गोलाङ्गूलास्तरुषु सरणौ भ्रान्तिमन्तःपुलिन्दा
विन्ध्ये सत्त्वं तदिह कतरद्यन्न हिंस्रं न रौद्रम्? ॥४५॥ (श)

---

(ल) सुशकुनया सुलक्षणया।

(व) सुशकुनं सुलक्षणं शुभकरमित्यर्थः। वैखानसवधूभिः तापसीभिः। हस्तचिवुकेन हस्तेन चिवुकेन च इत्यर्थः। अप्रमत्तैः अवहितैः जनैः सञ्चारणीयानि।

(श) वप्रे इति। वप्रे तटे पर्वतस्येति सर्वत्र योज्यं करिणां गजानां यूथं चरति, कन्दरासु गुहासु अच्छभल्लाः भल्लूकाश्चरन्तीति शेषः। कुञ्जे लतादिवेष्टिते स्थाने निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे इत्यमरः। सिंहैः, मेखलासु नितम्बेषु, द्वीपिभिः शार्दूलैः, स्थितिः उपहिता कृता। तरुषु गोलाङ्गूलाः कृष्णमुखवानराः। तथा सरणौ वर्त्मनि पुलिन्दाः व्याधाः भ्रान्तिमन्तः भ्रमन्तीत्यर्थः। तत् तस्मात् इह विन्ध्ये कतरत् सत्त्वम् अस्तीति शेषः यत् हिंस्रं न, रौद्रञ्च न, सर्वमेव हिंस्रं रौद्रञ्च इत्यर्थः। मन्दाक्रान्तावृत्तम्।

अपि च । सीरध्वजसुवासिनि ! (ष)

ग्रावग्रन्थिं परिहर पुरः कण्टकिन्यत्र वीरु-
द्वस्त्रप्रान्तं दवदहनतः किञ्चिदुच्चैः कुरुष्व ।
शाखास्तिर्यग्विनमय शिरः पश्य वल्मीकरन्ध्रं
वंशस्तम्बे चरति च करी तत्स्थिरा तावदास्स्व ॥४६॥(स)

ऊर्मिला । अहह ! कधं णु क्खु कक्करोक्करवक्कलणिविलासु गिरिवसुन्धरासु (ह) वसुन्धरापुत्ती णिसग्गसुकुमारा संचरदि (२६) ।

---

(२६) अहह ! कथं नु खलु कर्करोत्करवल्कलनिविडासु गिरिवसुन्धरासु वसुन्धरापुत्री निसर्गसुकुमारा सञ्चरति ।

---

(ष) सीरध्वजेति । सीरध्वजे जनके तदावासे इत्यर्थः सुवासिनि ! अथवा सीरध्वजस्य सुवासः सौरभं यस्य इत्यर्थः तद्रुयिधायिनि ! ।

(स) ग्रावेति । पुरः अग्रतः ग्रावग्रन्थिं प्रस्तरग्रन्थिं परिहर परित्यज सन्धिविश्लेषे सहसा विपत्सम्भवादिति भावः, अत्र वीरुत् लता कण्टकिनी कण्टकावृता । वस्त्रप्रान्तं वसनाञ्चलं दवदहनतः दावाग्नेः किञ्चित् उच्चैः कुरुष्व यथा नाग्निस्पर्शो भवेदिति भावः । अत्र शाखाः तिर्यक् वक्रगामिन्यः, अतः शिरः विनमय विनतं कुरु यथा शिरसि शाखास्पर्शो न स्यादिति भावः । वल्मीकानां कीटविशेषाणां रन्ध्रं विवरं पश्य, करी हस्ती वंशस्य स्तम्बे गुच्छे चरति भ्रमति च तत् तस्मात् स्थिरा अवहिता सती तावत् आस्स्व तिष्ठ । मन्दाक्रान्तावृत्तम् ।

(ह) कर्करेति । कर्कराणाम् उत्करैः निचयैः वल्कलैः तरुत्वग्भिश्च निविडासु समाच्छन्नासु गिरिवसुन्धरासु पर्वतभूमिषु ।

अयोध्यामवतीर्णोऽस्मि कथञ्चित् क्षतपक्षतिः ॥ (ध)

विचिन्त्य एवं स्थितोऽपि ।

एषोऽहं जलमयरत्नकामधेनुं
पक्षाभ्यां सपदि विधूय ताम्रपर्णीम् ।
द्राक्कृत्वा मलयतरून् द्रुताहिपाशा-
नादेशाद्दशरथमागतो जटायोः ॥ ५६ ॥ (न)

तद्यावत्तत्रभवन्तं भूकाश्यपं पश्यामि । गगनावक्रमेणाव-लोक्य । एष महाराजदशरथः । कः कोऽत्र भोः ? । निवेद्यतामजनन्दनाय नरेन्द्राय ।

जटायोर्गृध्रराजस्य सुहृदस्तव शैशवात् ।
दूतो रत्नशिखण्डोऽस्मि तन्निदेशादुपागतः ॥ ५७ ॥ (प)

---

(ध) चन्द्रहासेति । क्षता पक्षतिः पक्षमूलं यस्य तादृशः अहं चन्द्रहासस्य रावणासेः प्रहारोत्थाम् आघातजनितां मूर्च्छां कथञ्चित् नभोऽनिलैः आकाशवायुभिः जयन् अपनयन् सन् अयोध्याम् अवतीर्णः ।

(न) एष इति । एषः अहं सपदि शीघ्रं जलमयरत्नानां कामधेनुं सततरत्नवाहिनीं ताम्रपर्णीं नदीं पक्षाभ्यां विधूय पक्षपातेन घूर्णयित्वा इत्यर्थः तथा द्राक् झटिति मलयतरून् द्रुताः पलायिताः अहयः भुजङ्गाः पाशा वेष्टनरज्जव इव येभ्यः तथाविधान् कृत्वा जटायोः आदेशात् दशरथम् आयातः प्राप्तः । प्रहर्षिणीवृत्तं त्र्याशाभिर्मनजरगाः प्रहर्षिणीयमिति लक्षणात् ।

(प) जटायोरिति । शैशवात् शैशवमारभ्य तव सुहृदः मित्रस्य गृध्रराजस्य जटायोः दूतः रत्नशिखण्डो नामाहं तस्य जटायोः निदेशात् उपागतः उपस्थितोऽस्मि । पथ्यावक्त्रं वृत्तम् ।

सुमन्त्रः। दूत दूतः।

रत्नशिखण्डः। अपवारणमाटितकेन। स्वस्ति महाराज-दशरथाय।

दशरथः। अपि कुशलं जटायोर्वयस्यस्य?।

रत्नशिखण्डः। प्रियसुहृदुपयोगेन न (फ) पुनः शरीरेण।

दशरथः। भद्र! समुपविश्य कथ्यतां व्याकुलोऽस्मि।

रत्नशिखण्डः। उपविश्य। अद्य (ब) प्रगेतनप्रचारविनिर्गतैराश्रयशकुन्तिभिर्वान्तधाराम्बुविसरैरागत्य करुणं क्रन्दद्भिरावेदितं शकुन्तराजाय जटायवे यदुतोपासितप्रथमसन्ध्ये साकं जानक्या लक्ष्मणलक्ष्म्युटजाङ्गणमधितिष्ठति सप्रमदमुद्रे रामभद्रे तत्प्रदेशवर्त्तिभिरुद्घोषि।

सञ्चारी रोहणाद्रेः किमयमविकलः केलिसम्प्राप्तमूर्त्तिः
कोदण्डः पिण्डिताङ्गः किमुत सुरपतेर्जङ्गमत्वं गतोऽसौ।
चित्रं वा भूतधात्र्याः प्रकृतिबलमिदं कल्पयद्वाग्वितर्का-
न्नित्यं वैखानसानां तिलकितभुवनं भूतमभ्येति किञ्चित्॥(भ)

---

(फ) प्रियसुहृदुपयोगेन प्रियसुहृदः तव उपयोगेन उपकारेण।

(ब) प्रगेतनेति। प्रगे भवः प्रगेतनः प्रातःकालीन इत्यर्थः यः प्रचारः तदर्थं विनिर्गतैः आश्रयशकुन्तिभिः पक्षिकुलैः वान्ता उद्गीर्णा धाराम्बूनाम् अश्रुधाराणां विसरा यैः साश्रुलोचनैरित्यर्थः उतेति सम्बोधनसूचकमव्ययम् उपासिता प्रथमसन्ध्या प्रातःसन्ध्या येन तादृशे। साकं सह साकं सार्धं समं सहेत्यमरः। लक्ष्मणलक्ष्मणि सुलक्षणे इत्यर्थः उटजाङ्गणं कुटीरचत्वरम्। सप्रमदमुद्रे प्रमदमुद्रा हर्षविकासः तया सहिते सहर्षे इत्यर्थः उद्घोषि उद्घोषितम्।

(भ) सञ्चारीति। अयम् अविकलः समग्रः सर्वाङ्गपूर्ण इत्यर्थ.

अभिहितं च रामभद्रेण जानकि ! कारय चक्षुषोपारणां पश्य पश्य।

श्रेणीपर्य्युप्तरत्नव्यतिकरकलनाचित्रिताङ्गः कुरङ्गः
कान्त्या दूरस्थितानामपि सलिलमुचां सन्दधच्चापचिह्नम्।
वेगेनान्वीतमार्गो मुनिबटुभिरलं कौतुकोत्तानिताक्षै-
र्भूयो भूसन्निवेशे चरति रचयति व्योम्नि किञ्चित् प्लुतानि॥(म)

तदवलोकनकुतूहलिना चाभिहितं लक्ष्मणेन। आर्य्ये ! दृश्यतां द्रष्टव्यम्।

---

केलिवशात्प्राप्तमूर्त्तिः क्रीडनार्थं स्वीकृतशरीर इत्यर्थः अतएव सञ्चारी जङ्गमः रोहणाद्रिः तदाख्यरत्नशैलः किम्? उत अथवा असौ पिण्डिताङ्गः सङ्कुचिताकृतिः जङ्गमत्वं गतः प्राप्तः सुरपते इन्द्रस्य कोदण्डः धनुः किम्? वा किं वा भूतधात्र्याः पृथिव्याः चित्तं मनोहरं प्रकृतिबलमिदं किम्? इत्थं वैखानसीनां तापसीनां वाग्-वितर्कान् सन्दिग्धवचनानि कल्पयत् जनयत् तिलकितभुवनम् अलङ्कृत-जगत् किञ्चित् किमपि भूतं प्राणिविशेषः अभ्येति विचरति। स्रग्ध-रावृत्तम्।

(म) श्रेणीति। श्रेणीपर्य्युप्तानां श्रेणिबद्धानां यथास्थानमिवे-शितानामित्यर्थः रत्नानां व्यतिकरेण योजनेन या कलना रचना तया चित्रितानि अङ्गानि यस्य तादृशः कुरङ्गः मृगः कान्त्या देहप्रभया दूरस्थितानाम् आकाशचारिणामिति यावत् अपि सलिलमुचां मेघानां चापचिह्नं कार्मुकलक्षणं सन्दधत् अलम् अत्यर्थं कौतुकेन उत्तानि-तानि स्फारितानि अक्षीणि यैः तथाविधैः मुनिबटुभिः तापसकुमारैः वेगेन अन्वीतः अनुसृतः मार्गः यस्य तथाभूतः सन् भूयः बाहुल्येन भूसन्निवेशे भूतले चरति व्योम्नि आकाशे किञ्चित् प्लुतानि रचयति च। स्रग्धरावृत्तम्।

आपुच्छादाचतुण्डान्मरकतरचितां पृष्ठपीठीं दधानो-
नीरन्ध्रासक्तमुक्ताफलपटलचयापाण्डुरां क्रोडपालीम् ।
पादैर्बालप्रवालच्छदपुटघटितैरच्छवैदूर्यमय्या
दृष्ट्याऽयं दण्डकायां भुवि वनहरिणोऽभ्येति विस्मापयन्नः ॥ (य)

कौशल्या । तदो तदो ? (४७) ।

रत्नशिखण्डः । ततश्च (र) विचित्ररचनाकर्मणि तस्मिन् सीताकौतूहलिकतामवगत्य तद्ग्रहणार्थं लक्ष्मणमवस्थाप्य तमनुसृतो रामभद्रः कियतीषु च कालकलासु गतासु किं तवाद्भुतभूते भविष्यत्यार्यपुत्रस्येति जाताशङ्कां वैखानसपत्नीनां समर्प्य जानकीं सौमित्रिरपि राममनुसृतः ।

---

(४७) ततस्ततः ? ।

---

(य) आपुच्छादिति । आपुच्छात् लाङ्गूलपर्यन्तम् आ च तुण्डात् तुण्डपर्यन्तञ्च पुच्छावधिमुखपर्यन्तमित्यर्थः मरकतैः रचितां पृष्ठपीठीं पृष्ठरूपं पीठं तथा नीरन्ध्रं यथा तथा आसक्तानां रचितानां मुक्ताफलपटलानां चयः समूहः तद्वत् आपाण्डुरां क्रोडपालीम् उत्सङ्गदेशं दधानः अयं वनहरिणः बालैरभिनवैः प्रवालच्छदानां पुटैः घटिताः निर्मिताः तैः पादैः तथा अच्छं निर्मलं यत् वैदूर्यं मणिविशेषः तन्मय्या तद्रूपया इत्यर्थः दृष्ट्या नेत्रेण दण्डकायां भुवि दण्डकारण्ये नः अस्मान् विस्मापयन् विस्मितान् कुर्वन् अभ्येति विचरति । स्रग्धरावृत्तम् ।

(र) विचित्रेति । विचित्रं मनोहरं रचनाकर्मनिर्माणकौशलं यस्य तादृशे । सीतायाः कौतूहलिकतां लिप्सामित्यर्थः । कालकलासु कालांशेषु ।

कौसल्या। किञ्चिदुत्थाय। जाद लक्खण! अलमलं माणिक्ककुरङ्गेण माक्खु माक्खु एदाणिं जाणइं अटईकन्तारे परिच्चअसु (४८) इति धारयितुमिच्छति।

सुमन्त्रः। देवि! अतिक्रान्तवर्णनायामलमलमतिसम्भोहेन।

दशरथः। ततस्ततः?।

रत्नशिखण्डः।

आकर्णाकृष्टचापार्पितविशिखभृतानुद्रुतस्थानणीयान्
माणिक्याङ्कः कुरङ्गः सपदि धृतजवो जानकीवल्लभेन।
सीतां चाधाय मध्ये मणिवलभि बली रावणः पुष्पकेण
स्वां गन्तुं राजधानीं सकलसुरवधूचण्डहस्तः प्रवृत्तः॥६१॥(ल)

दशरथः। धनुर्धनुः।

सुरेन्द्रवैरिशिरसां छेदविद्यापरीक्षिताः।

---

(४८) जात लक्ष्मण! अलमलं माणिक्यकुरङ्गेण मा खलु मा खल्विदानीं जानकीमटवीकान्तारे परित्यज।

---

(ल) आकर्णेति! सपदि तत्क्षणं जानकीवल्लभेन आकर्णाकृष्टं चापार्पितं धनुषि योजितं विशिखं बिभर्तीति तथोक्तेन सता अनणीयान् दीर्घकायः धृतजवः वेगवान् माणिक्याङ्कः रत्नमय इत्यर्थः कुरङ्गः मृगः अनुद्रुतः अनुधावितः सकलसुरवधूषु चण्डं हस्तं यस्य तादृशः देवाङ्गनापहारीत्यर्थः बली महाबलः रावणश्च मध्ये मणिवलभि पुष्पकमध्यस्थिते मणिवलभौ इत्यर्थः सीताम् आधाय संस्थाप्य पुष्पकेण रथेन स्वां राजधानीं लङ्कां गन्तुं प्रवृत्तः। स्रग्धरावृत्तम्।

दशवक्त्रस्य वक्त्राणि लुनन्तु मम सायकाः ॥ ६२ ॥ (ब)

इत्युत्थातुमिच्छति ।

सुमन्त्रः । देव ! तदिदमपक्रान्तोपवर्णनं कोऽयमायुधग्रहणकालः ।

दशरथः । उपविश्य । हा हा धिक्कष्टमयमपूर्वो रघुराजकुलकलङ्कावतारः । विचिन्त्य । तर्हि मायामयः ।

मायामृगेण रामोऽपि हृत इत्यद्भुतं महत् ।
मतिर्वा खर्वभाग्यानां पश्यन्त्यपि न पश्यति ॥ ६३ ॥ (भ)

ऊर्मिला । पुत्ति सीदे ! (म) कवलिदहालाहलस्स जणस्स एस संपदं सोओ । जा देसन्तरे वि रक्खसेण हीरसि (४८) ।

---

(४८) पुत्रि सीते ! कवलितहालाहलस्य जनस्य एष साम्प्रतं शोको या त्वं देशान्तरेऽपि राक्षसेन ह्रियसे ।

---

(ब) सुरेन्द्रेति । सुरेन्द्रस्य देवराजस्य ये वैरिणः दैत्या इत्यर्थः तेषां शिरसां छेदविद्यासु परीक्षिताः पारकत्वेन निर्णीताः दैत्यविध्वंसनसमर्था इत्यर्थः मम सायकाः शराः दशकण्ठस्य रावणस्य वक्त्राणि शिरांसि लुनन्तु छिन्दन्तु ।

(भ) मायामृगेणेति । मायामृगेण रामोऽपि हृतः इति महत् अद्भुतम् आश्चर्यम् । वा अथवा खर्वभाग्यानां मन्दभाग्यानां मतिः पश्यन्ती अपि विपदमिति शेषः न पश्यति । सामान्येन विशेषसमर्थनरूपोऽयमर्थान्तरन्यासः ।

(म) कवलितेति । कवलितं पीतं हालाहलं येन तादृशस्य । अयं भावः, मादृशो जनः पूर्वं महापातकं कृतवान् अधुना तदर्थं शोचतीति ।

कैकेयी । कैकेईदुज्जसमहाकन्दस्स (स) एस दुदीओ कन्दलुब्भेओ (५०) ।

दशरथः । उपविश्य सवैलक्ष्यम् (ह) । ततस्ततः ? ।

रत्नशिखण्डः । एतद्व्यतिकरमभ्यर्णवयोवदनेभ्यः (च) श्रुत्वा स ते सखा गृध्रकपोतैः परिवृतो दुःसहस्नुषापहारतिरस्कारो मलयाचलादुच्चलितः ।

> अत्रान्तरे त्रिदशवक्रविमुच्यमान
> दृग्गोचरस्य रजनीचरभर्तुरग्रे ।
> मार्गं निरुध्य कृतवान् गगनावगाह-
> मामूलविस्तृतपतत्रपुटो जटायुः ॥१४॥ *

दशरथः । साधु वयस्य ! साधु ततस्ततः ? ।

रत्नशिखण्डः । यस्य वर्त्ते दिनमणिरयं वासरस्यैककर्त्ता
यद्विस्तारे भवति रजनीरञ्जितो जीवलोकः ।

(५०) कैकेयीदुर्यशोमहाकन्दस्य एष द्वितीयः कन्दलोद्भेदः ।

(स) कैकेयीति । कैकेय्या दुर्यशः दुष्कीर्त्तिः तस्य यः महान् कन्दः मूलं तस्य । कन्दलोद्भेदः नवाङ्कुरोदयः ।

(ह) सवैलक्ष्यं सलज्जं पुत्रवधूहरणादिति भावः ।

(च) एतद्व्यतिकरम् एतां घटनाम् अभ्यर्णवयसां कुलपक्षिणां वदनेभ्यः । दुःसहेति । दुःसहः सोढुमशक्यः स्नुषाया हरणेन तिरस्कारः अभिक्षेपः यस्य तथाभूतः सन् पुत्रवधूहरणेन नितान्तमवमानित इत्यर्थः ।

* अत्रान्तर इति । अत्रान्तरे इत्यवसरे आमूलं विस्तृतं पतत्रपुटे पक्षपुटे येन तथाभूतः जटायुः त्रिदशैः देवैः वक्रं कुटिलं यथा तथा विमुच्यमानः परिहार्य्यमाणः दृशाम् गोचरो यस्य देवानामपि भया-

ताभ्यां कश्यपतनयो रोदसी पक्षतिभ्यां
जातो योद्धुं त्रिभुवनरिपोरग्रतो रावणस्य ॥ ६५ ॥ (क)

दशरथः । किमुच्यते सम्पातिसहोदरो मन्मित्रमारुणिरसि । ततस्ततः ? ।

रत्नशिखण्डः । ततश्चाभिहितमभिमानोद्धुरं (ख) गृध्रराजेन ।
सम्प्राप्तोऽहं जटायुर्मलयगिरिगुहाकन्दरक्रोडनीडस्तस्मात्! सीतापहारिन्! विमृहि करवरे कुत्रचिच्चन्द्रहासम्।
येन त्वत्कृत्तचूडामणिनिकरं मत्कचण्डोग्रतुण्डव्यापारैः स्रंसमानं सपदि शकुनयो मांसगर्धा ग्रसन्ताम्॥(ग)

---

स्वीति भावः । तथाभूतस्य रजनीचरभर्त्तुः रावणस्य अग्रे पुरतः मार्गं पन्थानं निरुध्य आच्छाद्य गगनावगाहं कृतवान् नभोमण्डलात् अवतीर्णवान् । वसन्ततिलकावृत्तम् ।

(क) यदिति । ययोः पक्षयोः संवर्त्तसंवरणे अयं हिममर्णिः भास्वान् वासरस्य दिवसस्य एककर्त्ता भवतीति शेषः, ययोः विस्तारे जीवलोकः रजन्या रञ्जितः सन्तोषितः भवति ययोः पक्षयोः सङ्कोचविस्तारौ दिवसरजन्योः कारणाविन्यर्थः अरुणतनयः जटायुः ताभ्यां पक्षतिभ्यां पक्षाभ्यां रोदसी द्यावापृथिव्यौ रुन्धन् आवृण्वन् त्रिभुवनरिपोः रावणस्य अग्रतः योद्धुं जातः प्रवृत्तः । मन्दाक्रान्तावृत्तम् ।

(ख) अभिमानोद्धुरम् अहङ्कारोत्तेजितम् ।

(ग) सम्प्राप्त इति । मलयगिरेर्गुहाकन्दरं गुहाभ्यन्तरमेव क्रोड़ः स एव नीड़ः कुलायः यस्य तथाभूतः मलयाचलगुहावासीत्यर्थः जटायुः अहं सम्प्राप्तः उपस्थितः, तत् तस्मात् भोः सीतापहारिन्! कुत्रचित् करवरे प्रधानहस्ते चन्द्रहासं गृहीत्वा मया सह युध्यस्वेति भावः । येन हेतुना मांसगर्धा मांसलोलुपा शकुनयः पक्षिणः मम इमे मत्काः मदीयाः चण्डाः अतितीव्राः उग्राः भीषणा ये तुण्डव्यापाराः चञ्चु-

दशरथः। अहो! निरुपममोजायितं (घ) वेगविजित-वायोर्जटायोः।

कौशल्या। भअवदि सङ्गामसिरि! जई भोदु तत्तभवं जडाऊ। तदो तदो? (५९)।

रत्नशिखण्डः। तत्सर्वैरेवास्माभिररुणगरुडान्वयप्रसवैः शकुन्तिभिरन्तरितस्तातजटायुर्योद्धं चारब्धं ततश्च।

कर्णाभ्यर्णेष्वलिकफलकेष्वायते नेत्रतन्त्रे
नासावंशेष्वधरपुटकेष्वंसवक्षःस्थलीषु।
यो यो भागः सुरपतिरिपोः स्वामिना स्पृष्ट आसीत्
तं तं गृध्राः कवलकलितं लूनवन्तो नखाग्रैः॥ ६७॥ (ङ)

ततश्च सकलैरेव शकुन्तिवीरैराकुलितेन राक्षसराजेन

(५९) भगवति संग्रामश्रीः! जयी भवतु जटायुः। ततस्ततः?।

पद्मरागानि तैः सपदि सहसा स्वंसमासं तत्र कनृत्तामां चूडास्थिता-नाम् अरुणमणीनां पद्मरागाणां निकरं समूहं ग्रसन्तां मांसबुद्ध्या भक्ष-यन्तु इत्यर्थः।

(घ) वेगेति। वेगेन जवेन बलेनेति यावत् विजितः वायुः येन तथाभूतस्य अन्तरितः परिहृतः।

(ङ) कर्णेति। सुरपतिरिपोः इन्द्रारेः रावणस्य कर्णानामभ्यर्णेषु समीपेषु अलिकफलकेषु ललाटपट्टेषु आयते विशाले नेत्राणां तन्त्रे विभागे नासावंशेषु अधरपुटकेषु अंसवक्षःस्थलीषु स्कन्धेषु उरःस्थलेषु च यो यः भागः स्वामिना गृध्रराजेन स्पृष्टः विक्षतः आसीत् गृध्राः तं तं भागं नखाग्रैः कवलकलितं ग्रासविधृतं यथा तथा लूनवन्तः विच्छिदुः। मन्दाक्रान्तावृत्तम्।

चन्द्रहासव्यापारेणास्माभिमुखं प्रवृत्तं हन्यमानेषु च महापतत्त्रिभटेषु जटायुना पुनः सर्वे वयमन्तरिताः । (च) ततश्च ।

चित्रे तत्र पतत्त्रिशाचररणे माङ्गं जटायोरभू-
न्नो क्षतं दशकन्धरेण कणशो यच्चन्द्रहासासिना ? ।
लङ्काभर्त्तुरपि प्रचण्डकुलिशव्यापारनीराजितं
यत्तुण्डेन न खण्डितं खगपतेर्यद्वा न लूनं नखैः ? ॥६८॥(छ)

कौशल्या । भअवदि ! सङ्गामसिरि ! मुञ्चदु सीदां बन्दिग्गहादो (५२)

दशरथः । ततस्ततः ? ।

रत्नशिखण्डः ।

तदनु दिवि जटायुश्चञ्चुसन्दंशमुद्रा-
कवलनविधिवेगप्रस्खलच्चन्द्रहासः ।

(५२) भगवति संग्रामश्रीः ! मुञ्चतु सीतां बन्दिग्रहात् ।

(च) अन्तरिता पश्चात् कृताः ।

(छ) चित्रेति । तत्र तस्मिन् चित्रे अद्भुते पतत्त्रिशाचररणे पक्षिराक्षससंग्रामे जटायोः अङ्गं शरीरं दशकन्धरेण रावणेन चन्द्रहासासिना यत् क्षतं खण्डितं नो अभूत् इति न, खण्डितमभूदेवेत्यर्थः । यस्य खगपतेः जटायोः तुण्डेन लङ्काभर्त्तुः रावणस्यापि प्रचण्डेन तीक्ष्णेन कुलिशव्यापारेण वज्रप्रहारेण नीराजितम् अलङ्कृतं शरीरं न खण्डितम् ? यद्वा नखैः न लूनं छिन्नम् ? अपितु खण्डितं छिन्नञ्चैवेत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

दशभिरपि नखाग्रैर्दिग्गजेन्द्राङ्कुशाभैः

सपदि दशमुखानि प्राद्रवद्रावणस्य ॥ ६८ ॥ (ज)

दशरथः। साधु गरुड़ाग्रज! साधु साधु दिनमणिसारथे! साधु जटायुना पुत्रेण।

कौशल्या। तं क्कहं अज्ज जटाउणा जं सुण्हिसुणाहरणे (झ) कीरदि। तदोतदो? (५३)

रत्नशिखण्डः। ततश्च।

द्राक्चन्द्रहासपरिखण्डितचञ्चुकोटि-

श्चञ्चुप्रहारपरिखण्डितचन्द्रहासः।

नाड़िन्धमे तडिति कण्ठतटे स तेन

कुन्तेन कुन्तनखरः प्रहतः शकुन्तः ॥ ७० ॥ (ञ)

---

(५३) तत् कृतं जटायुना यत् सुस्निग्धाहरणे कीर्त्यते। ततस्ततः?।

---

(ज) तदिति। तदनु तदनन्तरं जटायुः चञ्चुसन्दंशः एव मुद्गा व्यापारः स एव कवलनविधिः ग्रासविधानं तेन प्रस्खलन् चन्द्रहासः यस्य तथाभूतः चञ्चुदंशनेन चन्द्रहासं प्रस्खलयन्निति यावत् दिग्गजेन्द्राणाम् ऐरावतानाम् अङ्कुशाभैः शासनदण्डनिभैः दशभिरभि नखाग्रैः सपदि शीघ्रं रावणस्य दशमुखानि प्राद्रवत् अखण्डयत्। मालिनीवृत्तम्।

(झ) सुस्निग्धाहरणे श्वश्र्वाः स्नुषाया हरणे।

(ञ) द्रागिति। तेज रावणेन कुन्ता अस्त्रविशेषा इव नखराः यस्य तथाभूतः स शकुन्तः जटायुः द्राक् झटिति चन्द्रहासेन परिखण्डिता चञ्चुकोटिर्यस्य तथाभूतः। चञ्चुप्रहारेण परिखण्डितः विध्वंसितः चन्द्रहासो येन तथाविधः सन् कुन्तेन अस्त्रेण नाड़िं कण्ठ-

ततश्च तदिदमपश्चिमं तव कण्ठगतप्राणेन जटायुना सन्दिष्टम् ।

यत्सम्पातिसहोदरस्य सदृशं यच्चारुणेः साम्प्रतं
यच्चाधीननखायुधस्य च समं युक्तं च यद्रावणे ।
तन्मैत्रीमनुरुन्धता तव मया तत्सङ्गरार्गे कृतं
न व्रीडां गमितोऽसि येन न पुनः स्यां सभ्रमे येन च॥७१(ट)

दशरथः । हा अरुणकुलालङ्कारण ! हा सम्पातिवल्लभ ! । हा गरुडप्रसादवित्त ! कामवस्थां नीतोऽसि प्रियसुहृदा दशरथेन ।

कौशल्या । हा देव्व ! तए कदिविलम्बं (ठ) समत्थग्गं वणगदं राहवकुडुम्बम् (५४) ।

(५४) हा दैव ! त्वया कृतविडम्बं समस्तं वनगतं राघवकुटुम्बम् ।

---

गतीं भवति पूरयतीति तथाविधे कण्ठतटे गलदेशे तदिति तद् इति अव्यक्तस्वनं यथा तथा प्रहृतः । वसन्ततिलकं वृत्तम् ।

(ट) यदिति । सम्पातिसहोदरस्य सदृशम् अनुरूपं यत्, अरुणेः अरुणतनयस्य साम्प्रतं युक्तं यच्च अधीनस्य तवायत्तस्य नखायुधस्य पक्षिणः समं सदृशं यच्च, रावणे त्रिभुवनयती इति भावः युक्तं यच्च तव मैत्रीमनुरुन्धता मया तस्य रावणस्य सङ्गराग्रे संग्रामाग्रतः तत्तत् कृतम् अनुचितं येन व्रीडां लज्जां न गमितोऽसि, येन च सभ्रमं न पुनः स्यां भवेयम् । त्वया नखायुधेन यत् मैत्री कृता, तज्जनितां महाराजस्य ते लज्जा अपनीता त्वत्कार्यकरणादिति भावः अहञ्च न पुनः जीवामीति च भावः ।

(ठ) कृतविडम्बं कृतद्रोहम् ।

सुमित्रा । ण केवलं वणगदं भुवणगदं वि (५४) ।

रत्नशिखण्डः । तत्पहिणोदु (ड) मां महाराजो णिअकु-
कुलायगमनाय ।

दशरथः । साधु एतु भवान् ।

रत्नशिखण्डः । परिक्रम्य निष्क्रान्तः ।

कैकेयी । उत्तरकोसलणरिन्द ! किमवसिदं रहुवंसस्स (५४) ।

दशरथः । अत एवाऽहम् ।

यस्मिन्नापः सह परिणताः सूर्य्यपुत्रीपयोभि-
र्मन्दाकिन्याः कुमुदधवला मेचकेन्दीवराभैः ।
तीर्थे तस्मिन् मम विघटितं देवताभूय भूयः
स्वाङ्गत्यागात् स्पृहयति मनो वासवार्द्धासनाय ॥ ७२ (ढ)

इति परिक्रम्य सर्वे निष्क्रान्ताः ।

॥ निर्दोषदशरथो नाम षष्ठोऽङ्कः ॥

---

(५४) न केवलं वनगतं भुवनगतमपि ।

(५५) उत्तरकोशलनरेन्द्र ! किमवसितं रघुवंशस्य ।

---

(ड) प्रहिणोतु प्रस्थापयतु ।

(ढ) यस्मिन्निति । यस्मिन् मेचकेन्दीवराभैः नीलोत्पलनिभैः सूर्य्य-पुत्र्या यमुनायाः पयोभिः सलिलैः सह मन्दाकिन्याः कुमुदधवलाः अतिस्वच्छा आपः जलानि परिणता मिश्रिताः, तस्मिन् तीर्थे प्रयागे इत्यर्थः स्वाङ्गस्य निजकलेवरस्य त्यागात् विघटितं निर्मलं निष्पाप-मित्यर्थः मम मनः भूयः पुनः देवताभूय देवत्वं प्राप्येत्यर्थः वासवस्य इन्द्रस्य अर्द्धासनाय अर्द्धासनं लब्धुं स्पृहयति वाञ्छति । मन्दाक्रान्ता-वृत्तम् ।

# अथ सप्तमोऽङ्कः ।

अतः परमवसरपराक्रमो भविष्यति ।

ततः प्रविश्य वैतालिकः समन्तादवलोक्य नेपथ्यं प्रति । भद्र चन्दनदास ! परित्यज निद्रामुद्रां (क) विमुञ्च निकोटजाभ्यन्तरं प्रभातप्राया रजनी तथाहि ।

तारायां तगरत्विषां परिकरः शङ्के युगीव स्थितः
सार्द्धन्तेऽस्तरुचः प्रदीपकशिखाः सार्द्धं हरिद्राङ्कुरैः ।
मन्दस्तम्भितपारदद्रवजडो जातः प्रगे चन्द्रमाः
गौरस्त्वस्य पुराणशीधुमधुरच्छायं नभो वर्त्तते ॥ १ ॥ (ख)

---

(क) निद्रामुद्रां निद्रया निमीलनम् ।

(ख) ताराणामिति। प्रगे प्रभाते तगरवत् त्विषः कान्तयः यासां तथोक्तानां ताराणां गच्छन्तीनां परिकरः निचयः संक्षेपः गण-नीयः शेषः यस्य तथाविधः अल्पावशिष्ट इत्यर्थः स्थितः। प्रदीपकानां शिखाः अस्तरुचः विगतप्रभाः सत्यः हरिद्राणामङ्कुरैः प्ररोहैः सार्द्धं वर्त्तन्ते । चन्द्रमाः मन्देन स्तम्भितः निश्चलीकृतः यः पारदद्रवः तद्वत् जडः निष्प्रभ इत्यर्थः गौरस्य पूर्वदिग्वर्त्ति नभः आकाशं पुराणशीधुवत् मधुरा मनोज्ञा छाया कान्तिर्यस्य तथाभूतं वर्त्तते । शार्दूलविक्रीडितं वृत्तम् ।

नेपथ्ये । अज्ज कप्पूरवण्ड ! एसा मिट्ठा (ग) पभादणिद्दा ता सुविस्सं दाव (१) ।

कर्पूरवण्डः । अहो ! उत्साहशक्तिर्भवतोऽमन्थशीलो (घ) महीपतिरपरप्रबन्धदर्शी कविरपाठरुचिश्च वन्दी न चिरं नन्दति ।

नेपथ्ये । ता एत्थ सत्थरत्थिदो (ङ) णिमीलिदणअणो जेव्व सुप्पभादं पठिस्सं (२) ।

कर्पूरवण्डः । एतदपि भवतो भूरि (च) ।

नेपथ्ये । सच्चं (छ) पच्चक्खीकिदसरस्सईपरिमलो बम्हो मुहुत्तो वट्टदि तधा अ (३) ।

---

(१) आर्य कर्पूरवण्ड ! एषा मिष्टा प्रभातनिद्रा ततः स्वप्स्यामि तावत् ।

(२) तदत्र संस्तरस्थितो निमीलितनयन एव सुप्रभातं पठिष्यामि ।

(३) सत्यं प्रत्यक्षीकृतसरस्वतीपरिमलो ब्राह्मो मुहूर्त्तो वर्त्तते तथा च ।

---

(ग) मिष्टा मनोज्ञा सुखकरीति यावत् ।

(घ) अमन्थेति । मन्थयतीति मन्थं शीलं स्वभावो यस्य स न भवतीति अमन्थशीलः । अपरप्रबन्धं द्रष्टायामिति अपरप्रबन्धदर्शी । अपाठेति । पाठे रुचिर्यस्य स न भवतीति अपाठरुचिः अध्ययनाभावकः वन्दी स्तुतिपाठकः स्तुतिपाठकानां सततमध्ययनं प्रयोजनं नो चेत् स्तुतिभङ्गः स्यादिति भावः ।

(ङ) संस्तरस्थितः शय्यास्थितः । सुप्रभातं प्रभातपठनीयश्लोकर-श्लोकादिकमित्यर्थः ।

(च) भूरि प्रचुरम् ।

(छ) प्रत्यक्षीकृतेति । प्रत्यक्षीकृतः दृष्टः सरस्वत्याः परिमलः

जा गब्भे वि घरस्स दीवअसिहा सा वि च्छविच्छुड्डिआ
जं दच्छाहिं वि खच्चिदं कुवलअं संमीलिदं तं वि अ ।
जं गोठ्ठीचरिदं वि तं वि सहसा भासाए सव्वङ्गिदं
ता मण्णे ण चिरा भविस्सदि रई पुव्वादिसो मण्डणम् ॥२ (ज)

कर्पूरचण्डः । तावदुपश्लोकयामो (झ) रामभद्रं परप-
रितोषोपपाद्यफलं हि वैतालिकव्रतम् । किञ्चिदुच्चैः ।

मार्तण्डैककुलप्रकाण्डतिलकस्त्रैलोक्यरक्षामणि-
र्विश्वामित्रमहामुनेर्निरुपधिः शिष्यो रघुग्रामणीः ।
रामस्ताड़िततारकः किमपरं प्रत्यर्थनारायणः
कौशल्यानयनोत्सवो विजयतां भूकश्यपस्यात्मजः ॥३॥ (ञ)

---

या गर्भेऽपि गृहस्य दीपकशिखा साऽपि च्छविमुक्ता
यद् दृक्षाहेऽपि खचितं कुवलयं सम्मीलितं तदपि च ।
यद् गोष्ठीचरितमपि तदपि सहसा भाषया सर्वाङ्गीणं
तन्मन्ये न चिराद् भविष्यति रविः पूर्वदिशो मण्डनम् ॥

---

गौरभं यस्मिन् तथाविधः ब्राह्मः ब्रह्मदैवतः मुहूर्त्तः दण्डद्वयात्मकः कालः
अरुणोदयात् प्राग्वर्त्ती दण्डद्वयात्मकः कालः ब्राह्मो मुहूर्त्त इत्यर्थः ।

(ज) गृहस्य गर्भे अभ्यन्तरेऽपि या दीपकानां शिखा, सापि छवि-
मुक्ता कान्तिवर्जिता निष्प्रभेत्यर्थः । यत् कुवलयं नीलोत्पलं दृक्षाहेऽपि
प्रागितिशेषः खचितं विदलितं तदपि सम्मीलितं दिवसे उत्पलानां
सङ्कोचस्य कविसमयसिद्धत्वादिति भावः । गोष्ठीचरितमपि यत् तदपि
भाषया सर्वाङ्गीणं सर्वाङ्गपूर्णम् ।

(झ) उपश्लोकयामः श्लोकेन स्तुमः । परपरितोषेण उपपाद्यं
सम्पाद्यं फलं जीविकादिरूपं यस्य तादृशं वैतालिकानां व्रतं नियमः ।

(ञ) मार्त्तण्डेति । मार्त्तण्डस्य सूर्यस्य यत् एकं मुख्यम् एकं

नेपथ्ये ।

कन्दप्पुद्दामदप्पप्पसमणगुरुणो बम्हणो कालदण्डे
पाणिं देन्तस्स गङ्गातरलिदससिणो पव्वदीवल्लभस्स ।
चावं चण्डाहिसिञ्जारवभरिअणहं कण्णपाडमझ्झं
जं भग्गं तस्स सद्दो णिसुणि तिहुयणे वित्थरन्तो न माइ(ट)॥४

---

(४) कन्दर्पोद्दामदर्पप्रशमनगुरोर्ब्रह्मणः कालदण्डे
पाणिं दातुर्गङ्गातरलितशशिनः पार्वतीवल्लभस्य ।
चापं चण्डाहिशिञ्जारवभरितनभः कर्णपाटमध्यं
यद् भग्नं तस्य शब्दो निशम्यते त्रिभुवने विस्तरन् न माति ॥

---

मुख्यान्यकेवला इत्यमरः । कुलं तस्य प्रकाण्डः महान् तिलकः ललाट-भूषणभूतः त्रैलोक्यस्य रक्षायां मणिः यथा मणिधारणे शरीरस्य व्याध्यादिभ्यो रक्षा स्यात् तथा रामरूपस्य मणेः त्रैलोक्यरूपस्य शरीरस्य रक्षाकारित्वमिति भावः । विश्वामित्रमहामुनेः शिष्यः निरु-पधिः अकपटः सरलान्तःकरण इत्यर्थः रघुग्रामणीः रघूणां रघुवंशी-यानां ग्रामणीः अध्यक्षः ताड़िता निहता तारका येन तादृशः किम-परम् अधिकं किं वक्तव्यमित्यर्थः प्रत्यक्षनारायणः साक्षात् विष्णुः कौशल्याया नयनोत्सवः नेत्रानन्दकारी भूकश्यपस्य दशरथस्य आत्मजः सुतः रामः विजयताम् सर्वोत्कर्षेण वर्त्तताम् । शार्दूलविक्रीड़ितं वृत्तम्।

(ट) कन्दर्पस्य कामस्य यः उद्दामः उत्कटः दर्पः अहङ्कारः तस्य प्रशमने गुरुः आचार्यः तस्य कामस्य दमयितुरित्यर्थः ब्रह्मणः पद्मयोनेः कालदण्डे सामयिकशिरश्छेदनरूपे दण्डे पाणिं दातुः ब्रह्मशिरश्छे-दकस्य इत्यर्थः गङ्गया शिरश्चारिण्या इति भावः तरलितः कम्पितः शशी भालस्थित इति भावः यस्य तादृशस्य पार्वतीवल्लभस्य हरस्य चण्डः प्रचण्डः अहिः वासुकिरेव शिञ्जा मौर्वी तस्याः रवेण टङ्कारेण भरि-

कर्पूरचण्डः ।

यो जम्भं जितवान् स येन विजितो देवः सुरग्रामणी
र्मौर्व्या बद्धं विदधे निशाचरपतिं तं कार्त्तवीर्य्यार्जुनः ।
तद्दोःखण्डदवानलो भृगुपतिर्निर्जित्य तस्य च त्वया
मालेयं जयसम्पदो विरचिता सत्त्वादनर्घ्ये सखे ॥ ५ ॥(ठ)

नेपथ्ये ।

हेलासिञ्जिदसिञ्जिणीझणझणारावेण वीणाइदं
कोदण्डं तुह पाणिपीडणपदं जुञ्जेण तिस्सं ता खणम् ।
ते सव्वे खरदूसणप्पभुदिणो जीवेहिं मुक्का पुरो
पच्छा भल्लपवेल्लिएहिं सहसा देहेहिं भूमिं गदा (ड)॥ ६ ॥

---

(ढ) हेलाशिञ्जितशिञ्जिनी झणझणारवेण वीणायितं

---

तम् आच्छन्नं नभः आकाशं यस्य तथाभूतं चापं धनुः कर्षणेन आक-र्षणेन आहतं मध्यं रोदसोरन्तरालं यस्मिन् तत् यथा तथा यत् भग्नं तस्य शब्दः निस्सरते व्याप्नोतीति शेषः । यः त्रिभुवने विस्तरन् प्रतिध्व-निना विस्तारं गच्छन् न माति न पर्य्याप्नोति ।

(ठ) य इति । यः सुराणां ग्रामणीः अधिपतिरिन्द्रः जम्भम् असुरं जितवान् स देवः येन निशाचरपतिना रावणेन विजितः, तं निशाचरपतिं कार्त्तवीर्य्यार्जुनः अथवा मौर्व्या बद्धं विदधे कृतवान् । भृगुपतिः परशुरामः तस्य कार्त्तवीर्य्यस्य दोःखण्डानां भुजदण्डानां खण्डनेति शेषः । दवानलः दावाग्निः । परशुरामः तस्य सहस्रं बाहून् चिच्छेदेत्यर्थः । हे राम ! त्वया तस्य अजेयमिति भावः भार्गवं निर्जित्य सत्त्वात् विक्रमादिति भावः अनर्घ्ये वरी अर्घ्येतरवर्जिता सर्वोपरिवर्त्तिनीत्यर्थः जयसम्पदो विजयलक्ष्मीरूपा इयं माला विर-चिता सर्वविजयी भवानिति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(ड) युद्धे तव तत्क्षणं पाणिपीडनेन पाणिनाकर्षणेनेत्यर्थः नतं

कर्पूरचण्डः ।

जात्यन्धत्वमधिष्ठितं सपदि तैर्दत्तं जलं तेऽष्टये
दृष्टिं सृष्टवतो विधेर्भगवतः क्लेशश्च तैर्भावितः ।
येषां ताडयितुं स्थिते त्वयि जवान्मारीचमायामृगं
द्राग्दैवादनुपेयुषां दिविषदां जाते वृथा चक्षुषी ॥७॥ (ठ)

अपि च ।

मायाप्यस्ति तदीययोर्नयनयोः सङ्कोचदुःस्थं वपु-
स्तेषां गण्डतटे स्फुटत्पुलकता माद्यापि विश्राम्यति ।

---

कोदण्डं तव पाणिपीडनगतं गुञ्जे निजं तत्तृचाणम् ।
ते सर्वे खरदूषणप्रभृतयो जीवैर्विमुक्ताः पुरः
पश्चात् भग्नप्रवेल्लितैः सहसा देहैर्भूमिं गताः ॥

---

निजं कोदण्डं कार्मुकं हेलया शिञ्जितायाः शिञ्जारवं कारितायाः शिञ्जिन्या मौर्व्याः झणझणारवेण वीणायितं वीणयेवाचरितम् । पुरः अग्रतः ते सर्वे खरदूषणप्रभृतयः जीवैः विमुक्ताः प्राणैः परित्यक्ताः तव शरप्रहारेणेति शेषः । पश्चात् भङ्गेन अङ्गविशेषेण प्रवेल्लितैः चिह्नैः देहैः भूमिं गताः ।

(ठ) जात्यन्धत्वमिति । अधिजवात् अधिकं जवमाश्रित्य यथार्थे पञ्चमी । मारीचमायामृगं ताडयितुं निहन्तुं स्थिते प्रवृत्ते रामे त्वयीति शेषः । येषां दिविषदां द्राक् झटिति दैवात् अनुपेयुषाम् अनुपस्थितानां मारीचवधदर्शनार्थमिति भावः चक्षुषी वृथा विफले जाते, तैः दिविषद्भिः सपदि जात्यन्धत्वं जन्मान्धता अधिष्ठितम् आश्रितं तैः दृशोः चक्षुषोः जलं दत्तं तैः दृष्टिं सृष्टवतो भगवतः विधेः क्लेशश्च भावितः चिन्तितः दृष्टिनिर्माणे विधातुर्वृथाम् क्लेशः, अतः अस्मात्

ते नाद्यापि वहन्ति हर्षवशतया रिक्तं च चेतो निजं
दृष्टं देव! कबन्धदैत्यनिधनं यैस्त्वत्कृतं कौतुकात्॥ ८॥(ण)

नेपथ्ये।

पुञ्जीभूदहरट्टहासजइणा रूपेण रुद्धं वरं
क्खीणं वालिजसं व दुन्दुभिमहाकङ्कालसेसं जहा।
पेल्लन्ता चलणेन विंज्झगिरिणो हेलायिदं तं तुए
अम्हे एव्व दुवे परं ण हु गदा वेरी वि वन्दित्तणम् (त)॥ ८॥

(६) पुञ्जीभूतहराट्टहासजयिना रूपेण रुद्धं वरं
क्षीणं वालियशश्च दुन्दुभिमहाकङ्कालशेषं यथा।
प्रक्षिपता चरणेन विन्ध्यगिरेर्हेलायितं तत् त्वया
आवामेव द्वौ परं न खलु गतौ वैरिणावपि वन्दित्वम्॥

इच्छा अलमिति विवेचितमित्यर्थः। तव मायामृगवधव्यापारः अद्भुत इति रामस्तुतिर्बोद्धव्या। शार्दूलविक्रीडितं वृत्तम्।

(ण) नेति। हे देव! यैः त्वया कृतं विहितं कबन्धस्य दैत्यस्य निधनं कौतुकात् दृष्टम् अद्यापि तदीययोः तेषां सञ्जिनोर्नयनयोः सङ्कोचेन दुःस्थं वपुः शरीरं न अस्ति? अपि तु अस्त्येवेत्यर्थः इदानीमपि तेषां दृक्सङ्कोचस्य नेष्टत्वादिति भावः। अद्यापि तेषां तद्दर्शिनामित्यर्थः। गण्डतटे कपोलतले स्फुटतपुलकता लोमाञ्चविकाशः न निश्राम्यति। अद्यापि ते तद्दर्शिन इत्यर्थः निजं चेतः हर्षवशतया समुल्लासितत्वेन रिक्तं रहितं न वहन्ति च। शार्दूलविक्रीडितं वृत्तम्।

(त) पुञ्जीभूतः राशीभूतः हरस्य यः अट्टहासः तज्जयिना रूपेण शरीरेण रुद्धम् आवृतं मूर्त्तिमान् हराट्टहास इवेत्यर्थः वरं श्रेष्ठं वालियशः वालिनः कपिराजस्य यशः क्षीणं लुप्तं यथा यतः त्वया चरणेन तत्प्रविद्धं वालिनापि प्रक्षिप्तमशक्यमिति भावः। दुन्दुभेः दैत्यस्य वालि-

अविच ।

लीलामुक्कक्खाणंखिणविवरगुहामज्झमुच्छन्तवाआ
जाआ जेसत्त ताला तिहुअणजइणो चावचारेण तुज्झ ।
णिच्चं गाअन्ति हेलाभरिदणहअलब्भन्तरं ताररावा
सत्तेहिं तेण तेहिं तुह असमसरं सत्तलोअट्ठिदं व्व(च) ॥ १० ॥

कर्पूरचण्डः ।

---

(१०) अपि च ।

लीलामुक्तैकबाणाञ्चनविवरगुहामध्यमूर्च्छद्वाता
जातास्ते सप्त तालास्त्रिभुवनजयिनश्चापचारेण तव ।
नित्यं गायन्ति हेलाभरितनभस्तलाभ्यन्तरं ताररावाः
सप्तभिस्तेन तैस्तव यशः प्रसरं सप्तलोकस्थितमिव ॥

---

निहतस्य इति भावः । यः महान् कङ्कालः अस्थिचयः तस्य शेषं जीर्णावशिष्टं प्रक्षिपता सता विन्ध्यगिरेः हेलायितम् अवज्ञातं तत्कङ्कालस्य विन्ध्यगिरितुल्यत्वादिति भावः । परं केवलम् आवामिव द्वौ वैरिणावपि गतौ एव वन्दित्वं न तु गतौ प्राप्तौ स्वभाववन्दित्वादावयोरिति भावः ।

(घ) लीलेति । त्रिभुवनजयिनस्तव चापचारेण धनुर्व्यापारेण ते प्रसिद्धाः सप्त तालाः तालतरवः लीलया मुक्तस्य निक्षिप्तस्य एकबाणस्य अञ्चनेन प्रचारेण यत् व्रणं तस्य विवरमेव गुहा तस्य मध्ये मूर्च्छन्तः प्रविशन्तः वाता येषां तथाभूता जाताः । तेन वायुप्रवेशेन जनिता इति शेषः ताराः महान्तः रावाः स्वनाः तैः सप्तभिः तालैः हेलया अनायासेनैव भरितं नभस्तलाभ्यन्तरं येन तादृशं सप्तलोकस्थितमिव तव यशःप्रसरं नित्यं गायन्ति ॥

पौलस्त्यस्यावमन्ता त्रिदशपतिसुतश्चक्रवर्त्ती कपीनां
कर्त्ता सन्ध्यासमाधेर्जलनिधिषु चतुर्दिक्‌निकुञ्जाश्रितेषु ।
किष्किन्ध्यां राजधानीं भुजपरिघबलाद्दायमानस्त्वयाऽसौ
वाली हेमाब्जमाली गुणनिधिरिषुणा निर्मितो दक्षिणेर्मा ॥(३)

नेपथ्ये ।

जे केलासे कलिन्दे मलअमहिहरे मन्दरे मेरुसेले-
सज्झे विंझे महेन्दे तह अ हिमवदे पव्वदे वाणरेन्दा ।
सव्वे सुग्गीवपादप्पणदिपणइणो ते वि जं स प्पसादो
सेवातुट्ठस्स सच्चं तुह जसंजलधेभूलदावेल्लिदाणम्(४)॥१२॥

---

(१२) ये कैलासे कलिन्दे मलयमहीधरे मन्दरे मेरुशैले
सह्ये विन्ध्ये महेन्द्रे तथा च हिमवति पर्वते वानरेन्द्राः ।
सर्वे सुग्रीवपादप्रणतिप्रणयिनस्तेऽपि यत् स प्रसादः
सेवातुष्टस्य सत्यं तव यशोजलधेर्भ्रूलतावेल्लितानाम् ॥

---

(३) पौलस्त्येति । त्वया भुजपरिघबलात् बाहुबलमाश्रित्येत्यर्थः पौलस्त्यस्य रावणस्य अवमन्ता विजेता त्रिदशपतिसुतः इन्द्रपुत्रः कपीनां वानराणां चक्रवर्त्ती चतुर्दिक्‌निकुञ्जाश्रितेषु जलनिधिषु समुद्रेषु सन्ध्यासमाधेः कर्त्ता सन्ध्योपासनकारी किष्किन्ध्यां राजधानीं दाय-मानः रक्षिता हेमाब्जमाली स्वर्णकमलमालाधारी गुणनिधिः अ[illegible]-गुणाकरः वाली इषुणा शरेण दक्षिणेर्मा दक्षिणे दक्षिणाङ्गे ईर्म व्रणं यस्य तादृशः विद्धदक्षिणाङ्ग इत्यर्थः निर्मितः कृतः निहत इत्यर्थः । स्रग्धरावृत्तम् ।

(४) ये इति । ये वानरेन्द्राः कैलासे कलिन्दे मलयमहीधरे मन्दरे मेरुशैले सह्ये विन्ध्ये महेन्द्रे तथा हिमवति पर्वते हिमालये

कर्पूरचण्डः ।

भीमं यज्जलधिं जवेन हनुमानुल्लङ्घ्य लङ्कां गतो
यच्चाशोकमहावनं दलितवानक्षं च यत् क्षुण्णवान् ।
सीतोपायनमौलिरत्नसहितः प्राप्तश्च यत् त्वामसौ
तत्राप्येष भवत्प्रभावमहिमा निर्यन्त्रणः कारणम् ॥१३॥(न)

नेपथ्ये ।

किं अस्सेहिं विराधप्पहुदिविदरणाडंवरुब्भडेहिं
एदे ते वणआमो जलनिहिसविहावासिदे जं तुमम्मि ।
वट्टन्ते रक्खसीणं तरलकरदलप्फारतुट्टन्तहारा
हाराविक्कन्तकण्ठाणयणअणजलुप्पीलिणो विप्पलावा॥१४॥(प)

(१४) किमन्यैर्विराधप्रभृतिविदरणाडम्बरोद्भटैः-

च स्थिता इति शेषः । ते सर्वेऽपि यत् सुग्रीवस्य पादप्रणतो प्रणयिनः सुग्रीववशवर्त्तिन इत्यर्थः जाता इति शेषः स; सेवानुवृत्तस्य यशोजलधेः कीर्त्तिनिधेः तव सत्यं तत्त्वतः भ्रूलतायां वेल्लितायां भ्रूभङ्गावासिन्त्यर्थः प्रसादः अनुग्रहः । तवैव भ्रूभङ्ग्या सर्वे वानराः सुग्रीवमनुवर्त्तन्ते इति भावः ।

(न) भीममिति । असौ हनुमान् भीमं भयानकं जलधिम् उल्लङ्घ्य जवेन वेगेन यत् लङ्कां गतः, यच्च अशोकं महावनं दलितवान् बभञ्ज, यच्च अक्षं रावणसुतं क्षुण्णवान् निर्जघान, यच्च सीताया उपायनेन मौलिरत्नेन चूडामणिना सहितः सन् त्वां प्राप्तः तत्सर्वमुपस्थितः तत्रापि एष निर्यन्त्रणः निर्बाधः अप्रतिहत इत्यर्थः भवतः प्रभावमहिमा प्रभुशक्तिः कारणम् । तवैव प्रभुशक्त्या हनुमान् तत्तत् कार्यं निर्वोढवानिति वाक्यार्थः । शार्दूलविक्रीडितं वृत्तम् ।

(प) किमिति । एतत् अन्यैः अपरैः विराधप्रभृतीनां विदरणं

प्रविश्य । पटीक्षेपेण प्रतीहारः । रेरे श्लोकवैतालिक ! कोऽयं कलकलः ।

कर्पूरखण्डः । आर्य ! रामदेवस्य शौर्य्यगुणभोगावली गीयते ।

प्रतीहारः । ननु रामदेवेन निषिद्धमात्मोपवर्णनमादशरथस्वर्गारोहणश्रुतेरादशकण्ठनिधनम् (ब) ।

कर्पूरखण्डः । (भ) विभीषणवैतालिको वैदेशिकोऽस्मि । तदेकवारं मर्षय एष त्यक्तो भोगावलीपाठः । सप्रश्रयम् । का पुनरभिगतपितृमरणशोकशङ्कुस्तत्रभवान् रामदेव एवंविधे समुद्योगकर्मणि प्रवर्त्तते

प्रतीहारः । विहस्य । अयि ! अनभिज्ञोऽसि सच्चरितानाम् ।

वहन्ति शोकशङ्कुं च कुर्वन्ति च यथोचितम् ।
कोऽप्येष महतां हन्त गाम्भीर्यानुगुणो गुणः ॥१६॥ (म)

बन्दी । आर्य ! कोपेनान्तरितोऽसि (य) । कथय किं पुनः कुरुते रामभद्रः ।

---

(ब) आत्मोपवर्णनम् आत्मनः उपवर्णनम् उपश्लोकनं स्तुतिरित्यर्थः । आ दशरथेति यावत् पितृस्वर्गारोहणं तावदारभ्य दशकण्ठनिधनं यावत् आत्मस्तुतिं निषिद्धवानिति वाक्यार्थः ।

(भ) विभीषणवैतालिकः विभीषणो नाम स्तुतिपाठकः वैदेशिकः भिन्नदेशीयः । भोगावलीपाठः स्तुतिमालाकीर्त्तनम् ।

(म) वहन्तीति शोकशङ्कुं वहन्ति च यथोचितं कर्त्तव्यं कुर्वन्ति च महान्त इति शेषः हन्त हर्षे, महताम् एषः कोऽपि अनिर्वचनीयः गाम्भीर्यानुगुणः गाम्भीर्य्यनिबन्धनः गुणः प्रभाव इत्यर्थः ।

(य) अन्तरितः वियोजितः, इदानीं कोपशून्योऽसीत्यर्थः ।

प्रतीहारः। पुलिनोपरि (र) रचितकुशप्रस्तरोपविष्ट उपोषितश्च भगवन्तं भागीरथीवल्लभमुपास्ते। तत्र च।

सुग्रीवे प्रणयोल्लसाः शशधरे बद्धाभ्यसूयाश्चिरं
साश्चर्याः पवनात्मजे धृतरुषः पौलस्त्यवत्यां दिशि।
सोत्साहाश्च शरासने जलनिधौ क्षुब्धाश्च कृत्स्नां निशां
रामस्याद्य नियन्तुमेव न गता नानारसा दृष्टयः॥ (ल)

बन्दी। आर्य्य! एवमपि समुद्रो न किञ्चित्प्रतिपद्यते।(व)

प्रतीहारः। जडराशिरसौ।

बन्दी। तथाविधे उदन्वति किमाह रामदेवः?।

प्रतीहारः। इदं कथ्यते।

रामे तटान्तवसतौ कुशतल्पशायि-
न्येवं तु नाम भवतो भगवन्नमास्था।

---

(र) पुलिनोपरि सागरसैकतोपरि रचिते कुशप्रस्तरे कुशासने उपविष्टः। भागीरथीवल्लभं समुद्रम्।

(ल) सुग्रीवे इति। अद्य इदानीं रामस्य दृष्टयः सुग्रीवे कपिराजे प्रणयोल्लसाः सप्रणया इत्यर्थः शशधरे चन्द्रे चिरं बद्धा कृता अभ्यसूया यासां तादृश्यः शशधरस्य विरहोद्दीपकत्वात् तत्र सेर्ष्या इत्यर्थः पवनात्मजे हनुमति साश्चर्याः साद्भुताः, पौलस्त्यवत्यां दक्षिणायां दिशि यस्यां रावणस्तिष्ठति तस्यामित्यर्थः धृतरुषः सक्रोधाः, शरासने धनुषि सोत्साहाः उत्साहिन्यः जलनिधौ क्षुब्धा कथं जलनिधिमुत्तरिष्यामीति सक्षोभाः कृत्स्नां समग्रां निशां नियन्तुं निरोद्धुमेव न गताः किन्तु स्वबुद्धिविहीना इत्यर्थः अतएव नानारसाः विविधभावाः जाता इति शेषः।

(व) प्रतिपद्यते करोति।

स्मृत्वा तदेहि सगरं च भगीरथं च
दृष्ट्वाऽथ वा मम धनुश्च शिलीमुखांश्च ॥ १८ ॥ (ग)

बन्दी। तर्हि लङ्घितो गोष्पदवत् समुद्रः।

प्रतीहारः। समन्तादवलोक्य। भोभोः (घ) सकलप्लवङ्गमयूथपतयः! समस्तगोलाङ्गूलसेना पतयः! निःशेषाच्छभल्लचमूपरिवृढाश्च! किमिदमवीरजनोचितमाचरितं यद् दूरात् परिहृतवेलावनालीनिवासकेलिभिः पराङ्मुखं पदात् पदमपक्रम्यते।

कर्बुरचण्डः। विलोक्य। कथमगणितनिजकुलक्रमाचारास्त्वद्वचनमप्यवधीरयन्तो (स) मकराकरं दुस्तरमवलोक्य यथागतं प्रस्थिता एव।

प्रतीहारः। भवतु संस्थापयामि।

पीतोऽयं कलशोद्भवेन चुलुकं कृत्वैकमम्भोनिधि-
र्नो वेलामपि लङ्घते नियमितग्रासादयं वाडवात्।

---

(ग) रामे इति। हे भगवन् सागर! तटान्ते वसतिर्यस्य तादृशे कुशतल्पशायिनि कुशास्तरोपविष्टे रामे भवतः एवम् अनास्था अनादरः तु खलु। तत् तस्मात् सगरं भगीरथञ्च मत्पूर्वपुरुषं स्मृत्वा अथवा मम धनुश्च शिलीमुखांश्च दृष्ट्वा आगच्छ मम समीपमिति शेषः।

(घ) समस्तेति। समस्ताः गोवत् लाङ्गूलं येषां तादृशा वानराः तेषां सेना पतयः। निःशेषेति। निःशेषाणां समग्राणाम् अच्छभल्लानां ऋक्षाणां चम्वः तासां परिवृढाः स्वामिनः। परिहृताः परित्यक्ताः वेलावनाल्यां सागरतटवर्त्तिन्यां वनश्रेण्यां निवासकेलयः क्रीडानिवासाः यैः तथाविधैः।

(स) अवधीरयन्तः अवजानन्तः।

कल्पान्तेषु च वहत्ययञ्च विपुलं श्वभ्रावशेषं वपु-

स्तत्पूर्वाकलितेऽप्यमुत्र भवतां कोऽयं विषादोदयः ? ॥ (छ)

किञ्च ।

अप्येकैकं पिबत चुलुकं यद्यपां सैन्धवीनां

यद्येकैकं क्षिपत जलधौ गण्डशैलोपलं वा ।

तेन श्वभ्रं भवति सकलोऽप्यम्बुराशिः स्थलं वा

तत् किं मिथ्या भजत विधुरं व्यस्ततन्द्राः कपीन्द्राः ! ॥ (ज)

बन्दी । हंहो सुग्रीवप्रतीहार ! भवद्वचनमाकर्णयन्तः

---

(छ) पीतोऽयमिति । अयम् अम्भोनिधिः कलसोद्भवेन अगस्त्येन मुनिना एकं चुलुकं गण्डूषं कृत्वा पीतः । अयं नियमितः निर्द्धारितः पाशो भवन्धं यस्य तादृशात् वारुणात् वेलां तटमपि न सहते न अतिक्रामति वाडवानलेन अभ्यन्तरवर्त्तिना तावतो जलौघस्य पीतत्वात् समुद्रं च वेला अतिक्रमितुं न शक्यते इति भावः । अयं कल्पान्तेषु प्रलयकालेषु विपुलं महत् वपुः शरीरं श्वभ्रावशेषं गर्त्तमात्रमयं वहति च तदानीं जलशून्यत्वादिति भावः । तत् तस्मात् पूर्वैः पूर्वपुरुषैः आकलिते ज्ञातेऽपि अमुत्र अमुतजलनिधौ भवतां कोऽयं विषादस्य उदयः । विषादो न कर्त्तव्य एवेति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(ज) अपीति । यदि एकैकोऽपि यूयं सैन्धवीनाम् अपां चुलुकं गण्डूषम् एकमेकमिति शेषः पिबथ, यदि वा जलधौ एकैकं गण्ड-शैलस्य उपलं प्रस्तरं क्षिपथ, तदा तेन एकैकगण्डूषपानेन वा पाषाण-निक्षेपेण सकलोऽपि समग्रोऽपि अम्बुराशिः श्वभ्रं विवरं वा स्थलं भवति, तत् तस्मात् हे कपीन्द्राः ! व्यस्ततन्द्राः आलस्यपराः विधुरं मिथ्या वैकल्यं निरर्थकं व्याकुलीभावं भजत । मन्दाक्रान्तावृत्तम् ।

सर्वेऽप्येते यूथपतयो जलनिधिवेलावनालीषु विहितोत्साहं व्यवस्थिताः ।

प्रतीहारः । समन्तादवलोक्य ।

नीलेन सैन्यपतिना भुजताडनान्ते
मुक्तस्तथा किलकिलाध्वनिरेष रौद्रः ।
अष्टापि वाञ्छति विरिञ्चिरसौ श्रवांसि
मन्ये यथा करयुगेन सुधा पिधातुम् ॥ २१ ॥ (क)

धूम्रो विजृम्भणविदारितसृक्कदृष्ट-
दंष्ट्राङ्कुरक्रकचसम्पुटवक्त्रयन्त्रम् ।
लाङ्गूलवेष्टितमयं मलयं महाद्रि-
मुत्पाट्य वाञ्छति निधौ पयसां निधातुम् ॥ २२ ॥ (ख)

यावन्निविक्रमतनुं न हरिर्जहाति
तावत् प्रदक्षिणपरिभ्रमणस्य कर्त्ता ।

---

(क) नीलेनेति । नीलेन सैन्यपतिना भुजताडनान्ते करप्रहारान्ते एषः रौद्रः भीषणः किलकिलाध्वनिः तथा मुक्तः, यथा असौ विरिञ्चिः ब्रह्मा करयुगेन करयोः युगं चतुष्टयं तेन भुजचतुष्टयेनेत्यर्थः युगं युग्मे कृतादिषु इत्यभिधानात् अत्र युगशब्देन सत्यादियुगानां बोधनात् युगशब्दस्य चतुःसंख्याबोधकत्वमवगन्तव्यम् । अष्टापि श्रवांसि कर्णान् चतुर्मुखीवर्त्तीनीत्यर्थः सुधा पिधातुं रोद्धुं वाञ्छति इति मन्ये सम्भावयामि । वसन्ततिलकं वृत्तम् ।

(ख) धूम्र इति । अयं धूम्रः नाम कपीन्द्रः विजृम्भणेन विदारिते ये सृक्कणी ताभ्यां दृष्टं दंष्ट्राङ्कुरक्रकचसम्पुटं वक्त्रयन्त्रं यस्मिन् तत् यथा तथा लाङ्गूलेन वेष्टितं महाद्रिं महापर्वतं मलयम् उत्पाट्य पयसां निधौ निधातुं वाञ्छति । वसन्ततिलकं वृत्तम् ।

यावत्स्वयं संक्रमविधिक्रममम्बुराशा-
वृक्षाधिपः किमपि कुप्यति वार्द्धकाय ॥ २३ ॥ (ग)

अप्यङ्गदः समरुद्धारितपाकपाण्डु-
कर्पूरगर्भरजसां पटलेन सद्यः ।
उद्धूलनं निजयशःपरिपाण्डुरेव
प्रस्वेदवारिशमनं कुरुते कुमारः ॥ २४ ॥ (घ)

आमोदभाजि वनशालिनि केसराढ्ये
तारापतिस्फुरदतःप्रविजृम्भमाणे ।
लाङ्गूलसभ्यतरनालविशेषहृद्ये
दृष्टं न केन कुमुदे कुमुदस्य रूपम् ॥ २५ ॥ (ङ)

---

(ग) यावदिति । हरिः वामनरूपधरो विष्णुः यावत् त्रिविक्रमत्वं विश्वव्यापकमूर्त्तिं न जहाति न परित्यजति तावत् प्रदक्षिणनमनस्य तस्य हरेः प्रदक्षिणीकरणस्य कर्त्ता यदा हरिस्त्रिषु लोकेषु गिरामगूर्त्ता विक्रमते स्म तावत् जाम्बवान् तं प्रदक्षिणीचकारेति प्रसिद्धिः । ऋक्षाधिपः ऋक्षाणां भल्लूकानामधिपतिः जाम्बवान् अम्बुराशौ संक्रमस्य सेतुनिर्माणरूपस्य विधेः व्यापारस्य क्रमम् उद्योगम् आकर्ण्य श्रुत्वा वार्द्धकाय किमपि कुप्यति वार्द्धकं मे कथं जातं न चेत् स्वयमेव सर्वं क्षवृत्स्यामीति कुप्यति । वसन्ततिलकं वृत्तम् ।

(घ) अपीति । कुमारोऽङ्गदोऽपि सद्यः झटिति निजयश इव परिपाण्डुरं धवलं तेन समर्थैः हारितानां पाकपाण्डूनां परिणामधवलानां कर्पूराणां गर्भरजसाम् आन्तरपरागाणां पटलेन समूहेन प्रस्वेदवारिणः शमनं शान्तिकरम् उद्धूलनम् अङ्गावलेपनं कुरुते । वानरचञ्चलपरिश्रमजनितं घर्मं कर्पूरपरागेण शमयामासेति भावः । वसन्ततिलकं वृत्तम् ।

(ङ) आमोदेति । आमोदभाजि सहर्षे सौरभवति च वनशा-

मैन्दः समुद्रपुलिनादयमश्विसूनु-
र्दृष्टो मनाक् व्याकुलया द्विविदेन दृष्ट्या ।
आदाय दन्तिमकरद्वितयं कराभ्यां
युद्धाय योजयति सान्द्रमदार्द्रगण्डम् ॥ २६ ॥ (च)

वल्गीव वानरबलानि हसन् हनूमान्
मद्रोमवल्लिषु दृढं कुरुतावलम्बम् ।
येनैष सागरमहं लघु लङ्घयामि
श्यामाचरैश्च समरं सह योजयामि ॥ २७ ॥ (छ)

---

जिनि अरण्यभाजि जलस्थायिनि च केसरार्थे केसरनाम्ना वानर-पतिना स्वार्थे सहिते किञ्जल्कभाजि च तारापतेः सुग्रीवस्य स्फुर-चतः उत्थापदानादित्यर्थः चन्द्रिकाभाजः प्रविजृम्भमाणे उदयोन्मुखे विकसति च लाङ्गूलमेव सम्यतरं नालं मृणालं तेन विशेषसुन्दरे अति-मनोहरे कुमुदे तदाख्ये वानरपतौ केन जनेन कुमुदस्य उत्पलस्य रूपं न दृष्टम् ? अपि तु सर्वैरेव दृष्टमित्यर्थः । अत्र श्लेषालङ्कारः श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते इति लक्षणात् । वसन्ततिलकं वृत्तम् ।

(च) मैन्द इति । अयम् अश्विसूनुः अश्विनीकुमारः मैन्दः तदाख्यः वानरसेनानीः द्विविदेन तदाख्येन सोदरेण व्याकुलया भयसङ्कोचितया दृष्ट्या मनाक् दृष्टः सन् कराभ्यां दन्तिमकरद्वितयं हस्तिनमेकं मकर-मेकञ्च इत्यर्थः आदाय गृहीत्वा युद्धाय सान्द्रमदेन घनमदजलेन आर्द्र-गण्डं योजयति सङ्गमयति । वसन्ततिलकं वृत्तम् ।

(छ) वल्गीवेति । हनुमान् हसन् सन् मम रोमवल्लिषु रोमावलीषु दृढम् अवलम्बम् आश्रयं कुरुत यूयमिति शेषः । येनाहमेषः सागरं लघु शीघ्रं लङ्घयामि, श्यामाचरैश्च रात्रिचरैः सह समरं योजयामि च इति वानरबलानि वल्गीव कथयतीव वसन्ततिलकं वृत्तम् ।

तारास्तनत्रुटितचन्दनपङ्कलेप-
मावद्धकाञ्चनसरोजसहस्रमालम्।
वक्षः प्लवङ्गपतिना विपुलं विलोक्य
सम्भावितचुलुकपेयपयाः पयोधिः ॥२८॥ (ज)

कर्पूरचण्डः। एवमेवैतत्। सचमत्कारं पुरोऽवलोक्य। पश्य (झ) प्रविलीयमानजलमानुषमिथुनमत्यर्थकदर्थ्यमान-

---

(ज) तारेति। प्लवङ्गपतिना सुग्रीवेण तारायाः पत्न्याः स्तनाभ्यां त्रुटितः आलिङ्गनेन स्खलितः चन्दनपङ्कलेपः यस्मिन् तादृशम् आवद्धा परिहिता काञ्चनसरोजसहस्राणां माला यस्मिन् तथाभूतं विपुलं वक्षः विलोक्य पयोधिः समुद्रः चुलुकेन गण्डूषेण पेयं पयः सलिलं यस्य तथाविधः सम्भावितः गणितः। सागरतरणं लघु मेने इति भावः। वसन्ततिलकं वृत्तम्।

(झ) प्रविलीति। प्रविलीयमानं विलीयमानं जलमानुषमिथुनं यस्मिन् तादृशम् अत्यर्थम् अतिशयेन कदर्थ्यमानं विनिन्द्यमानं शङ्खिनी-यूथं यस्मिन् तथाभूतं पुनरुक्तायमानः पुनरुक्तवदाभासमानः वाडवदहनस्य वाडवाग्नेः डम्बरः विस्तारः यस्मिन् तत्। अम्बरोन्मुखैः ऊर्द्ध-गामिभिरित्यर्थः तरङ्गैः ताड्यमानं मार्त्तण्डमण्डलं सूर्य्यमण्डलं यस्य तथाभूतम् उग्रत्वेन तीक्ष्णेन तापेन सूर्य्यकिरणसन्तापेन विवशात् विदलितात् शुक्तापुक्तिसम्पुटात् प्रकटं यथा तथा मुक्तः निर्गतः मौक्तिकानां प्रकरो यस्मिन् तथोक्तम् उच्छलन्तः उद्गच्छन्तः अनच्छा आवि-र्भावाः समला इत्यर्थः कच्छपाः मत्स्याश्च यस्मात् तथोक्तम्। लोठमानानि पाठीनानां वक्रदंष्ट्राणां मत्स्यविशेषाणां पृष्ठानि यस्मिन् तादृशम्। अमन्दम् उच्चैर्यथा तथा आक्रन्दिताः शब्दिता मकरा यस्मिन् तथाभूतम्। अपसृतानि पलायितानि जन्यजलाशयादिति भावः। नक्राणां जलचरविशेषाणां चक्राणि यस्मिन् तादृशम्। उड्डीयमानाः सपक्षाः

भङ्गिनीयूथमितस्ततः पुनरुत्क्षिप्यमाणवाडवदहनज्वरमज्वरीभूतरङ्गताड्यमानमात्स्यमण्डलमुच्चण्डतापविवशमुक्ताशुक्तिसम्पुटप्रकटमुक्तमौक्तिकप्रकरमुच्छलदनच्छकच्छपमत्स्यं लोठमानपाठीनपृष्ठममन्दाक्रन्दितमकरमपसृतनक्रचक्रमुड्डीयमानसपक्षशिलोच्चयसञ्चयं तटावटप्रविष्टनष्टपन्नगं क्रन्दत्करिविमुच्यमानमदप्रवाहावगाहमम्भस्तम्भनिविष्टमहामुनिविधीयमानपावकप्रशमं विबुधसाध्यसिद्धविद्याधरजनविमुक्तोपरिगमनं नभसि समारुह्यावलोकितं तीरतरुकुलायललितैः शकुनिभिरपसृत्य दृष्टं कपिकुटुम्बकैर्निर्गत्य निरीक्षितं गर्भवासदुर्ललिताभिरसुरसुन्दरीभिरुत्थाय निभालितं मथनोद्भूतशेषाभिरप्सरोभिः स्मृतचिरपरित्यागं मृगलाञ्छनैरावतपारिजातकौस्तुभप्रभृतिभिरुदन्वन्तं तस्मि-मयमेवंविधः ।

---

पक्षवन्तः शिलोच्चयानां सञ्चयो यस्मिन् तथोक्तम् तटावटेषु तटेषु अवटेषु च प्रविष्टाः अतएव विनष्टाः पन्नगाः भुजङ्गा यस्य तथाविधम् । क्रन्दद्भिः चीत्कुर्वद्भिः करिभिः जलहस्तिभिः विमुच्यमानः परित्यज्यमानः मदप्रवाहस्य मदजलस्रोतसः अवगाहः वर्षणं यस्मिन् तथोक्तम् । अम्भसां स्तम्भेन जलस्तम्भविद्यया अम्भांसि स्तम्भीकृत्येत्यर्थः निविष्टैः समाधिनिष्ठैः महामुनिभिः विधीयमानः क्रियमाणः पावकस्य अग्नेः प्रशमः यस्मिन् तथाभूतम् । विबुधैः देवैः साध्यैः देवयोनिविशेषैः सिद्धैः देवयोनिभेदैः विद्याधरजनैश्च विमुक्तं परित्यक्तम् उपरिगमनं यस्य तथोक्तम् । नभसि आकाशे समारुह्य उड्डीय इत्यर्थः तीरतरुषु ये कुलाया नीडाः तत्र ललितैः स्थितैः शकुन्तिभिः अवलोकितं दृष्टं

तारास्तनत्रुटितचन्दनपङ्कलेप-
माबद्धकाञ्चनसरोजसहस्रमालम्।
वक्षः प्लवङ्गपतिना विपुलं विलोक्य
सम्भावितचुलुकपेयपयाः पयोधिः ॥२८॥ (ञ)

कर्पूरचण्डः। एवमेवैतत्। सचमत्कारं पुरोऽवलोक्य। पश्य (झ) शबलीयमानजलमानुषमिथुनमत्यर्थकदर्थ्यमान-

---

(ञ) तारेति। प्लवङ्गपतिना सुग्रीवेण ताराया: पत्न्याः स्तनाभ्यां त्रुटितः आलिङ्गनेन स्खलितः चन्दनपङ्कलेपः यस्मिन् तादृशम् आबद्धा परिहिता काञ्चनसरोजसहस्राणां माला यस्मिन् तथाभूतं विपुलं वक्षः विलोक्य पयोधिः समुद्रः चुलुकेन गण्डूषेण पेयं पयः सलिलं यस्य तथाविधः सम्भावितः गणितः। सागरतरणं लघु मेने इति भावः। वसन्ततिलकं वृत्तम्।

(झ) शबलीति। शबलीयमानं चित्रीयमाणं जलमानुषमिथुनं यस्मिन् तादृशम् अत्यर्थम् अतिशयेन कदर्थ्यमानं पिनिष्यमानं पक्षिणी-यूथं यस्मिन् तथाभूतं पुनरुक्तायमानः पुनरुक्तवदाभासमानः वाडवदह-नस्य वाडवाग्नेः डम्बरः विस्तारः यस्मिन् तत्। अम्बरोन्मुखैः ऊर्द्ध-गामिभिरित्यर्थः तरङ्गैः ताड्यमानं मार्त्तण्डमण्डलं सूर्यमण्डलं यस्य तथाभूतम् उल्बणेन तीक्ष्णेन तापेन सूर्यकिरणसन्तापेन विवशात् विदलितात् शङ्खशुक्तिसम्पुटात् प्रकटं यथा तथा मुक्तः निर्गतः मौक्ति-कानां प्रकरो यस्मिन् तथोक्तम् उच्छलन्तः उद्गच्छन्तः अनच्छा अनि-र्मलाः समला इत्यर्थः कच्छपा मत्स्याश्च यस्मात् तथोक्तम्। लोठमानानि पाठीनानां बृहद्दंष्ट्राणां मत्स्यविशेषाणां पृष्ठानि यस्मिन् तादृशम्। अमन्दम् उच्चैर्यथा तथा आक्रन्दिताः शब्दिता मकरा यस्मिन् तथाभू-तम्। अपसृतानि पलायितानि अन्यजलाशयादिति भावः। नक्राणां जलचरविशेषाणां चक्राणि यस्मिन् तादृशम्। उड्डीयमानाः सपक्षाः

ध्रिङ्गिनीयूथमितस्ततः पुनरुत्तायमानवाडवदहनज्वरम-ज्वरोष्मखतरङ्गताड्यमानमार्त्तण्डमण्डलमुच्चण्डतापविवश-मुक्ताशुक्तिसम्पुटप्रकटमुक्तमौक्तिकप्रकरमुच्छलदनच्छकच्छप-मत्स्यं लोठमानपाठीनपृष्ठममन्दाक्रन्दितमकरमपसृतनक्र-चक्रमुड्डीयमानसपक्षशिलोच्चयसञ्चयं तटावटप्रविष्टनष्टप-न्नगं क्रन्दत्करिविमुच्यमानमदप्रवाहावगाहमम्भस्तम्भनिवि-ष्टमहामुनिविधीयमानपावकप्रणामं विबुधसाध्यसिद्धविद्या-धरजनविमुक्तोपरिगमनं नभसि समारुह्यावलोकितं तीर-तरुकुलायललितैः शकुनिभिरपसृत्य दृष्टं कपिकुटुम्बकैर्नि-र्गत्य निरीक्षितं गर्भवासदुर्ललिताभिरसुरसुन्दरीभिरुत्थाय निभालितं मथनोद्भूतशङ्काभिरप्सरोभिः स्मृतचिरपरित्यागं मृगलाञ्छनैरावतपारिजातकौस्तुभप्रभृतिभिरुदन्वन्तं तस्मि-मयमेवंविधः ।

---

पक्षवन्तः शिलोच्चयाणां सञ्चयो यस्मिन् तथोक्तम् तटावटेषु तटेषु अवटेषु च प्रविष्टाः अतएव विनष्टाः पन्नगाः भुजङ्गा यस्य तथाविधम् । क्रन्दद्भिः चीत्कुर्वद्भिः करिभिः जलहस्तिभिः विमुच्यमानः परित्यज्यमानः मद-प्रवाहस्य मदजलस्रोतसः अवगाहः वर्षणं यस्मिन् तथोक्तम् । अम्भसां स्तम्भेन जलस्तम्भविद्यया अम्भांसि स्तम्भीकृत्येत्यर्थः निविष्टैः समाधि-निष्ठैः महामुनिभिः विधीयमानः क्रियमाणः पावकस्य अग्नेः प्रणामः यस्मिन् तथाभूतम् । विबुधैः देवैः साध्यैः देवयोनिविशेषैः सिद्धैः देव-योनिभेदैः विद्याधरजनैश्च विमुक्तं परित्यक्तम् उपरिगमनं यस्य तथो-क्तम् । नभसि आकाशे समारुह्य उड्डीय इत्यर्थः तीरतरुषु ये कुलाया नीडाः तत्र ललितैः स्थितैः शकुनिभिः अवलोकितं दृष्ट

किञ्च ।

(अ) गूढस्फारस्फुलिङ्गोऽश्ममणिषु घनं लक्ष्यधूमप्रबन्धो
नीलाश्मस्थलीषु स्फुटपिहितरुचिर्विद्रुमेषु द्रुमेषु ।
यत्सत्यं छन्नभस्मा गिरिपतिदलिते मण्डले मौक्तिकानां
दुःखेनोन्नीयतेऽग्निः सलिलवसतिभिः प्रज्वलन्नम्बुराशौ ॥ २८ ॥

---

कपिकुटुम्बकैः वानरकुलैः अपहृतं उत्क्षिप्तम् इदं गर्भवासेन अभ्यन्तरवासेन दुर्ललिताभिः सलीलवतीभिः जलदेवसुन्दरीभिः निर्गत्य अभ्यन्तरादिति शेषः । निरीक्षितं दृष्टं मथनेन मन्थनेन उद्भूतानां शेषाभिः अवशिष्टाभिरित्यर्थः अप्सरोभिः गर्भस्थिताभिरिति शेषः । उत्थाय गर्भादिति शेषः निभालितम् अवलोकितम् । कलशाङ्कचन्द्रः ऐरावतः पारिजातः कौस्तुभश्च प्रभृतयो येषां तैः रत्नैः प्रशंसितः चिरपरित्यागः यस्य तथाभूतम् उदमन्तं वसुरं पयः ।

(अ) गूढेति । सलिलवसतिभिः जलवासिभिः अम्बुराशौ प्रज्वलन् अग्निर्वाडवः अश्ममणिषु गोपितरत्नेषु गूढा गोपिताः स्फाराः उत्कटाः स्फुलिङ्गाः कणा यस्य तादृशः अथवा मणय इमे अग्निस्फुलिङ्गा वा इति संशयित इति यावत् नीलाश्मस्थलीषु इन्द्रनीलस्थलीषु नीलकान्तश्रेणीषु इत्यर्थः घनम् अत्यर्थं यथा तथा लक्ष्यः तिरोभूत इत्यर्थः धूमानां प्रबन्धः सातत्यं यस्य तथोक्तः नीलमणय इमे धूमा वेति सन्दिग्धतया प्रतीयमान इत्यर्थः; विद्रुमेषु विद्रुमसम्बन्धिषु द्रुमेषु स्फुटं सम्यक् पिहिता आच्छादिता रुचिर्दीप्तिर्यस्य तथाविधः विद्रुमा इमे अग्निशिखा वेति संशयादिति भावः । तथा गिरिपतिना मन्दरेण दलिते मन्थनदशायां मर्दिते मौक्तिकानां मण्डले निचये छन्नं संवृतं भस्म यस्य तादृशः मौक्तिकचूर्णानि इमानि भस्मानि वेति सन्दिग्धतया प्रतीतेरिति भावः । अतएव दुःखेन उन्नीयते अग्निरयमित्यभ्यूह्यते इति यत् तत् सत्यमित्यन्वयः । स्रग्धरा वृत्तम् ।

प्रतीहारः । यथादिष्टम् ।

(ट) वैयर्थ्यात्किंस्विदक्ष्णः प्रलयसमयशिखी निर्गतश्चण्डरर्चिः ?
किंस्विद्भित्त्वार्णवाम्भांस्युपरि परिगतः सर्वतोऽप्यौर्ववह्निः ? ।
किंस्वित्कालाग्निरुद्रः स्थगयति जगतीमेष पातालमूलाद् ?
आं ज्ञातं धाम्नि वारां रघुपतिविशिखाः प्रज्वलन्तः पतन्ति ॥ २ ॥

तदेह्युपस्थितमहासंरम्भं सुग्रीवविभीषणसहितं रामदेवमनुवर्त्तावहे । इति परिक्रम्य निष्क्रान्तौ । विष्कम्भकः ।

ततः प्रविशतो रामलक्ष्मणौ सुग्रीवविभीषणौ हनुमांश्च ।

रामः । सपरिसन्त्रास एवाकाशे शिरसा प्रणम्य ।

यत्खातः सगरेण मर्त्त्यसरितं मन्दाकिनीं कुर्वता
पूर्णो यश्च भगीरथेन तदयं नः कीर्त्तनं सागरः ।
अप्यस्मिन् प्रतिकूलवर्त्तिनि मया कीर्णाः शरश्रेणयो
हे वृद्धाः ! प्रणतोऽस्मि मुञ्चत रुषं रामस्य कान्या गतिः ? ॥ (ठ)

---

(ट) वैयर्थ्यादिति । वैयर्थ्यात् वैफल्यात् अक्ष्णः ललाटनेत्रादित्यर्थः ज्वलन्तः स्फुरन्तः अर्चिषः शिखाः यस्य तथाभूतः प्रलयसमयशिखी कल्पान्ताग्निः निर्गतः किं स्वित् ? और्वः वाडवो वह्निः अर्णवाम्भांसि सागरसलिलानि भित्त्वा सर्वतः समन्तात् उपरि परिगतः विस्तृतः किं स्वित् ? एष कालाग्निरुद्रः संहारो रुद्ररूपोऽग्निः पातालमूलात् आपातालमूलं जगतीं स्थगयति दहति किं स्वित् ? आं ज्ञातं रघुपतेः रामस्य विशिखाः शराः वारां धाम्नि पयोनिधौ प्रज्वलन्तः सन्तः पतन्ति । अत्र निश्चयान्तसन्देहालङ्कारः सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः शुद्धो निश्चयगर्भोऽसौ निश्चयान्त इति त्रिधेति लक्षणात् । स्रग्धरावृत्तम् ।

(ठ) यदिति । मन्दाकिनीं सुरनदीं मर्त्त्यसरितं कुर्वता सगरेण

विभीषणः । सखे सुग्रीव ! अतिशयाद्भुततरमिदं चेष्टितं रामदेवस्य यदनेन ।

निर्वीर्यं जलपानपीडितबलैर्यस्मिन् युगान्तानलै-
र्यस्याभाति कुकूलमुर्मुरमृदुः क्रोडे शिखी वाडवः ।
तस्याप्यस्य क्रमानुसंक्रमकृतज्योतिःशिखण्डैः शरै-
र्दत्तस्तच्छदवाग्निडम्बरविधिर्देवस्य वारांनिधेः ॥३२॥(ड)

सुग्रीवः । सखे विभीषण ! अदृष्टपूर्वमश्रुतचरं (ढ) च रामभद्रचरितं कं न विस्मापयति । यज्जलान्यपि ज्वलन्ति

---

यत् जातः भगीरथेन यत्र पूर्वः तदयं सगरः नः अस्माकं कीर्त्तनं कीर्त्तिरूपमित्यर्थः । अस्मिन्नपि अस्मत् सम्बन्धिन्यपीत्यर्थः प्रतिकूल-वर्त्तिनि सति मया शरनिचयः कीर्णाः निक्षिप्ताः, हे वत्साः ! मत्पूर्व-पुरुषाः ! सगरादय इत्यर्थः पश्यतः अस्मि सुतान् प्रथमामीत्यर्थः स्वयम् अयमस्माकं कीर्त्तिं विलोपयितुमुद्यत इति क्रोधमिति भावः मयीति शेषः । क्षुभ्यत त्यजत, रामस्य अन्या अपरा गतिः उपायः का ? नास्तीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

(ड) निर्वीर्यमिति । यस्मिन् सागरे युगान्तानलैः प्रलयाग्निभिः जलपानेन पीडितं बलं येषां तथाभूतैः निर्वीर्यं विनष्टमित्यर्थः । यस्य सागरस्य क्रोडे वाडवः शिखी वडवानलः कुकूलमुर्मुर इव तुषानल इव मृदुः मन्दः निष्प्रभ इत्यर्थः सन् आभाति प्रकाशते अस्य रामदेवस्य क्रमानुसंक्रमेण अग्निसंयोगेन कृताः ज्योतिषां शिखण्डाश्चूडाः शिखा इत्यर्थः येषां तथाभूतैः शरैः तस्यापि तथाभूतस्यापि देवस्य वारांनिधेः सागरस्य चण्डस्य अतितीक्ष्णस्य क्रोडस्थितादभ्यधिकतेजस इत्यर्थः दत्तः दावानलस्य डम्बरविधिः दहनव्यापारः दत्तः कृत इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

(ढ) अश्रुतचरम् अश्रुतपूर्वं चरट् भूतपूर्वे इति चरट्प्रत्ययः ।

ततश्च ।

अन्योन्याश्लेषरक्षाविधिवलितवपुर्यष्टितुष्टं भुजङ्ग-
द्वन्द्वैरुद्दामदाहस्रुतसलिलमहागर्भमभ्रैर्व्यलायि ।
सर्वत्रावर्त्तमुद्रां विदधति जलधौ सायकैः पावकीयै-
रुत्तापाद्यादसां च त्रिजगदभिभवन्निःसृतो विस्रगन्धः ॥ ३३ ॥ (थ)

हनुमान् । साश्चर्यं पुरोऽवलोक्य प्रणम्य च ।

सेयं देव ! भ्रुकुटिरचना मुञ्चतु त्वल्ललाटं
ज्योतिश्चक्रस्तवकितशिखश्चापदण्डं च बाणः ।
वारां मध्यादयमुदयते पन्नगीगीतकीर्त्तिः
सार्द्धं दारैर्नदपरिवृतः साञ्जलिर्यत्समुद्रः ॥ ३४ ॥ (द)

सर्वे । सकौतुकमवलोकयन्ति ।

---

(थ) अन्योन्येति । पावकीयैः आग्नेयैः सायकैः शरैः सर्वत्र जलधौ आवर्त्तमुद्रां भ्रमिवैधुर्य्यं विदधति सति समन्तात् घूर्णिते सतीत्यर्थः । भुजङ्गद्वन्द्वैः पन्नगमिथुनैः अन्योन्याश्लेषः परस्परालिङ्गनमेव रक्षाविधिः रक्षणोपायानुष्ठानं तदर्थं वलिता व्यापारिता वपुर्यष्टिः शरीरदण्डः यस्मिन् तत् यथा तथा तुष्टं प्रीतम्, अभ्रैः मेघैः उद्दामेन उत्कटेन दाहेन उत्तापेन स्रुतानि निर्गलितानि सलिलानि येभ्यः तादृशा महान्तः विशाला गर्भा यस्मिन् तथाभूतं यथा तथा व्यलायि विलीनम् । तथा उत्तापात् यादसां जलजन्तूनां यादांसि जलजन्तव इत्यमरः । त्रिजगत् अभिभवन् व्याकुलयन् विस्रगन्धः आमगन्धः निःसृतः निर्गतः । स्रग्धरावृत्तम् ।

(द) सेयमिति । हे देव ! सा इयं भ्रुकुटिरचना तव ललाटं मुञ्चतु त्यजतु, ज्योतिषां तेजसां चक्रेण निचयेन स्तवकिता स्थिरा

रामः। तर्हि संहृतं (थ) चैत्रभानवमिदमस्त्रम्।

लक्ष्मणः। आर्य! एष (द) सन्धानसंहाररहस्यवेदी।

ततः प्रविशति सौषधिनिषेको बद्धाञ्जलिपुटश्च पश्चाद्गङ्गा यमुना च।

गङ्गा। सखि (ध) सावित्रि! न स्वैरं सञ्चरणविधिप-
रिक्रमणक्षमस्तरङ्गिणीनाथः। पश्य।

न क्षुण्णानि मुरारिशूकरखुरैर्यानि क्षमाकर्षणे
मन्थानाद्रिविघट्टनैरपि चिरं भग्ना न येषां त्वचः।
श्रान्तं यत्र च वासुकेर्विषशिखाज्योतिर्भिरस्याम्बुधे-
स्तान्यङ्गानि रघूद्वहस्य विशिखैर्विद्धानि दग्धानि च॥३५॥(न)

---

यस्य तथाभूतः यावच्च तन्तवि घोषः चापदण्डं धनुर्यष्टिं सन्दधत इत्य-
नेनान्वयः। यत् यस्मात् पन्नगीभिः भुजङ्गीभिः गीता कीर्त्तिर्यस्य
तादृशः नदपरिवृतः अयं समुद्रः दारैः स्त्रीभिः नदीभिरित्यर्थः सार्द्धं
साञ्जलिः कृताञ्जलिः सन् वारां मध्यात् सलिलाभ्यन्तरात् उदयते
उत्तिष्ठति। मन्दाक्रान्तावृत्तम्।

(थ) चैत्रभानवं चित्रभानुरग्निः तद्दैवतम् आग्नेयमित्यर्थः।

(द) सन्धानेति। सन्धानसंहारयोः प्रयोगसंवरणयोः रहस्यं
मन्त्रं वेत्तीति तथाभूतः। सौषधिनिषेकः सशृङ्गारः इत्यौषधः इत्यर्थः।

(ध) सावित्रि! सवितुः सुते यमुने इत्यर्थः स्वैरं स्वेच्छया सञ्चर-
णमेव विधिः व्यापारः तस्य परिक्रमणे अनुष्ठाने क्षमः समर्थः स्वच्छ-
न्दानविचरणव्यापारक्षम इत्यर्थः तरङ्गिणीनाथः नदीपतिः समुद्रः।

(न) नेति क्षमायाः पृथिव्याः कर्षणे उद्धरणे मुरारिशूकरस्य
वराहदेवस्य खुरैः यानि न क्षुण्णानि न दलितानि, येषां त्वचः चर्माणि च
चिरं दीर्घकालं मन्थानाद्रेर्मन्दरस्य विघट्टनैः घर्षणैरपि न भग्नाः,
न छिन्नाः, यत्र च वासुकेर्नागराजस्य विषशिखाया ज्योतिर्भिः

सर्वे । यथोचितं परिक्रामन्ति ।

समुद्रः । सखेदम् । देवि (प) हैमवति ! प्रिये कालिन्दि ! कथमपराधी रामभद्रं द्रक्ष्यामि ।

गङ्गा । रत्नाकर ! स एव रामभद्रोऽपराधी येन सगरभगीरथयशोराशौ त्वयि अपकृतम् ।

यमुना । भाईरहीणाह ! किंणाम अवराहित्तणं जहिं (फ)तक्खणमणुवत्तणम् (१) ।

समुद्रः । तर्हि बालनारायणं रामदेवमुपसर्पामः । न हि (ब) राकामृगाङ्कमण्डलमन्तरेण चन्द्रमणेरानन्दजलस्यन्दः ।

इति सर्वे परिक्रामन्ति ।

यमुना । उपसृत्य । दसरहणन्दण रामचन्द ! (भ) सअरभगीरहसरिसगोरवो दे समुद्दो संमुहो एस(२) ।

---

(१) भागीरथीनाथ ! किं नामापराधित्वं यदि तत्क्षणमनुवर्त्तनम् ।

(२) दशरथनन्दन रामचन्द्र ! सगरभगीरथसदृशगौरवस्ते समुद्रः सम्मुख एषः ।

---

शान्तं निवृत्तं दग्धुं न शक्तमित्यर्थः अस्य अम्बुधेः तानि अङ्गानि रघूद्वहस्य रामस्य विशिखैः विद्धानि दग्धानि च । शार्दूलविक्रीडितं वृत्तम् ।

(प) हैमवति ! हिमाचलप्रसूते गङ्गे इत्यर्थः कालिन्दि ! यमुने ! ।

(फ) तत्क्षणम् अपराधक्षणे अनुवर्त्तनं सेवार्थमनुगमनमित्यर्थः ।

(ब) राकामृगाङ्कमण्डलं सम्पूर्णचन्द्रमण्डलम् अन्तरेण विना ।

(भ) सगरेति । सगरभगीरथयोः सदृशम् अनुरूपं गौरवं यस्य

समुद्रः। साभ्यर्हणम्। (म)

इन्दुर्लक्ष्मीरमृतमदिरे कौस्तुभः पारिजातः
स्वर्मातङ्गः सुरयुवतयो देव! धन्वन्तरिश्च।
मन्थाम्रेडैः स्मरसि तदिदं पूर्वमेव त्वयात्तं
संप्रत्यब्धिः शृणु जलधनस्त्वां प्रपन्नः प्रशाधि॥ २६ (य)

रामः। सगौरवम्। भगवन् रत्नाकर! नमस्ते नन्वहं प्रशास्यो भगवतः सागरस्य तदेकवारमविनयो नयोवा क्षम्यतां रामस्य।

विभीषणः। किमुच्यते। ननु निसर्गनिरर्गलः (र) पक्षपातो भवति भागीरथीनाथस्य।

पीयूषाकर एष नित्यममुना धन्वन्तरिः सान्वयो
गङ्गावल्लभमस्य वर्ष्टितमयं शोभासुधादीधितिः।

---

तादृशः तव सगरे भगीरथे च यादृशं गौरवं कर्त्तव्यम् अस्मिन्नपि सागरे तथैव कर्त्तव्यं पूर्वपुरुषसम्बन्धित्वादिति भावः।

(म) साभ्यर्हणं ससत्कारं पूजापूर्वकमित्यर्थः।

(य) इन्दुरिति। हे देव! त्वया पूर्वमेव इन्दुः, लक्ष्मीः, अमृतं मदिरा, कौस्तुभः पारिजातं स्वर्मातङ्गः ऐरावतः सुरयुवतयः अप्सरसः धन्वन्तरिश्च तत् प्रसिद्धम् इदं सर्वं मन्थाम्रेडैः पुनःपुनर्मन्थनैः आत्तं गृहीतं स्मरसि? सम्प्रति शृणु जलमेव धनं यस्य तथाभूतः जलमात्रधनः अब्धिः अहं त्वां प्रपन्नः प्राप्तः, प्रशाधि आज्ञापय किं करवाणीति शेषः। मन्दाक्रान्तावृत्तम्।

(र) निसर्गनिरर्गलः स्वभावतः अप्रतिबन्धः पक्षपातः प्रणयः। भागीरथीनाथस्य समुद्रस्य।

इत्यस्त्वेव सतां मनःसु लिखिता सिन्धोः प्रशंसावलि-
र्जामात्रा भवतैव किंपुनरसौ लक्ष्मीगुरुः श्लाघ्यते ॥ (ञ)

रामचन्द्रः । सलज्जमाकाशे ।

विभीषणः । देव ! का पुनरसौ वर्णनावर्णिका (ट) यया रत्नाकरचरित्रमावेद्यते । पश्य ।

(ठ) धत्ते यत्किलकिञ्चितैकगुरुतामेणीदृशां वारुणी
वैधुर्यं विदधाति दम्पतिरुषां यच्चन्द्रिकार्द्रं नभः ।
यत्पीयूषभुजां च मन्मथसुहृन्नित्यं वयः सम्पदां
यल्लक्ष्मीरधिदैवतं च जलधेस्तच्चित्रमाचेष्टितम् ॥३८॥

---

(ञ) पीयूषाकर इति । एष जलनिधिः पीयूषस्य अमृतस्य आकरः खनिः, अमुना नित्यं सततं धन्वन्तरिः साम्वयः सवंशः अस्मात् धन्वन्तरिर्जात इत्यर्थः । अस्य चेष्टितं गङ्गायाः वल्लभं प्रियम् । अयं शोभया सौन्दर्य्येण सुधादीधितिः चन्द्रः । तातः सुधादीधितेरिति पाठे अयं सुधादीधितेः चन्द्रस्य तातः पिता, इति एवम्प्रकारा सिन्धोः समुद्रस्य प्रशंसावलिः सतां साधूनां मनःसु लिखिता चित्रिता अस्तीति शेषः । जामात्रा भवता असौ लक्ष्मीगुरुः कमलापिता समुद्रः किं पुनः श्लाघ्यते प्रशस्यते भवान् जामाता सन् अवश्यमेव श्वशुरं स्तोतुमर्हति तेनास्य न श्लाघा, साधूनां मनसि अस्य या गुणावलिर्लिखितास्ति तेनैवास्य प्रशंसेति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(ट) वर्णनेति वर्णनाया रचनाया वर्णिका अक्षरम् । रत्नाकरस्य समुद्रस्य चित्रम् आलेख्यम् ।

(ठ) धत्ते इति । वारुणी मदिरा एणीदृशां मृगाक्षीणां यत् किलकिञ्चितैकगुरुतां किलकिञ्चितस्य विलासविशेषस्य हर्षात् रुदितगीतादिव्यामिश्रं किलकिञ्चितमिति वचनात् एकगुरुतां मुख्याचार्य्यकं

सुग्रीवः। ईदृश एव महिमा भगवतः सागरस्य। यतः।

या स्त्रीणामधिदैवतं गिरिसुता तस्सोदरः सानुमान्
मैनाको रजताकरः सुतनयः शैलेश्वरो येन सः।
पक्षच्छेदसमुद्यतेन्द्रकुलिशत्रासान्निलीय स्थितः
सोऽप्येतस्य करालकुक्षिकुहरे पातालजम्बालिनि॥३८॥ (ष)

अपि च।

वहति भुवनश्रेणीं शेषः फणाफलकस्थितां
कमठपतिना मध्ये पृष्ठं सदा स च धार्य्यते।

---

धत्ते मदिरापाने स्त्रियः नाना विभ्रमान् प्रकटयन्तीति भावः। चन्द्रिकया आर्द्रं नभः आकाशं यत् दम्पत्योः वधूवरयोः वैधुर्यं क्रोधमग्निं विदधाति चन्द्रोदये मानिन्या मानक्षामित्व भ्रामभङ्गादिति भावः, पीयूषभुजाम् अमृताशिनां देवानां यत् नित्यं सततं मन्मथपक्षकृत् कामभित्तं वयः यौवनं लक्ष्मीः सम्पदां यस्य अधिदैवतं यत्र लक्ष्मीस्तस्यैव सम्पद् इति भावः तत् सर्वं जलधेः चित्तम् अद्भुतम् आचेष्टितं कार्य्यं शार्दूलविक्रीडितं वृत्तम्।

(ष) येति। स्त्रीणामधिदैवतम् अधिष्ठात्री देवता या गिरिसुता पार्वती सर्वासामेव स्त्रीणां भवान्या अंशरूपत्वात् उक्तञ्च देवीमाहात्म्ये स्त्रियः समस्ताः सकला जगत्सु इति तस्याः सोदरः सानुमान् पर्वतः मैनाकः, येन मैनाकेन स प्रसिद्धः रजताकरः रौप्यखनिः शैलेश्वरः पर्वतराजः सुतनयः सुपुत्री अभवदिति भावः, सोऽपि मैनाकः पक्षयोश्छेदाय समुद्यतस्य इन्द्रस्य यत् कुलिशं वज्रं तस्मात् त्रासात् निलीय आत्मानं गोपायित्वा एतस्य पातालजम्बालिनि पातालरूपकर्द्दमवति कराले भीषणे कुक्षिकुहरे उदराभ्यन्तरे स्थितः। एतेनास्य अतिविशालत्वं सूचितमिति। शार्दूलविक्रीडितं वृत्तम्।

तमपि कुरुते क्रीडाधीनं पयोधिरनादराद्

अहह! महतां निःसीमानश्चरित्रविभूतयः॥ ४०॥ (ङ

समुद्रः। सप्रश्रयाह्वयम्।

मुक्ताङ्घ्रिरुग्रमनलं विशिखप्रकाण्डै-

र्दाहाडम्बरसमर्पणकेलिकाले।

देव! स्मृतं न कथमित्यपि यत्किलाहं

लक्ष्मीसखः क्व नु युगान्तशयः शयिष्ये॥ ४१॥ (च)

रामः। अञ्जलिं बद्ध्वा। मा पुनरविनयोद्घट्टनेन (छ)मां लज्जयतु नदीनाथः।

समुद्रः। गङ्गायमुने प्रति।

---

(ङ) वहतीति। शेषः अनन्तः फणाफलके स्थितां भुवनश्रेणीं जगतीं वहति स च शेषः कमठपतिना कच्छपराजेन मध्ये पृष्ठे पृष्ठस्य मध्ये सदा च धार्य्यते। पयोधिः समुद्रः तं कमठपतिमपि अनादरात् अवलीलया क्रीड़ाधीनं क्रीडास्य कुरुते, अहह आश्चर्य्ये, महतां चरित्रविभूतयः चारित्रसम्पदः निःसीमानः निरवधिकाः। पृथ्वीवृत्तम्।

(च) मुक्ताङ्घ्रिरिति। देव! उग्रम् अनलं मुक्ताङ्घ्रिः वर्पाङ्घ्रिः विशिखप्रकाण्डैः विशिखेषु शरेषु मध्ये प्रकाण्डा श्रेष्ठाः तैः अतिभीषणैः शरैरित्यर्थः मम दाहडम्बरस्य दाहव्यापारस्य समर्पणमेव केलिः तस्य काले युगान्तशयः युगान्ते प्रलये शेते इति तथोक्तः अहं लक्ष्मीसखः लक्ष्म्या सहेत्यर्थः क्व नु कुत्र वा शयिष्ये शयनं करिष्यामि इत्यपि न किल मेऽस्मृतम्?। वसन्ततिलकं वृत्तम्।

(छ) अविनयेति। अविनयस्य अशिष्टाचारस्य उद्घट्टनेन उत्पादनेन।

कमण्डलोर्ब्रह्मकराग्रभूषणा-
दियं प्रसूता भवमौलिभूषणम् ।
इयं च देव ! द्युमणेस्तरङ्गिणी
त्वदन्वयस्य प्रथमा सुवासिनी ॥ ४२ ॥ (क)

रामः । देवि अम्बिकापतिधृते ! मन्दाकिनि ! मातर्मार्त्तण्डनन्दिनि यमुने ! एष रामोऽभिवादयते ।

उभे । रविकुलालङ्करण राम ! अविरलं (ख) समरसारं वह ।

समुद्रः । रामं प्रति । नियुज्यतामयं जनः ।

रामः । नन्वहं नियोज्यो (ग) भगवतः किं पुनः प्रकृते कर्मणि सहायमिच्छति रामः ।

समुद्रः । विशेषं श्रोतुमिच्छामि ।

गङ्गा । कृतं वाग्विस्तरेण ।

इहार्णवमहार्णस्सु पोतपात्रमिव स्थिरम् ।

---

(क) कमण्डलोरिति हे देव ! ब्रह्मणः करस्य अग्रभूषणात् श्रेष्ठालङ्कारात् कमण्डलोः भवस्य हरस्य मौलिभूषणं शिरोरत्नभूता इयं गङ्गा प्रसूता उद्भूता । इयञ्च त्वदन्वयस्य तव वंशकरस्य द्युमणेः सूर्यात् प्रसूतेति शेषः प्रथमा आद्या सुवासिनी सुसौरभिणी तरङ्गिणी नदी यमुनेत्यर्थः । वंशस्थविलं वृत्तम् ।

(ख) अविरलं महान्तम् ।

(ग) नियोज्यः किङ्करः । सहायं त्वामिति शेषः अथवा सहायं याच्यं भवत इति शेषः ।

द्रुतमारभ्यतां सेतुरखर्वः पर्वतोत्तमैः ॥ ४२ ॥ (घ)

सर्वे । निष्क्रामन्ति ।

समुद्रः । यथाऽऽवेदितं (ङ) त्रिस्रोतसा मणिमयचक्रवाला-चलमध्यमध्यासीनं वाडवदहनमुत्तरेणानन्तनागाङ्कपर्यङ्क-शायिनं भगवन्तं दक्षिणेन योऽयं द्रुतेन्द्रनीलश्यामलः सलिलस्कन्धः स प्रदेशो निर्विबन्धः सेतुबन्धस्येति ।

रामः । विहस्य । भगवन् ! किल ग्रावाणः (च) कथं प्लवन्ते ? ।

समुद्रः । (छ) महामुनिवितीर्णवरस्य विश्वकर्मसूनोरातिवनदावानलस्य नलस्य करतलस्पर्शप्रभावेण ।

---

(घ) इहेति । इह एषु अर्णवस्य महत्सु अर्णःसु जलेषु स्थिरं निश्चलं पोतपात्रमिव समुद्रयानमिव अखर्वः महान् सेतुः पर्वतोत्तमैः पर्वतश्रेष्ठैः द्रुतं शीघ्रम् आरभ्यताम् ।

(ङ) त्रिस्रोतसा मन्दाकिन्या, मणिमान् यश्चक्रवालाचलः तस्य मध्यम् । वाडवदहनमुत्तरेण वाडवाग्नेरुत्तरस्मिन् प्रदेशे इत्यर्थः । अनन्तेति । अनन्तो नाम यो नागः भुजङ्गः तस्य अङ्कः उत्सङ्गः एव पर्यङ्कः तस्मिन् शेते तथोक्तं भगवन्तं नारायणं दक्षिणेन नारायणस्य दक्षिणप्रदेशे द्रुतं गलितं यत् इन्द्रनीलं तद्वत् श्यामलः सलिलस्कन्धः जलराशिरित्यर्थः । निर्विबन्धः निष्प्रत्यूहः निर्बाध इत्यर्थः ।

(च) ग्रावाणः प्रस्तराः ।

(छ) महामुनीति । महामुनिना केनचित् वितीर्णः दत्तः वरो यस्य तथाभूतस्य । अरातिः शत्रुरेव वनं तस्य दावानलस्य दाहकस्य शत्रुन्तपस्य इत्यर्थः ।

सर्वे । सहर्षाश्चर्यम् ।

नेपथ्ये । महान् कलकलः ।

सनाकर्णितकेन हनुमान् । तदिदमत्रभगतो मकरालयस्य वचनमुपश्रुत्य हृष्यतां कपिबलानामेष (ज) घराट्टहाससमांसलः कलकलः ।

समुद्रः । रामभद्र ! किमपि वाञ्छन्तु (झ) वानरवीराः सकलकपिकुलानुयायी पुनरयं मार्गो न सर्वैं हनूमन्तस्तदमुं मलयतटीविटङ्कमधिरुह्य पश्यतु सेतुबन्धप्रदेशं रामः ।

रामः । यथाह धन्वन्तरिः प्रसविता (ञ) । सप्रश्रयम् । अपार भगवन्नकूपार ! रामदुर्विनयसन्नद्धान्यङ्गानि तत्साधयतु निजं पातालनिलयं परमनुगृहीतोऽस्मि ।

समुद्रः । यथाह सप्तमो वैकुण्ठावतारः (ट) । अथ गम्यते गङ्गायमुनाभ्यां सह निष्क्रान्तः । सर्वे समारोहणं नाटयन्त्युपविशन्ति च

नेपथ्ये ।

भो नागनाथ ! हरिकच्छप ! दिव्यमत्स्याः !
स्वस्त्यस्तु वः चणमितः कुरुतापसर्पम् ।

---

(ज) घराट्टहास इव मांसलः विशालः महानित्यर्थः ।

(झ) किमपि वाञ्छन्तु अभिलषन्तु ।

(ञ) प्रसविता जनयिता । रामेति रामस्य दुर्विनयेन दुश्चिराचारेण सन्नद्धानि व्यथितानि । साधयतु गच्छतु ।

(ट) वैकुण्ठेति । वैकुण्ठस्य नारायणस्य अवतारः राम इत्यर्थः सप्तमः सप्तानां पूरणः मीनकूर्मकोलनरहरि वामनपरशुरामेभ्यः अनन्तर इत्यर्थः ।

अब्धावयं ननु रघूद्वहकीर्त्तिहेतुः

सेतुः प्रसर्पति दशाननधूमकेतुः ॥ ४४ ॥(ठ)

अपिच ।

यादांसि ! हे चरत सङ्गतगोत्रतन्त्रं

वामेन चन्दनगिरेरुत दक्षिणेन ।

नो चेन्निरन्तरधराधरसेतुसूति-

राकल्पमेव न विरंस्यति वो वियोगः ॥ ४७ ॥ (ड)

सुग्रीवः । हनूमन् ! आदिश्यन्तां सेनापतयः पर्वतानयनाय ।

हनूमान् । यदादिशति स्वामी । सर्वतो निष्क्रम्य ।

---

(ठ) भो इति भो नागराज वासुके ! हरिकच्छप ! कूर्मावतार ! दिव्यमत्स्य ! मत्स्यावतार ! वः युष्माकं स्वस्ति शुभमस्तु, इतः अस्मात् प्रदेशात् क्षणम् अपसर्पं कुरुत पलायध्वमित्यर्थः । ननु भोः अब्धौ समुद्रे रघूद्वहस्य रामस्य कीर्त्तिहेतुः यशस्करः दशाननस्य रावणस्य धूमकेतुः उत्पातविशेषस्वरूपः अयं सेतुः आरब्धो भवतीत्यर्थः । वसन्ततिलकं वृत्तम् ।

(ड) यादांसीति । हे यादांसि ! जलजन्तवः ! चन्दनगिरेः मलयस्य वामेन उत अथवा दक्षिणेन सङ्गतं चिरसहवाससुहृद्भावं गोत्रतन्त्रं वंशपरम्परां चरत भवतां परस्परं येन सह यस्य मैत्रमस्ति स तेन सह सद्भावजनितमालापादिकं करोतु इति भावः । नो चेत् वः युष्माकं निरन्तरैः गौरवैः धराधरैः यैः सेतुः तस्मात् सूतिः उद्भवः यस्य तादृशो वियोगः आकल्पमेव प्रलयकालावधि एव न विरंस्यति न विरतो भविष्यति । वसन्ततिलकं वृत्तम् ।

दृप्यद्विक्रमकेलयः कपिभटाः ! शृण्वन्तु सुग्रीवजा-
माज्ञां मौलिनिवेशिताञ्जलिपुटाः सेतोरिह व्यूहने ।
दोर्दण्डद्वयताडनश्लथधराबन्धोद्धृतान् भूधरान्
आनेतुं सकलाः प्रयात ककुभः किं नाम वो दुष्करम् ?॥ ४६ (ठ)

सुग्रीवः ।

आनयन्तु कपयो महागिरीन्
अङ्गदस्तु सपदि प्रतीच्छतु ।
त्वं नलः प्रबलबाहुविक्रमः
सेतुबन्धविषये नियोजय ॥ ४७ ॥ (ण)

सर्वे समाकर्णितकेन ।

---

(ठ) दृप्यदिति । दृप्यन्तः साहङ्कारा विक्रमकेलयः पराक्रमविहारा येषां तादृशाः कपिभटाः वानरवीराः मौलिषु शिरःसु निवेशितम् अञ्जलिपुटं यैः तथाभूताः सन्तः इह सेतोः व्यूहने विन्यासे निर्माणार्थमित्यर्थः सुग्रीवजाम् आज्ञां शृण्वन्तु । यूयं सकलाः सर्वे दोर्दण्डद्वयस्य बाहुयुगलस्य ताडनेन श्लथाः शिथिला ये धराबन्धाः भूतलबन्धनानि तेभ्यः उद्धृतान् उत्पाटितान् भूधरान् पर्वतान् आनेतुं ककुभः दिशः प्रयात गच्छत, वः युष्माकं किं नाम दुष्करम् असाध्यं न किमपि दुष्करमिति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(ण) आनयन्त्विति । कपयः महागिरीन् आनयन्तु, अङ्गदस्तु सपदि प्रतीच्छतु स्वहस्तात् आनीतान् गिरीनिति शेषः । त्वं नलः प्रबलो बाह्वोर्विक्रमो यस्य तथाविधः सन् सेतुबन्धविषये सेतोर्बन्धनार्थं नियोजय व्यवहर, समुद्राम्भसि पातय इत्यर्थः तानिति शेषः । रथोद्धतावृत्तम् ।

हनूमान् । विहस्य । आपद्विनीतः (त) किमपि वर्त्तते वारिराशिः । यत् सेतुबन्धविहितये निजप्रतीहारघोषमुखेन शिक्षति जलचरमहासत्त्वानि ।

सुग्रीवः । सखे हनूमन् । गच्छ आह्वय वानरद्वयं (थ) यन्निवेदयति सेतुबन्धविधिं रामदेवाय ।

हनूमान् । निःसृत्य वानराभ्यां सह प्रविश्यैतौ कपित्थदधित्थौ निवेदयतः ।

कपित्थः । देव ! पेक्ख एसा (द) वेलावणुम्मूलिदसण्णिवेसिदपव्वदपब्भाराणं वाणराणं णिरन्तरा रिञ्छोली चदुद्दिसं गअणङ्गणे सेदुबन्धविहिसमासुत्तअन्ती विअरदि । (१)

---

(१) देव ! प्रेक्षस्व एषा वेलावनोन्मूलितनिवेशितपर्वतप्राग्भाराणां वानराणां निरन्तरा पङ्क्तिश्चतुर्दिशं गगनाङ्गणे सेतुबन्धविधिमासूत्रयन्ती विहरति ।

---

(त) आपद्विनीतः आपदा रामक्रोधजनितया आपदा विनीतः शिष्टः । सेतुबन्धविहितये सेतुबन्धविधानार्थं निजप्रतीहारस्य स्वकीयदौवारिकस्य घोषस्य महाविघोषस्य मुखेन शिक्षति उपदिशति ।

(थ) यत् वानरद्वयमित्यर्थः ।

(द) वेलेति । वेलावनेभ्यः तीरवनेभ्यः उन्मूलिताः पर्वतविशेषा यया तथाभूता । निवेशितेति निवेशिताः आनीय स्थापिताः पर्वतानां प्राग्भाराः प्रकृष्टभाराः अति भारवन्तः पर्वता इति यावत् येषां तादृशानाम् । निरन्तरा नीरन्ध्रा अविच्छिन्नेत्यर्थः । आसूत्रयन्ती विरचयन्ती साधयन्तीत्यर्थः ।

कपिथ: । (ब) गुरुहाकुहरपइट्टदुट्ठमअरा तरुक्खन्धेणि-
ससंखिणिसक्खका विसमसिलाअलुज्झिदफुडिदसुत्ति-
संपुटसुत्तमोत्तिअकरम्बिदणिअम्बा तलप्परूढसेवालजडि-
लबन्धा जलनिविडपक्खपालिमन्दसंचरणा चिरवोसम्भप-
लोणिअकमलणाहसच्छकुलतिमिङ्गिलरुद्धकन्दरहन्ता उपरि
णिवडन्तमहिहरपब्भारक्खोडणभएण किंकिं ण कुणन्ति
भिज्जम्भसंचआ (३) ।

---

(ब) गुरुगुहाकुहरप्रविष्टदुष्टमकरास्तरुस्कन्धनिपतद्वर्याङ्गिनीलक्षका वि-
षमशिलातलोज्झितस्फुटितशुक्तिसम्पुटमुक्तमौक्तिककरम्बितनितम्बास्तल-
प्ररूढशैवालजटिलबन्धा जलनिविडपक्षपालिमन्दसञ्चरणाश्चिरविश्रम्भ-
प्रसृतकमलनाभमत्स्यकुलतिमिङ्गिलाक्रान्तकन्दरभ्रान्ता उपरिनिपतन्मही-
धरप्राग्भारोत्क्षोडनभयेन किं किं न कुर्वन्ति शिलोच्चयसञ्चयाः ।

---

यो गिरिः पर्वतः विस्तरात् स्वावयवदैर्घ्यात् अब्धौ समुद्रे नीरन्ध्रं
निरवकाशं यथा तथा सेतुघटनं करोति इति नर्मणि प्राकाम्ये सम्भा-
व्यते, सोऽपि वाञ्छिता प्रकटिता योगनिद्रा येन तादृशस्य कपिलस्य
नारायणस्य व्यापारेण अवस्थित्या पूताः पवित्रीकृता आत्मानः येषां
तथाभूतेषु अप्सु सलिलेषु प्रक्षिप्तः सन् अस्य समुद्रस्य सहस्रभागभरणे-
ऽपि क्व क्षमो नाम ? नैव क्षम इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

(ब) गुर्विति । गुरुषु महत्सु गुहाकुहरेषु गुहाभ्यन्तरेषु प्रविष्टा
दुष्टा मकराः येषां तादृशाः, तरुस्कन्धेषु वृक्षप्रकाण्डेषु, निषण्णं शङ्खि-
नीनां लक्षकं येषां तथाविधाः, विषमेषु उन्नतानतेषु शिलातलेषु उज्झि-
तानि परित्यक्तानि स्फुटितानि शुक्तिसम्पुटेभ्यः मुक्तानि निःसृतानि

दधिमुखः । सखे ! साधु निवेदितं राम देवाय ।

रामं प्रति ।

यस्मिन्नयं किलिकिलामुखरो विमर्द-
स्तत्र ध्रुवं धृतमहीधरपातशङ्काः ।
दम्भोलिपातभयतः खमनुत्पतन्तः
सर्पन्त्यधो निभृतमद्रिमहाभ्रकुन्ताः ॥ ५० ॥ (भ)

हनूमान् ।

यं यं गिरिं क्षिपति वानरवर्ग एष
वारां निधौ निपतता ननु तेन तेन ।

---

यानि मौक्तिकानि मुक्ताफलानि तैः करम्बिताश्चुम्बिता नितम्बा मध्यभागा येषां तथाभूताः तलेषु प्ररूढैः सञ्जातैः शैवालैः जटिलाः बन्धाः येषां तथाविधाः जलेन निबिड़ा घनाः आर्द्रा इत्यर्थः याः पद्मपालयः पद्मश्रेणयः ताभिः मन्दं मन्थरं येषां तादृशाः, चिरविश्रम्भेण चिरविश्वासेन चिराभ्यासेनेत्यर्थः प्ररूढं जातं कमलं नाभौ यस्य सः नारायणः मत्स्यकुलानि तिमिङ्गिलाश्च तैः आरब्धं कन्दरेषु गुहासु स्थानं येषां तथाभूताः । शिलोच्चयानां पर्वतानां सञ्चयाः । उपरि निपततां महीधराणां प्राग्भारस्य प्रकृष्टस्य भारस्य उत्तोडनात् उत्पीडनात् भयेन भीत्या ।

(भ) यस्मिन्निति । यस्मिन् प्रदेशे अयं किलिकिलामुखरः विमर्दः पर्वतोत्पाटनव्यापार इत्यर्थः तत्र ध्रुवं निश्चितम् अद्रेः पर्वतस्य महाभ्रकुन्ताः महान्तः पक्षिणः धृता महीधरस्य पातात् शङ्का यैः तथाभूता दम्भोलिपातात् वज्रपातात् यत् भयं तस्मात् खम् आकाशमनुत्पतन्तः सन्तः निभृतं निःशब्दं यथा तथा अधः सर्पन्ति गच्छन्ति । वसन्ततिलकं वृत्तम् ।

द्राङ् मन्दराहतसुधाकवलामराणां
संस्थाप्यते मथनधीर्जलमानुषाणाम् ॥ ५१ ॥ (म)

कञ्चुकः। सावर्षम्। आर्य! (य) कथापरम्परोपश्रुताश्चर्यमय समुद्रस्याद्राक्षि।

क्षिप्तो गिरिः कच्छपपृष्ठपीठात्
संघट्टवेगोच्छलितोऽनुपाती।
ग्रासीकृतोऽयं तिमिना किमन्यत्
सचापि लोलेन तिमिङ्गिलेन ॥ ५२ ॥ (र)

---

(म) यं यमिति। एष वानरवर्गः यं यं गिरिं वारां निधौ क्षिपति, मन्ये निश्चितं निपतता तेन तेन गिरिणा द्राक् झटिति मन्दरेण आहतायाः मर्दितायाः सुधायाः कवलेन ग्रासेन अमराणां मृत्यु-वर्जितानां जलमानुषाणां मथनधीः मन्थनबुद्धिः संस्थाप्यते जन्यते। मन्दरमन्थनकाले स्थिता जलमानुषा मन्दराघातत्रुटितायाः सुधाया बिन्दुभक्षणेन अमरत्वं प्राप्ताः साम्प्रतं यदा यदा पर्वतः सागरे पात्यते तदा तदा तत् पूर्वतनमन्दरमन्थनव्यापारं स्मरन्तीति भावः। वसन्त-तिलकं वृत्तम्।

(य) कथेति। कथानाम् आख्यानानां परम्परया उपश्रुतानि आश्चर्यितानि न तु कदापि दृष्टानीति भावः।

(र) क्षिप्त इति। क्षिप्तः अम्भसि निक्षिप्तः सन् अनुपाती कच्छ-पस्य कूर्मराजस्य पृष्ठमेव पीठं तस्मात् सङ्घट्टवेगेन प्रतिघातजवेन उच्छ-लितः उल्लम्फीकृतः अयं गिरिः पर्वतः तिमिना जलचरविशेषेण ग्रासी-कृतः भक्षितः, अन्यत् किं वक्तव्यमिति शेषः स चापि तिमिः लोलेन चञ्चलेन तिमिङ्गिलेन तद्भक्षकजलचरविशेषेण ग्रासीकृत इति शेषः। उपजातिवृत्तम्।

रामः । वत्स लक्ष्मण ! अत्यल्पमिदमुच्यते ।

अस्ति मत्स्यस्तिमिर्नाम तथा चास्ति तिमिङ्गिलः ।
तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघवः ॥५३॥ (ल)

अपिच ।

क्षिप्तो गिरिर्जलधिबन्धविधौ नलेन
यात्येकतः शकुलग्रावविवर्त्तनाभिः ।
अप्यन्यतः कमठडिम्भनिशुम्भनेन
सेतुः कथञ्चिदिति सर्पति मध्यमब्धेः ॥ ५४ ॥ (व)

दधिमुखः ।

यद्ग्रावाणः प्लवन्ते यदपि च जलधिर्बध्यते लोष्टलीलां
बिभ्राणा यत्कपीन्द्रैः करतलतुलनादाक्षिपन्तिमहीध्राः ।
यन्नष्टं दिग्द्वयोर्द्राक्कमठशकुलकैः पुत्रपौत्रप्रपौत्रै-
र्मार्गात्तद्देव ! सिन्धो रजनिचरपतेर्नाशहेतुः स सेतुः॥५५॥(श)

---

(ल) अस्तीति । तिमिर्नाम मत्स्यः अस्ति विद्यते तथा तिमिं गिलतीति तथोक्तः मत्स्यश्च अस्ति, तिमिङ्गिलं गिलतीति तथोक्तः अपि मत्स्यः अस्ति, राघवो नाम मनुष्यः तस्य तिमिङ्गिलगिलस्य गिलः भक्षकोऽपि अस्ति ।

(व) क्षिप्त इति । नलेन जलधिबन्धविधौ समुद्रबन्धव्यापारे क्षिप्तः गिरिः एकतः एकस्यां दिशि शकुलमत्स्यानां विवर्त्तनाभिः चालनाभिः याति । अन्यतः अन्यस्यां दिशि अपि कमठडिम्भानां कच्छपशिशूनां निशुम्भनेन प्रतिघातेन यातीति शेषः । इति हेतोः सेतुः अब्धेः सागरस्य मध्यं कथञ्चित् सर्पति चलति ।

(श) यदिति । हे देव ! ग्रावाणः प्रस्तराः यत् प्लवन्ते, यदपि

सुग्रीवः । इदमपरमुपस्थितं सेतुबन्धे विघ्नान्तरम् ।

तावत् क्व नाम गिरयः श्रितसेतुबन्धा
रुन्धन्ति पाथसि समुत्थितपाञ्चजन्ये ।
यावत्तदुच्छलितदिव्यनदीसहस्रै-
रापूर्य्य दुस्तरतरः क्रियते समुद्रः ॥ ५६ ॥ (च)

विभीषणः । इदं चाद्भुततरम् ।

यावन्निपातरयकीर्णमशेषमर्णो
व्यावृत्य संलगति नो ककुभां मुखेभ्यः ।
तावत् स्वमुक्तमपि चित्रमपां निधाना-
दाकृष्य शैलमयमुत्पतितः प्लवङ्गः ॥ ५७ ॥ (छ)

---

जलधिः समुद्रः बध्यते यत्र कपीन्द्रैः वानरप्रवरैः करतलतुलनात् भुजतलोद्धरणात् लोष्टानां लीलां बिभ्राणा महीध्राः पर्व्वताः क्षिप्यन्ते आनीयन्ते, यत्र दिव्ययोः कमठशकुनयोः पुत्रपौत्रप्रपौत्रैः शावकवर्गैरित्यर्थः मार्गात् नष्टं पलायितं तत् तस्मात् सिन्धौ न सेतुः रजनीचराणां राक्षसानां पत्युः रावणस्य नाशहेतुः विनाशकारणमित्यर्थः । स्रग्धरावृत्तम् ।

(च) तावदिति । समुत्थितं पाञ्चजन्यं यस्मात् तादृशे पाथसि जले सामुद्रे इत्यर्थः श्रिताः सेतुबन्धाः यैः तथाभूता गिरयः तावत् क्व नाम कुत्र खलु रुन्धन्ति जलाम्यावृण्वन्तीत्यर्थः । यावत् तेभ्यः गिरिभ्यः उच्छलितानां निर्गतानां दिव्यनदीनां सहस्रैः आपूर्य्य समुद्रः दुस्तरतरः अतिदुस्तरः क्रियते । गिरिभिः सेतुबन्धेऽपि तन्निःसृत नदीस्रोतोभिरापूरणात् समधिकदुस्तरत्वमिति भावः ।

(छ) यावदिति । निपातस्य रयेण वेगेन कीर्णं विक्षिप्तम् अशेषं समग्रं अर्णः जलं व्यावृत्य उत्पत्य ककुभां दिशां मुखेभ्यः नो संलगति,

अपिच ।

> और्वः शिखी वसति यत्र हरिश्च यत्र
> यत्रासुराः शिखरिणश्च पतत्रभाजः ।
> आमूलतोऽम्बुधिरयं प्रकटीकरोति
> तत्तन्महाकपिविमुक्तमहीध्रमग्नः ॥ ५८ ॥ (छ)

सुग्रीवः ।

> ये गोत्रे सुरवारणस्य करिणो यः कौस्तुभीये कुले
> कान्तो रत्नचयः श्रियश्च निभृता ये केचन ज्ञातयः ।
> ये चन्द्रस्य च बान्धवाः किमपरं तानप्ययं दर्शये-
> द्युद्धृत्य हनमताऽमरगिरिर्वेगादिहाऽऽक्षिप्यते ॥ ५९ ॥ (ज)

---

मितं तावत् स्वेन मुक्तं निजिताः शैलम् आकृष्यापि यथास्थानं स्थाप-यित्वापि अपां निवासात् समुद्रात् अयं प्लवङ्गः वानरः उत्पतितः । वानरस्य त्रिप्रकारित्वमनेन सूचितम् । वसन्ततिलकं वृत्तम् ।

(छ) और्व इति । यत्र और्वः शिखी वाडवाग्निः, यत्र च हरिः नारायणः वसति, यत्र असुराः दैत्यदानवाः पतत्रभाजः पक्षवन्तः शिखरिणः पर्वताश्च वसन्तीति शेषः । सोऽयम् अम्बुधिः तैस्तैर्महाकपिभिर्विमुक्ता निक्षिप्ता महीध्राः पर्वताः यस्मिन् तादृक् अर्णः सलि-लम् आमूलतः आ रसातलात् इति यावत् प्रकटीकरोति आविष्क-रोति । वसन्ततिलकं वृत्तम् ।

(ज) येति । यदि हनूमता अमरगिरिः सुमेरुपर्वतः उद्धृत्य इह समुद्रे वेगात् आक्षिप्यते निक्षिप्यते तदा सुरवारणस्य ऐरावतस्य गोत्रे वंशे ये करिणः हस्तिनः सन्तीति शेषः कौस्तुभीये कौस्तुभसम्ब-न्धिनि कुले वंशे यः कान्तः रमणीयः रत्नानां चयः समूहः अस्तीति

द्दगस्स एदे हणुमन्तबालभावचावलविलुत्तलवलीकन्दल-कडप्पा तक्कालपक्कालिअकेरलीकवोलकालकन्तिणो अञ्जण-धरित्तीहरस्स एदे मत्तगअमण्डलमग्गभङ्गदायिणो णम्म-दाणईसोत्तसित्तसिहरसिहरिखण्डमण्डणा विञ्झधराहरस्स एदे विविहवण्णमणहरमणिप्पभापसरविरइआखण्डल को-अण्डखण्डमण्डला अगत्थिमुणिसीमन्तिणीमज्जणपवित्तिअ-तित्थवित्थारा रोहणाअलस्स एव्वमण्णस्स वि भुवणगब्भ-संभवस्स गिरिणो साणुसंघाआ पवङ्गमपुङ्गवेहिं समोद्ध-रिआ सेतुबन्धं विरअयन्ति (४)।

---

(४) एते वृन्दारकवृन्दविलासवासाः कुङ्कुमपङ्कचर्चितकृतकतरुणी-गण्डपार्श्वच्छवयो मेरुमहीधरस्य। एतेऽर्द्धनारीश्वरविषमनिवेशवश-प्रतिबिम्बचुम्बितसितातपत्रकान्ता नीहारनिवहनिबिडनिपतनविक्षिप्तपा-ण्डुरत्वा गौरीगुरोर्गिरिचक्रवर्त्तिनः। एते सुरासुरभूतसुधारसोत्कर्ष-मिश्रतरुणतरोः कौस्तुभमृगाङ्कमदिरासुरद्रुमश्रीवत्सोत्पत्तिसाक्षिणो मन्द-रगिरीन्द्रस्य। एते कुबेरमिलत्वरानिवारणकृत्तिवासनिर्विघ्नमहार्धितगुणा निर्जितजरठमृगाङ्कमण्डलच्छायाः कैलासशैलस्य। एते काञ्चनकमलद-लशोभितमानसा गन्धहरिणनाभिसुगन्धिनो गन्धमादनस्य। एते हनू-मद्बालभावचापलविलुप्तलवलीकन्दलसमूहास्तत्कालप्रक्षालितकेरलीकपोल-कालकान्तेरञ्जनधरित्रीधरस्य। एते म[illegible]मार्गैकभङ्गदायिनो नर्मदा-नदीस्रोतःसिक्तशिखरशिखरिखण्डमण्डना विन्ध्यधराधरस्य। एते विविध-वर्णमनोहरमणिप्रभाप्रसरविरचिताखण्डलकोदण्डखण्डमण्डला अगस्त्य-मुनिसीमन्तिनीमज्जनपवित्रिततीर्थविस्तारा रोहणाचलस्य। एवमन्य-स्यापि भुवनगर्भसंभवस्य गिरेः सानुसंघाताः प्लवङ्गमपुङ्गवैः समुद्धृताः सेतुबन्धं विरचयन्ति।

दधिमुखः । सहर्षं विलोक्य ।

पादोनवर्त्तिनि महोदधिसेतुबन्धे

पारे परे कपिबलैरवलोक्य लङ्काम् ।

अत्युच्चकिलिकिलारवमुत्प्लुतं च

यातं च सौधशिखरेषु निशाचरीभिः ॥ ६० ॥ (क)

नेपथ्ये महान् कलकलः । सर्वे समाकर्णितकेन ।

रामः । किं पुनरयं (ख) प्रलयकालोत्तालवैकुण्ठकाल-कण्ठकोलाहलकालः कलकलः ।

कपित्थः । पुरतोऽवलोक्य । देव ! (ग) सेतुबन्धपतिबन्धनिमित्त-कीर्यन्तरत्नपरोहणमाणिक्यपादुकस्य विस्फुरन्तबाहिणीतर-ङ्गतुरङ्गमसंघस्य श्रोत्फुरन्तजङ्गमदुमगहामर्भगमस्य पस-रन्तजलहिजलवत्तरहवरस्य दोलन्तगम्भवकेलिकापणाध-अवडामाडम्बरस्य क्रियमाणजिम्भायमाणकिञ्चलवयणवा-

---

(क) पादोनेति । महोदधिसेतुबन्धे पादोनवर्त्तिनि चतुर्थांशावशिष्टे सति परे पारे कपिबलैः वानरसैन्यैः लङ्कामवलोक्य अतिशयेन उच्चकैः उत्प्लवन् किलिकिलारवः यस्मिन् तद् यथा तथा उत्प्लुतं तच्च निशाचरीभिः राक्षसीभिः सौधशिखरेषु हर्म्यशिरःसु यातञ्च । वसन्ततिलकं वृत्तम् ।

(ख) प्रलयेति । प्रलयकाले उत्तालः महान् भयङ्कर इत्यर्थः विगता कुण्ठा माया यस्य सः विकुण्ठः मायातीत इत्यर्थः स एवेति वैकुण्ठः स्वार्थे ष्यप्रत्ययः स चासौ कालकण्ठः नीलकण्ठश्च तस्य कोलाहलवत् कालः संहाररूपः कलकलः कलरवः ।

(ग) सेतुबन्धेति । सेतुबन्धस्य प्रतिबन्धनिमित्तं बाधार्थम् । कीर्यन्तीति कीर्यन्ति निःसरन्ति रत्नरोहणस्य रत्नपर्वतस्य माणिक्यानि येभ्यः तादृशाः पदातयः पादचारिबलानि यत्र तादृशस्य विस्फुरन्तः वाहिनी-

णासणस्स पडन्तसेणाविलासिणीकडक्खलक्खस्स समुज्जन्त-
रहलच्छिकङ्कणचक्कचक्कवालस्स उज्जम्भमाणजयसिरि-
वेणिदण्डचण्डासिणो उवट्ठिदस्स चउरङ्गस्स वि पढमक्खण-
प्पहाविदस्स रक्खसलोअस्स सुग्गीवसासणसमासादिदवि-
विहहुंकारेहिं णिसग्गसंगम गिरिसिहरतरुप्पहरणपा-
णिजुअलेहिं वाणरेहिं पडिक्खलिज्जन्तस्स रक्खसाणीअस्स
एस कलकलो (१) ।

---

(१) सैन्यबन्धप्रतिबन्धनिमित्तं वीर्यदुर्वारोहणमाणिक्यपदातिकस्य
विस्तीर्णह्रादिनीतरङ्गतुरङ्गमतङ्गस्योह्यमानजङ्गमदुर्गमहामतङ्गजस्य प्रच-
रज्जवधिअवद्रथवरस्य दोलायमानगगनकेलिकाननध्वजपताकाडम्बरस्य

---

तरङ्गेषु तुरङ्गमतङ्गा यत्र तथाभूतस्य उह्यमानावाह्यमाना जङ्गमदुर्गा
इव महान्तः मतङ्गजा हस्तिनः यस्मिन् तादृशस्य । प्रचरन्तः अवधि-
अवत् रथवरा रथश्रेष्ठा यस्मिन् तथाविधस्य । दोलायमानः गगने
अन्तरीक्षे केलिकानने क्रीडोपवने इव ध्वजपताकानां डम्बरः समूहः
यत्र तादृशस्य । लब्धमाणेति लब्धमाणानि जृम्भायमाणा कृतान्तवदना-
नीव बाणासनानि धनूंषि यत्र तादृशस्य । पतदिति पतत् सेनानां
विलासिनीनामिव कटाक्षलक्षं यस्मिन् तथाभूतस्य । समुद्यत् विराजत्
रथलक्ष्म्याः कङ्कणमिव चक्रचक्रवालं चक्रास्त्रनिचयः यत्र तादृशस्य ।
उद्गच्छमाना उदयमानाः जयश्रियः वेणिदण्डाः केशपाशा इव
चण्डाः तीक्ष्णाः असयः यत्र तादृशस्य । चतुरङ्गस्य हस्त्यश्वरथपदाति-
मयस्य । सुग्रीवेति सुग्रीवस्य शासनेन समासादिताः विविधा हुङ्काराः
येषां तादृशैः हुङ्कारं कुर्वद्भिरित्यर्थः निसर्गेण प्रकृत्या सङ्गतानि मिलि-
तानि गिरिशिखराणि तरवश्च प्रहरणानि अस्त्राणि येषु तादृशानि
पाणियुगलानि येषां तैः पर्वतवृक्षधरहस्तैरित्यर्थः ।

लक्ष्मणः। साधु लङ्केश्वर! साधु (घ) षाड्गुण्योचितमुपक्रान्तं पुनर्निरूपमाननिजसाहसोचितम्।

सुग्रीवविभीषणौ। तदग्रतः किञ्चिदुपसृत्योपविशतु देवः।

रामः। तथा करोति।

कपित्थः। (ङ) परिमिलिअवलीमुहपडिकवलिज्जन्ते णिसाअरसेसे सुणीकदुअ दिअन्तराइं समकालपधाविएहिं पवङ्गमेहिं पडिक्खदसिलुच्चआइं दससहस्सेहिं पूरिआ सा सेतुखण्डो। उत्तीसंअ संपुसं वाणराणीअं दिस्सो लङ्कापुरी एससाहपडहो वज्जिआइं (च) पुरन्दरजआणीदाइं समन्तुराइं पढिआ रावणरणभोगावली वन्दिविन्देहिं। गीदाञ्च

---

क्ष्यमाणजृम्भायमाणकृतान्तपटनघाणासनस्य पतत्त्रेनाविलासिमीकटाक्षलक्षस्य समुद्यद्दूषणलक्ष्मीकङ्कणचक्रचक्रवालस्य उद्द्रुयमानजयश्रीवेणिदण्डपताकासैरुपस्थितस्य चतुरङ्गस्यापि प्रथमचणप्रभावितस्य राक्षसलोकस्य सुग्रीवाग्रासमसमासादितविचिलङ्कारैर्निसर्गसंगतगिरिशिखरतरुप्रहरणपाणियुगलैर्वानरैः प्रतिक्रियमाणस्य राक्षसानीकस्य कलकलः।

---

(घ) षाड्गुण्यस्य सन्ध्यादिगुणषट्कस्य उचितं विहितम्। निरूपमानेति निरूपमानम् अतुल्यं यत् निजसाहसं तस्य उचितम्।

(ङ) परिमिलितेति। परिमिलितैः सर्वतः सम्मिलितैः वलीमुखैः कपिभिः प्रतिकवलीयमाने ग्रस्यमाने। उत्तीर्य समुद्रमिति शेषः। सन्नाहपटहः संग्रामयात्रावाद्यविशेषः।

(च) पुरन्दरस्य इन्द्रस्य जयेन आनीतानि सुरलोकादिति शेषः। वादितानि राक्षसानीकैरिति शेषः। रावणेति रावणस्य रणे भोगा-

केलासुद्धरणपमुहं चरिदुच्चयं चारणेहिं वाणरपडिपक्ख-भावेण च सुणिअन्ति पअट्टहासाइं रक्खसीणं वअणाइं ता-कुणह जहजह कादव्वम् (२)

लक्ष्मणः । भद्र ! विस्रब्धो भव नाद्याप्यायुधग्रहणकालो (*) निर्दयागमानि निर्मेघनादानि च निःसृतानि बलानि ।

दधिमुखः । (छ) सुभटसमाकृष्टकोदण्डदण्डं निहतवान-राक्षभङ्गमलं रभसनिक्षिप्तनिरन्तरभिन्दिपालमालं वेग-प्रवर्त्तितचक्रचक्रं स्खलितविपक्षशक्ति शक्तिनिर्दारितपर-

(२) परिनिष्ठितरावणप्रतिकृतिदह्यमाने निशाचरसैन्ये शून्यी-भवन्ति दिगन्तराणि समकालप्रधावितैः प्लवङ्गमैः प्रतिक्षिप्तगिरिशिखराणां दशवदनैः पूरिता सा सेतुबन्धी । उत्तीर्णं च संपूर्णं वानरानीकम् । दत्तो लङ्कापुर्यां लङ्काऽवपटहः । वादितानि पुरन्दरजयानीतानि समर-तूर्याणि । पठिता राघवचरणभोगावली वन्दिवृन्दैः । गीतञ्च कैलासो-द्धरणप्रमुखचरितोच्चयचारणैः । वानरप्रतिपक्षभावेन च श्रूयन्ते प्रकट-हासानि राक्षसीनां वचनानि तत् कुरुत यथायथा कर्तव्यम् ।

बली प्रशंसावली । कैलासेति कैलासस्य उद्धरणं प्रमुखं यस्य तादृशः । चरितेति चरितानाम् उच्चयः समूहः । वानराणां प्रतिपक्षभावेन प्रातिकूल्येन । प्रकटः महान् हासो येषु तादृशानि ।

(*) निर्दयेति नास्ति दयागमो येषु तानि । निर्मेघेति नास्ति मेघनादो येषु तानि । निःसृतानि निर्गतानि ।

(छ) सुभटेति । सुभटैः सुवीरैः समाकृष्टाः कोदण्डदण्डा धनु-र्दण्डाः यत्र तादृशम् । निहतेति निहताः वानराणाम् अक्षभङ्गानाम्

परशुकं कुवलयवनभ्रमनिपातितसितशकुम्भकुम्भं परहृदयप्र-कम्पनं द्वेधाक्षतकरीन्द्रकरालकरवालं समरप्रचारचतु-राङ्गचतुरङ्गं निर्मर्य्यादप्रसृतमातङ्गमातङ्गं योधजयैकस्य-न्दनस्यन्दनं समासादितविपत्तिनिर्भरं प्रवृत्तमेव प्रचितस-कलानीकमनीकम्। विभाव्य। अये! परस्परं संवलनादति तुमुलं वर्त्तते। विहस्यैकतो निरूप्य।

अमी कबन्धैः प्लवगा रणाङ्गणे

शिरस्सु कण्ठात्पतितेषु रक्षसाम्।

---

मत्ता वीरा यस्मिन् तादृशम्। रभसेति रभसेन वेगेन निक्षिप्ता निर-न्तरा अविच्छिन्ना भिन्दिपालानां माला श्रेणयः यस्मिन् तथाविधम्। वेगेति वेगेन प्रवर्त्तितानि चालितानि चक्रचक्राणि चक्रास्त्रसमूहा यत्र तथा भूतम्। खण्डितेति खण्डिता नाशिता विपक्षाणां शक्तिर्यत्र तथो-क्तम्। शक्तीति शक्तिभिरस्त्रविशेषैः निर्दारिताः परस्य शत्रोः परशवः यत्र तादृशम्। कुवलयानां नीलोत्पलानां वनभ्रमेण निपातितः सितशकुम्भाः श्वेतपक्षिण इव कुन्ता अस्त्रभेदा यस्मिन् तथोक्तम्। परेति परेषाम् अन्येषां वा शत्रूणां हृदयप्रकम्पनम्। द्वेधेति द्वेधाक्षताः खण्डिताः करीन्द्रा यैः तादृशाः करालाः करवाला यस्मिन् तथाभूतम्। समरेति समरप्रचारे युद्धव्यापारे चतुराणि निपुणानि अङ्गानि यस्य तादृशं चतुरङ्गं हस्त्यश्वरथपादातं यस्मिन् तथोक्तम्। निर्मर्य्यादेति निर्मर्य्यादम् उच्छृङ्खलं यथा तथा प्रसृताश्चलिता मातङ्गा इव चण्डालतरव इव मातङ्गा हस्तिनः यत्र तादृशम्। योधेति योधानां वीराणां जये एकं केवलं स्यन्दन्ते चलन्ति इति तथोक्ताः स्यन्दना रथा यत्र तादृ-शम्। समासादितेति समासादिताः प्राप्ता विपत्तिनिर्भरा अत्यापदः येन तथोक्तम्। प्रचितेति प्रचितानि चितानि सकलानि अनीकानि वीरा यत्र तादृशम्। अनीकं सैन्यम्। संवलनात् समाक्रमणात्।

मिथो विरोधाज्जनहासदायिनीं
सृजन्ति सृष्टिं कपिराक्षसात्मिकाम् ॥ ६१ ॥ (ज)

अन्यतोऽवलोक्य ।

निशाचरोऽयं गमितः कबन्धतां
करीन्द्रवक्त्रे पतितेऽधिकन्धरम् ।
प्रहृष्टनृत्यक्रमभीमदर्शनैः
करोति हैरम्बवपुर्विडम्बनाम् ॥ ६२ ॥ (झ)

अपरतोऽवलोक्य ।

अच्छभल्लकपयः स्वकबन्धे-
व्यत्ययादधिनिविष्टशिरस्काः ।
मायया रचितचित्रशरीरा
राक्षसा इव विभान्ति मुहूर्त्तम् ॥ ६३ ॥ (ञ)

---

(ज) अमी इति । अमी प्लवगाः वानराः रणाङ्गणे कण्ठात् पतितेषु रक्षसां शिरःसु सत्सु कबन्धैः तदीयैः शिरोविरहितैः देहैः सह मिथः परस्परं विरोधात् जनानां हासदायिनीं हास्यकरीं कपि-राक्षसात्मिकां वानरराक्षसमयीं सृष्टिं सृजन्ति कुर्वन्ति । वंशस्थविलं वृत्तम् ।

(झ) निशाचर इति । अयं निशाचरः राक्षसः कबन्धतां गमितः प्रापितः कर्त्तितशिराः सन् इत्यर्थः करीन्द्रस्य गजराजस्य वक्त्रे मुखे शरनिकृत्ते इति शेषः अधिकन्धरं ग्रीवायां पतिते सति प्रहृष्टानां नृत्यक्रमाणां भीमदर्शनैः हेरम्बस्य गजाननस्य यद्वपुः शरीरं तस्य विडम्बनाम् अनुकरणं करोति गजानन इव भीमं नृत्यतीति भावः । वंशस्थविलं वृत्तम् ।

(ञ) अच्छेति । अच्छभल्लकपयः ऋक्षवानराः व्यत्ययात् वैपरी

अन्यतोऽवलोक्य ।

> गतं परप्रणतिपरायणं शिर-
>
> स्तमित्सुहृत्करयुगलं च तिष्ठति ।
>
> इतीव ह्री विकसितसम्मदोत्सवं
>
> प्रवर्त्तते किमपि कबन्धताण्डवम् ॥ ६४ ॥ (ट)

कपिः । देव ! पेक्खदु (ठ) अणवरअविप्पइस्सकुसुमचुस्स विअ अन्तरं विरअअन्तं भुवणगब्भप्पसरिदं रअसमुद्दमठ्

---

अधिनिविष्टानि स्कन्धोवासु पतितानि शिरांसि राक्षसानामिति भावः येषां तादृशैः स्वकबन्धैः स्वकीयैः छिन्नमस्तकदेहैः उपलक्षिताः अतएव मायया रचितं चित्रं शरीरं यैः तथाभूता राक्षसा इव मुहूर्त्तं क्षणं विभान्ति विराजन्ते । इन्द्रवज्रावृत्तम् ।

(ट) गतमिति । शिरः परस्य शत्रोः प्रणतिरेव परम् अयनम् आश्रयं गतं प्राप्तं छिन्नं सत् पतितमिति भावः । समित् युद्धसंग्राम-मित्रं करयुगलं बाहुद्वयं च किन्तु तिष्ठति इतीव इत्येवं कारणादिव ह्रीयत्वचमत्कारव्यञ्जकोऽव्ययः । विकसितः उच्छ्वसितः सम्मदेन हर्षेण उत्सवः यत्र तादृशं किमपि अनिर्वचनीयं कबन्धानां ताण्डवं नृत्यं प्रवर्त्तते ।

(ठ) अनवरतेति । अनवरतं विप्रकीर्णानि विक्षिप्तानि कुसु-माणां कुसुमानां चूर्णानि यस्मिन् तादृशं विअदन्तरं गगनावकाशं विरचयन्तं कुर्वन्तं रङ्गाङ्गरजः सम्पातेनेति भावः । भुवनेति भुवन-गर्भेषु पृथिव्यभ्यन्तरेषु प्रसृतं विस्तृतम् अट्टमम् अट्टानां पूर्वं बल-प्रेक्षुसरावपिंडैर्भिदुग्धअत्रात्मका इति वस्तुतावा वप्रसंख्याता एव की-र्त्तनादिह अट्टमत्वेनोत्प्रेक्षितमिति बोध्यम् । रअवा समुद्रं सागरं विस्तारयन्तं तन्वन्तम् ।

ठमं विश्व वित्यारभन्तं (ङ) त्रिदिवदर्शनदत्तपर्याणं विश्व
धरणिमण्डलं दर्शयन्तं विच्छिन्नवसुन्धराफणसभयं रवितुर-

---

(ङ) त्रिदिवेति । त्रिदिवस्य स्वर्गस्य दर्शनार्थं दत्तं पर्य्याणं पृष्ठा-स्तरणविशेष इव यस्य तादृशं धरणिमण्डलं भूतलं रवितुरङ्गमाणां सूर्य्याश्वानाम् आकाशचारिणामिति भावः पिहितं जनितं वसुन्ध-रायाः स्वर्गात् भयं यस्मिन् तद् यथा तथा दर्शयन्तं रवितुरङ्गमाः पर्य्याणितं भूतलं स्वर्गदर्शनार्थमागच्छत् संस्पर्शभयं यथा पश्यन्ति तथा कुर्व्वाणमित्यर्थः । उच्छलितेति उच्छलितेन उद्गतेन भूविलयेन रजः-पटलेन तनिमीकृतः लघूकृतः भूमिभारो यस्य तस्य भावः तथात्वं तेन भुजङ्गानां पतेः शेषस्य अनन्तस्य कृतः महान् अनुग्रहो येन तथाविधम् । वीरेति वीरजनानां संग्रामकृतामिति भावः निवे-शित अभिलषित इति यावत् यो वेशविशेषः परिच्छदभेदः, स पांसुलः रजोमलिनः यासां तासां भावः तथात्वेन हेतुना विद्याधरीभिः वीर-जनचरणार्थं खेचरीभिरिति भावः असूयितः दूषितः विकारो यस्य तादृशम् । प्रदोषेति प्रदोषे रजन्यां विकसितानि कान्तकुसुमलाभ-वशा उन्मिषितानि यानि नयनकमलानि तेषां भरणस्य रजसा पूरणस्य निवारणाय हस्ताभ्यां नियुक्ताभ्यां पाणिभ्यां पिहितानि आच्छादि-तानि वदनानि यासां तासां भावः तथात्वेन अप्सरोभिः सुरनारीभिः जुगुप्सितं दूषितम् । घण्टेति घण्टानां कण्ठघण्टानामिति भावः टङ्कारेण ध्वनिविशेषेण श्रूयमाणा न तु दृश्यमाना रजश्छन्नत्वादिति भावः एवमन्यत्र करीन्द्राः गजाः यस्मिन् तथोक्तम् । कनकेति कनक-किङ्किणीनां स्वर्णक्षुद्रघण्टिकानां झणत्कारेण ज्ञायमानाः स्यन्दना रथा यस्मिन् तथाभूतम् । हेषेति हेषारवेण सूच्यमानाः प्रतीयमाना-स्तुरङ्गा यस्मिन् तादृशम् । कष्टेति कष्टेन आकष्टेन गुणेन मौर्व्या निमिषम् अतिमात्रं नमनीभ्याम् अटनिभ्यां धनुषः अग्रभागाभ्यां लक्षेण

ङ्गाणं उच्छलियधूलिवलयतलिणीकिअभूमिभारत्तणेण कि-
अमहाणुग्गहं भुअङ्गवइणो सेसस्स वीरजणणिवेसिअवेसवि-
सेसपंसुलत्तणेण असूइअवित्थारं विज्जाहरीहिं पओसवि-
असिदपअणकन्दोट्टभरणणिवारणद्दिण्णपाणिपिहिदवअण-
त्तणेण जुउच्छिअं अच्छराहिं घणटाटङ्कारसुणिज्जन्तकरिम्ह-
कणअकिङ्किणीझणक्कारजाणिज्जन्तसन्दणं हेसारवसूइज्ज-
न्ततुरङ्गं कठ्ठिअगुणणिविडणमन्ताटणिमुक्ककडक्कारकलि-
ज्जन्तधाणुक्कं अङ्गपरिप्फंसपडिजाणिज्जन्तरिक्खरक्खसवा-
णरं चउरङ्गबलचडुलचरणक्खोहसमुत्तम्भिअरेणुविरइअणी-
रन्धान्धआरं समरङ्गणं वट्टइ (२)।

---

(२) देव ! प्रेङ्खतामनवरतविप्रकीर्णपुङ्खचूर्णं वियदन्तरं विरचयन्तं भुवनगर्भप्रसृतं रजःसमुद्रमटममिव विस्तारयन्तं त्रिदिवदर्शनदत्तपर्याय-मिव धरणिमण्डलं दर्शयन्तं निहितबहुम्बरासर्गभवं रथितुरङ्गाणां उच्छलितधूलिवलयतलिनीकृतभूमिभारत्वेन कृतमहानुग्रहं भुजङ्गपतेः शेषस्य वीरजननिवेशितवेशविशेषपांशुलत्वेनासूयितविस्तारं विद्याध-

---

कडत्कारेण ध्वनिविशेषेण कथ्यमाना बोध्यमाना धानुष्का धनुर्धरा यस्मिन् तथोक्तम्। अङ्गेति। अङ्गानां शरीराणां परिस्पर्शेन प्रत्यभिज्ञा-यमानाः अनुभूयमानाः ऋक्षा राक्षसा वानराश्च यस्मिन् तथाविधम्। चतुरङ्गेति चतुरङ्गाणां हस्त्यश्वरथपादातरूपाणां बलानां सैन्यानां चरणक्षोभेण पदनिर्दलनेन उत्तम्भिताः उत्क्षिप्ता ये रेणवः रजांसि तैः विरचितं कृतं नीरन्ध्रं निबिडम् अन्धकारं यस्मिन् तथाभूतम्।

रथित्वः । देव ! यथाऽऽवेदितं कपित्थेन प्रति हि निर्भरो (ठ) भूपरागप्रसरः । तथाहि ।

हेलाचञ्चलचमूपरिकरक्षुण्णक्षमाजन्मभिः
पक्वैलाफलगर्भचूर्णरुचिभिः कीर्णेऽम्बरे रेणुभिः ।
एतस्मिन् समराङ्गणे गुणनिधिर्विश्वप्रदीपोऽप्ययं
तूर्णोत्तानितकांस्यतालकरणिर्जातो दिनानां पतिः॥६५॥(ण)

---

रोभिः प्रदोषविकसितनयनकमलभरणनिवारणरत्तपाणिपिहितवदन-त्वेन जुगुप्सितमप्सरोभिः घण्टाटङ्कारस्तूयमानकरीन्द्रं कनककिङ्किणी-झणत्कारश्लाघ्यमानस्यन्दनं हेषारवस्तूयमानतुरङ्गं कटगुणनिविडनद्ध-टनिबद्धकटत्कारवर्ण्यमानधानुष्कं खड्गपरिस्पर्शप्रत्यभिज्ञायमानसर्वराक्षस-वानरं चतुरङ्गबलचटुलचरणक्षोभसमुत्तम्भितरेणुविरचितनीरन्ध्रान्धकारं समराङ्गणं वर्त्तते ।

---

(ठ) निर्भरः आत्यन्तिकः । भूपरागेति भुवः पृथिव्या पुष्पभूताया इति भावः परागाणां रजसां प्रसरः विस्तारः ।

(ण) हेलेति । एतस्मिन् समराङ्गणे अयं गुणानां निधिरालयः विश्वप्रदीपोऽपि दिनानां पतिः सूर्य्यः हेलया अयत्नया चपलम् उच्छृ-ङ्खलं यथा तथा चलन्तीनां चमूनां सेनानां परिकरैः सङ्घातैः क्षुण्णा दलिता या क्षमा पृथ्वी तस्यां जन्म येषां तथाभूतैः पक्वानाम् एलाफ-लानां गर्भेषु यानि चूर्णानि तेषां रुचिः कान्तिरिव रुचिर्येषां तथा-विधैः रेणुभिः रजोभिः अम्बरे आकाशे कीर्णे आच्छादिते सति तूर्णं झटिति उत्तानितं चित्रितं यत् कांस्यतालं तस्य करणिः अनुरूपः जातः । शार्दूलविक्रीडितं वृत्तम् ।

अपि च ।

युद्धोत्थे रजसामुदञ्चति चये द्वाभ्यां दवीयोऽन्तरान्
पाणिभ्यां युगपन्न लोचनपुटानष्टौ पिधातुं क्षमः ।
एकैकं दलमुन्नमय्य गमयन् वासाम्बुजं कोषतां
धाताप्यावरणाकुलः स्थित इव स्वाध्यायवन्ध्याननः॥६६॥(त)

कपिलः । विहस्य । (थ) णिरन्तरपसरन्तसरलक्खपुङ्खविकिरणेण विअडधअवडाआवेल्लिरपल्लवपेल्लणेण दंसणागअसुरसुन्दरीचक्कविमुक्कगरिल्लमल्लवेल्लणेण पढमं तणुईकदं

---

(त) युद्धोत्थे इति । युद्धात् उत्तिष्ठतीति तथोक्ते रजसां रेणूनां चये उदञ्चति उद्गच्छति सति स्वाध्यायेषु वेदपाठेषु वन्ध्यानि निष्फलानि आननानि यस्य तादृशः वेदपाठविरतः रजसामुदये अनध्यायस्य शास्त्रीयत्वात् । धाता ब्रह्मापि दवीयः दूरतरम् अतिदीर्घम् अन्तरम् अवधिर्येषां तादृशान् अष्टौ लोचनपुटान् द्वाभ्यां पाणिभ्यां युगपत् समकालं पिधातुम् आवरीतुं न क्षमः असमर्थः सन् वासाम्बुजम् आसनकमलम् कोषताम् आच्छादकत्वं गमयन् प्रापयन् एकैकं दलमुन्नमय्य उत्तोल्य आवरणेन देहाच्छादनेन आकुल इव व्यग्र इव स्थितः अत्रोत्प्रेक्षालङ्कारः । भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मनेति लक्षणात् । शार्दूलविक्रीडितं वृत्तम् ।

(थ) निरन्तरेति । निरन्तरम् अविरतं प्रसरतां निःसरतां शरलक्षाणां पुङ्खेन क्रमेण यत् विकिरणं विक्षेपणं तेन विकटानां विशालानां ध्वजानां पताकाः चञ्चलपल्लवा इव तेषां प्रेरणेन चालनेन दर्शनागतैः सुरसुन्दरीणां चक्रैः समूहैः विमुक्तानां त्यक्तानाम् उत्कृष्टानां माल्यानां मोक्षणेन निक्षेपणेन च तनूकृतं रणरेणूनां चक्रवालं मण्डलं निष्ठुरेण प्रहारेण हतानां कबन्धानां छिन्नखण्डदेहानां कण्ठरन्ध्रेभ्यः निःसरन्तीनां रुधिरधाराणां धोरणीभिः

रथरेणुचक्रवालं पिठ्ठुरप्पहारकिणकबन्धकन्धरारम्भणोस-
रन्तरुहिरधाराधोरणीहिं करिकरसेलावणिग्गसीअरासार-
प्पसरेण अ णिम्मूलमेव मूलदो धूलिमण्डलम् (४)।

इति च। प्रयान्तरेणुनि रणाङ्गणे पुनः संसक्तमेव (५) अयोधनमायोधनं शूराणाम्। विभाव्य। अये! महाप्रभावः समराङ्गणप्राणपरित्यागो वीरवर्गस्य यदप्सरसोऽपि स्वयंवरेणोपतिष्ठन्ते। यदुत।

चण्डासिच्छेदलीलायितहृतशिरसो दिव्यतां सन्दधाना (६)
न्यञ्चद्भिः कण्ठकाण्डैः समरवसुभुजः पूर्वसंस्कारशक्त्या।
द्रागुद्दृष्ट्वा नाथमाद्यं सपदि विदधतः फालदानं विमाना-
रोहाः स्वःसुन्दरीभिः किमिदमिति धृता बन्धुरैर्बाहुबन्धैः॥ ६७

(४) निरन्तरप्रसरत्खुरखणपुञ्जविजृम्भणेन त्रिकटध्वजपताकाचञ्चल-पल्लवप्रेरणेन दर्शनागतसुरसुन्दरीचक्रविलुठन्नेत्रमाल्यमोक्षणेन प्रथमं तनूकृतं रथरेणुचक्रवालं निष्ठुरप्रहारकृतकबन्धकन्धरारन्ध्रनिःसर-द्रुधिरधाराधोरणीभिः करिकरसेलाप्रेरितशीकरासारप्रसरेण च निर्मूलमेव मूलतो धूलिमण्डलम्।

प्रवाहैः, करिणां हस्तिनां करसेलाः शुण्डादण्डराजयः ताभिः प्रेरितानां शीकरासाराणां प्रसरेण विस्तरेण च निर्मूलं निःशेषेण छिन्नम्।

(५) संसक्तं प्रवृत्तम्। अयोधनं कीर्त्तिकरमित्यर्थः आयोधनं युद्धम्। शूराणां भटानां महान् प्रभावः यस्मात् तादृशः युद्धे प्राणपरित्यागे देवभावावाप्तेरिति भावः।

(६) [illegible]। चण्डेन निशितेन असिना छेदः प्रहारः च

कपीवः । यथैव निवेदितमति हि नामाश्चर्यवितरणैक-
मुष्टियोगः (न) समरसंरम्भो वर्त्तते । तथाहि ।

वीराश्चण्डासिदण्डप्रहरणसुहृदः सम्मुखं सम्पतन्तो
ये जाताः पात्रमाजिष्वनिमिषसुमनोदाम दाम्नोत्सवस्य ।
पश्य प्रेङ्खत्खुरप्रप्रहतिभिरमरीभूय तैरेव भूयः
शेषाणां मूर्ध्नि मुक्ताः सुरकुसुममहावृष्टयः पुष्पभाजः ६८ (प)

---

एव लीला विलासविशेषः तद्वदाचरितं यथा तथा हृतानि शिरांसि येषां ते अतएव दिव्यतां देवत्वं सम्प्राप्ताः प्राप्ताः वीराः पूर्वसंस्का-रस्य समरकालप्रतिभायाः सत्त्वा प्रभावेण वर्गेणेत्यर्थः व्यवहृद्भिः भिन्न-वर्त्तिभिः नमद्भिरित्यर्थः कण्ठकाण्डैः गलदेशैः समरवशहृदयः कुतूहल-नयनाः द्राक् झटिति आद्यं प्रथमं नाथं स्वामिनं दृष्ट्वा सपदि तदृष्टं विमानात् देवयानात् देवत्वे प्राप्तादिति भावः झम्पदानं विदधतः कुर्वन्तः सम्भ्रमेण रणभूमौ पतन्तोत्सुका इत्यर्थः स्वःसुन्दरीभि सुराङ्गना-रीभिः किमिदम् इति सम्भ्रमैः व्यस्तत्वात् उच्छ्रितागतैः बाहुबन्धैः भुज-बन्धनैः आलिङ्गनैरित्यर्थः धृताः अवलम्बिताः । स्रग्धरावृत्तम् ।

(न) आश्चर्येति । आश्चर्याणां चमत्कारणां वितरणे प्रदाने प्रदर्शने इत्यर्थः एकः मुख्यः मुष्टियोगः औषधविनियोगविशेषः ।

(प) वीरा इति । चण्डाः तीक्ष्णा ये असिदण्डाः तान्येव प्रह-रणानि अस्त्राणि सुहृदः सहायाः येषां तथाभूता ये वीराः आजिषु रणेषु सम्मुखम् अग्रतः सम्पतन्तः युध्यमाना इत्यर्थः सन्तः अनिमिषाणां देवानां सुमनो दाम्नां पुष्पमाल्यानां दानोत्सवस्य पात्रं जाताः देवत्वं प्राप्ता इत्यर्थः । पश्य अवलोकय तैरेव वीरैः प्रेङ्खद्भिः चलद्भिः खुर-प्रैरस्त्रविशेषैः याः प्रहतयः प्रहाराः ताभिः अमरीभूय देवत्वं प्राप्य भूयः पुनः शेषाणां संग्रामवर्त्तिनां भटानां मूर्ध्नि शिरसि पुष्पा

विभीषणः। देव! इतोऽपि दृश्यतां द्रष्टव्यम्।

वीरैर्वैमानिकत्वं समरमरणतो लम्भितैः सङ्गराग्रं
दृष्ट्वा स्वस्त्राभिबाधाप्रहरणविरहात्सर्वतः सूत्रितोऽयम्।
हारैः पाशप्रकाशैः सपदि वलयकैश्चक्रवद्भ्राम्यतद्भिः
स्वर्णापीडैः स्वमुसद्रुघणकरणकैर्नूतनो युद्धमार्गः ॥६८॥(फ)

कपिलः। (ब) निबिडपतत्करिकरास्थिसंकुलं स्फारफेत्का-
रफुल्लगल्लशिवासेवितासवं रुधिरपाणपीडगुड्डामरडाम-

---

लग्ना भ्रमरा यासां ताः सुरद्रुमाणां देवतरुपुष्पाणां मन्दारवृष्टयः सृष्टाः विक्षिप्ताः। स्रग्धरावृत्तम्।

(फ) वीरैरिति। समरेषु मरणतः प्राणत्यागेन वैमानिकत्वं देवत्वं लम्भितैः प्रापितैः वीरैः सङ्गराग्रं दृष्ट्वा स्वस्त्राभिनी स्वकर्तृका या बाधा परपीडनमित्यर्थः तस्याः प्रहरणविरहात् अस्त्राभावात् सर्वतः समन्तात् पाशप्रकाशैः पाशास्त्रतुल्यैः सपदि चक्रवत् भ्रम्यतद्भिः भ्रामयद्भिरित्यर्थः वलयकैः कङ्कणैः स्वर्णापीडैः स्वर्णनिर्मितशिरोभूषणैः तथा मुसलद्रुघणकरणकैः सरलभूमिचम्पकपुष्पकरणकैः हारैः स्त्रीभिः सुरनारीभिरित्यर्थः सह अयं नूतनः युद्धमार्गः संग्रामव्यापारः विहाररूप इति भावः सूत्रितः विरचितः। स्रग्धरावृत्तम्।

(ब) निबिडेति। निबिडं भीरण्यं यथा तथा पतद्भिः करिणां कर-[illegible]रस्थिभिः सङ्कुलं व्याप्तम्। स्फारेति स्फारैः उच्चैः फेत्कारैः "फेउ फेउ इति" रवविशेषैः फुल्लाः गल्ला यासां ताभिः शिवाभिः शृगालैः सेविताः पीता आसवाः सुराः रूपाणि शोणितानि इत्यर्थः यत्र तथाभूतम्। रुधिरेति रुधिराणां पाने वल्गीकृतं परस्परं बाधनं येन उड्डा-मराभिः प्रचण्डाभिः डाकिनीभिर्मुक्तेन डात्कारेण डामरं भयावहम्। रक्षेति रक्षेन, शोणितपानेन मत्तानां वेतालविद्याधिनीनां भूतानामा

णीमुक्तडाङ्कारडामरं रक्तमत्तवेतालविलासिनीकेलिकलि-
तकिलिकिलाकोलाहलसंकुलं समरसंभारसंभावितप्रव-
लवलीमुखबलाक्रान्तं राक्षससैन्यं लङ्काभिमुखं प्रवर्त्तते (५)।

हनूमान् । विहस्य देव ! विजितमस्माभिर्यत् प्रमुख (भ) एव विमुखं राक्षसबलम् ।

रामः । प्रवृत्ते रणकर्मणि सेनयोः(म)सारणापसरणानि गणशो भवन्ति कस्तत्र जयः पराजयो वा ।

हनूमान् । देव ! नैवं यत् किल प्रमुखविमुखं बलं द्वादशवर्षाणि न सम्मुखो भवतीति प्रायोवादः ।

रामः । विहस्य । भद्र हनूमन् ! किमनेन विमुखेन सम्मुखेन वा यदिह न (य) धूर्जटिधराधरोद्धारेऽप्यकुण्ठो

---

(५) निबिडपतत्करिकरङ्कसङ्कुलं स्फारफेत्कारफुल्लगल्लशिवाशिवितारवं रुधिरपानपीडनोड्डामरडाकिनीमुक्तडात्कारडामरं रक्तमत्तवेताल-विलासिनीकेलिकलितकिलिकिलाकोलाहलसङ्कुलं समरसम्भारसम्भावितप्रबलवलीमुखबलाक्रान्तं राक्षससैन्यं लङ्काभिमुखं प्रवर्त्तते ।

---

केलिकलितेन क्रीडार्जितेन किलिकिलाकोलाहलेन सङ्कुलं व्याप्तम् । समरेति समरसम्भारेण युद्धव्यापारेण सम्भावितैः सम्मानितैः प्रबलैः बलीमुखबलैः वानरसैन्यैः आक्रान्तम् अभिभूतम् ।

(भ) प्रमुख एव प्रारम्भे एव ।

(म) सारणापसरणानि साम्मुख्यवैमुख्यानि । गणशः क्रमशः । प्रमुखविमुखं प्रमुखे प्रारम्भे विमुखम् । प्रायोवादः प्रायशः प्रसिद्धिः ।

(य) धूर्जटीति । धूर्जटेः धराधरस्य कैलासस्य उद्धारे उत्पा-

रुद्धकण्ठो नापि विनिर्जितमघवा मेघनादः। पुरोऽवलोक्य।
कथं लङ्काप्रतोलीमतिक्रम्य राक्षसबलं वर्त्तते। ऊर्द्ध्वमवलोक्य
सकौतुकम्।

(२) कोऽयं दिव्ये विमाने

हनूमान्।

रजनिचरपतिः

लक्ष्मणः।

साधु पौलस्त्य! साधु

द्राक् चण्डं चन्द्रहासं कलय सविधगे नास्त्यरातौ तितिक्षा।

---

ठने। विनिर्जितः मघवा इन्द्रः येन तादृशः। इह न स्यादिति शेषः। लङ्केति लङ्कायाः प्रतोलीं मार्गमतिक्रम्य भयात् अपथेनापि इति भावः वर्त्तते गच्छति।

(२) कोऽयमिति। दिव्ये विमाने पुष्पके इत्यर्थः अयं कः? रजनिचराणां राक्षसानां पतिः। हे पौलस्त्य! रावण! साधु साधु प्रशंसामि त्वामिति भावः। द्राक् झटिति चण्डं प्रचण्डं चन्द्रहासं स्वकीयमसिं कलय गृहाण, सविधगे सम्मुखवर्त्तिनि अरातौ शत्रौ तितिक्षा क्षमा नास्ति नैव कर्त्तव्या इति भावः। सीतापि अत्रैव पुष्पके एव, स एष रावणः तस्याः सीतायाः चटुषु प्रियोक्तिषु मधुरवचनेषु कृता रतिः अनुरागः येन तथाभूतः सन् आस्ते इति शेषः, भोः! मे कार्मुकं धनुः देहीति शेषः। शान्तं निवर्त्ततां देव! इति भावः सरन्तः गच्छन्तः बाणाः शराः जनकजां रावणं वा न खलु नैव विदन्ति जानन्ति रावणं प्रति निक्षिप्ताः शराः यदि सीतां छिन्द्यु-रिति भावः। रामहनूमल्लक्ष्मणसुग्रीवाणाम् उक्तिप्रत्युक्तिपूर्वोऽयं श्लोक इति बोध्यम्। स्रग्धरावृत्तम्।

रामः।

सीताप्यनेव तस्याघट्टषु कृतरतिः सैष भोः! कार्मुकं मे

सुग्रीवः।

मान्तं बाणाः सरन्तो न खलु जनकजां रावणं वा विदन्ति॥

नेपथ्ये।

भोः पश्य राम! मम पार्श्वगतां च सीतां
तच्च प्रदर्शय निजं जितवालि वीर्य्यम्।
अस्याः स एष ननु मूर्धनि चन्द्रहासो
रम्भाप्रकाण्डदलनोद्यममातनोति॥ ७९॥ (ल)

रामः। विहस्य। हंहो रावण! (व) संहर जनितजन-हासं चन्द्रहासं कः शक्तिमानपि मृगाङ्कमूर्त्तिं शिलापट्टके पिनष्टि।

लक्ष्मणः। सविषादम्।

यावत् करोति न धनुः सशरं ममार्य्यो
यावन्न सूत्रयति विक्रमणं हनूमान्।

---

(ल) भो इति। भो राम! मम पार्श्वगतां सीतां पश्य च जितः वालिः येन तादृशं तत् निजं वीर्यं बलं प्रदर्शय च। ननु निश्चितं स एव चन्द्रहासः अस्याः सीतायाः मूर्द्धनि रम्भायाः कदल्याः प्रकाण्डस्य स्कन्धदेशस्य दलने खण्डने यः उद्यमः उद्योगः तम् आतनोति विस्तारयति कदलीकाण्डमिव अस्या मुण्डं छिनत्तीति भावः। वसन्ततिलकं वृत्तम्।

(व) संहर सङ्गोपय। मृगाङ्कमूर्त्तिं चन्द्रबिम्बं पिनष्टि दलति।

आर्य्याशिरो दशमुखेन विलूय तावत्
क्षिप्तं च कल्पितसदर्शनमम्बरे च ॥ ७२ ॥(ग)

रामः । सकम्पम् । कथमिदं दशकण्ठेन विलूय क्षिप्तं सीताशिरः शर्करायां (घ) भुवि पतति तत् सत्वरमुपसृत्य स्तनतटपरिपीडनपरिचितस्पर्शं प्रसारितकरयुगलमितोऽमुतो प्रतीच्छामि । तथा कृत्वाऽवलोक्य च । हा वैदेहि ! शिरःशेषा वर्त्तसे । सकरुणं विभाव्य ।

तरुणभुजगलीला सैव वेणी तदेव
श्रवणयुगमनङ्गन्यस्तदोलाद्वयाभम् ।
स्मरधनुर्वलयभाग्यावीक्षणे ते च तस्या-
स्तदयमरुणलक्ष्मा वक्त्रचन्द्रः स एव ॥ ७३ ॥(ङ)

---

(ग) यावदिति । मम आर्य्यः रामः यावत् चक्षुः प्रसरं न करोति, लक्ष्मणः यावत् विक्रमणं न कलयति न ?कटयति तावत् दशमुखेन रावणेन आर्य्यायाः सीतायाः शिरः विलूय छित्त्वा क्षिप्तञ्च अम्बरे आकाशे सदर्शनं कल्पितञ्च यौगपद्यरूपकं च द्वयम् । सीतायाः शिरश्छित्त्वैव रावणोऽन्तर्दधे इत्यर्थः । अत्र छेदनतिरोधानरूपयोः क्रिययोः यौगपद्यात् समुच्चयालङ्कारः तदुक्तं समुच्चयोऽयमेकस्मिन् सति कार्य्यस्य साधके । खले कपोतिकान्यायात् तत्करः स्यात् परोऽपि चेत् । गुणौ क्रिये वा युगपत् स्यातां यद्वा गुणक्रिये इति । वसन्ततिलकं वृत्तम् ।

(घ) शर्करायां कर्करावत्याम् । स्तनतटयोः परिपीडनेन मर्द्दनेन परिचितः अभ्यस्तः स्पर्शः येन तादृशे । प्रतीच्छामि गृह्णामि ।

(ङ) तरुणेति । तस्याः इति शेषः । सैव तरुणस्य भुजगस्येव

हा प्रिये वैदेहि !

इन्दोः सम्प्रति कान्तिरस्तु विमला दीर्घा मृगीणां दृशः
स्वादिष्ठा कलकण्ठिशावकगिरः किसलयान्येकान्तरक्तानि च ।
यातायां त्वयि तस्य राक्षसपतेर्दुःसञ्चरं गोचरं
यद्वा तस्य गभीरमास्यकुहरं दुर्मेधसो वेधसः ॥ ७४ ॥(घ)

सविमर्षकरुणम् ।

देव्याः शिरो मम पुरो यदिदं विलूनं
दृष्टं छलाद्दशमुखो यदसौ प्रनष्टः ।

---

लीला विलासो यस्यास्तादृशी वेणी केशपाशः अनङ्गेन कामेन न्यस्तं गच्छितं यत् लीलाद्वयं तस्येव आभा यस्य तादृशं तदेव श्रवणयुगं कर्ण-युगलम् । ते च शरस्य कामस्य कुवलयवाणौ नीलोत्पलमयौ शरौ शरासने इत्यर्थः ईक्ष्येते । अयञ्च सकलकलङ्का पूर्णकान्तकलङ्कः स एव वक्त्रचन्द्रः मुखशशी । मालिनीवृत्तम् ।

(घ) इन्दोरिति । त्वयि तस्य राक्षसपतेः रावणस्य दुःस-ञ्चरं दुर्गमं गोचरं स्थानं यद्वा अथवा तस्य दुर्मेधसः दुर्बुद्धेः वेधसः विधातुः दैवस्येत्यर्थः गभीरम् आस्यकुहरं मुखगह्वरं यातायां प्राप्तायां सत्यां सम्प्रति इदानीम् इन्दोश्चन्द्रस्य कान्तिः विमला अस्तु तव सम्मुखे अस्तमिता दृष्टेति भावः । मृगीणां दृशः नयनानि दीर्घाः भवन्तु इति शेषः तव सम्मुखे खर्वीकृता इति भावः । कलकण्ठिवाक् कोकि-लाकूजितं स्वादिष्ठा स्वादुतरा अतिमधुरा इत्यर्थः भवतु इति शेषः । तव सम्मुखे खर्वेया इति भावः । किसलयानि नवपल्लवानि एकान्त-रक्तानि अतिलोहितानि च भवन्तु इति शेषः । तव सम्मुखे विरक्ता-नीति भावः । शार्दूलविक्रीडितं वृत्तम् ।

धिङ्निष्फलं हनुमतः प्लवनं तदब्धौ
धिङ्निष्फलः स च ममाचलसेतुबन्धः ॥ ७५ ॥(क)

सर्वे। विषादं नाटयन्ति।

लक्ष्मणः। सक्रोधम्। अरे रे समरकुण्ठ! दशकण्ठ!

छद्मात्मना जनकजानिधनेन्धनेन
यो दीपितः सपदि नो हृदि शोकवह्निः।
निर्वापयिष्यति पतिस्तमसौ रघूणां
त्वत्कामिनीजनविलोचनवारिपूरैः ॥ ७६ ॥(ख)

रामः। अवस्थोचितं स्मृत्वा। सखे सुग्रीव!। वयस्य विभीषण! रावणवधे (ग) विहितप्रतिज्ञाः स्मता वयं वत्सेन।

---

(क) देव्या इति। यत् यदि इदं देव्याः सीतायाः शिरः मम पुरः अपतत् विलूनं छिन्नं दृष्टम्, यत्र असौ दशमुखः कस्मात् प्रभवः प्रभावितः, तदा तत् हनुमतः अब्धौ प्लवनं निष्फलं धिक् निन्दामी-त्यर्थः धिक् निर्भर्त्सननिन्दयोरित्यमरः। स च मम अचलैः सेतुबन्धः निष्फलः तस्य धिक्। वसन्ततिलकं वृत्तम्।

(ख) छद्मेति। छद्मात्मना गुप्तशरीरेण त्वयेति शेषः जनकजायाः निधनं वध एव इन्धनं काष्ठं तेन नः अस्माकं हृदि सपदि सहसा यः शोकवह्निः शोकानलः दीपितः प्रज्वालितः, असौ रघूणाम्पतिः रामः तव कामिनीजनानां विलोचनवारिपूरैः अश्रुप्रवाहैः तं शोकवह्निं निर्वापयिष्यति अचिरात् त्वां हनिष्यतीति भावः। वसन्ततिलकं वृत्तम्।

(ग) विहितप्रतिज्ञाः प्रतिज्ञारूढाः। वत्सेन लक्ष्मणेन।

लक्ष्मणः । आश्चर्यमाश्चर्यम् । (घ) निर्लूनमप्यार्य्यागिरः समुत्पतति तत्सविधवर्त्तिनो भूत्वा शृणुमः । सर्वे तथा कुर्वन्ति ।

लक्ष्मणः । कथं स्फुटाक्षरमिदमभिधत्ते ।

सूत्रधारचलद्दारुगात्रेयं यन्त्रजानकी ।
कण्ठस्थशारिकालापा कृता लङ्केशकेलये ॥ ७७ ॥(ङ)
तच्छिरस्थैव निर्य्याता साचाऽहं राम ! शारिका ।
सच्चरित्ररसप्रीत्या त्वां बोधयितुमास्थिता ॥ ७८ ॥ (च)
तेन तेऽग्रेऽभिनीताऽस्याः शिरः खण्डननाटिका ।
मृता सीतेति येन त्वं गृहान् प्रति निवर्त्तसे ॥७९॥(छ)

सर्वे । हर्षं नाटयन्ति ।

---

(घ) निर्लूनं निःशेषेण लूनं छिन्नम् आर्य्यायाः सीतायाः शिरः । सविधवर्त्तिन समीपगताः ।

(ङ) सूत्रेति । सूत्रधारः शिल्पिविशेषः तेन तत् प्रयत्नेनेति भावः चलत् दारुमयं गात्रं यस्याः तथाभूता, कण्ठस्थया शारिकया आलपतीति तथोक्ता इयं यन्त्रजानकी लङ्केशस्य रावणस्य केलये विनोदनार्थं कृता निर्मिता ।

(च) तदिति । हे राम ! तस्मिन् शिरसि तिष्ठतीति तथोक्ता शारिका निर्याता निर्गता सती सच्चरित्रे शिष्टाचारे यो रसः अनुरागः तत्प्रीत्या तव सच्चरित्रगुणानुरागेणेति भावः त्वां बोधयितुम् आस्थिता उपस्थिता ।

(छ) तेनेति । तेन रावणेन ते तव अग्रे अस्याः यन्त्रजानक्याः शिरः खण्डननाटिका शिरश्छेदरूपं नाट्यम् अभिनीता प्रयुक्ता प्रदर्शिता इत्यर्थः येन अभिनयेन अभिनयदर्शनेनेत्यर्थः सीता मृतेति बुद्धा त्वं हताशः सन् गृहान् प्रति निवर्त्तसे ।

रामः । स्वस्ति भवत्यै प्रियकारिण्यै तत्समीहित-सिद्धये(ज)साधय । निष्क्रान्ता । अहो ! मौर्व्य इव छद्मप्रपञ्चेऽपि चातुर्य्यं रावणस्य ।

लक्ष्मणः । आर्य्य ! (झ) सुवेलाचलमेखलासु तावदावसन्तु कपियूथपतयः प्रातर्लङ्कादुर्गमभियोक्ष्यते ।

रामः । यदि न प्रशान्तामर्षो रावणः समरत्येव प्रत्यभियुङ्क्ते ।

नेपथ्ये । महान् कलकलः ।

लक्ष्मणः । किं पुनरयं (ञ) भैरवाकारगद्भुरकृतफेत्कारविकरालः कलकलः ।

विभीषणः । पुरोऽवलोक्य ।

> कुप्यन्मृगाधिपमुखाय करीन्द्रवर्गं
> कुप्यत्खलापवदनाय च वाजितुण्डम् ।
> आसेधयन् सपदि रात्रिचराननेन
> पर्य्यंत्ययं दशभुजो ननु सिंहनादः ॥ ८० ॥(ट)

---

(ज) समीहितस्य वाञ्छितस्य सिद्धये साधनाय साधय गच्छ ।

(झ) सुवेलेति । सुवेलो नाम अचलः यत्र लङ्का प्रतिष्ठितेति भावः तस्य मेखलासु नितम्बेषु । अभियोक्ष्यते आक्रमिष्यति ।

(ञ) भैरवेति । भैरवः अतिभीषणः आकारो यस्य तादृशेन गद्भुरेण वृकेण वा शृगालेन कृतः यः फेत्कारः रवविशेषः तद्वत् विकरालः विशेषेण भयावहः ।

(ट) कुप्यदिति । ननु भोः ! अयं दशभुजः दशाननः सिंहनादः

रामः । कथय कोऽयं सिंहनादो नाम ।

विभीषणः । देव । (ठ) मान्दोदरेयो मेघनादावरजः समरसीमानमवतरति तेनायमस्ति मांसलः कलकलः ।

रामः । विहस्य । तदयमर्धं(ड)रावणस्य ।

विभीषणः । अवयवसंस्थानेन (ढ) । पराक्रमेण पुनर्द्विगुणो यतः ।

दोर्दण्डोद्भ्राम्यमाणाचलचलितभवत्संभ्रमनारम्भमज्ज-
द्भुग्नग्रागारभारान्निजभुजविपिनं कुर्वतो न्यस्तदुर्गैः ।
खट्टानाथस्य नन्दिप्रभृतिषु दलयत्सत्त्वभङ्गं महाक्ष्वे-
ळेकं वेगाद्गनेष्वपि रचिततरं सिंहनादं स्मरामि ॥ ८१ ॥(ण)

---

कुप्यते मृगाधिपमुखाय सिंहवदनाय करीन्द्रगण्डं गजराजमुखं कुप्यते तुलापवदनाय महिषमुखाय वाजितुरङ्गम् अश्वमुखम् आवेशयन् योजयन् रात्रिचराननेन राक्षसमुखेन सिंहनादः सिंहनादं कुर्वन्नित्यर्थः सपदि सहसा पर्येति आयाति पञ्चमुखो दशकण्ठः सिंहनादोऽयमागच्छतीति वाक्यार्थः ।

(ठ) मान्दोदरेयः मन्दोदर्या अपत्यं पुमान् मान्दोदरेयः मन्दोदरीगर्भसम्भूतः । मेघनादस्य इन्द्रजितः अवरः कनिष्ठः । मांसलः स्थूलः महानित्यर्थः ।

(ड) अर्धं रावणस्येति रावणस्य विंशतिहस्तदशाननत्वात् अस्य तु दशहस्तपञ्चाननत्वादिति भावः ।

(ढ) अवयवसंस्थानेन अवयवानां हस्तानां मुखानाञ्च संस्थानेन गणनया कर्तृभिरिति शेषः ।

(ण) दोर्दण्डेति । दोर्भिरेव दण्डैर्विंशत्या दण्डैः उद्भ्राम्यमाणा

ततः प्रविशति यथानिर्दिष्टः सिंहनादः ।

सिंहनादः । पुरोऽवलोक्य । कथमन्तरिततापसं(त)वानर-सेनापतिभिरभिमुखीभूतम् ।

रामः । किं पुनरयं पुरतोऽन्धकार इव ।

कपित्थः । देव । (थ) देवादेसमन्तरेणवि जम्बवन्तमुक्क-हुङ्काररवाइं हणुमन्तमन्तपरिसरिआइं विप्फुरिअभी-

---

उत्पाद्यमानः यः अचलः कैलासः तत्र चलितस्य भवस्य शम्भोः यः सम्भ्रमारम्भः सम्भ्रमं हार्य्यं चावस्थानमेव आरम्भः व्यापारः तेन अचलतः निमग्नस्य सुदृढं स्थितस्य इत्यर्थः वृषस्य हरस्य अथवा मज्जतां वृषाणां दिग्वृषाणां प्राग्भारभारात् प्रकृष्टभारवत्त्वात् न्यञ्चत् नमत् निजभुजक्षेपिणं स्वं भुजारण्यम् उच्चैः उन्नतं कुर्वतः लङ्कानाथस्य रावणस्य अङ्कम् अङ्कं प्रत्यङ्कं नन्दिप्रभृतिषु गणेषु मध्यस्थैः इव यत्, खण्डयतस्य यस्य अनेकेष्वपि तेषु नन्द्यादिषु वेगात् रचितरणं कृत-पराक्रमम् एकं सिंहनादं करोमि । कैलासस्योत्क्षेप्तारं रावणं नन्द्या-दयो बहवो गणा अत्यर्थं विक्लवं कृतवन्तोऽपि एकेन अनेन सिंहना-देन सर्वे पराजिता इति स्मर्य्यते इति वाक्यार्थः । स्रग्धरावृत्तम् ।

(त) अन्तरितः अन्तर्लीनः तापसो यत्र तत् यथा तथा । अभि-मुखीभूतं भावे क्तप्रत्ययः ।

(थ) देवस्य प्रभोः आदेशम् आज्ञाम् अन्तरेणापि विनापि । जा-म्बवदिति जाम्बवता मुक्तः हुङ्काररवः शब्दविशेषः येषु तानि । हणु-मदिति हनुमतः मन्त्रेण मन्त्रणया परामर्शेनेत्यर्थः प्रवृत्तानि चलि-तानि । विप्फुरितेति विस्फुरिता भीमा भीषणा भुजदण्डा येषां तानि । विक्रोशमाणेति विक्रोशमानानि तारतराणि उच्चैस्तराणि महागर्जितानि कलकलध्वनयः येषां तथोक्तानि । कायेति कायया कान्त्या निर्जितानि परिपक्वानि पनसफलानि कदलीफलानि यथा पिङ्ग-

पभुअदण्डाइं वित्थरन्ततारतारगलगज्जिदाइं छाआ-
णिज्जिअपरिपक्कपणसफलणाइं पिसङ्गिअगअणङ्गणाइं
सुसेणाहिट्ठिअसेणाणिवेसाइं णीलप्पहाणीलिअदसदि-
सन्तराइं वलीमुहकिलिकिलारअभरिअदरीमुहाइं णल-
प्पहावाणलदुज्जआइं समुल्लसिअकुमुदकन्तिकुमुअकित्तिस-
न्ताणाइं सिंहणादसम्मुहमोत्थरिआइं णीसेसाइं वि
वाणरवलाइं (६) ।

---

(६) देवादेशमन्तरेणापि जाम्बुवन्मुक्तहुङ्कारवाणि हनूमन्मन्त्र-प्रसृतानि विस्फुरितभीमभुजदण्डानि विस्तीर्णमाणतारतारगलगर्जि-तानि छायानिर्जितपरिपक्कपनसफलानि पिशङ्गितगगनाङ्गनानि सुषेणा-धिष्ठितसेनानिवेशानि नीलप्रभानीलितदशदिगन्तराणि वलीमुखकि-लिकिलारवभरितदरीमुखानि नलप्रभावानलदुर्जयानि समुल्लसितकुमुद-कान्तिकुमुदकीर्त्तिसन्तानानि सिंहनादसम्मुखमवतीर्णानि निःशेषाण्येव वानरबलानि ।

---

ङ्गितानि पिङ्गलीकृतानि गगनाङ्गनानि अन्तरीक्षाभोगाः यै तथो-क्तानि । सुषेणेति सुषेणेन सेनापतिना अधिष्ठितः रक्षितः सेनानि-वेशो येषां तानि । नीलेति नीलस्य सेनापतेः प्रभया नीलितानि नील-वर्णीकृतानि दशदिशाम् अन्तराणि अवकाशा येषु तानि । वलीति वलीमुखानां वानराणां किलिकिलारवैः भरितानि पूरितानि दरी-मुखानि गुहाविवराणि येषां तानि । नलेति नलस्य प्रभावानलेन प्रभावाग्निना दुर्जयानि जेतुमशक्यानि । समुल्लसितेति समुल्लसितस्य प्रस्फुटितस्य कुमुदस्येव कान्तिर्यस्य तथाभूतस्य कुमुदस्य सेनापतिविशे-षस्य कीर्त्तिसन्तानाः यशःप्रसरा येषु तानि ।

दधिमुखः। अथ युगपत् क्षुभितानि (द) दशार्धसंख्यान्यपि सिंहनादमुखानि। ततश्च

धूत्कारध्वनितं मृगेन्द्रवदनाद्दन्त्याननाद् बृंहितं
बंहिष्ठं च तुलापतुण्डकुहरक्रोडान्तराद् द्राक्कृतम्।
जातं चार्वणवक्त्रकन्दरदरादेतस्य हेषाकृतं
संख्ये कस्य भयोदयाय न वचो निर्यच्च रक्षोमुखात्॥८२(ध)

कपिमुखः। तदो देव! (न) णिविडभुअदण्डपीडणाविसद-टङ्कारं कदुअ कोदण्डं तह वरिसिदुं पउत्ता वाणाविट्ठिं वाणारविन्दे जह ण सुरसुन्दरीविमुक्को कुसुमुक्केरो सुभटेसु णिवडइ। ण समरङ्गणगअं रेणुचक्कमङ्गमइ दिअन्तरा-

---

(द) दशार्द्धसङ्ख्यानि पञ्च इत्यर्थः।

(ध) धूत्कारेति। सङ्ख्ये युद्धे एतस्य रावणसुतस्य मृगेन्द्रवदनात् सिंहमुखात् धूत्कारध्वनितं नादविशेष इत्यर्थः, दन्त्याननात् गजाननात् बृंहितं बृंहणध्वनिः, तुलापतुण्डकुहरक्रोडात् महिषाननाभ्यन्तरदेशात् बंहिष्ठं बहुलं जरत् निःसरत् द्राक्कृतं ध्वनिविशेषः, आर्वणवक्त्रकन्दरदरात् अश्वमुखगह्वरात् हेषाकृतं हेषाध्वनिः, रक्षोमुखात् राक्षसमुखात् निर्यत् निर्गच्छत् वचश्च कस्य जनस्य भयोदयाय न जातम् अपि तु सर्वस्यैव भयाय इत्यर्थः। शार्दूलविक्रीडितं वृत्तम्।

(न) निविडेति। निविडैः दृढैः भुजदण्डैः पीडनेन अविशदः कठिन इत्यर्थः टङ्कारः यस्य तादृशं कोदण्डं धनुः। सुरसुन्दरीति सुरसुन्दरीभिर्विद्याधरीभिः विमुक्तः विक्षिप्तः कुसुमानां पुष्पाणाम् उत्करः निचयः सुभटेषु सुयोद्धृषु। रेणुचक्रं रजः पटलम्। दिनेति दिनकराः दिवसप्रवर्त्तकाः ये किरणाः तेषां व्यापारे प्रसारे प्रकटः समुद्गतः। गगनमाणिक्यस्य सूर्य्यस्य।

लाइं। ण दिणअरकिरणवावारपअडोवि गअणमाणिक्क-
स्स पसरइ रओ (७)।

सिंहनादः। पुरोऽवलोक्य साट्टहासम्।

रेरे कृतघ्नाः प्लवगपशवः! किं भवद्भिर्भवद्भिः
संग्रामाग्रे मम रणरसो लम्भितः सर्वभावम्?।
यस्मिन् कस्मिन्न खलु समरे रोचको सिंहनाद-
स्तस्मै रामं कथयत स हि श्रूयते वीरसिंहः॥८३॥(प)

कपित्थः। वाणवरिसपीडिअं विअ वाणरवलं पज्जाउलं
जंबुद्दीवाहिमुहं वट्टइ (८)।

---

(७) ततो देव! निबिड़भुजदण्डपीड़नाविघटटङ्कारं कृत्वा कोदण्डं तथा वर्षितुं प्रवृत्तो बाणवृष्टिं वानरवृन्दे यथा न सुरसुन्दरीविमुक्तः कुसुमोत्करः सुभटेषु निपतति। न समराङ्गणगतं रेणुचक्रमाक्रामति दिगन्तराणि। न दिनकरकिरणव्यापारप्रकटोऽपि गगनमाणिक्यस्य प्रसरति रयः।

(८) बाणवर्षपीड़ितमपि वानरवलं पर्य्याकुलं जम्बुद्वीपाभिमुखं वर्त्तते।

---

(प) रे रे इति। रे रे कृतघ्नाः सर्वे प्लवगपशवः! वानरपशवः! भवद्भिः युष्माभिः संग्रामाग्रे भवद्भिः संग्रामशिरःस्थायिभिः सद्भिः मम रणरसः रणेषु आस्वादः सर्वभावं सर्वप्रकारं लम्भितः प्रापितं किम्? नैवेत्यर्थः। भवद्भिः सह संग्रामे न मम सर्वथा तृप्तिरस्तीति भावः। सिंहनादः अहमित्यर्थः यस्मिन् कस्मिन् समरे युद्धे न खलु नैव रोचकी अभिलाषीत्यर्थः तत् तस्मात् मे मह्यं रामं कथयत ब्रूत हि यतः सः

सिंहनादः । भूयो विलोक्य । किमेताभिर्विजिताभिरपि वानरकोटिकोटिभिः । हस्तानुद्दिश्य ।

हे पाणयो ! विधृत पञ्च महाधनूंषि
पञ्चापि येन युगपत्प्रतियोधयामि ।
सुग्रीवमग्रदमनं च सहाङ्गदेन
रामं च रामजयिनं सह लक्ष्मणेन ॥ ८४ ॥(फ)

भूयः पुरो विलोक्य साट्टहासम् । कथं तेऽपि महावीरवानरसेनापतयोऽपि नश्यन्ति (ब) । किञ्चिदुच्चैः ।

सुग्रीवाङ्गदमैन्दनीलकुमुदप्रह्लादताराद्यः ! (भ)
किं मुग्धाः स्थ निजान् गृहान् प्रति यथादृष्टेन याताध्वना ।
पातालार्पितशैलजालरचनारम्यक्रमोत्तम्भितो
नन्वास्ते विपुलः स वो जलनिधावद्यापि सेतुः स्थिरः ॥८५॥

---

वीरसिंहः वीरेषु सिंहः श्रेष्ठ इत्यर्थः श्रूयते । अहं रामेण सहैव युद्धार्थी, युष्माभिः क्षुद्रैर्नेति भावः । मन्दाक्रान्तावृत्तम् ।

(फ) हे पाणय इति । हे पाणयः ! भुजाः ! पञ्च ! यूयं पञ्चापि महाधनूंषि विधृत धारयत, येन धारणेन अहं युगपत् समकालं सुग्रीवं अङ्गदेन सह अग्रदमनम् अग्रस्य मम भ्रातुः दमनं हन्तारं हनुमन्तमित्यर्थः । तथा लक्ष्मणेन सह रामजयिनं भार्गवजेतारं रामञ्च प्रतियोधयामि । वसन्ततिलकं वृत्तम् ।

(ब) नश्यन्ति पलायन्ते ।

(भ) सुग्रीवेति । हे सुग्रीवाङ्गदमैन्दनीलकुमुदप्रह्लादताराद्यः वानरसेनापतय इत्यर्थः यूयं किं कथं मुग्धाः इति कर्त्तव्यविमूढाः स्थ भवथ, यथादृष्टेन अध्वना पथा निजान् गृहान् प्रति यात गच्छत !

रामः । वत्स लक्ष्मण ! किमेतत् ।

लक्ष्मणः । सगर्वमग्रतो भूत्वा । रे रे विकृताकार ! दुराचार ! नृमांसकवलनदक्ष ! राक्षसापसद ! (म) किमिदमतिप्रगल्भमाभाषसे नन्वदृष्टवीरप्रकाण्डचरितचण्डिमाऽसि ।

सिंहनादः । अनाकर्णितकेन वानरताडनं नाटयित्वा । रे कृत्स्नाः प्लवगपशव इत्यादि पठति ।

रामः । साधु सिंहनाद ! साधु न (य) ह्रेपितस्त्वया वीरवर्गवरिष्ठो दशकण्ठः ।

सिंहनादः ।

राम ! राम ! मयि मुञ्च सायकान्
प्राक्प्रहाररुचिरेष रावणिः ।
येन ते चरममाशु दर्शये-
च्छस्त्रतन्त्रमयमेतदम्बरे ॥ ८६ ॥ (र)

रामः । सधैर्य्यमवलोक्य विहस्य च ।

---

ननु ! भो ! पातालेषु अर्पितानां स्थापितानां शैलजालानां पर्वतनिचयानां रचनायाः विन्यासस्य यः रम्यः मनोहरः क्रमः परिपाटी तेन उत्तम्भितः निर्मितः विपुलः महान् स्थिरः कठिनः वः युष्माकं जलनिधौ समुद्रे सेतुः अद्यापि आस्ते तिष्ठति । शार्दूलविक्रीडितं वृत्तम् ।

(म) अति प्रगल्भम् अत्युद्धतम् । अदृष्टेति । न दृष्टः वीरप्रकाण्डानां महावीराणां चरितचण्डिमा प्रचण्डचरित्रमित्यर्थः येन तादृशः ।

(य) ह्रेपितः लज्जां गमितः ।

(र) रामेति । हे राम राम ! मयि सायकान् शरान् मुञ्च निक्षिप, एष रावणिः रावणनन्दनः सिंहनादः प्राक् पूर्वं प्रहारे प्रहारा-

सिंहनादः । भूयो विलोक्य । किमेताभिर्विजिताभिरपि वानरकोटिकोटिभिः । इत्यातुहिश्य ।

हे पाणयो ! विधृत पञ्च महाधनूंषि
पञ्चापि येन युगपत्प्रतियोधयामि ।
सुग्रीवमग्रजदमनं च सहाङ्गदेन
रामं च रामजयिनं सह लक्ष्मणेन ॥ ८४ ॥(फ)

भूयः पुरो विलोक्य साट्टहासम् । कथं तेऽपि महावीरवानरसेनापतयोऽपि नश्यन्ति (ब) । किञ्चिदुच्चैः ।

सुग्रीवाङ्गदमैन्दनीलकुमुदप्रह्लादताराद्यः ! (भ)
किं मुग्धाः स्थ निजान् गृहान् प्रति यथादृष्टेन याताध्वना ।
पातालार्पिंतशैलजालरचनारम्यक्रमोत्तम्भितो
मग्नास्ते विपुलः स वो जलनिधावद्यापि सेतुः स्थिरः ॥८५॥

---

वीरसिंहः वीरेषु सिंहः श्रेष्ठ इत्यर्थः श्रूयते । अहं रावणस्य सहैव युद्धार्थी, युष्माभिः क्षुद्रैर्नेति भावः । मन्दाक्रान्तावृत्तम् ।

(फ) हे पाणय इति । हे पाणयः ! भुजाः ! पञ्च ! यूयं पञ्चापि महाधनूंषि विधृत धारयत, येन धारणेन अहं युगपत् समकालं सुग्रीवं अङ्गदेन सह अग्रजदमनम् अग्रजस्य मम भ्रातुः दमनं हन्तारं हनूमन्तमित्यर्थः । तथा लक्ष्मणेन सह रामजयिनं भार्गवजेतारं रामञ्च प्रतियोधयामि । वसन्ततिलकं वृत्तम् ।

(ब) नश्यन्ति पलायन्ते ।

(भ) सुग्रीवेति । हे सुग्रीवाङ्गदमैन्दनीलकुमुदप्रह्लादताराद्यः वानरसेनापतय इत्यर्थः यूयं किं कथं मुग्धाः इति कर्त्तव्यविमूढाः स्थ भवथ, यथादृष्टेन अध्वना पथा निजान् गृहान् प्रति यात गच्छत !

रामः । वत्स लक्ष्मण ! किमेतत् ।

लक्ष्मणः । सगर्वमग्रतो भूत्वा । रे रे विकृताकार ! दुरा-चार ! नृमांसकवलनदक्ष ! राक्षसापसद ! (म) किमिदम-तिप्रगल्भमाभाषसे नन्वदृष्टवीरप्रकाण्डचरितचण्डिमाऽसि ।

सिंहनादः । अनाकर्णितकेन वानरताडनं नाटयित्वा । रे कृतघ्नाः प्लवगपशव इत्यादि पठति ।

रामः । साधु सिंहनाद ! साधु न (य) ह्रेपितस्त्वया वीरवर्गवरिष्ठो दशकण्ठः ।

सिंहनादः ।

राम ! राम ! मयि मुञ्च सायकान्
प्राक्प्रहाररुचिरेष रावणिः ।
येन ते चरममाशु दर्शये-
च्छस्त्रतन्त्रमयमेतदम्बरे ॥ ८६ ॥ (र)

रामः । सधैर्य्यमवलोक्य विहस्य च ।

---

ननु ! भो ! पातालेषु अर्पितानां स्थापितानां शैलजालानां पर्वतनि-चयानां रचनायाः विन्यासस्य यः रम्यः मनोहरः क्रमः परिपाटी तेन उत्तम्भितः निर्मितः विपुलः महान् स्थिरः कठिनः वः युष्माकं जल-निधौ समुद्रे सेतुः अद्यापि आस्ते तिष्ठति । शार्दूलविक्रीडितं वृत्तम् ।

(म) अति प्रगल्भम् अत्युद्धतम् । अदृष्टेति । न दृष्टः वीरप्रका-ण्डानां महावीराणां चरितचण्डिमा प्रचण्डचरित्रमित्यर्थः येन तादृशः ।

(य) ह्रेपितः लज्जां गमितः ।

(र) रामेति । हे राम राम ! मयि सायकान् शरान् मुञ्च नि-क्षिप, एष रावणिः रावणनन्दनः सिंहनादः प्राक् पूर्वं प्रहारे प्रहारा-

धिग्धिक् निशाचरपतिं शुकसारणौ धिग्
धिङ्मेघनादमथ धिग्दश राजपुत्रान् ।
यैस्त्वं विचित्रवपुषा चिरमीक्षणीयः
क्रूराशयैरुपहृतो रणदेवतायै ॥ ८७ ॥ (ल)

सिंहनादः । राघव ! अति हि नाम दृप्यसि किं पुन-
र्दर्पस्य कारणं किञ्चन ते चरितेषु व्रीडिताः स्मः ।
स्त्रीमात्रं ननु ताड़का भृगुभवो रामश्च विप्रः शुचि-
र्मारीचो मृग एष भीतिभवनं वाली पुनर्वानरः ।
भोः काकुत्स्थ ! विकत्थसे कथय किं वीरो जितः कस्त्वया
दोर्दर्पस्तु तथापि ते यदि ततः कोदण्डमारोपय ॥८८॥(व)

---

धिगमे इत्यर्थः रुचिः अभिलाषः यस्य तादृशः । येन प्रकारेण अयं सिंहनादः आशु शीघ्रम् अम्बरे आकाशे एतत् चरमं सर्वश्रेष्ठमित्यर्थः शस्त्रतन्त्रम् अस्त्रजालं ते तुभ्यं दर्शयेत् । त्वम् अग्रतः प्रहर ततोऽहं ते पराक्रमं दर्शयिष्यामीति भावः । इन्द्रवज्राहत्तम् ।

(ल) धिग्धिगिति । निशाचरपतिं रावणं धिक् निन्दामीत्यर्थः । धिक् निर्भर्त्सननिन्दयोरित्यमरः यस्य पुत्रेऽपि निःस्नेहतेति भावः । शुक-सारणौ तन्मन्त्रिणौ धिक् वृथा मन्त्रणं तयोरिति भावः । मेघनादम् इन्द्रजितं धिक् यस्य कनिष्ठे भ्रातरि प्रमाद इति भावः अथ अतः-परं दश राजपुत्रान् अन्यान् अन्यान् रावणसुतान् धिक् येषाम् ईदृशे महावीरे भ्रातरि निर्दयतेति भावः । यैः क्रूराशयैः निष्ठुरमतिभिः रावणादिभिः विचित्रवपुषा सुन्दरेण शरीरेण हेतुना चिरम् ईक्षणीयः दर्शनीयः दृष्टिपथात् बहिष्कर्त्तुमनर्ह इति भावः त्वं रणदेवतायै संग्रामाधिष्ठात्र्यै देव्यै उपहृतः उपहारत्वेन प्रदत्तः । अहं त्वां शोधं दिष्यामीति भावः । वसन्ततिलकं वृत्तम् ।

(व) स्त्रीमात्रमिति । भोः काकुत्स्थ ! ककुत्स्थकुलोद्भव राम !

लक्ष्मणः । विहस्य ।

स्त्री ताड़कास्तु तद्‌घाते गुर्वाज्ञा गुरुकारणम् ।

मारीचोऽप्यस्तु स मृगः चात्रं हि मृगयारसम् ॥८८॥ (ञ)

परशुरामब्राह्मणदमने शृणु सूक्तं वैतालिकस्य ।

योजम्भं जितवान् इत्यादि पठति । बालिविजये पुन-रुपालभ्यसे (ध)।

रामः ।

बाली वलीमुख इति ब्रुवता त्वयैव

लङ्कापतेर्मलिनितो यशसां प्ररोहः ।

---

ताड़का स्त्रीमात्रं ननु सामान्या नारी खलु, भृगुभवः रामश्च शुचिः पवित्रः तपोनिष्ठ इति भावः । विप्रः ब्राह्मणः । एष मारीचः मृगः बाली पुनः भीतिभवनं भयनिकेतनं भीरुस्वभाव इत्यर्थः वानरः कपिः, एषां जये कस्तव पौरुषप्रसर इति भावः । तथापि किं कथं विकत्थसे दर्पयसि, कथय वद, त्वया को वीरः जितः ? न कोऽपीत्यर्थः, तथापि ते तव यदि तु दोर्दर्पः बाहुबलाहङ्कारः, ततस्तर्हि कोदण्डं कार्मुकम् आरोपय मौर्व्या सङ्गमय युध्यस्वेति भावः । शार्दूलविक्रीड़ितं वृत्तम् ।

(ञ) स्त्रीति । ताड़का स्त्री अस्तु भवतु तस्या घाते वधे गुरोर्विश्वामित्रस्य आज्ञा गुरु महत्कारणं हेतुः गुरोराज्ञया आर्य्येण ताडका-निहतेति कस्तत्र दोष इति भावः । स मारीचः मृगः अस्तु भवतु तद्वधे नास्ति दोष इति भावः हि यतः क्षात्रं क्षत्रियधर्मः मृग-यायां रसः अनुरागः यत्र तादृशम् । क्षत्रिया मृगयया विहरन्तीति मात्र दोषोऽस्तीति भावः ।

(ध) वैतालिकस्य स्तुतिपाठकस्य सूक्तं शोभनं वचनम् । उपाल-भ्यसे तिरस्क्रियसे ।

न्यूनाज्जयो यदिह लब्ध स चापि तेन
दोर्मूलपञ्जरशुको विहितः पिता ते ॥ ८० ॥ (म)

सिंहनादः । सक्रोधम् । रे रे क्षत्रिय ! तातमधिक्षिपसि तदेष शितमुखैः (ह) शिलीमुखैरवकीर्य्यसे ।

रामः । भ्रतुद्यम्य । रे रे राक्षसपोत ! त्वमपि प्रत्यवकीर्य्यसे किन्तु (च) लङ्कापुरीगोपुरपरिसरवसुन्धरासु शरविसेपादिह त्सुपौरजना उद्विजिता भवन्ति तत् किञ्चिदुपसृत्य समरसंरम्भमारभामहे ।

इति निष्क्रान्ताः सर्वे ॥

॥ असमपराक्रमो नाम सप्तमोऽङ्कः ॥

---

(म) बालीति । बली बालीसुखः वानर इति ब्रुवता वदता त्वयैव लङ्कापतेः रावणस्य यशसां कीर्त्तीनां प्ररोहः अङ्कुरः मलिनितः कलङ्कितः यस्मात् इह संसारे न्यूनात् लघोर्जनात् जयः पराभवः लब्ध कलङ्कः कलङ्करूपेण लोकैर्गण्यते इति भावः । यतः तेन बालिना स च ते तव पिता रावणः दोर्मूलं बाहुमूलमेव पञ्जरः तस्य शुकः पक्षिविशेषः विहितः कृतः, पुरा सागरकूले सन्ध्योपासनकाले जिगीषयाऽऽगतं तव पितरं वीक्ष्य कक्षे गृहीत्वा चतुर्षु समुद्रेषु सन्ध्यामुपासाञ्चक्रे इति भावः । वसन्ततिलकं वृत्तम् ।

(ह) शितमुखैः तीक्ष्णाग्रैः शिलीमुखैः शरैः अवकीर्य्यसे आच्छाद्यसे । मयेति शेषः ।

(च) लङ्केति । लङ्कापुर्य्यां यत् गोपुरं द्वारं पुरद्वारन्तु गोपुरमित्यमरः । तस्य परिसर वसुन्धरासु निकटभूमिषु । अपसृत्य स्थानान्तरं गत्वेत्यर्थः ।

## ॥ अष्टमोऽङ्कः ॥

अतःपरं वीरविलासो भविष्यति।

ततः प्रविशतो राक्षसौ।

एकः। सखे दुर्मुख! किमपि महान् (क) सत्त्वभ्रंशो रावणस्य यत्कुमारसिंहनादवधमप्याकर्ण्य न शोकः कृतो नाप्यमर्षः केवलमेकं तुलाद्यूतं प्रवर्त्तितं तत्र च लङ्काधिपत्यं सीतापहारिता न पुनरर्पिता।

दुर्मुखः। अज्ज सुमुह! सामिणीए (ख)तिजडाए समादिट्टं जह गच्छदं अङ्गदणरन्तयाणं एक्कतुलं पेक्खह जेण तुम्हमुहादो सुणिअ सीदादेवीए णिवेदइस्सं ता दुवे वि अह्मे गदत्ति एत्तिअमहं जाणामि ण उण कारणं ता कहीअदु जहा पडिवत्तम् (१)

(१) आर्य्य सुमुख! स्वामिन्या त्रिजटया समादिष्टं यथा ग·

(क) सत्त्वभ्रंशः प्राणिक्षयः। अमर्षः विद्वेषः तुलाद्यूतं तुलाक्रीड़नम्। अयं भावः एकतस्तुलादण्डकोटौ लङ्काधिपत्यम् अपरतः अपहृता सीता, तत्रापि यदि लङ्काधिपत्यमपि गच्छेत् तदपि सीतां न प्रत्यर्पयामीति प्रतिज्ञातमिति।

(ख) त्रिजटया कयाचित् हद्धराक्षस्या। अङ्गदः वालिसुतः नरा-

समुखः । परं लङ्केश्वरेण शुकसारणौ प्रहितौ दाशर-
थिमभिधातुमभिहितं च ताभ्याम् ।

वक्त्राम्भोजार्चनाभिः फलमभिलषितं हेलया यस्य लिप्सोः (ग)
सोत्कण्ठं कण्ठकाण्डेष्वहमहमिकया खड्गधाराग्रगेषु ।
स्त्रीति त्यक्तप्रणामप्रकुपितगिरिजाकृष्टवामार्धपाणि-
स्तोषोदस्तान्यहस्ता झटिति न घटिता शाम्भवी तालतीला ॥

---

छतम् अङ्गदनराान्तकयोरेकतुलां प्रेक्षेतां येन युष्मन्मुखात् श्रुत्वा
सीतादेव्यै निवेदयिष्यामि तदु श्रावयामां च गताविल्येतावदहं जानामि
न पुनः कारणं तत् कथ्यतां यथा प्रतिपन्नम् ।

---

न्तकः रावणसुतः तयोः एकाम् अद्वितीयां तुलां सादृश्यं प्रेक्षेतां
पश्येतम् । प्रतिपन्नं बुद्धम् ।

(ग) वक्त्रेति । हेलया अवलीलया वक्त्राण्येव मुखान्येव दशेत्यर्थः
अम्भोजानि पद्मानि तैः अर्चनाभिः पूजाभिः अभिलषितं फलं त्रैलो-
क्याधिपत्यमिति भावः । लिप्सोः लब्धुमिच्छोर्यस्य रावणस्य कण्ठकाण्डेषु
सोत्कण्ठं सोत्सुकं यथा तथा अहमहमिकया अहमग्रतः खड्गधा-
रायां पतामि अहमग्रत इत्येवं रूपया खड्गधारायाः अग्रगेषु अग्र-
वर्त्तिषु क्रमशः छिन्नेषु इत्यर्थः स्त्री इति इयं गौरी स्त्री तत् कथं
प्रणम्यते इति त्यक्तेन प्रणामेन प्रणतिपरित्यागेनेत्यर्थः रावणः कदापि
देवीं स्त्रीति न प्रणनामेति भावः । प्रकुपितया गिरिजया पार्वत्या
आकृष्टः वरप्रदानात् निवर्त्तित इत्यर्थः वामार्द्धस्य पाणिः अर्द्धाङ्गा-
धारित्वात् देव्या इति भावः । यस्यां तादृशी, तोषेण रावणं प्रति
सन्तोषेण उदस्तः वरदानार्थमुत्क्षिप्तः अन्यहस्तः दक्षिणार्द्धपाणिः

स निशाचरचक्रवर्त्ती त्वामाह यदुत किमखिलवान-रराक्षसक्षयकरेण संग्रामेण तदेकं तुलाद्यूतं प्रवर्त्तयावः तत्र च ।

त्वत्काङ्कारविजये तव राम ! लङ्का
सीता च ते पुनरियं भवतोऽस्तु दाराः ।
मत्काङ्कारविजये तु ममाधिपत्यं
तस्यां च ते पुरि कलत्रजने च तत्र ॥ २ ॥ (घ)

दुर्मुखः । तद्दोतद्दो ? (२) ।

सुमुखः । ततश्च (ङ) हासलवलाञ्छिताधरमुद्रेण राम-

---

(२) ततस्ततः ।

---

यस्यां तथाभूता शाल्मली शम्भुसम्बन्धिनी तान्त्रलीला करतलवाद्यविलासः झटिति तत्क्षणात् न घटिता न कर्त्तुं शक्नोति यावत् । स निशाचर-वर्त्तीत्यनेनमान्वयः । स्रग्धरावृत्तम् ।

(घ) त्वदिति । हे राम ! तव अयं त्वत्कः इदमर्थे कन्प्रत्ययः । अङ्क एव अङ्कारः शरीरमात्रं कारतकारौ स्वरूपे इत्यौणादिकः कार-प्रत्ययः । त्वत्केन त्वदीयेन अङ्कारेण शरीरमात्रेण विजये सति यदि त्वमेकाकी एव मां जेतुं शक्नोषि तदेत्यर्थः ते तव लङ्का अस्तु सीता च भवतः दाराः अस्तु । मत्केन अङ्कारेण शरीरमात्रेण विजयेतु यदि अहमेव एकाकी त्वां जेतुं शक्नोमि तदेत्यर्थः तस्यां ते तव पुरि अयोध्यायां तत्र तव कलत्रजने सीतायामित्यर्थः मम आधि-पत्यम् अस्तु इति शेषः । वसन्ततिलकं वृत्तम् ।

(ङ) हासेति । हासलवेन ईषद्धास्येन लाञ्छिता शोभिता अधर-मुद्रा यस्य तेन । द्रुहिणस्य ब्रह्मणः प्रपौत्रः प्रपौत्रः रावण इत्यर्थः ।

भद्रेणाभिहितं यदाह दुर्भिक्षप्रथमा । किं पुनरावयोरङ्ग-कारत्वमुचितं ययोरन्तरङ्गोऽभियोगः ।

दुर्मुखः । तदोतदो ? (३) ।

समुखः । ततश्च (च) निरुपमानरामपराक्रमशङ्किता-भ्यामुक्तं शुकसारणाभ्यां यदुत महानायकयोर्नायं क्रम इति कुम्भकर्णाग्रजस्वामिदमाह ।

दुर्मुखः । तदोतदो ? (४) ।

समुखः । ततश्च सौमित्रिसुग्रीवविभीषणजाम्बवदाञ्जने-यप्रभृतिभिर्निषिद्धेनापि (छ) तथेत्यभ्युपगम्याङ्गकारीकृतः कुमारोऽङ्गदो रघूद्वहेन निजपुत्रो नरान्तकस्तु लङ्केश्वरेण ।

---

(३) ततस्ततः ? ।

(४) ततस्ततः ? ।

---

अङ्गकारत्वं केवलशरीरमात्रसाधनत्वम् । अन्तरङ्गः सहायप्रचुर इत्यर्थः अभियोगः युद्धार्थमाक्रमणव्यापारः ।

(च) निरुपमानेति । निरुपमानेन अतुल्येन रामपराक्रमेण शङ्किताभ्याम् । यदुत यत्र महानायकयोः महासहायसम्पन्नयोर्नाय-कयोः । क्रमः नियमः । कुम्भकर्णाग्रजः रावणः । महासहायस्य नायकस्य स्वयमग्रतः न प्रवर्त्तितव्यं तस्मात् प्रथमतः सहायेनैव साध्यते इति भावः ।

(छ) निषिद्धेनापि निवारितेनापि । अभ्युपगम्य स्वीकृत्य । अ-ङ्गकारीकृतः स्वशरीरीकृतः प्रतिनिधीकृत इत्यर्थः । अयं भावः यदि मम अङ्गदो जेष्यति तदा मम लङ्का सीता च अस्तु इति रामाभिप्रायः, यदि नरान्तको जेष्यति तदा मम अयोध्या सीता च अस्तु इति राव-णाभिप्राय इति ।

दुर्मुखः । भोः किं पुण (ज) णियभुअदण्डमण्डलीपरक्कमे अणासंसा देवस्स जेण णरन्तअबाहुस्स समारोविअं सङ्कार-ज्जम् (५) ।

रावणः । (झ) असमञ्जसकारितायां किमुच्यते स्वामी ? ।

किञ्च ।

मृत्युं यदैव गमितो युधि सिंहनादः
शक्तिर्यदैव च वृथा भरताग्रजेऽभूत् ।
सीतार्पणं नृपसुताय तदैव युक्तं
मोहस्तु तत्र रजनीचरकालरात्रिः ॥ ३ ॥ (ञ)

दुर्मुखः । जुवराअमेहणादस्स उण का वत्ता ? (६)

---

(५) भोः किं पुनर्निजभुजदण्डमण्डलीपराक्रमे नाशंसा देवस्य येन नरान्तकबाहुषु समारोपितं सङ्काराज्यम् ।

(६) युवराजमेघनादस्य पुनः का वार्त्ता ? ।

---

(ज) निजेति । निजाभिः भुजदण्डमण्डलीभिः पराक्रमे देवस्य रावणस्य न आशंसा न जयप्रत्याशा इत्यर्थः ।

(झ) असमञ्जसेति । असमञ्जसकारितायाम् अयुक्तानुष्ठानकारित्वे सति यदि स्वामी स्वयम् अयुक्तम् अनुतिष्ठति तदेत्यर्थः स्वामी किम् उच्यते कथ्यते ? अनुजीविभिरिति शेषः । अनुजीविभिः स्वामी न वारणीय इति भावः ।

(ञ) मृत्युमिति । यदैव सिंहनादः युधि मृत्युं गमितः प्रापितः निहत इत्यर्थः रामेणेति शेषः । यदैव शक्तिः रावणप्रेरितास्त्रविशेषः भरताग्रजे रामे वृथा अभूत् । तदैव नृपसुताय राजपुत्राय रामाय सीतार्पणं युक्तम् उचितम् आसीदिति शेषः । तत्र तस्मिन् विषये

रावणः।

यद्बद्धो नागपाशैः प्रचुरतमतमःश्यामले रात्रिमध्ये
यद्युद्धं यन्नभस्तः शरपतनविधिर्मायया छन्नमूर्त्तेः।
यद्भक्तिर्मन्त्रजिह्वे प्रसरति च रथं नित्यजैत्रं प्रयाचे
तन्मन्ये मेघनादोऽप्यनुभवति भयं राघवाद् समन्तः ॥४॥ (ट)

अपि च।

लङ्का दुर्गं जलधिपरिखादुर्गमं राक्षसेन्द्र-
स्तस्याः स्वामी सुरजनवधूचामरैर्वीज्यमानः।
रामः शाखामृगपरिगतो मानुषस्तद्विपक्ष-
स्तत्रैतस्मिन् जयविधिरिति व्रीडया नः कलङ्कः ॥ ५ ॥ (ठ)

---

सीतार्पणे इत्यर्थः मोहस्तु अविवेकस्तु सीताया अनर्पणमिति भावः। रजनीचराणां राक्षसानां कालरात्रिः संहारनिशा, सीताया अनर्पणेन अचिरात् राक्षसकुलक्षयो भविष्यतीति भावः।

(ट) यदिति। यत् यस्मात् प्रचुरतमैः अतिगाढैः तमोभिः अन्धकारैः श्यामले रात्रिमध्ये न तु दिवसे इति भावः। नागपाशैः बद्धः राघव इति शेषः। यत् यस्मात् नभस्तः आकाशात् न तु भूतलादिति भावः युद्धं, यत् यस्मात् मायया छलेन छन्ना तिरोहिता शरप्रहार-भयादिति भावः मूर्त्तिर्यस्य तथाभूतस्य शरपतनमेव विधिः व्यापारः, यत् यस्मात् प्रयाचे गुह्यशालायां रथं नित्यजैत्रं सततजयसाधनं यथा भवति इति हेतोः मन्त्रजिह्वे अग्नौ भक्तिः प्रसरति च प्रत्यहं जैत्ररथप्राप्तये अग्नौ होमं करोतीति भावः। तत् तस्मात् मेघनादोऽपि राघवात् रामात् अन्तर्गुप्तं केनाप्यलक्षितमिति भावः भयं अनुभवति इति मन्ये सम्भावयामि। स्रग्धरावृत्तम्।

(ठ) लङ्केति। लङ्का दुर्गं लङ्काख्यम् अपरदुर्गमं स्थानं तदपि

दुर्मुखः । जं णिम्मलमदिचक्खुणो पेक्खन्ति तं दिट्टं अ-
ज्जसुमुहेण (७) ।

सुमुखः । अलममुना राक्षसविरुद्धकथानुबन्धेन यथा-
दिष्टमेव कुर्वः । उभौ परिक्रामतः ।

दुर्मुखः । एसा सामिणी तिअडा अज्ञं पडिवालअन्ती
चिठ्ठइ ता एहि उवसप्पह्म । (८) तथा कुरुतः ।

ततः प्रविशति त्रिजटा ।

त्रिजटा । सौत्सुक्यमालोक्य । हंहो दुम्मुह । सुमुह !
तुरिअं उवसप्पह णिवेदेह वुत्तन्तं । (९) उभौ प्रण-
म्योपविशतः ।

सुमुखः । स्वामिनि त्रिजटे ! लङ्कापुरीं पूर्वेण (ङ)

(७) यन्निर्मलमतिचक्षुषः पश्यन्ति तद् दृष्टमार्य्यसुमुखेन ।

(८) एषा स्वामिनी त्रिजटा आर्य्यां प्रतिपालयन्ती तिष्ठति तदे-
ह्युपसर्पावः ।

(९)हंहो दुर्मुख ! सुमुख ! त्वरितमुपसर्पतं निवेदयतं वृत्तान्तम् ।

जलधिरेव परिखा तथापि दुर्गमम् अतिदुर्गसमित्यर्थः जलधेरलङ्घ्यत्वा-
दिति भावः । तस्याः लङ्कायाः स्वामी सुरजनानां वधूभिः अङ्गनाभि-
र्वन्दीभूताभिरिति भावः । चामरैः वीज्यमानः राक्षसानाम् इन्द्रः अधि-
पतिः रावणः । शाखामृगैः वानरैः परिगतः युक्तः मानुषो रामः
तस्य रावणस्य विपक्षः शत्रुः । तत्र एतस्मिन् रामे जयविधिः विजय-
लाभः भवतीति शेषः, इति व्रीडया लज्जया नः अस्माकं रजनीचराणां
कलङ्कः अकीर्त्तिः । मन्दाक्रान्तावृत्तम् ।

(ङ) लङ्कापुरीं पूर्वेण लङ्कापुर्याः पूर्वस्यां दिशि इत्यर्थः सुवेला-
चलं पश्चिमेन सुवेलस्य पश्चिमायां दिशि इत्यर्थः उभयोर्मध्ये इति

सुवेलाचलं च पश्चिमेन उभयतो मञ्चः परिमितप्राकारपरिष्कृतः स्तोकसमुन्नतः समुन्नतसमस्तजनप्रेक्षणीयो रत्नाश्मवाटे कारितो राक्षसराजेन तत्र च प्राच्यमञ्चाधिरूढे ससौमित्रिसुग्रीवविभीषणे रामे नीलाधिष्ठिते च वानरबले प्रतीच्यमञ्चाधिरूढे च सशुकसारणे दशकण्ठे प्रहस्ताधिष्ठिते च राक्षसबले गगनाङ्गनगतासु च वीरजनचरितकुतूहलिनीषु सुरसुन्दरीषु ताडितमल्लभटीतूर्य्यौ माङ्गल्यकलशानुगतौ निशितकृपाणपाणी प्रविष्टावङ्गकारौ ।

ततश्च ।

> रत्नत्रिकङ्कणविभूषितदोःप्रकाण्ड-
>
> श्रीखण्डपाण्डुरितदेहभरं च रूपम् ।
>
> युद्धाङ्गनेऽङ्गदनरान्तकयोर्निरीक्ष्य
>
> चक्षुर्निमेषविमुखं सुतमप्सरोभिः ॥ ६ ॥ (ठ)

---

भावः । मञ्चः पर्य्यङ्कः । परिमितेति परिमितेन प्राकारेण वेष्टनविशेषेण परिष्कृतः परिच्छिन्नः । स्तोकम् अल्पं समुन्नतः । समुन्नतैः आयतदेहैरित्यर्थः न तु खर्वाकृतिभिरिति भावः प्रेक्षणीयः दर्शनीयः । रत्नाश्मवाटे रत्ननिर्मिते अश्मवाटे व्यायामभूमौ । वीरेति वीरजनानां चरितेषु संग्रामव्यापारेषु कुतूहलिनीषु दर्शनार्थं कौतुकवतीषु । ताडितेति ताडितं वादितं मल्लभटीनां योद्धृवीराणां तूर्य्यं वाद्यभेदः ययोस्तथाविधौ । निशितेति निशितः शाणितः कृपाणः असिः पाणौ ययोस्तादृशौ अङ्गकारौ अङ्गदनरान्तकौ ।

(ठ) रत्नेति । युद्धाङ्गने संग्रामभूमौ रत्नैः रत्ननिर्मितैः त्रिभिः कङ्कणैः कराभरणविशेषैः विभूषितौ अलङ्कृतौ दोःप्रकाण्डौ प्रशस्त-

त्रिजटा । तदोतदो ? (१०) ।

दुर्मुखः । तदो अ समुत्तीरिअ मञ्चादो णीलपहत्थेहिं सेणावईहिं किट्टएसु अन्तरद्दण्डेसु विरइआलीढपाआ दोवि संमुहं संठिआ अहुआए पउत्ता अ रणमण्डले मण्डलीए भमिउं (ण) (११) ।

त्रिजटा । तदोतदो (१२) ।

दुर्मुखः । तदो अ ताणं विविहं वग्गन्ताणं (त) उपरि

---

(१०) ततस्ततः ? ।

(११) ततश्च समुत्तीर्य्य मञ्चात् नीलप्रहस्ताभ्यां सेनापतिभ्यां कृष्टयोरन्तरदण्डयोर्विरचितालीढपादौ द्वावपि सम्मुखं संस्थितावहुङ्कारौ प्रवृत्तौ च रणमण्डले मण्डल्या भ्रमितुम् ।

(१२) ततस्ततः ? ।

---

भुजौ यस्मिन् तथाभूतं श्रीखण्डेन चन्दनविलेपनेन पाण्डुरितः धवलितः देहभरः यस्मिन् तादृशञ्च अङ्गदनरान्तकयोः रूपं चक्षुषोर्निमेषेण विमुखं यथा तथा निरीक्ष्य अप्सरोभिः सुरसुन्दरीभिः स्तुतं प्रशंसितम् । वसन्ततिलकं वृत्तम् ।

(ण) कृष्टयोः आकृष्टयोः अन्तरदण्डयोः मध्यस्थितदण्डयोः सतोरित्यर्थः । विरचितौ आलीढपादौ अवस्थानविशेषेण निविष्टौ पादौ याभ्यां तादृशौ आलीढस्थानयुक्तौ यथा । स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम् । त्रिवितस्त्यन्तरौ पादौ मण्डलं तोरणाकृति । अन्वर्थं स्यात् समपदम् आलीढन्तु ततोऽग्रतः । दक्षिणे वामकाङ्कुञ्च प्रत्यालीढं विपर्य्यय इति ।

(त) वल्गतोः विचरतोः । प्रेषयतोः कुर्वतोः । प्रेषितं [illegible]

ताडणे णमन्ताणं तलताडणे उप्पअताणं अणवरअप्पहारप-
रम्परं पेसअंताणं पेसिअं पडिच्छन्ताणं दिठ्ठिं वञ्चअन्ताणं
अरक्खिअमम्मं रक्खिन्ताणं अणदो दंसिअ अणदो पहर-
न्ताणं संभरिआसेसधीरत्तणेण वंसविसेसं छुरिआजुअलं
उज्झिअ अणुणमाहरन्ताणं पअट्टं तं जुज्झं (१३)।

त्रिजटा। तदो तदो ? (१४)।

उभयः।

चारी सुचित्रपदता स्थिरता च दृष्टेः
क्रान्तिर्भुवः प्रहृतियोजनवञ्चनेन।
सर्वाङ्गकाररणकर्मणि मात्रिकेय-
मुल्लीर्य्य तत्र समये कथितेव ताभ्याम्॥ ७॥ (घ)

---

(१३) ततश्च तयोर्विविधं वल्गतोरुपरि ताडने नमतोस्तलताडन उत्प-
ततोरनवरतप्रहारपरम्परां प्रेषयतोः प्रेषितं प्रतीच्छतोर्दृष्टिं वञ्चयतो-
ररक्षितमङ्गं रक्षतोरन्यतो दर्शयित्वाऽन्यतः प्रहरतोः सम्भृताशेषधीरत्वेन
वंशविशेषं छुरिकायुगलमुत्सृज्यान्योन्यमाहरतोः प्रवृत्तम् तद् युद्धम्।

(१४) ततस्ततः ?।

---

प्रयुक्तं प्रहारमिति शेषः प्रतीच्छतोः गृह्णतोः। सम्भृतेति सम्भृतं
सम्यक् गृहीतम् अशेषं सम्पूर्णं धीरत्वं याभ्यां तयोक्तौ तयोर्भावः तत्त्वं
तेन नितरामचञ्चलत्वेनेत्यर्थः। आहरतोः प्रहरतोः।

(घ) चारीति। चारी विचरणविशेषः, सुचित्रपदता पदविक्षेप-
चातुर्य्यं दृष्टेः स्थिरता, प्रहृतेः प्रहारस्य योजनम् आपतनं तस्य वञ्च-
नेन यथा प्रहारो न गात्रेषु पतेत् तथा कृतेनेति भावः। भुवः रण-

अपिच ।

> यथा यथा प्रहरति वालिनन्दन-
> स्तथातथा हरिहरिभिः स्मितं मुदा ।
> यथायथा प्रहरति रावणात्मज-
> स्तथातथा किलिकिलितं च राक्षसैः ॥ ८ ॥ (द)

त्रिजटा । तदोतदो ? (१५) ।

दुर्मुखः । तदो अ ताणं णिब्भरं पअट्टे (ध) समरसंघट्टे चरणेण चरणमप्फालिअ दरणमन्तस्स णरन्तअस्स रोमञ्चणिविडरअणाङ्गदेणाङ्गदेण कन्धराकण्डबुद्धबन्धे खित्ता

---

(१५) ततस्ततः ।

---

स्यत्वात् क्रान्तिः उत्पतनापतनानुष्ठानमित्यर्थः । सर्वेषाम् अहङ्काराणां रणकर्मणि युद्धव्यापारे द्वयम् उक्तप्रकारा मात्रिका नियमः ताभ्यां वीराभ्याम् अङ्गदनरान्तकाभ्यां तत्र समये उत्कीर्य्य अङ्कयित्वा कथितेव प्रकाश्य दर्शितेव । सर्व्वथा अहङ्कारकार्य्यं ताभ्यां कृतमिति भावः । वसन्ततिलकं वृत्तम् ।

(द) यथेति । वालिनन्दनः अङ्गदः यथा यथा प्रहरति नरान्तकमिति शेषः तथा तथा हरिहरिभिः हरेः रामस्य हरिभिः वानरैः मुदा हर्षेण स्मितम् । रावणस्य आत्मजः नरान्तकः यथा यथा प्रहरति अङ्गदमिति शेषः तथा तथा राक्षसैः किलिकिलितम् आनन्देन ध्वनितमित्यर्थः । रुचिराख्यं जभौ जसौ गिति रुचिरा चतुर्ग्रहैरिति लक्षणात् ।

(ध) समरसङ्घट्टे युद्धव्यापारे । दरनमतः ईषत् अवपततः ।

छुरिआ। उट्ठिदो अ खेडासंखोहो वाणरवले। जायाइं अ मउलन्तकमलमण्डलच्छायाइं रावणवअणाइं। वञ्चि-अणिसाअरलोअलोअणं परोप्परदिण्णहत्थआलं अ पहसि-आओ अच्छराओ। खरसमीरणमूलिअफुल्लपालिभद्दुमो विअ पहारविवसो समं णिसाअरीणअणिन्दीवरणीरन्ध-णीरधाराहिं धरणिं गओ रावणकुमारो (१६)।

त्रिजटा। हा वच्छ! कहिं सि देहि मे पडिवअणं भद्द!

---

(१६) ततश्च तपोनिर्भरं प्रवृत्ते समरसङ्कटे चरणेन चरणमास्फाल्य हरनमतो मरालकस्य रोमाञ्चनिबिडरत्नाङ्कदेन कन्धराकाण्डकुम्भमध्ये छिन्ना छुरिका। उत्थितश्च क्ष्वेडासंक्षोभो वानरबले। जातानि च मुकु-लायमानकमलमण्डलच्छायानि रावणवदनानि। वञ्चितनिशाचरलोक-लोचनं परस्परदत्तहस्ततालं च प्रहसिता अप्सरसः। खरसमीरणोन्मू-लितफुल्लपारिभद्रद्रुम इव प्रहारविवशः समं निशाचरीनयनेन्दीवरनीर-न्ध्रनीरधाराभिर्धरणीं गतो रावणकुमारः।

---

रोमाञ्चेन निबिडं रत्नाङ्कं यस्य तादृशेन अङ्गदेनेति शेषः। कन्धरा ग्रीवा काण्डः स्कन्धः तस्य कुम्भमध्ये मूलरूपे बन्धने। क्ष्वेडा हर्ष-निनादः तया संक्षोभः सम्यक् प्रसम्भ्रमम्। मुकुलेति मुकुलायमानानि सङ्कुचन्ति यानि कमलमण्डलानि तेषामिव छाया कान्तिर्येषां तथाभू-तानि। खरेति खरेण प्रचण्डेन समीरणेन वायुना उन्मूलितः उत्पा-टितः यः पारिभद्रद्रुमः वृक्षविशेषः स इव। प्रहारेण विवशः अचे-तनः। निशाचरीति निशाचरीणां नयनान्येव इन्दीवराणि नीलोत्प-लानि तेषां नीरन्ध्राभिः अविच्छिन्नाभिः नीरधाराभिः अश्रुभिः। राव-णस्य कुमारः प्रतिनिधिः मरालक इत्यर्थः।

कहेसु कीदिसी उण णरन्तअवहे देवाणं मुहच्छाआ आसि (१७) ।

सरमा । यादृशी प्रतिपक्षपराभवे सति भवति स्वामिनि त्रिजटे ! कथं कथ्यते देवतापक्षपातः क्षत्रियकुमारे विजेतरि तत्र यदा को नाम धर्मविजयिनि जने न खिद्यति यतः ।

हर्षादेकं नयनमुशना नेत्रयुग्मानि देवा-
स्त्रीण्यक्षीणि त्रिपुरविजयी पद्मसद्मा ऽष्टदृष्टीः ।
चक्षुःषट्कं द्विगुणगुणितं शाङ्करिर्दिक्सहस्रं
नील्वोल्लासं स च सुरपतिर्दृष्टवान् वालिपुत्रम् ॥८॥ (न)

त्रिजटा । तदो अज्जदसकण्ठेण किं पडिवस्सं ? (१८) ।

सरमा । इदमभिहितम् ।

मा भङ्गसङ्गमवयच्छ नरान्तकस्य
जातः पराङ्मुखगतिर्न पुरा सुरेभ्यः ।

---

(१७) हा वत्स ! क्वासि देहि मे प्रतिवचनं भद्र ! कथय कीदृशी पुनर्नरान्तकवधे देवानां मुखच्छाया आसीत् ।

(१८) तत आर्यदशकण्ठेन किं प्रतिपन्नम् ? ।

---

(न) हर्षादिति । हर्षात् आनन्दादिति सर्वत्र योज्यम् । उशनाः शुक्राचार्यः एकं नयनं काणत्वादिति भावः देवाः नेत्रयुग्मानि, त्रिपुरविजयी शम्भुः त्रीणि अक्षीणि, त्र्यम्बकत्वादिति भावः । पद्मसद्मा पद्मयोनिः अष्टदृष्टीः नयनानि, चतुर्मुखत्वात्, शाङ्करिः शङ्करात्मजः द्विगुणितं चक्षुषां षट्कं द्वादश नयनानि तथा सुरपतिः इन्द्रः दिक्-

तत्साम्प्रतं भवतु तत् पुनराजिकर्म
साधारणं यदिह वानरराक्षसानाम् ॥ १० ॥ (प)

त्रिजटा । कहं भग्गेण दिण्णो जलञ्जली लङ्कादेवीए(फ) तदो तदो ? (१८) ॥

सखः । ततश्च (ब) सविभीषणहस्ततालं हसति रामदेवे कुम्भकर्णप्रबोधनाय निकुम्भिलानिर्गतस्य च मेघनादस्य समाह्वानाय शुकसारणौ प्रेष्य लङ्कामेव प्रविष्टो देवः ।

त्रिजटा । ता गच्छह वुत्तन्तरं (भ) उवलहिउं अहं वि

---

(१८) कथं भग्नेन दत्तो जलाञ्जलिर्लङ्कादेव्यै । ततस्ततः ? ।

---

सहस्रं सहस्रं चर्चूंषि सहस्रलोचनत्वादिति भावः । उत्सङ्गं नीत्वा विन्यस्य इत्यर्थः बलिपुत्रम् अङ्गदं दृष्टवान् । मन्दाक्रान्ताहृत्तम् ।

(प) मेति । हे सेनापते प्रहस्त ! इत्यध्याहार्य्यं नरान्तकस्य भङ्गेन निधनेन खङ्गं संग्रामासक्तिं मा अवगच्छ न लघूकुरु, पुरा पूर्वं सुरेभ्यः इन्द्रः पराङ्मुखा. गतिर्यस्य तादृशः न जातः, पराजितोऽपि देवपतिः कदाचित् न पराङ्मुख आसीत् अतः अस्माकमपि नरान्तकवधे न पराङ्मुखतोचितेति भावः । तत् तस्मात् साम्प्रतम् इह वानरराक्षसानां यत् साधारणम् आजिकर्म युद्धव्यापारः तत् पुनः अस्तु भवतु ।

(फ) लङ्कादेव्यै: जलाञ्जलिः दत्तः स्वयं कृतप्रतिज्ञाया अङ्गदस्य जयपराजयरूपाया भङ्गादिति भावः ।

(ब) सविभीषणहस्ततालं विभीषणस्य हस्तताडेन करतालेन सहितम् ।

(भ) उपालब्धुं ज्ञातुम् ।

सीआदेवीए पिअणिवेदिआ भविस्सम् (२०)। इति निष्क्रान्ताः। मिश्रविष्कम्भः।

ततः प्रविशति सुप्तोत्थितो रावणः। पार्श्वयोर्द्वौ परिचारराक्षसौ प्रतीहारी च।

प्रतीहारी। स्वगतम्। अहो! (म) अवत्थादिरेओ दसकण्ठदेवस्स जेण इमस्सिं एव्व केलिविमाणाहिठ्ठाणे रअणट्टालए पओसावहिपच्चूसं जाव रअणीरणं पेक्खिअ वासरसमरसंरम्भदंसणसुवत्तणेण ठ्ठिदोवि इसिणिद्दासुद्दिअणअणइन्दीवरवणो किंवि किंवि चिन्तअन्तो चिठ्ठइ (२१)।

रावणः। भद्रे वेत्रवति! यो यत्र परमभिज्ञः स तेन

---

(२०) तद् गच्छतं वृत्तान्तरमुपलब्धुम्। अहमपि सीतादेव्यै प्रियनिवेदिका भविष्यामि।

(२१) अहो! अवस्थातिरेको दशकण्ठदेवस्य येनास्मिन्नेव केलिविमानाधिष्ठाने रत्नाट्टालके प्रदोषावधिप्रत्यूषं यावत् रजनीरणं प्रेक्ष्य वासरसमरसंरम्भदर्शनौत्सुक्येन स्थितोऽपीषन्निद्रामुद्रितनयनेन्दीवरवनः किमपि किमपि चिन्तयन् तिष्ठति।

---

(म) अवस्थातिरेकः दशापरिणामः। केलीति केलिविमानं क्रीडापुष्पकमेव अधिष्ठानं तस्मिन् रत्नाट्टालके रत्ननिर्मिते हर्म्ये प्रदोषावधि सायङ्कालमारभ्य प्रत्यूषं प्रभातं यावत्। ईषदिति ईषत् अल्पं निद्रया मुद्रितानि सङ्कुचितानि नयनानि इन्दीवरवनानि नीलोत्पलनिचया इव यस्य तादृशः सन्। यत्र विषये परम् अत्यर्थम् अभिज्ञः विचक्षणः, स तेन अभिज्ञानेन सुतराम् अतिमात्रम् आकृष्यते आसक्तः

स्तुतरामावर्ज्यन्ते यद्विभावरीसमरसंमर्दव्यतिकरेण वयमपि विस्मायिताः । विशेषव्यतिनाटितकेन ।

प्रेयान् मे दन्तिदन्तप्रवसदसुरयं वल्लभो मे विपक्षं (य)
कुन्तप्रोतोऽपि योऽयं सरति मम रुचिस्ताण्डवी यत्कबन्धः ।
अत्रास्मत्प्रेम वक्त्रभ्रुकुटिमुखमिदं यस्य लूनेऽपि कण्ठे
स्वःस्त्रीणां नक्तमाजाविति वरवरणे तोषिताः के न वाग्भिः॥११

ऊर्ध्वमवलोक्य । किमयमतिसत्वरः सुरजनसमाजः ।
आः कतिपययातुधानवधात्तापसं प्रति(र)सम्मति प्रीयते ।

सक्रोधम् ।

हर्षोत्कर्षः किमयममराः क्षुद्ररक्षोवधाद्व-
स्तस्मै दोष्णां विजितजगतां विक्रमं विस्मृताः स्थ ।

---

क्रियते । विभावर्य्यां यः समरसम्मर्दः युद्धव्यापारः तद्व्यतिकरेण तत्-सम्बन्धेन । विस्मायिताः विस्मयं गमिताः ।

(य) प्रेयानिति । अयं दन्तिदन्तेन हस्तिदन्तप्रहारेणेत्यर्थः प्रवसन्तः गच्छन्तः असवः प्राणा यस्य तथोक्तः वीर इति शेषः मे प्रेयान् अतिप्रियः, यः कुन्तेन अस्त्रविशेषेण प्रोतः विद्धोऽपि विपक्षं अलं सरति आक्रामति अयं वै मम वल्लभः प्रियः, यस्य कबन्धः छिन्नशिराः कायः ताण्डवी नृत्यपरः सन् रणे विचरतीति शेषः । तस्मिन् मम रुचिः प्रीतिः अस्तीति शेषः । यस्य कण्ठे लूने छिन्नेऽपि इदं मुखं वक्त्रं भ्रुकुटिर्यस्मिन् तथाविधम् अलं अस्मिन् अस्माकं प्रेम प्रियता अस्तीति शेषः । नक्तं रात्रौ आजौ युद्धे इति वाग्भिः स्वःस्त्रीणां सुरनारीणां वरवरणे के वीराः न तोषिताः ? सर्वेऽपि तोषिता इत्यर्थः मयेति शेषः । स्रग्धरावृत्तम् ।

(र) तापसं रामं प्रति ।

शिञ्चाद्यैव प्रियरणरसो बोध्यते कुम्भकर्ण-
स्तूर्णं जेता स च दिविषदां बोध्यते मेघनादः ॥१२॥ (ल)

प्रतीहारी। (व) अवसरसन्तोसणिज्जो सामिअणोत्ति चिन्तअन्ता उच्चावचसंचारिणो सुरसंघादा देवं एव्व सेवन्ति (२२)।

नेपथ्ये। हंहो! लङ्काउरीप्पाआरपालआ! (श) अदिक्क-

---

(२२) अवसरसन्तोषणीयः स्वामिजन इति चिन्तयन्त उच्चावचस-ञ्चारिणः सुरसङ्घाता देवमेव सेवन्ते।

---

(ल) हर्षोत्कर्ष इति। हे अमराः देवाः! क्षुद्राणां रक्षसां वधात् वः युष्माकम् अयं हर्षस्य उत्कर्षः अतिरेकः किम्? विजित-जगतां जगद्विजयिनां मे मम दोष्णां भुजानां तं विक्रमं विस्मृताः स्थ। किन्तु अद्यैव प्रियः रणेषु रसः आस्वादः यस्य तथाविधः रण-प्रिय इत्यर्थः। कुम्भकर्णः बोध्यते जागर्यते, स च दिविषदां देवानां जेता मेघनादः तूर्णं शीघ्रं बोध्यते ज्ञाप्यते। मन्दाक्रान्तावृत्तम्।

(व) अवसरेति। अवसरे समये सन्तोषणीयः रञ्जनीयः। उच्चावचं विविधप्रकारं सञ्चरन्तीति तथोक्ताः सुराणां सङ्घाताः समूहाः।

(श) लङ्केति। लङ्कापुर्याः प्राकारस्य पालकाः रक्षकाः। अतीति अतिक्रान्तं यत् यामिनीयुद्धं रात्रियुद्धं तेन जनितं हतं बलीमुखबलानां वानरसैन्यानां विध्वंसनं प्रतिकुरुत प्रतिविधत्त। उत्तम्भत उत्थाप-यत विहितं कृतम् उन्मूलनं येषां तानि तोरणानि बहिर्द्वाराणि। अगाधीकुरुत गभीरीकुरुत। कपेति कपीनां राक्षसानां वानराणाञ्च करङ्कैः अस्थिभिः संछादितां पूरिताम्। समीकुरुत स्वाभाविकी-कुरुत पूर्वावस्थां नयतेत्यर्थः विघटिता विमर्दिताः शाखामृगाणाम्

त्तजामिणीजुअजणिअं वलीमुहबलविद्धंसणं पडिकरेह उत्तम्भेह विहिदुम्मुलुणाइं तोरणाइं अगाहीकरेह रिक्ख-रक्खसवाणरकरह्संछाइअं परिहं समीकरेह विहडिअकं-चणसिलालिओ पओलिओ पुण णवीकरेह मन्दकियं कट-क्कियं सज्जेह भग्गं प्पाआरखण्डिमग्गं एअं पि किं ण पेक्खह डालिअं अट्टालिअं विहडिअं अरण्डिआपखण्डं जज्जरिअं जन्तसंताणं णिउंचिआओ कंचणीयाओ ताव परिकं-रेह खेवणिआइं सज्जह मज्जवसातेल्लाइं भाणेध आव-ट्टिअपरिक्खेवणिज्जओ भाणेह सिज्जरससित्थजदुजादीओ णिअडेह प्पवेसप्पज्जोलणिज्जइं खोमसणकप्पासपट्टसुत्त-तसरतन्तुसंताणाइं विरएह कौलिआकढ्ढणपाड-णिज्जं गोउरदुवारं ढोएह विविहप्पहरणसहाहस्ससह-स्साइं (२३)।

---

(२३) हंहो लङ्कापुरीप्राकारपालका ! अतिक्रान्तयामिनीयुगज-नितं वलीमुखबलविध्वंसनं प्रतिकुरुत। उत्तम्भयत विह्वितोन्मूल-

---

आलयः श्रेणयः यासु ताः प्रतोलीः रथ्याः। प्राकारखण्डाः प्राका-रांशस्य मार्गम्। अरण्डिकायाः पारावण्डा इति ख्यातायाः इत्यर्थः प्रखण्डः विभागविशेषः तम्। यन्त्राणां शिथिलितानां वस्तूनां सन्तान समूहः। निकुञ्चिताः निःशेषेण कुञ्चीकृताः काञ्चनिकाः काञ्चननिर्मिताः क्रोडप्रदेशानित्यर्थः मध्यप्रदेशमनेनाम्बरः। परिकुरुत प्रसाधयत क्षेप-णीयानि क्षेपणास्त्राणि। वहत धारयत। विविधेति विविधानि प्रहरणानाम् अस्त्राणां सहस्राणि शतानाञ्च सहस्राणि।

रावणः । आकर्ण्य विहस्य च । अये । किमयमलीकः (घ) संरम्भो मनुष्यबुद्धिदुर्गं दुर्गं कथयन्ति । ततश्च ।

सति सर्वामरोच्चण्डे मम दोर्दण्डमण्डले ।
अङ्के प्राकारविभवो लङ्काऽलङ्कारकारणम् ॥ १३ ॥ (ङ)

राक्षसान् प्रति साक्षेपम् । रे रे नारङ्कक ! रे रे कङ्कालक ! विबोधयतं (च) कुम्भकर्णं ज्येष्ठघ्नियतापससंरम्भाय ।

उभौ पटान्तरे भवतः ।

---

नानि तोरणानि । अगाधीकुरुत ब्रह्मराक्षसवानरकरङ्कसंकाशिनीं परिखाम् । समीकुरुत विघटितकाञ्चनशिलालीः प्रतोलीः । पुनर्नवीकुरुत मन्दोन्नतं कण्टकिद्वारम् । सज्जयत भग्नं प्राकारखण्डीभागम् । एतत् किं न पश्यथ । दोलितं अट्टालिकं विघटितं वरण्डिकाप्रकाण्डं जर्जरितं यन्त्रसन्नाहं निकुञ्चिताः काञ्चनिकाः तावत् परिकुरुत कम्पनीयानि सज्जयत भल्लावपातैस्तानि आगमनावर्त्तितपरिकम्पनीयाः सर्जरसस-ज्जजतुजातीः निकटयत प्रवेशप्रच्छादनीयानि क्षौमशणकार्पासपट्टकम्बल-, तसरतन्तुसन्तानानि विरचयत कौशिकाकर्षणपातनीयं गोपुरद्वारं वहत त्रिविधप्रहरणसन्नाहमतसङ्कुलानि ।

---

(घ) अलीक इति । मनुष्यस्य बुद्धिरूपं दुर्गं दुर्गं कथयन्ति इति यत् अयं निष्फलः संरम्भः आवेगः । मनुष्यबुद्धिरतिदुर्गमा इति यत् बुधाः कथयन्ति तत् वृथा इत्यर्थः ।

(ङ) सतीति । सर्वेषाम् अमराणां देवानामुच्चण्डे भीषणे मम दोर्दण्डमण्डले बाहुदण्डनिवहे सति प्राकारविभवः प्राचीरवेष्टनं लङ्काया अलङ्कारकारणं शोभासाधनम् इति मन्ये ।

(च) विबोधयतं जागरयतम् ।

करङ्कः । (कर्णान्तिकम्) । सखे कङ्कालक ! देवः कुम्भकर्णं प्रबोधयति न पुनरात्मानं किं च प्रयत्नप्रबोधितोऽप्यसौ रामेण दीर्घं शाययितव्य (ख) एव ।

कङ्कालकः । का अण्णा विभीसणं वज्जिअ सव्वस्स एसा गई । (२४)

करङ्कः । तथैव ।

धिक् पौलस्त्यमदोद्धतं भुजवनं धिक् चन्द्रहासं च ते
धिग्वक्त्राणि निकृत्तकण्ठवलयप्रीतेन्दुमौलीनि च ।
निद्राणावतिघस्मरे प्रतिदिनं स्वापान्महामेदुरे
प्रत्याशा चिरविस्मृतायुधविधौ यत् कुम्भकर्णे स्थिता ॥ १४ ॥ (ग)

रावणः । सुमुखदुर्मुखौ (घ) निकुम्भिलानिर्यायिणः कुमारमेघनादस्य कनिष्ठतापसेन सह समरसंरम्भं निवेदयतम् ।

---

(२४) का अन्या विभीषणं वर्जयित्वा सर्वस्य एषा मतिः ।

---

(ख) दीर्घं शाययितव्यः दीर्घनिद्रां प्रापयितव्यः ।

(ग) धिगिति । ते तव पौलस्त्यमदेन शौर्यदर्पेण उद्धतं भुजानां वनं समूहं धिक्, चन्द्रहासस्य धिक्, निकृत्तैः छिन्नैः कण्ठवलयैः गलमण्डलैः प्रीतः इन्दुमौलिः शङ्करः येषां तानि वक्त्राणि मुखानि च धिक् निन्दामि । यत् यस्मात् निद्राणौ अतिघस्मरे अतिभोजिनि प्रतिदिनं स्वापात् महामेदुरे अतिस्थूले चिरेण विस्मृतः आयुधविधिः युद्धव्यापारः येन तादृशे कुम्भकर्णे प्रत्याशा जयाशा [illegible] स्थिता अस्य तवेति शेषः । शार्दूलविक्रीडितं वृत्तम् ।

(घ) निकुम्भिलेति । निकुम्भिला नाम लङ्काया प्रदेशविशेषः यत्र रावणिरिन्द्रजित् अग्निमुपास्ते । तस्मात् [illegible] निर्यायिणः निर्गतस्य ।

उभौ प्रणम्य पटान्तरे भवतः।

सुमुखः। जनान्तिकम्। सखे दुर्मुख! (ग) किमपि शौर्य्यातिरेको रामानुजस्य यदमुना निकुम्भिलां प्रति प्रस्थितस्य कुमारमेघनादस्य सन्दिष्टं यदुत।

यावन्नैव निकुम्भिलायजनतः सिद्धे हविर्लेहिनि
प्राप्तस्यन्दनचापकाण्डकवचं त्वं मन्यसे दुर्ज्जयम्।
वैदेहीविरहव्यथाविधुरितेऽप्यार्य्ये विधाय क्रुधो
वन्ध्यास्तावदयं स शक्रविजयिन्! त्वां लक्ष्मणो जेष्यति॥१५॥(घ)

दुर्मुखः। तह एव्व किं भणीअदु (ङ) विराहविद्धंसणस्स कणिठ्ठभादा लक्खणो क्खु एसो णिअभुअमण्डलेण समं जादस्स तदोण परिहीअन्ति गुणा पेजसस्स(२५)।

---

(२५) तथैव किं भण्यतां विराधविध्वंसनस्य कनिष्ठभ्राता लक्ष्मणः

---

(ग) किमपीति। किमपि अनिर्वचनीय इत्यर्थः। शौर्य्यातिरेकः वीर्य्योत्कर्षः। रामानुजस्य लक्ष्मणस्य। सन्दिष्टं वाचिकं प्रेषितम्।

(घ) यावदिति। हे शक्रविजयिन् जितेन्द्र! निकुम्भिलायां यजनतः यज्ञानुष्ठानात् हविर्लेहिनि हवींषि हव्यानि लेढीति तथोक्ते अग्नौ इत्यर्थः सिद्धे प्रसन्ने सति त्वं प्राप्तं स्यन्दनं रथं चापं धनुः, काण्डान् शरान् कवचं वर्म्म च यावत् दुर्जयं मन्यसे, तावत् वैदेह्याः सीताया विरहेण या व्यथा मनस्तापः तया विधुरिते व्याकुलितेऽपि आर्य्ये रामे क्रुधः कोपान् वन्ध्या विफलानित्यर्थः विधाय कृत्वा रामस्य त्वयि कोपं शमयित्वा इति यावत् अयं स लक्ष्मणः त्वां जेष्यति। शार्द्दूलविक्रीडितं वृत्तम्।

(ङ) विराधविध्वंसनस्य रामस्य। भुजाभुजमण्डलेन चन्द्रेण समं

लक्ष्मणः । सवीरगोष्ठीषु (च) पुनरिदमभिहितम् ।

आर्त्तंस्थितमाननं विरचितं येनामरीणां रणा-
न्नित्यं भोगवती कृता निपतितद्वारार्गला येन च ।
धिग्धिग्भीमनिकुम्भिलागुरुगुहागर्भैकसाध्ये स्थितं
तत्सम्प्रत्यभिचारकर्मणि महावीरस्य शौर्यव्रतम् ॥१६॥ (छ)

वरुणः । पुरोऽवलोक्य ।

सोऽयं पुरः प्रयमसद्मनि कुम्भकर्णः
संसेवितस्त्रिदशग्रामिककामिनीभिः ।

---

प्रक्षेपः । अवगाहनवशेन समं ज्ञातस्य ततो न परिहीयन्ते गुणाः पीयूषस्य ।

---

यद्वा पीयूषस्य यवलवस्य गुणाः न परिहीयन्ते अवगाहात् हीना न भवन्तीत्यर्थः रामलक्ष्मणपराक्रमो वर्द्धत इति भावः ।

(च) सवीरगोष्ठीषु वीरजनपूर्णासु सभासु इत्यर्थः ।

(छ) आर्त्तंस्थेति । येन रणात् संग्रामव्यापारात् अमरीणां देवाङ्गनानाम् आननम् मुखं आर्त्तंस्थं आरचितं स्थितं विषादरूषितं रचितम् तत् हास्यवर्जितमित्यर्थः विरचितं कृतं भर्तृणां देवानां पराजयादिति भावः । येन च भोगवती पातालपुरी नित्यं सततं निपतितम् अर्पितं द्वारे अर्गलं यस्याः तादृशी कृता नागादीनाम् इन्द्रजितो भयादिति भावः । तस्य महावीरस्य भीमं भयङ्करं निकुम्भिलायाः पुरोर्महत्याः गुहायाः यत् गर्भम् तस्य एकसाध्ये तत्रैव निष्पाद्ये साध्यमिति भावः अभिचारकर्मणि आथर्वणविधे शत्रुहननादिरूपे कार्ये स्थितं शौर्यव्रतं वीरत्वं धिक् धिक् निन्दामि निन्दामि धिक् निर्भर्त्सननिन्दयोरित्यमरः । शार्दूलविक्रीडितं वृत्तम् ।

श्वासोत्तरं स्वपिति जर्जरकङ्कणौघै-

स्तत्पाणिभिस्तडिति ताडितपादभागः ॥ १७ ॥ (ञ)

कङ्कालकः। सुठ्ठु क्खु परिचिदं भणासि णिविडणिद्दाण-

न्दट्ठिदो कुमारो कुम्भकण्णो (२६)।

रावणः। यत् सत्यं भगवतः कमलसम्भवाद्वरीयसापि तपसा निद्रानन्दमेव वृतवान् मे वत्सः कुम्भकर्णः।

सुमुखः। कर्णे।

यात्यैरावणवारणे रणभुवो भग्ने तरौ डिण्डिमो

यः कृष्टश्च कृतश्च सङ्गरविधावाघोषणादुन्दुभिः।

यस्तस्यैव रवो रयेण विदधद्दिक्पालशून्या दिशः

कामं क्रामति रोदसी स्वयमयं तस्मै घनादःपुरः॥ १८॥ (झ)

---

(२६) सुष्ठु खलु परिचितं भणसि निबिडनिद्रानन्दस्थितः कुमारः कुम्भकर्णः।

---

(ञ) श्व इति। सः अयं कुम्भकर्णः पुरः अग्रतः शयनसद्मनि शय्यास्थले त्रिदशानां देवानां कामिन्यः प्रहरिण्यः याः कामिन्यः ताभिः संसेवितः तथा जर्जराः जीर्णाः कुम्भकर्णस्य कठिनपदसेवना- दिति भावः कङ्कणानां हस्ताभरणविशेषाणां ओघाः समूहाः येषु तादृशैः तासां सुरकामिनीनां पाणिभिः तड् इति ताडितः प्रहृतः पादभागः चरणदेशः यस्य तथाभूतः सन् श्वासोत्तरं निश्वासभूयिष्ठं यथा तथा स्वपिति निद्राति। वसन्ततिलकं वृत्तम्।

(झ) यात्विति। ऐरावणवारणे ऐरावतहस्तिनि तरौ वृक्षरूपे रणभुवः संग्रामस्थलात् भग्ने पराजिते याति अपगच्छति सति

पुनराकर्ण्य ।

यद्भैरवाकृतिकरालकपालपाणि-
फेट्कारडामरतरो निनदानुबन्धः ।
तन्नूनमत्र हनुमान् समराय पत्रं
सौमित्रिणा विरचितोऽयमखर्वगर्वः ॥ १९ ॥ (ञ)

हनुमान् : । हंहो देव ! कहं तुए संदेहदोलमधिरोविदाइं मत्तण्डपुलत्थाणं कुलाइं (२७) ।

---

(२७) हंहो देव ! कथं त्वया सन्देहदोलकमधिरोपितानि मार्त्त-ण्डपुलस्त्ययोः कुलानि ।

---

इन्द्रपराजयकारीति भावः यः डिण्डिमः वाद्यविशेषः लटः वादितः समरविधौ युद्धव्यापारे यस्य आघोषणा दुन्दुभिः जातश्च तस्य डिण्डि-मस्य आघोषणा दुन्दुभेश्च एष रवः रवेण वेगेन दिशः दिक्पालशून्याः विदधत् कुर्वन् कामं सम्यक् रोदसी द्यावाभूम्योरन्तरालमित्यर्थः क्रा-मति आप्नोतीत्यर्थः तत् तस्मात् अयं पुरः अग्रतः स्वयं मेघनादः इन्द्रजित् वर्त्तते इति शेषः । शार्दूलविक्रीडितं वृत्तम् ।

(ञ) यदिति । यत् यस्मात् भैरवाकृतिः भीषणमूर्त्तिः यः करालः प्रचण्डः कपालपाणिः रुद्रः तस्य फेट्कारः रवविशेषः तद्वत् डामर-तरः उग्रतरः निनदस्य सिंहनादस्येति यावत् अनुबन्धः सातत्यम् अन-वरतसिंहनाद इत्यर्थः वर्त्तते, तत् तस्मात् अत्र सौमित्रिणा सुमित्रा-नन्दनेन लक्ष्मणेन समराय युद्धाय अखर्वगर्वः अतिगर्वित अयं हनूमान् नूनं निश्चितं पत्रं वाहनं विरचितः हनुमतः स्कन्धमारुह्य लक्ष्मणः रणायापततीति भावः । वसन्ततिलकं वृत्तम् ।

रावणः ।

वामानि पश्यत समेत्य मुखानि ! पश्य
रामं सहास्मदनुजेन रणे चरन्तम् ।
रामानुजं च सह शक्रजिता हसन्ति
हे दक्षिणानि ! दशकण्ठनियोग एषः ॥ २० ॥ (ट)

कञ्चुकः । ता कीरउ (ठ) विबोहविडम्बणाडम्बरो कुमारकुम्भकण्णस्स (२८) ।

रावणः । कथं पुनर्विबोधयितव्यः ।

कञ्चुकः । समन्तादवलोक्य । अअं (ड) अठ्ठारहकुलविभेअविहिण्णो सेवासमागओ भुअङ्गमवग्गो ता इमस्सिं केवि गरिठ्ठवरिठ्ठे समादिस (२९) ।

---

(२८) तत् क्रियतां विबोधविडम्बनाडम्बरः कुमारकुम्भकर्णस्य ।

(२९) अयमष्टादशकुलविभेदविभिन्नः सेवासमागतो भुजङ्गमवर्गः । तदस्मिन् कानपि गरिष्ठवरिष्ठान् समादिश ।

---

(ट) वामानीति । हे वामानि पञ्चमुखानि ! यूयं समेत्य मिलित्वा हसन्ति सन्ति अस्मदनुजेन कुम्भकर्णेन सह रणे चरन्तं रामं, तथा हे दक्षिणानि पञ्चमुखानि ! यूयं शक्रजिता इन्द्रजिता सह चरन्तं रामानुजञ्च पश्यत अवलोकयत एषः दशकण्ठस्य रावणस्य नियोगः आदेशः । वसन्ततिलकं वृत्तम् ।

(ठ) विबोधेति । विबोधः जागरणमेव विडम्बना विसंवादः अयुक्तव्यापार इति भावः आडम्बरः उद्योगः ।

(ड) अष्टादशेति । अष्टादशभिः कुलानां वंशानां विभेदैः विशेषैः विभिन्नः विभेदं गतः । गरिष्ठवरिष्ठान् गुरुतरान् वरिष्ठान् श्रेष्ठांश्च ।

भरतः । साधु सखे ! साधु (ठ) महाभोगभोगयष्टिभिः संवेष्ट्य विबोधयितारः स्थेति । विचिन्त्य ।

वत्स तक्षक ! ताम्यतां फणभृतैस्त्वं वासुके ! नासिका-
रन्ध्रे वह्निं निषेवतां श्रवणयोः कर्कोटकिः कोटरे ।
कालः कालियपन्नगश्च कुरुतां कण्ठे कठोराञ्छनं
लङ्केन्द्रानुज एष येन विहरेद्विद्राणनिद्रारसः ॥ २१॥ (थ)

रावणः । विहस्य । किमेभिर्मृणालकोमलकायकाण्डैः प्रचण्डैरपि फणावद्भिर्वत्सस्य क्रियते ।

कञ्चुकी । (त)अमहाभागजनमनोरथा इव वन्ध्यीभूता फणीन्द्रा (२०) ।

---

(२०) अमहाभागमनोरथा इव वन्ध्यीभूताः फणीन्द्राः ।

---

(ठ) महेति । महान् आभोगः विस्तारः यासाम् आभोगः परिपूर्णतेत्यमरः तादृशीभिः भोगयष्टिभिः देहलताभिः भोगः सुखे-स्त्र्यादिभृतावहेश्च फणकाययोरित्यमरः । विबोधयितारः जागरयि-तारः ।

(थ) वत्स इति । हे तक्षक ! नागविशेष ! वत्सः ताम्यतां ग्लायत्विति शेषः, हे वासुके ! नागराज ! त्वं फणभृतैः नासिकारन्ध्रे वह्नि आहरतु, कर्कोटकिः नागविशेषः श्रवणयोः कर्णयोः कोटरे विवरे निषेवताम् आश्रय । कालः कृष्णवर्णः कालियपन्नगः कण्ठे कठोरम् आञ्छनं विस्तारं कुरुतां कण्ठदेशं दृढं वेष्टतामित्यर्थः एष लङ्केन्द्रस्य अनुजः कुम्भकर्णः येन प्रकारेण विद्राणः विगतः निद्रायां रसः अनुरागः यस्य तादृशः सन् विहरेत् निद्रां त्यजेदित्यर्थः । शार्दूल-विक्रीडितं वृत्तम् ।

(त) अमहेति । अमहाभागानां दुर्भाग्यानामित्यर्थः मनोरथाः अभिलाषा इव वन्ध्यीभूताः निष्फलाः अकृतकार्या इति भावः ।

दृश्यते नेपथ्ये।

यन्मातामहतो मयात्परिगतं मायारहस्यं मया
तत्सर्वं रचितं गतं विफलतामासाद्य तौ तापसौ।
यः शिष्येण सता नु चापनिगमो लब्धः पितुस्तोषिता-
दाचार्याद्दशकण्ठतः किमपरं तस्यैव जातः क्षयः॥२२॥ (च)

रावणः। वत्स! किं खिद्यसे (छ) करुणामयस्य माया-मयास्ते केलयो निष्फलाः पुनः कर्मणि वीराणां प्रथमोऽसि।

दुर्मुखः। देव! (ज) किलिकिलाइअहणुमन्तविमाणो सज्जोकिदकोअण्डपाणी कणिठ्ठतावसो मेहणादस्स पुरदो भविअ वत्तुकामो वट्टइ (२१)।

(२१) देव! किलिकिलायितहनूमद्विमानः सज्जीकृतकोदण्डपाणिः कनिष्ठतापसो मेघनादस्य पुरतो भूत्वा वक्तुकामो वर्त्तते।

(च) यदिति। मया मातामहतः मातृपितुः मयात् मयनाम्नः दानवात् यत् मायारहस्यं परिगतं विदितं तत् सर्वं रचितं प्रयुक्तं सत् तौ तापसौ रामलक्ष्मणौ आसाद्य विफलतां गतम्। नु भोः शिष्येण सता तोषितात् आचार्य्यात् गुरोः पितुः दशकण्ठतः रावणात् यः चापनिगमः धनुर्वेदः लब्धः शिक्षितः मयेति शेषः। किमपरं वक्तव्यमिति शेषः तस्य धनुर्वेदस्य एव क्षयः ध्वंसः जातः पितुः शिक्षितेन धनुर्वेदेन साम्प्रतं योत्स्यामीति भावः। शार्दूलविक्रीडितं वृत्तम्।

(छ) खिद्यसे अनुतपसि, करुणामयस्येति यदा त्वं करुणार्द्रः तदा मायया क्रीडसीति भावः।

(ज) किलीति। किलिकिलायितं किलिकिलेति रवपरित्यर्थः।

वामतः । कङ्कालकः । ता इमस्सिं (न)केलिविमाणरअण-ड्डालअपेरन्तचरे गिरिन्दसंदोहे दसाणणदेवस्स अण्णा णिवेसीअदु (३२) ।

करङ्कः ।

संवाह्यौ सह्य ! पादौ तव तुहिनगिरे ! कर्म मर्मप्रबाधि (प)
विन्ध्याद्रे ! रुन्धि रुच्चौ वलयतु मलयः पर्वतः सर्वतोऽङ्गम् ।
त्वं मेले पारियात्राचल ! वलय करौ सज्जतां मन्दराद्रि-
र्निर्निद्रामुद्र एष प्रसरति समरे येन भोः ! कुम्भकर्णः ॥२३॥

---

(३२) तदस्मिन् केलिविमानरत्नाट्टालकपर्यन्तचरे गिरीन्द्रसन्दोहे दशाननदेवस्याज्ञा निवेश्यताम् ।

---

हनूमानेव विमानं वाहनं यस्य तादृशः । सज्जीति सज्जीकृतं को-दण्डं धनुः पाणौ यस्य तथाविधः । कनिष्ठतापसो लक्ष्मणः । वक्र-कामो यस्य स तथोक्तः किमपि विवक्षुरित्यर्थः ।

(न) केलीति । केलिविमानरत्नं क्रीडा पुष्पकरत्नं तदेव अट्टा-लकं तस्य पर्यन्तचरे प्रान्तचारिणि गिरीन्द्रसन्दोहे दशाननदेवस्य राव-णस्य आज्ञा आदेशः निवेश्यतां स्थाप्यताम् ।

(प) संवाह्याविति । हे सह्य ! पर्वतविशेष ! तव कर्त्तरि षष्ठी पादौ कुम्भकर्णस्येति शेषः संवाह्यौ सेवनीयौ, हे तुहिनगिरे ! हिमा-लय ! मर्मप्रबाधि मर्मपीडकं कर्म तव कर्त्तव्यमिति शेषः । हे विन्ध्याद्रे ! रुचः रोचकं कुम्भकर्णं रुन्धि कुम्भकर्णशरीरोपरि पत इति भावः । मलयः पर्वतः सर्वतः समन्तात् अङ्गं वलयतु वेष्टताम् । हे पारियात्रा-चल ! त्वं मेले वलय प्रहर, मन्दराद्रिः करौ सज्जताम् आकर्षतु ।

राघवः । विहस्य । वत्सस्य कठोरे वपुषि पतितोत्पतिता अतिगरीयांसो गिरयः कन्दुकायन्ते । (फ)

कञ्चुकी । (ब) अविद्धे विअ मोत्तिए तन्तुणा अलिअचक-क्केण कुमारे बाहिरदो लुठिअं महिहरचक्केण (२२) ।

इत्यिषतो नेपथ्ये ।

मायां मुञ्च गृहाण कौतुकरसं वीरप्रशस्ये रणे
स्वर्नारीजन एष नूतनपतिप्राप्त्या ऽस्तु बद्धोत्सवः ।
मद्बाणाः खरदूषणत्रिशिरसां सैन्योपमर्दोद्गमी
रक्षःशोणितपानलम्पटमुखास्त्वत्तोऽपि वाञ्छन्त्यसृक् २४(भ)

---

(२२) अविद्ध इव मौक्तिके तन्तुना अलातचक्रेण कुमारे बहिस्तो लुठितं महीधरचक्रेण ।

---

भोः । येन एषः कुम्भकर्णः नास्ति निद्रासुहृत् स्वापावेशः यस्य तथाभूतः सन् समरे संग्रामे प्रचरति विचरति । एतेन पर्वतेष्वपि राघवस्याधिपत्यं व्यञ्जितम् । स्रग्धरावृत्तम् ।

(फ) कन्दुकायन्ते गेण्डुकवत् भवन्तीति यावत् ।

(ब) अविद्धे अच्छिद्रिते मौक्तिके तन्तुना सूत्रेण अलातचक्रेण प्रवेष्टुमशक्तेन इव महीधराणां पर्वतानां चक्रेण समूहेन बहिस्तः बहिःप्रदेशे लुठितं वेष्टितं न तु वेतव्यमापादितमिति भावः ।

(भ) मायामिति । मायां कपटयुद्धमित्यर्थः मुञ्च त्यज वीराणां प्रशस्ये प्रशंसनीये रणे अमायिके संग्रामे इत्यर्थः कौतुकरसं प्रेम गृहाण, एष स्वर्नारीजनः सुराङ्गनावर्गः नूतनपतिप्राप्त्या संग्रामहतं त्वां नवं पतिं प्राप्येत्यर्थः बद्धोत्सवः कृतप्रमोदः अस्तु भवतु । बाणाः

रावणः। अये! कुमारमेघनादोचितवचनदुर्मुखो लक्ष्मणः। तदेनं वत्स एव शिक्षयिता।

पुनर्नेपथ्ये। सुमित्रापुत्र! स्वभ्रातृकथामारभसे कः पुनस्तव भ्रातृप्रशंसायामधिकारः।

धीमान् पुमानयमिति स्तुवता जनेन
न्यासीकृता ननु सनिर्वृति यत्र दाराः।
तस्य च्छलादपि परापहृतेषु तेषु
कुत्सितप्रहरणानि विडम्बनाय ॥ २५ ॥ (म)

रावणः। नेपथ्याभिमुखमवलोकितकेन। किमाह लक्ष्मणः?।

रे रे ब्रह्मराक्षस! वीरजनमर्यादानभिज्ञोऽसि यद-

---

महाबला महीयाः शराः खरदूषणत्रिशिरसां राक्षसानां सैन्योपमर्दात् सैनिकविनाशात् रक्षसां शोणितपाने सम्पटं लुब्धं मुखम् अग्रभागः येषां तथाभूता अतएव त्वत्तोऽपि मेघनादादपीत्यर्थः अधिक् शोणितं प्राश्नन्ति आकाङ्क्षन्ति। शार्दूलविक्रीडितं वृत्तम्।

(म) धीमानिति। अयं धीमान् बुद्धिमान् पुरुषः लक्ष्मण इति भावः अस्मिन् न काचित् विपदाशङ्केति भावः इति स्तुवता प्रशंसता जनेन रामेणेति भावः यत्र त्वयीति भावः दाराः पत्नी सनिर्वृति निरुद्वेगमिति यावत् न्यासीकृता अर्पिता ननु खलु, हे कुत्सित! छलादपि परैः अपहृतेषु दारेषु तेषु न्यासीकृतेष्विति भावः अतः तस्य धीमतस्तव प्रहरणानि अस्त्रधारणानि इत्यर्थः विडम्बनाय लज्जायै निष्फलत्वाय वा रैदृशोऽस्त्रः कापुरुषस्त्वं न्यासीकृतं परद्रव्यं रक्षितुं न पारयसि, साम्प्रतं तदुद्धरणार्थम् अस्त्रं दधत् न लज्जसे इति भावः। वसन्ततिलकं वृत्तम्।

प्रतीकारे (य) कर्मणि प्रहरणानि विडम्बनाय विपरीते पुनर्मण्डनाय ।

रावणः । अहो ! धृष्टता (र) मानुषस्य यत् मारमेघनादेन सह वीरव्रतचर्य्यायामुक्तिप्रत्युक्तिभिर्भाषिता ।

कञ्चुकी । अन्यतोऽवलोक्य । एदे (ल) गुरुगलन्तदाणवारि-पक्खालिअगण्डमण्डला गलगुहाकुहरणिरन्तरणिग्गलन्त-गुलुगुलारवा दिक्करिणो ता इमे समादिस (२४) ।

करङ्कः ।

वप्रक्रियाक्रमकरालकरप्रहार-
पादावमर्दरभसोल्लिखनादि कर्म ।

(२४) एते गुरुगलद्दानवारिप्रक्षालितगण्डमण्डला गलगुहाकुहर-निरन्तरनिर्गलद्गुलुगुलारवा दिक्करिणस्तदिमान् समादिश ।

(य) अप्रतीकारे प्रतिकर्त्तुमशक्ये कर्मणि । विपरीते प्रतिकार्य्ये मण्डनाय भूषणाय ।

(र) धृष्टता प्रागल्भ्यम् औद्धत्यमित्यर्थः । भाषिता वाग्मित्वम् ।

(ल) गुर्विति । गुरुभिः महद्भिः गलद्भिः दानवारिभिः मदजलैः प्रक्षालितानि गण्डमण्डलानि कपोलदेशा येषां तथोक्ताः तथा गला एव गुहाः गह्वराणि तासां कुहरेभ्य अन्तरालेभ्यः निरन्तरम् अविरतं निर्गलन्तः निःसरन्तः गुलुगुलारवाः ध्वनिविशेषा येषां तथाविधा दिक्करिणः आशागजाः, तस्मात् इमान् समादिश आज्ञापय कुम्भकर्णस्य निद्राभञ्जने इति शेषः ।

दिग्दन्तिनः ! किमपि यद्गुचितं भवद्भि-
स्तत्कुम्भकर्णपरिबोधविधावुपाध्वम् ॥ २६ ॥ (च)

रावणः । युक्तमेवैतत् । अङ्गमानि(छ)दुर्गाणि दिक्करिणः ।

करङ्कः । देव ! दृश्यतां द्रष्टव्यम् ।

निस्तन्द्रैर्दिग्द्विपेन्द्रैर्युगपदधिगतैर्बोधनायाधिवक्षः (ज)
प्रारब्धे द्वन्द्वयुद्धे प्रचुरमदचयोच्चण्डगण्डैश्चतुर्धा ।
निद्रामुद्रां न मुञ्चत्यपि च घुरघुराघोषगर्भोरुघोणा-
फुत्कारैर्घोरतारैः स्वपिति पिहितदृङ्निर्भरं कुम्भकर्णः ॥२७

---

(च) वप्रेति । हे दिग्दन्तिनः ! भवद्भिः युष्माभिः वप्रक्रिया तटोत्खातकेलिः तस्याः क्रमेण नियमेन यः कराघः प्रचण्डः कर-प्रहारः मुष्टाघातः पादैरवमर्दः दलनं रभसेन वेगेन उल्लिखनं कुड्-मलादि वस्तु तयोक्तं यत् किमपि कर्म गुणितं संख्यातं कर्तुं शक्य-मिति भावः कुम्भकर्णस्य परिबोधविधौ जागरणानुष्ठाने तत् सर्वमिति शेषः उपाध्वम् अवलम्बध्वं कुरुतेत्यर्थः । वसन्ततिलकं वृत्तम् ।

(छ) दुर्गाणि अभेद्य निकेतनानि ।

(ज) निस्तन्द्रैरिति । निस्तन्द्रैः अनलसैः युगपत् समकालं बोध-नाय अधिवक्षः वक्षसि विभक्त्यर्थे अव्ययीभावः । अधिगतैः उपस्थितैः प्रचुरेण मदानां दानवारीणां चयेन समूहेन उच्चण्डाः भीषणा गण्डाः कपोला येषां तथाभूतैः दिग्द्विपेन्द्रैः आशागजैः अष्टाभिरिति शेषः चतुर्धा द्वाभ्यां द्वाभ्यां मिलित्वेति भावः द्वन्द्वयुद्धे प्रारब्धेऽपि कुम्भकर्णः निद्रामुद्रां निद्रावेशं न मुञ्चति न त्यजति, पिहितदृक् मुकुलितनेत्रः सन् घोरतारैः भीषणोच्चैः घुरघुराघोषः गर्भे यस्यास्तथाभूताया उरो-र्वृहत्या घोणाया नासिकायाः फुत्कारैः रवविशेषैः निर्भरं गाढं यथा तथा स्वपिति निद्राति । स्रग्धरावृत्तम् ।

कुम्भकर्णः । विहस्य । तं कहं कुमारकुम्भअसे दिक्करिचक्क-(ख) वालेण जं जम्मबहिरे पञ्चमतरङ्गुग्गारेहिं कीरइ (२५)।

इन्द्रजितो नेपथ्ये । रेरे दुर्मुख मुखर लक्ष्मण ! ।

तं रामं कथयन्ति विक्रमधनं तस्मै मनाक्प्रीतये (छ)
तस्मिन् सङ्गरकेलिकर्म यदयं वीरप्रियो रावणिः ।
भ्रातृत्वेन तु तस्य लक्ष्मण ! कथं धैर्य्यातुरं चेष्टसे
दायादान् च रिक्थवत् क्वचन भो ! शौर्य्यक्रिया क्रामति२८

---

(२५) तत्कृतं कुमारकुम्भकर्ण दिक्करिचक्रवालेन यज्जन्मबधिरे पञ्चमतरङ्गोद्गारैः क्रियते ।

---

(ख) दिक्करिचक्रवालेन दिग्गजसमूहेन । जन्मबधिरे आजन्मश्रोत्रेन्द्रियवर्जिते पञ्चमतरङ्गोद्गारैः पञ्चमाख्यस्वरविशेषस्य तरङ्गाणां प्रवाहाणाम् उद्गारैः उच्चारणैः उच्चतरस्वरसङ्गीतैरिति भावः बधिरा अत्युच्चतरमपि सङ्गीतं यथा नाकर्णयन्ति तथा कुम्भकर्णोऽपि दिग्गजप्रहारानपि नानुभवतीति तात्पर्य्यम् ।

(छ) तमिति । तं रामं विक्रमधनं कथयन्ति जना इति शेषः । तत् तस्मात् मे मम तस्मिन् रामे सङ्गरकेलिकर्म संग्रामक्रीडनरूपव्यापारः मनाक् ईषत् प्रीतये आनन्दाय भवति । रामेण सह युध्यमानो तुष्यामीति भावः । यत् यस्मात् अयं रावणिः रावणतनयः मेघनादः वीरः प्रियः यस्य तथाभूतः । हे लक्ष्मण ! त्वन्तु तस्य भ्रातृत्वेन कथं धैर्य्यातुरस्य अधैर्य्यं यथा तथा चेष्टसे व्यवहरसि । भोः ! शौर्य्यक्रिया वीरकर्म रिक्थवत् पित्र्यधनवत् क्वचन कुत्रापि दायादान् उत्तराधिकारिणो ज्ञातीन् न च क्रामति नैव प्राप्नोति । यथा भ्रातृधनं भ्राता अधिकरोति तथा भ्रातुः शौर्य्यं नेति भावः । शार्दूलविक्रीडितं वृत्तम् ।

पुनस्तत्रैव।

लङ्केश्वरेण यदि शङ्करपादमूले
लूना शिरांसि भुवनाधिपतित्वमाप्तम्।
तन्मेघनाद! यदि किं तव सूर्य्यभक्तो
भास्वन्मणिर्ज्वलति किं स्फटिकोपलस्य ॥ २८ ॥ १(घ)

पुनस्तत्रैव। रेरे (ङ) विरोचनकुलपांसन! कैरवीसुत! लक्ष्मण! रणप्रवणं रावणयुवराजं इन्द्रजितमपि मां न जानासि तदेव ज्ञास्यसे।

पुनस्तत्रैव। रेरे पुलस्त्यकुलकलङ्क! (च) सहोढासुत! रामचन्द्रानुचरं लक्ष्मणमपि मां न जानासि तदेव ज्ञास्यसे।

---

(घ) लङ्केश्वरेणेति। हे मेघनाद! लङ्केश्वरेण रावणेन शङ्करस्य पादमूले शिरांसि लूना छित्वा बलित्वेन प्रदाय इत्यर्थः यदि भुवनानाम् अधिपतित्वम् आधिपत्यम् आप्तं लब्धं तत् तर्हि तव किं? न किम-पीत्यर्थः। यदि सूर्य्यभक्तः सूर्य्यप्रियः भास्वन्मणिः सूर्य्यकान्तमणिः ज्वलति सूर्य्यकरस्पर्शेनेति भावः तदा स्फटिकोपलस्य स्फटिकमयपा-षाणस्य किम्? न किमपीत्यर्थः। तव पिता ईश्वराराधनेन आधि-पत्यं प्राप्तं तत्र कस्तव प्रभाव इति भावः। वसन्ततिलकं वृत्तम्।

(ङ) विरोचनकुलपांसन! सूर्य्यकुलाधम! कैरवीसुत! केरलाधि-पतेः कन्या सुमित्रा तस्याः सुतः तत्सम्बुद्धौ।

(च) सहोढासुतः सहोढाया अपरेणाहितगर्भायाः पश्चात् राव-णेन परिणीतायाः मन्दोदर्य्या इत्यर्थः सुतः तनयः तत्सम्बुद्धौ गर्भे विन्नः सहोढज इति स्मरणात्।

चपलः । देव लङ्काधिपते ! तदित्थमन्योन्यमाक्षिपद्भ्यां(ग) पुलस्त्यककुत्स्थकुलकुमाराभ्याम् ।

उद्दालनीलनलिनानि नभोह्रदस्य
दूताः समित्परिगमाय चमूकटाक्षाः ।
आभ्यां परस्परमपि प्रहिताः कृतान्त-
केलीशकुन्तय इमे विशिखाः सहस्रम् ॥ ३० ॥(घ)

वामतः । कङ्कालकः करङ्कं प्रति । ता अण्णे केवि समादिस (२६) ।

करङ्कः । भवतु रावणावरजविबोधनाय भगवन्तं सपरिवारं (ङ) भर्गमभ्यर्थये । सप्रश्रयम् ।

हेरम्बः कण्ठगर्जं रचयतु मुरजानाहतो हन्तु नन्दी
चण्डी चण्डाट्टहासं किरतु डमरुकं ताडयत्विन्दुमौलिः ।

---

(२६) तदन्यान् कानपि समादिश ।

---

(ग) आक्षिपद्भ्यां निर्भर्त्सयद्भ्याम् ।

(घ) उद्दालेति । आभ्यां लक्ष्मणमेघनादाभ्यां नभो ह्रदस्य आकाशसरसः उद्दालानि उत्पाटय उद्धृतानि नीलनलिनानि नीलकमलानि, समित्परिगमाय संग्रामव्यापारज्ञापनाय दूताः चमूनां सेनानां कटाक्षाः कृतान्तस्य यमस्य केलिशकुन्तयः क्रीडापक्षिणः इमे सहस्रं विशिखाः शराः परस्परम् अपि अन्योन्यं प्रति प्रहिताः प्रेरिताः । वसन्ततिलकं वृत्तम् ।

(ङ) भर्गं हरं । सप्रश्रयं सविनयम् ।

येनाकाण्डप्रबोधप्रभवगुरुतरक्रोधदीप्तारुणाक्षः
संग्रामग्रामलुण्ठोत्कटभुजपरिघो जायते कुम्भकर्णः ॥ ३१ ॥(च)

रावणः । साधु भोः ! साधु सुषुप्तस्यापि(छ)महाविनदः प्रतिबोधहेतुः किं पुनर्विबोधोपचारा वत्से सावित्रे महसीव सर्वतेजांसि प्रलीयन्ते ।

कञ्चुकी । स्वगतम् । विबोहीअइ (ज)कुमारो जइ सलिले सिलाहिं उत्तरीअइ अलाबुहिं वा णिमज्जीअइ (२७)

---

(२७) विबोध्यते कुमारो यदि सलिले शिलाभिस्तीर्यतेऽलाबूभिर्वा निमज्ज्यते ।

---

(च) हेरम्ब इति । हेरम्बः गणेशः कण्ठस्य गर्जं गर्जनध्वनिं रचयतु करोतु, नन्दी आहतः आहतान् ताडितानित्यर्थः मुरजान् वाद्यभेदान् हन्तु ताडयतु । चण्डी पार्वती चण्डम् उग्रम् अट्टहासं हास्यविशेषं किरतु विस्तारयतु, इन्दुमौलिः शङ्करः डमरुं ताडयतु वादयतु । येन संग्रामग्रामाणां रणक्षेत्राणां लुण्ठैः लुण्ठनैः उत्कटः उच्चण्डः भुज एव परिघः यस्य तादृशः कुम्भकर्णः अकाण्डे असमये यः प्रबोधः जागरणं तेन प्रभवतीति तथोक्तेन गुरुणा महता क्रोधेन दीप्ते अरुणे रक्ते अक्षिणी यस्य तथाविधः जायते भवति । स्रग्धरावृत्तम् ।

(छ) सुषुप्तस्य अतिनिद्रितस्येत्यर्थः । प्रतिबोधहेतुः जागरकारणं सुषुप्तोऽपि महता निनदेन जागृयादिति भावः । विबोधस्य जागरणस्य उपचाराः पर्वतप्रहाराद्युपायाः किं पुनः, न किमपि आवश्यकमिति भावः । वत्से कुम्भकर्णे । सावित्रे सौरे । महसि तेजसि । प्रलीयन्ते अन्तर्भवन्तीत्यर्थः । कुम्भकर्णे सर्वे जागरोपाया विफला इति भावः ।

(ज) कुमारः कुम्भकर्णः । सलिले जले शिलाभिः प्रस्तरैः उत्ती-

इति पठतो दुर्मुखः । देव लङ्कापरमेस्सर ! कुमारमेहणादस्स लक्खणस्स अ पउत्तसंगामाणं रक्खसवाणरबलाणं भीसणभीसणं (झ) वट्टइ (२८) ।

रावणः । देव ! सुभीषणमेव वर्त्तते । पश्य ।

युद्धोर्वीष्वर्द्धमग्नैः कुवलयसरसां सूत्रिता पत्रिभिः श्री-
र्नाराचैः पाशबन्धागतभुजगभयं लम्भिता वानरेन्द्राः ।
भल्लैस्तिर्यक्पतद्भिश्चिलिचिमचयिनो दर्शिताः सादिमार्गाः
प्राप्ताय द्राक् क्षुरप्रैर्वियति नक्षत्रतुला वीरवक्त्राम्बुजलावैः ॥ २२ (ञ)

---

(२८) देव लङ्कापरमेश्वर ! कुमारमेघनादस्य लक्ष्मणस्य च प्रवृत्तसंग्रामाणां राक्षसवानरबलानां भीषणभीषणं वर्त्तते ।

---

र्य्यन्ते उन्मज्जते सत्रासुभिः तदास्य लघुहृद्यभेदैः । नैव कदाचित् विवो-भवितुं शक्यते इति भावः ।

(झ) भीषणभीषणम् अतिभीषणमित्यर्थः युद्धमिति शेषः ।

(ञ) युद्धेति । युद्धोर्वीषु संग्रामभूमिषु अर्द्धमग्नैः अर्द्धप्रोतैः पत्रिभिः शरैः कुवलयसरसां नीलोत्पलवत् सरोवराणामित्यर्थः श्रीः शोभा सूत्रिता विरचिता । नाराचैः अस्त्रविशेषैः वानरेन्द्राः कपिसेनापतयः पाशबन्धाय आगतेभ्यः भुजगेभ्यः यत् भयं तत् लम्भिताः प्रापिताः । नागपाशैरिव नाराचैः वानराः बद्धा इति भावः । तिर्यक् वक्रं यथा तथा पतद्भिः भल्लैः अस्त्रविशेषैः सादिनाम् अश्वारोहिणां सैनिकानां मार्गाः पन्थानः चिलिचिमचयिनः दर्शिताः । वीराणां वक्त्राणि मुखानि अम्बुजानि पद्मानीव लुनन्तीति तादृशैः क्षुरप्रैः अस्त्रभेदैः वियति आकाशे द्राक् झटिति नक्षत्राणां तुलाः सादृश्यानि प्राप्ताय । स्रग्धरावृत्तम् ।

दुर्मुखः । देव ! पेक्ख ।

कोअण्डचक्ककरवालकिवाणधेसु
मल्लत्तणक्कमणिवेसिदसङ्गरेसु ।
वीरेसु पेक्ख णिवडन्ति समं पहारा
वेएण दिव्वतरुणीणणफुल्लमाला (३८) ॥ ३२ ॥ (ट)

रावणः । सहासः । सविस्मयं । कहं पुण एअं भविस्सदि (४०)।

करङ्कः ।

हे कामिन्यः ! कनककलशीपीवराभ्यां स्तनाभ्यां
गाढाश्लिष्टं रचयत लसद्दोर्लताः कुम्भकर्णम् ।

---

(३८) देव ! पश्य ।

कोदण्डचक्रकरवालकृपाणधेषु
मल्लत्वक्रमनिवेशितसङ्गरेषु ।
वीरेषु पश्य निपतन्ति समं प्रहारा
वेगेन दिव्यतरुणीनवफुल्लमालाः ॥

(४०) कथं पुनरेतद्भविष्यति ।

---

(ट) कोदण्डेति । कोदण्डानि धनूंषि चक्राणि तदाकारास्त्रवि-शेषाः करवालाः कृपाणाः असयश्च तान् दधतीति तथोक्तेषु मल्लत्वं वीरत्वं तस्य क्रमेण परिपाट्या निवेशितः विरचितः सङ्गरः संग्रामः यैः तादृशेषु वीरेषु प्रहाराः दिव्यानां तरुणीनां नवा फुल्लमाला विकसितकुसुममाला वेगेन समं युगपत् निपतन्ति पश्य अवलोकय । वीराः प्रहारहता एव देवत्वप्राप्त्या सुरनारीभिर्वरमाल्येन व्रियन्ते इति भावः ।

कामक्रीडानिविडरचितः सेवितः स्वर्वधूभि-
र्जायेतायं त्रिभुवनजयी येन निद्रादरिद्रः ॥ ३४ ॥(ठ)

रावणः । विलोक्य सहर्षम् । कथं विबुद्धो मे वत्सः ।

करङ्कः । विबुद्धः कुम्भकर्णो यातश्च (ड)तापसाभ्यर्णम् ।

दुर्मुखः ।

एक्केहिं चक्कखग्गावडणविहडिदुद्दण्डसीसावसुक्के (ढ)
हुंकारे रोसहेलावलिअभडचमूलोअणिच्छिण्णएहिं ।
अण्णेहिं दिव्वणारीणिविडभुअलआबद्धकण्ठेहिं देहिं
देहेहिं पेक्ख जाआ समरभरणिणो तक्खणं वीरलक्खा ॥ ३५ ॥(४१

(४१) एकैश्चक्रखड्गापतनविघटितोद्दण्डशीर्षावमुक्ते
हुङ्कारे रोषहेलावलितभटचमूलोकनिर्भर्त्सितैः ।
अन्यैर्दिव्यनारीनिबिडभुजलताबद्धकण्ठैर्द्वयैः
देहैः पश्य जाताः समरभरणिनस्तत्क्षणं वीरलक्षाः ॥

(ठ) हे कामिन्य इति । हे कामिन्यः युवत्यः यूयं वलन्त्यः विलसन्त्यः दोर्लता भुजलताः बाहुयष्टय इत्यर्थः यासां तथाभूताः सत्यः स्तनकलशीपीवराभ्यां काञ्चनकुम्भस्थूलाभ्यां स्तनाभ्यां कुम्भकर्णं गाढं निबिडं यथा तथा आश्लिष्टम् आलिङ्गितं रचयत कुरुत, येन अयं त्रिभुवनविजयी कुम्भकर्णः स्वर्वधूभिः सुरसुन्दरीभिः युष्माभिः कामक्रीडाभिः सुरतलीलाभिः निबिडं दृढं रचितः आक्रान्तः सेवितश्च निद्रया दरिद्रः रहितः जायेत सुरनारीणां युष्माकं स्पर्शात् तत्क्षणं संजातसंवेगः अयं सत्वरं निद्रां त्यक्ष्यतीति भावः । मन्दाक्रान्ता वृत्तम् ।

(ड) तापसस्य रामस्य अभ्यर्णं समीपम् ।

(ढ) एकैरिति । पश्य अवलोकय तत्क्षणं समरभरणिनः संग्राम

करद्वन्द्वः । वामतो नेपथ्याभिमुखमवलोक्य । विबुद्धः कुम्भकर्णः परिजनादुपलब्धवृत्तान्तः किमाह ।

सूते नान्यं जगति जननी तादृशं पुत्ररत्नं (थ)
रामो यादृग्बलजलधौ सेतुसीमन्तकारः ।
शङ्के शङ्कां वहति च ततो राक्षसेन्द्रोऽप्यकाण्डे
निद्राभङ्गः कथमितरथा कारितः किङ्करैर्मे ॥ २६ ॥

विचिन्त्य । तदश्रुतमिवैतत् (त) प्रकृतिरोषणेन रावणेन वचनमात्रं मा कदाचन विभीषणवृत्तान्तः स्यात् । प्रकाशम् । किमाह कुम्भकर्णः ।

---

महता: वीररसाः चक्रस्य तीक्ष्णस्य खड्गस्य आपतनेन विघटितं खण्डितम् उड्डमरम् अनिबद्धं यत् ग्रीवं तस्मात् उद्गसुक्ते निःसृते रोषात् उच्चारिते इति भावः हुङ्कारे सति रोषेण क्रोधेन हेलया अवज्ञया च वलितैः प्रहस्तैः भटचमूचोभैः योधसैनिकजनैः निर्भर्त्सितैः तिरस्कृतैः एभिः देहैरिति शेषः, दिव्यानां नारीणां शिथिलाभिः भुजलताभिः बद्धः आलिङ्गितः कण्ठो येषां तादृशैः स्कन्धैः अतएव एवैर्देहैरुपलक्षिताः जाताः ।

(थ) सूते इति । बलजलधौ सेतुसीमन्तकारः सेतुनिर्माता इत्यर्थः रामः यादृक् जगति जननी नाप्नोति शेषः तादृशं रामसदृशम् अन्यं पुत्ररत्नं न सूते न प्रसोतुमर्हतीत्यर्थः । शङ्के मन्ये, राक्षसेन्द्रोऽपि त्रिभुवननिर्भयोऽपीति भावः ततः तस्मात् रामात् शङ्कां भयं वहति च, इतरथा नो चेत् किङ्करैः दासैः मे मम अकाण्डे असमये निद्राभङ्गः कथं कारितः । मन्दाक्रान्ताछन्दः ।

(त) प्रकृतिरोषणेन स्वभावकोपनेन । विभीषणवृत्तान्तः । अयं भावः विभीषणो यथा रावणं रामाय सीतां प्रत्यर्पयितुमुपदिशन् रावणेन निराकृतः तथा अयं कदाचन न भवतु इति ।

आस्तां धनुः किमपि नापरतो भुशुण्डी-
चक्रैरलं भवतु पट्टिशमुद्गरौघैः।
धावत्प्लवङ्गपृतनाकवलक्रमेण
प्राप्स्याम्यहं सुहिततां च रिपुक्षयं च ॥ ३७ ॥ (थ)

रावणः। साधु वत्स! साधु सत्यं मद्गुणोऽसि।

दुर्मुखः। देव! उप्पडिओ कुमारमेहणादस्स रहो (४२)।

सुमुखः।

निःशब्दचीत्कृतिरलब्धमहीतलत्वात्
क्षुण्णाम्बुदोदरपयोमयगर्भसारः।
धूस्तुण्डघट्टनविवर्त्तितकेतुचेलचः
पुत्रस्य ते गगनमुत्पतितो रथोऽयम् ॥ ३८ ॥ (द)

---

(४२) देव! उत्पतितः कुमारमेघनादस्य रथः।

---

(थ) आस्तामिति। धनुः तथा अपरतः अपरं किमपि प्रहरणजातम् आस्तां तिष्ठतु भुशुण्डीचक्रैः पट्टिशमुद्गराणाम् ओघैः समूहैश्च अलं भवतु, न मे केष्वपि अस्त्रेषु प्रयोजनमिति भावः। अहं धावन् रणभूमौ गच्छन् प्लवङ्गानां वानराणां याः पृतनाः सेनाः तासां कवलक्रमेण भक्षणव्यापारेण सुहिततां सौहित्यं तृप्तिम् आहारजनितं परितोषञ्च रिपूणां शत्रूणां क्षयञ्च प्राप्स्यामि साधयिष्यामि। वसन्ततिलकं वृत्तम्।

(द) निःशब्देति। देव! अलब्धमहीतलत्वात् भूतलस्पर्शविरहादित्यर्थः नास्ति चक्राणां रथाङ्गानां चीत्कृतिः चीत्कारः रवविशेषः यस्य तथाभूतः क्षुण्णः क्षयं गमितः निष्पाशित इत्यर्थः अम्बुदानां मेघानाम् उदरेभ्यः अभ्यन्तरेभ्यः पयोमयः जलमयः गर्भसारः अन्तःसारः येन तथाविधः ध्वजदण्डाघातात् मेघानां छिद्रितत्वात् अव-

इमुखः। प्रभञ्जननन्दनोऽपि (ध) वानरेन्द्रो मनुप्पतितो मेघनादस्य रथवरम् (४१)।

सुमुखः।

मेघोदरद्रुतपरिप्लुतमोचिताश्वाः
संस्तभ्य सप्ततुरगानरुणेन दृष्टः।
वैमानिकैस्तत इतः श्रमसुप्तमार्गः
सौमित्रिणा सह समुत्पतितो हनूमान्॥३८॥ (न)

रामः। करङ्कः।

दिङ्मातङ्गैः कमठपतिना भोगिभर्त्रा च मङ्क्त्वा
मत्वा यद्वा कथमपि धृता दूरतस्तौ धरित्री।

---

(४१) प्रभञ्जननन्दनोऽपि वानरेन्द्रोऽनूत्पतितो मेघनादस्य रथवरम्।

---

निःसरणादिति भावः। धुसुवस्य अग्रभागस्य चूडाया इत्यर्थः अङ्गेन विवर्त्तितानि विशेषेण चालितानि अश्वानां नयनानां यथाविधेन तथाविधः ते तत्र पुत्रस्य इन्द्रजितः अयं रथः गगनम् उत्पतितः उड्डीनः। वसन्ततिलकं वृत्तम्।

(ध) प्रभञ्जननन्दनः वायुपुत्रः वानरेन्द्रः हनुमान् अनूत्पतितः अनुसृत्य उत्थितः।

(न) मेघेति। मेघस्य उदरात् द्रुतपरिप्लुतेन मोचितं निष्कासितम् अश्वाः सविशं येन तथाभूतः सप्त तुरगान् अश्वान् संस्तभ्य निश्चलीकृत्य अरुणेन सूर्यसारथिना दृष्टः वैमानिकैः विमानचारिभिः देवैरित्यर्थः तत इतः इतस्ततः समन्तादित्यर्थः श्रमं सुप्तः लुप्तः मार्गः

स्वप्राग्भागस्थगितगगने कुम्भकर्णे विनिर्या-
त्युच्चैर्नीतो दिनमणिरथस्त्रस्यता चारुणेन ॥ ४० ॥ (प)

नेपथ्ये । कः कोऽत्र भोः । विज्ञाप्यतां देवो दशकण्ठस्त-
दिदं तवानुजः प्रतिजानीते ।

सीताप्रियं च दलितेश्वरकार्मुकं च
वालिद्रुहं च रचिताम्बुधिबन्धनं च ।
रक्षोहणं च विजिगीषुबिभीषणं च
रामं निहत्य चरणौ तव वन्दिताहे ॥ ४१ ॥ (फ)

---

पन्थाः यस्य सः हनूमान् सौमित्रिणा लक्ष्मणेनेति शेषः सह खम् आकाशम् उत्पतितः । वसन्ततिलकं वृत्तम् ।

(प) दिङ्मातङ्गैरिति । स्वस्य प्राग्भागेन देहपूर्वभागेनेत्यर्थः स्थगितम् आवृतं गगनं येन तादृशे कुम्भकर्णे विनिर्याति लङ्कात् रणभूमिं गच्छति सति दिङ्मातङ्गैः दिग्गजैः कमठपतिना कच्छपराजेन भुजङ्गराजयाच्ञिना इति भावः भोगिभर्त्रा भुजङ्गराजेन च सह कुम्भकर्णदेहेनेति भावः अनर्थ दूरतन्वी अतिभारवती धरित्री मेदिनी कथमपि कृत्वा अतियत्नम् आश्रित्येत्यर्थः धृता अवलम्बिता, अरुणेन च त्रस्यता बिभ्यता सता दिनमणेः सूर्यस्य रथः उच्चैः नीतश्च इति शङ्के सम्भावयामि । मन्दाक्रान्तावृत्तम् ।

(फ) सीताप्रियमिति । सीताप्रिया यस्य तम् अथवा सीतायाः प्रियः पतिः तञ्च दलितं भग्नम् ईश्वरस्य कार्मुकं धनुर्येन तथोक्तं हरधनुर्भञ्जकमित्यर्थः वालिद्रुहं वालिघातिनञ्च रचितं कृतम् अम्बुधेः सागरस्य बन्धनं येन तादृशञ्च रक्षोहणं राक्षसहन्तारञ्च विजिगीषुः विजयार्थी बिभीषणो यस्य तञ्च रामं निहत्य तव चरणौ पादौ वन्दिताहे अभिवादयिष्यामि । वसन्ततिलकं वृत्तम् ।

रावणः । साधु वत्स कुम्भकर्ण ! साधु कथमन्यथा (ब) समरसीमनि रावणस्त्वत्प्रवणः ।

इत्यिषतो नेपथ्ये । उभुखः । देव ! दृश्यतां(भ) चत्रियतापसव्यवसायः ।

> पौलोमीकुचसिचयं हठेन हृत्वा
> यः क्लृप्तो नृहरिसटौघचामराङ्कः ।
> त्वत्सूनोः शिखिरथकेतने च तस्मिन्
> सौमित्रेः सपदि पतन्ति बाणदण्डाः ॥ ४२ ॥(म)

पुनरवलोक्य । साधु भोः कुमार मेघनाद ! साधु साधु (य)संक्रान्तकार्मुकोपनिषदाचार्य्यादृश्यकण्ठतोऽसि ।

---

(ब) समरसीमनि युद्धसीमायां त्वत्प्रवणः त्वदेकायत्तः त्वामेवाश्रित्य युद्धाय प्रवर्त्तते इति भावः ।

(भ) चत्रियतापसव्यवसायः चत्रियतापसस्य लक्ष्मणस्य व्यवसायः व्यापारः ।

(म) पौलोमीति । नृहरेः नरसिंहस्य सटानां जटानाम् ओघाः समूहा एव चामराः तैः अङ्कः चिह्नं यस्य तथोक्तः नृसिंहदेवं पराजित्य तस्य उत्पाटितेन केशरचयेन ध्वजपटे चामरानुष्ठानादिति भावः । यः पौलोम्याः शच्याः इन्द्राण्या इत्यर्थः पुलोमजा शचीन्द्राणीत्यमरः कुचसिचयं स्तनांशुकं हठेन बलात् हृत्वा क्लृप्तः रचितः सपताकः कृत इत्यर्थः त्वत् सूनोः तव पुत्रस्य इन्द्रजितः तस्मिन् शिखिरथकेतने आग्नेयरथध्वजे च सौमित्रेः सुमित्रानन्दनस्य लक्ष्मणस्य बाणदण्डाः सपदि सद्यः पतन्ति । प्रहर्षणीवृत्तं त्र्याशाभिर्मनजरगाः प्रहर्षणीयमिति लक्षणात् ।

(य) संक्रान्तेति । संक्रान्ता प्राप्ता कार्मुकोपनिषद् धनुर्वेदः यं तथोक्तः ।

देव पुलस्त्यनन्दन !।

यन्मङ्गले स्नपितमञ्जनयाऽऽर्द्रनेत्रया
यन्मारुतश्च परिचुम्बति कौतुकेन ।
न्यस्तः शरः शिरसि तत्र हनूमतोऽस्य
पुत्रेण ते रभसलङ्घितसागरस्य ॥ ४३ ॥ (र)

रावणः । तर्हि प्रतिकृतो (ल) लङ्कादाहपरिभवः कुमाराक्षवधपरिभवश्च वत्समेघनादेन ।

सुमुखः ।

यानूर्मिलापतिरयं च तवात्मजश्च
बाणोत्करान् विकिरतो रचितान्धकारान् ।
तेऽन्योन्यखण्डनवशाद्विफलीभवन्ति
रत्युत्सवे बधिरयोरिव कण्ठनादाः ॥ ४४ ॥ (व)

---

(र) यन्मङ्गले इति । अञ्जनया तदाख्यया वानर्या आर्द्रे स्नेहेनेति शेषः । नेत्रे यस्याः तादृश्या सत्या यत् मङ्गले माङ्गलिके कर्म्मणि स्नपितं स्नानं कारितमित्यर्थः । मारुतः वायुः यत् कौतुकेन आनन्देन परिचुम्बति च ते तव पुत्रेण रभसेन वेगेन लङ्घितः तीर्णः सागरो येन तादृशस्य अस्य हनूमतः तत्र तस्मिन् शिरसि शरः न्यस्तः क्षिप्तः । तव पुत्रः हनूमन्तं शीर्षे विव्याधेति भावः । वसन्ततिलकं वृत्तम् ।

(ल) प्रतिकृतः प्रतिविहितः ।

(व) यानिति । अयम् ऊर्मिलापतिः लक्ष्मणश्च तव आत्मजः मेघनादश्च रचितान्धकारान् यान् बाणोत्करान् शरसङ्घान् विकिरतः अन्योन्यं प्रति विक्षिपतः, ते रत्युत्सवे सुरतप्रसङ्गे बधिरयोः श्रोत्रेन्द्रियरहितयोर्दम्पत्योरिति शेषः कण्ठनादाः कण्ठध्वनय इव अन्योन्यखण्डनवशात् विफलीभवन्ति व्यर्था भवन्तीत्यर्थः । वसन्ततिलकं वृत्तम् ।

वामतः कलहंसकः । किं उण एस(ग)विडम्बिअहेरम्बगल-गुञ्जारवो विणिज्जिदसङ्करकरप्फालिअगड्डमरडमरुअको-लाहलो कुण्ठिअवेउण्ठसूअरघोरघुक्कारप्पसरो णिउञ्चिअ-णरसिंहसुक्कपुक्कलहुक्कारवइअरो असेसमल्लसंमद्दो सुणी-अइ (४४) ।

करङ्कः । कर्णौ पिधाय । देव ! यथाऽभिहितं कलहंसकेन ।

कुर्वन्नुत्कर्णतालान् दिशि दिशि करिणो धौर्जटीनां जटानां
बन्धाहिग्रन्थिमुद्रां सपदि शिथिलयन् खण्डितोपेन्द्रनिद्रः ।
कुन्दानो नन्दिवाद्यं मुरजमुखरतं भुग्नविघ्नप्रमोदो (घ)
रोदोरन्ध्रं निरुन्धं प्रसरति किमिदं निष्ठुरज्यानिनादः ॥ ४५

(४४) किं पुनरेष विडम्बितहेरम्बगलगुञ्जारवो विनिर्जितशङ्कर-करास्फालितोड्डामरडमरुककोलाहलः कुण्ठितवैकुण्ठसूकरघोरघुत्कार-प्रसरो निकुञ्चितनरसिंहशुष्कपुत्कारहुङ्कारव्यतिकरोऽशेषमल्लसंमर्दः श्रूयते ।

(ग) विडम्बितेति । विडम्बितः अनुकृतः हेरम्बस्य गजाननस्य गलगुञ्जारवः कण्ठगर्जितं येन तथाभूतः । विनिर्जितेति विशेषेण पराभूतः शङ्करस्य करेण आस्फालितस्य ताडितस्य उड्डामरस्य महतः डमरुकस्य वाद्यविशेषस्य कोलाहलः रवविशेषः येन तथाविधः । कुण्ठितः तिरस्कृतः वैकुण्ठसूकरस्य आदिवराहस्य घोरः महान् घुत्-कारप्रसरः येन तादृशः निकुञ्चितः निःशेषेण कुञ्चितः कुण्ठितः अभि-भूत इत्यर्थः नरसिंहेन शुष्कः पुत्कारः प्रचण्डः हुङ्कारव्यतिकरः गर्जन-विशेषः येन तथोक्तः । अशेषः अविच्छिन्नः मल्लानां सम्मर्दः पर-स्परसिंहनादव्यतिकरः ।

(घ) कुर्वन्निति । दिशि दिशि करिणः दिग्गजानित्यर्थः उत्कर्ण-

रावणः। जाने वत्संस्य (ङ) साम्मुख्यं भजता ज्याब-न्धबन्धुरितं धनुरास्फालितं ज्येष्ठतापसेन।

इत्यिषतो नेपथ्ये। सुमुखः। (च) गगनाङ्गनचारिणोरुभ-योरपि सायकैर्विचित्रमाचेष्टितं तथाहि।

अमी पुरोऽभ्राणि विभिद्य पत्रिणः

प्रयान्ति धारासलिलैः सह क्षितिम्।

वहन्त्यथैतानि च पश्य विश्वतः

पृषत्करन्ध्रैः स्थितयोरनुक्रियाम्॥ ४६॥ (छ)

---

तालान् उद्गतकम्पानित्यर्थः कुर्वन्, सपदि सहसा धौर्जटीनां शाम्भ-वीनां जटानां मध्ये मध्यने यः अहेर्भुजगराजस्य पन्थिः तस्य मुद्रां दार्ढ्यं शिथिलयन् शिथिलां कुर्वन्, खण्डिता नाशिता उपेन्द्रस्य नारायणस्य निद्रा योगनिद्रा इत्यर्थः येन तथाभूतः मुरजस्य वाद्यभेदस्य मुख्ये रतं स्थितं नन्दिनो हरानुचरस्य वाद्यं कुन्दानः तिरस्कुर्वन् भुवनः नाशितः विश्वस्य जगतः प्रमोदः हर्षः येन तथाभूतः निठुरः कर्कशः ज्यानिनादः मौर्वीनिस्वनः निरङ्कुम् अन्योन्यसम्मर्दपर्वेन इति शेषः इदं रोदोरन्ध्रं द्यावापृथिव्योरभ्यन्तरं किं प्रसरति स्पृशति आक्रा-मतीत्यर्थः। स्रग्धरावृत्तम्।

(ङ) वत्सस्य कुम्भकर्णस्य साम्मुख्यं सम्मुखवर्त्तित्वं भजता प्राप्नु-वता सम्मुखवर्त्तिना इत्यर्थः ज्येष्ठतापसेन रामेण ज्याबन्धेन मौर्वी-संयोगेन बन्धुरितम् आनतं धनुः आस्फालितं टङ्कारितम्।

(च) गगनाङ्गनचारिणोः आकाशमार्गवर्त्तिनोः उभयोर्लक्ष्मणेन्द्र-जितोः सायकैः शरैः।

(छ) अमी इति। अमी पत्रिणः शराः पुरः अग्रतः अभ्राणि मेघान् विभिद्य धारासलिलैः सलिलधाराभिः सह क्षितिं पृथिवीं प्रयान्ति। अथ अनन्तरम् अभ्रभेदपूर्वकसलिलपातानन्तरम् एतानि

वामतः कञ्चुकः । किं उण एस (ग) विडम्बिअहेरम्बगल-गुञ्जारवो विणिज्जिदसङ्करकरप्फालिअगड्डमरडमरुअको-लाहलो कुण्ठिअवेउण्ठसूअरघोरघुक्कारप्पसरो णिउञ्चिअ-णरसिंहमुक्कपुक्कलवुक्कारवइअरो असेससद्दसंमद्दो सुणी-अइ (४४) ।

वररुचकः । कर्णौ पिधाय । देव ! यथाऽभिहितं कञ्चु-किना ।

कुर्वन्नुत्कर्णतालान् दिशि दिशि करिणो धौर्जटीनां जटानां
बन्धाहिग्रन्थिमुद्रां सपदि शिथिलयन् खण्डितोपेन्द्रनिद्रः ।
कुन्दानो नन्दिवाद्यं मुरजमुखरतं भग्नविघ्नप्रमोदो (घ)
रोदोरन्ध्रं निरुन्धन् प्रसरति किमिदं निष्ठुरज्यानिनादः ॥ ४५

(४४) किं पुनरेष विडम्बितहेरम्बगलगुञ्जारवो विनिर्जितशङ्कर-करास्फालितोड्डामरडमरुककोलाहलः कुण्ठितवैकुण्ठसूकरघोरघुत्कार-प्रसरो निकुञ्चितनरसिंहमुक्तपुष्कलबुक्कारव्यतिकरोऽशेषशब्दसंमर्दः श्रूयते ।

(ग) विडम्बितेति । विडम्बितः अनुकृतः हेरम्बस्य गजाननस्य गलगुञ्जारवः कण्ठगर्जितं येन तथाभूतः । विनिर्जितेति विशेषेण पराभूतः शङ्करस्य करेण आस्फालितस्य ताडितस्य उड्डामरस्य महतः डमरुकस्य वाद्यविशेषस्य कोलाहलः रवविशेषः येन तथाविधः । कुण्ठितः तिरस्कृतः वैकुण्ठसूकरस्य आदिवराहस्य घोरः महान् घुत्-कारप्रसरः येन तादृशः निकुञ्चितः निःशेषेण कुञ्चितः कुण्ठितः अभि-भूत इत्यर्थः नरसिंहेन मुक्तः पुष्कलः प्रचण्डः बुक्कारव्यतिकरः गर्जन-विशेषः येन तथोक्तः । अशेषः अविच्छिन्नः शब्दानां सम्मर्दः पर-स्परसिंहनादव्यतिकरः ।

(घ) कुर्वन्निति । दिशि दिशि करिणः दिग्गजानित्यर्थः उत्कर्ण-

रावणः । जाने वत्सस्य (ङ) साम्मुख्यं भजता ज्याबन्धबन्धुरितं धनुरास्फालितं ज्येष्ठतापसेन ।

दक्षिणतो नेपथ्ये । समुखः । (च) गगनाङ्गनचारिणोरुभयोरपि सायकैर्विचित्रमाचेष्टितं तथाहि ।

अमी पुरोऽभ्राणि विभिद्य पत्रिणः
प्रयान्ति धारासलिलैः सह क्षितिम् ।
वहन्त्यथैतानि च पश्य विक्षतः
पृषत्करन्ध्रैः स्थितयोरनुक्रियाम् ॥ ४६ ॥ (क)

---

तारकान् उद्गतकनीनिकानित्यर्थः कुर्वन्, सपदि सहसा धौर्जटीनां शाम्भवीनां जटानां बन्धे बन्धने यः अहिर्भुजगराजस्य पन्थिः तस्य मुद्रां दार्ढ्यं शिथिलयन् शिथिलां कुर्वन्, खण्डिता नाशिता उपेन्द्रस्य नारायणस्य निद्रा योगनिद्रा इत्यर्थः येन तथाभूतः मुरजस्य वाद्यभेदस्य समीरितं स्थितं नन्दिनो हरानुचरस्य वाद्यं कुन्दानः तिरस्कुर्वन् भुम्नः नाशितः विश्वस्य जगतः प्रमोदः हर्षः येन तथाभूतः निठुरः कर्कशः ज्यानिनादः मौर्वीनिस्वनः निरङ्कुशम् अन्योन्यसम्मर्दगर्वेण इति शेषः इदं रोदोरन्ध्रं द्यावापृथिव्योरभ्यन्तरं किं प्रसरति स्थगति आक्रामतीत्यर्थः । स्रग्धरावृत्तम् ।

(ङ) वत्सस्य कुम्भकर्णस्य साम्मुख्यं सम्मुखवर्त्तित्वं भजता प्राप्नुवता सम्मुखवर्त्तिना इत्यर्थः ज्येष्ठतापसेन रामेण ज्याबन्धेन मौर्वीसंयोगेन बन्धुरितम् आनतं धनुः आस्फालितं टङ्कारितम् ।

(च) गगनाङ्गनचारिणोः आकाशमार्गवर्त्तिनोः उभयोर्लक्ष्मणेन्द्रजितोः सायकैः शरैः ।

(क) अमी इति । अमी पत्रिणः शराः पुरः अग्रतः अभ्राणि मेघान् विभिद्य धारासलिलैः सलिलधाराभिः सह क्षितिं पृथिवीं प्रयान्ति । अथ अनन्तरम् अभ्रभेदपूर्वकसलिलपातानन्तरम् एतानि

अपि च । अत्रान्तरिक्षकुक्षौ(ख)निरन्तरे शरव्यतिकरे ।

अन्तर्धाय परिक्रमन्ति सभियः सिद्धाः प्रसिद्धा अमी
नात्यर्थं च सुधाभुजो वयमिति नश्यन्ति नाकौकसः ।
दारानन्तरयद्भिरात्मवपुषा नष्टं च विद्याधरै-
रभ्यस्यन्ति च काण्डवारणकरीं विद्यां गणश्रेणयः ॥ ४७ ॥(ग)

वामतः कहकलः । कहं (घ) परिअणसमप्पिअं पहरण-संदोहमवमण्णिअ पत्थिओ कुम्भअण्णो (४५) ।

---

(४८) कथं परिजनसमर्पितं प्रहरणसन्दोहमवमत्य प्रस्थितः कुम्भकर्णः ।

---

अभ्राणि च विश्वतः समन्तात् पृषत्करभैः वर्षविन्दुव्याजैरित्यर्थः स्थितयोः लक्ष्मणमेघनादयोः अनुक्रियाम् अनुकरणं वहन्ति कुर्वन्ति पश्य अवलोकय यथा उभयौ वीरौ शरैः अभ्राणि भिन्तः, तथा अभ्राण्यपि धाराविन्दुभिः तौ भिन्तीति भावः । वंशस्थविलं वृत्तम् ।

(ख) अन्तरिक्षकुक्षौ गगनाभ्यन्तरे निरन्तरे नीरन्ध्रे शरव्यतिकरे शरसम्पाते ।

(ग) अन्तर्धायेति । अमी प्रसिद्धाः सुविख्याताः महानुभावा इत्यर्थः सिद्धाः देवयोनिविशेषाः सभियः भयार्त्ताः सन्तः अन्तर्धाय तिरोभूय परिक्रमन्ति गच्छन्ति । नाकौकसः स्वर्गवासिनः देवाः वयं सुधाभुजः अमृतपायिनः अस्माकं मृत्युभयं नास्तीति भावः इति हेतोः अत्यर्थं न नश्यन्ति । विद्याधरैः देवयोनिविशेषैः आत्मवपुषा स्वदेहेन दारान् कान्ताः अन्तरयद्भिः आच्छादयद्भिः सद्भिः नष्टं पलायितञ्च । गणश्रेणयः अन्ये खेचरगणा इत्यर्थः काण्डवारणकरीं शरनिवारणीं विद्याम् अभ्यस्यन्ति च । शार्दूलविक्रीडितं वृत्तम् ।

(घ) परिजनेन पार्श्वचरेण समर्पितं दत्तं प्रहरणसन्दोहम् अस्त्रसमुदायम् अवमत्य अगणयित्वा अस्वीकृत्येत्यर्थः प्रस्थितः चलितः ।

करङ्कः । किमाह कुम्भकर्णः । आस्तां धनुः इत्यादि पठति ।

रावणः । साधु वत्स साधु सत्यं मदनुजोऽसि तदुद्धृतं रावणहृदयशल्यम् ।

दुर्मुखः । हाहा ! किं एअं वट्टइ जदो सव्वदो सदसहस्सलक्खसंखा पज्जलन्ति हुयवहा जहं अ (ङ) अञ्जणगिरिकुडविअडो पसरइ धूमुप्पीडो मेरुसिहरदीहरसिहाघट्टाविसट्टन्ति जालाओ सञ्झारविमण्डलपज्जलङ्गाविपफुरन्ति पफुलिङ्गा (४६) ।

रावणः ।

> अनेन लङ्का यदकारि मत्पुरी
> हनूमतो गात्रगतेन भस्मसात् ।
> निजापराधप्रशमाय तद् ध्रुवं
> निषेवितुं मामयमेति पावकः ॥ ४८ ॥ (च)

---

(४६) हा हा किमेतद् वर्त्तते । यतः सर्वत शतसहस्रलक्षसङ्ख्याः प्रज्वलन्ति हुतवहा यथा चाञ्जनगिरिकूटविकटः प्रसरति धूमोत्पीडो मेरुशिखरदीर्घशिखासङ्घा विसरन्ति ज्वालाः सन्ध्यारविमण्डलप्रज्वलनाङ्गा विस्फुरन्ति स्फुलिङ्गाः ।

---

(ङ) अञ्जनेति । अञ्जनगिरेः कूटं शृङ्गं तद्वत् विकटः करालः । धूमोत्पीडः धूमराशिः ।

(च) अनेनेति । अनेन हनूमतः गात्रगतेन शरीरलग्नेन पावकेन मत्पुरी यत् भस्मसात् अकारि कृता, तत् निजापराधस्य निजदोषस्य मदनिष्टाचरणरूपस्य प्रशमाय अयं पावकः अग्निः ध्रुवं निश्चितं मां निषेवितुम् आराधयितुम् एति आगच्छति । उपेन्द्रवज्रावृत्तम् ।

ऋत्वृषः । देव ! पदातिलवस्तु (छ) सुमुखोऽभिमन्यते लक्ष्मण-दिधक्षया कुमारमेघनादेन प्रहितमाग्नेयमस्त्रं तत एष भुवनाप्लोषः । अकुल्या निर्दिशन् ।

सद्यः सिञ्चति विष्टराम्बुजमयं देवः श्रुतीनां कवि-
स्ताराम्तःपुरवानुपैति गगनाच्चन्द्रो जलार्द्रीकृतः ।
गङ्गा च द्युमणेः सुता च सरितावन्योन्यमाश्लिष्यतः
किञ्चास्त्रानलडम्बरे करिमुखः क्षीराब्धिमाधावति ॥ ४८ ॥ (ज)

अपि च

दुग्धाब्धेः क्वथनाविलं तत इतो धत्ते पयः पिण्डतां
शैलेन्द्रः प्रविलीनकृत्स्नतुहिनः पाषाणशेषः स्थितः ।
सान्द्राभिः करकाश्मवृष्टिभिरमी गर्भं चरन्त्यम्बुदाः
शोषार्तिं च समश्नुते रविरपि स्वाहापतेः पत्रिभिः ॥ ५० ॥ (झ)

---

(छ) पदातिलवः पदातिषु लवः विन्दुः सामान्यपदातिसैनिक इत्यर्थः । अभिमन्यते गच्छते सम्भावयतीत्यर्थः लक्ष्मणस्य दिधक्षया दग्धुमिच्छया । भुवनाप्लोषः भुवनदाहः अस्तीति शेषः ।

(ज) सद्य इति । अस्त्रानलडम्बरे आग्नेयास्त्रसन्तापे सति अयं श्रुतीनां वेदानां कविः रचयिता देवः प्रजापतिः सद्यः सपदि विष्टरम् आसनम् अम्बुजं पद्मं सिञ्चति । ताराम्तःपुरवान् तारापतिरित्यर्थः । चन्द्रः जलार्द्रीकृतः जलमिलितावहन्त्याच्छादित इत्यर्थः गगनात् उपैति पलायते इत्यर्थः । गङ्गा च द्युमणेः सूर्यस्य सुता यमुना च सरितौ नद्यौ अन्योन्यं परस्परम् आश्लिष्यतः आलिङ्गतः । किञ्च करिमुखः गणपतिः क्षीराब्धिम् आधावति अभिगच्छति । शार्दूलविक्रीडितं वृत्तम् ।

(झ) दुग्धाब्धेरिति । स्वाहापतेः अग्नेः पत्रिभिः शरैः आग्ने-

नामतः कञ्चुकिनः । देव! पेक्ख दाव (ज) दावसमुग्गदण्डसोभग्गप्फालणाणन्तरं परिहरिअ पहरणाइं रहसुम्मूलिदतमालमालं सहत्थभामिदप्पहरणसज्जसज्जं सम्मुहागदच्छिन्नतालतालं दूरुल्लासिदकुसुमपाडलपाडलं गअणन्दोलिदविसालसालं रहसुच्छलिदपडन्तकेसरकेसरं गहिदसव्वङ्गसरलसरलं लोलिदकुसुमसंदणसंदणं पअट्टभ्रधरि-

---

यास्तैरित्यर्थः दुग्धाब्धेः दुग्धसागरस्य पयः सलिलं ततः इतः इतस्ततः क्वथनाविलं क्वथनेन तापातिशयेन आविलं कलुषितं सत् पिण्डतां घनत्वं धारयति । शैलेन्द्रः हिमवान् प्रविलीनानि प्रकर्षेण विशेषेण च लीनानि शुष्काणि लतृणानि समग्राणि तुहिनानि हिमानि यस्य तादृशः सन् पाषाणशेषः प्रस्तरावशिष्टः स्थितः । अमी अम्बुदा मेघाः सान्द्राभिः अविच्छिन्नाभिः करकाणां वर्षोपलानां वर्षोपलस्तु करक इत्यमरः । अश्मनां प्रस्तराणाञ्च वृष्टिभिः वर्षणैः गर्भं चरन्ति स्रवन्ति । रविरपि शोषार्त्तिं दाहपीडां समश्नुते भजते । शार्दूलविक्रीडितं वृत्तम् ।

(झ)तापसेति । तापसस्य भुजदण्डेन कोदण्डस्य धनुषः आस्फालनानन्तरं आरोपणात् परं प्रहरणानि अस्त्राणि परिहृत्य परित्यज्य । रभसेति रभसेन वेगेन उन्मूलिता उत्पाटिता तमालानां माला श्रेणी येन तादृशम् । सहस्तेति स्वहस्तैः भ्रामिताः प्रहरणार्थं सज्जाः उद्यताः सर्जाः शालवृक्षा येन तथोक्तम् । सम्मुखेति सम्मुखम् आगताः प्राप्ताः च्छिन्ना इत्यर्थः छिन्नाश्च तृणभेदाः तालाश्च येन तथाभूतम् । दूरेति दूरम् अत्यर्थम् उल्लासिता उन्मूलिता इत्यर्थः कुसुमैः पाटलाः रक्ताः पाटलावृक्षविशेषा येन तथोक्तम् । गगनेति गगने आकाशे आन्दोलिता भ्रामिताः विशालाः महान्तः शालाः सर्जतरवः येन तथाविधम् । रभसेति रभसेन वेगेन उच्छलिताः उत्पाटिताः अतएव पतन्तः केसराः किञ्जल्काः येभ्यः तादृशाः केसरा बकुलवृक्षा येन तथोक्तम् । गृहीतेति गृहीताः सर्वेषु अङ्गेषु सरलाः

दसव्वंसव्वंसं प्पअण्डकरकलिदपलासपलासं करजुअलबन्ध-रअवसपडन्तपीपलपीपलं णिसग्गकठिणकक्करकक्करं णह-प्पहारुक्खाअपत्थरपत्थरं प्पहरणीकदपडन्तगण्डगण्डसेलं सम्मुहोच्छुलिदं प्पहारप्पवणं वाणरबलम् (४७)।

---

(४७) देव ! प्रेक्षस्व तावत् तापसभुजदण्डकोदण्डास्फालनानन्तरं परिहृत्य प्रहरणानि रभसोन्मूलिततमालमालं स्वहस्तभ्रामितप्रहरण-खण्डसर्जं सम्मुखागतहिन्तालतालं दूरोल्लासितकुसुमपाटलपाटलं गगनान्दोलितविशालशालं रभसोच्छलितपतत्केसरकेसरं गृहीतस-र्वाङ्कुरसरलसरलं शोणितकुसुमस्यन्दनस्यन्दनं प्रयत्नोद्धृतसर्वांशवंशं प्रचण्ड-करकलितपलाशपलाशं करयुगलबन्धरयवशपतत्पिप्पलपिप्पलं निसर्ग-कठिनकर्करकर्करं नखप्रहारोत्खातप्रस्तरप्रस्तरं प्रहरणीकृतपतद्गण्डगण्ड-शैलं सम्मुखोच्छलितं प्रहारप्रवणं वानरबलम् ।

---

देवदारवः येन तादृशम् । शोणितेति शोणिताः लोहिताः कुसुमस्यन्दनाः पुष्पवर्षिणः स्यन्दनाः तिनिशवृक्षा येन तथाभूतम् । प्रयत्नेति प्रयत्नेन आयासेन उद्धृता उत्पाटिताः सर्वांशाः सर्वप्रकाराः वंशा येन तथा-विधम् । प्रचण्डेति प्रचण्डैः भीषणैः करैः हस्तैः कलितानि पलाशानि पुष्पाणि येषां तादृशाः पलाशाः किंशुकतरवः येन तथो-क्तम् । करेति करयुगलैः यः बन्धः आक्रमणं तस्य रयवशेन वेग-वशात् पतन्ति पिप्पलानि तत्रत्य फलपुष्पाणि येभ्यः तादृशाः पिप्पलाः तदाख्य वृक्षभेदाः यस्य तादृशम् । निसर्गेति । निसर्गेण स्वभावेन कठिनकर्करवत् कर्करं कठिनम् । नखेति नखानां प्रहारेण उत्खाताः प्रस्तरप्रस्तराः पाषाणसङ्घा येन तादृशम् । प्रहरणीति प्रहरणीकृता अस्त्रीकृताः पतन्तः गण्डाः पीना येभ्यः तादृशा गण्डशैलाः क्षुद्रपर्वता येन तथोक्तम् । सम्मुखे रणाग्रे उच्छलितं विस्तृतं प्रहारे संग्राम-व्यापारे प्रवणं प्रकटबलम् ।

रावणः । का पुनरमीभिर्गणना शलभायन्ते कुम्भकर्णे (ट) वानरबलानि ।

दक्षिणतो दुर्मुखः । किं उण एदं (ठ)दसदिसाप्पसरिद-चउस्समुद्दं विअ जलअन्ताअन्तगिरिन्दसंदोहं विअ सलि-लीभूदगअणवलअं विअ वारिसिहिमेत्तपअट्टपआवईवा-वारं विअ भुअणब्भन्तरं वट्टदि (४८) ।

सुमुखः । एवमेवैतत् ।

न्यस्यन् कान्तिं हुतवह इव स्वर्गपद्माकराणां
ज्वालाधौतान्यपि विशदयन्निम्नशोणांशुकानि । (ड)

---

(४८) किं पुनरेतद् दशदिशाप्रसृतचतुःसमुद्रमिव जलयन्त्रायमाण-गिरीन्द्रसन्दोहमिव सलिलीभूतगगनवलयमिव वारिशिखिमात्रप्रवृत्त-प्रजापतिव्यापारमिव भुवनाभ्यन्तरं वर्त्तते ।

---

(ट) शलभायन्ते शलभाः पतङ्गा इव आचरन्ति इत्यर्थः ।

(ठ) दशेति । दशदिशासु प्रसृताः प्रचलिताः चत्वारः समुद्रा यस्य तथाभूतमिव । जलेति जलयन्त्रायमाणा जलयन्त्राणीव आच-रन्तः गिरीन्द्राणां पर्वतानां सन्दोहाः समूहाः यत्र तथाविधमिव । सलिलीति । सलिलीभूतं गगनवलयम् आकाशमण्डलं यस्य तथाभूत-मिव । वारीति वारिशिखिमात्रे जलवह्निमात्रे प्रवृत्तः उद्यतः प्रजापतेः स्रष्टुः व्यापारः यत्र तादृशमिव भुवनाभ्यन्तरं जगद्विवरम् ।

(ड) न्यस्यन्निति । हुतवह इव अग्निरिव स्वर्णपद्माकराणां त्रि-दिवसरसां कान्तिं न्यस्यन् क्षिपन् एकत्र निर्वापयन् अन्यत्र आवि-

रिक्ताभ्राणां भरणकरणं स्थान एव स्थितानां
किं नामायं प्रथयति पुरो रोदसो वारिपूरः ॥ ५१ ॥

रावणः। विचिन्त्य चेयमनभ्रवृष्टिः। विहस्य। भवतु ज्ञातम्।

लघीकरोमि वरुणं न शरावलीनां
वार्यन्त्रतां प्रणयतैर्हृदयं बिभर्त्ति।
भोक्तुर्महाकरुणयेत्युपकारिणो मे
सीतावियोगदवथुं स हि मार्ष्टि वृष्ट्या ॥५२॥ (ठ)

लक्ष्मणः। अहं पुनर्जाने (ण) चैत्रभानवमस्त्रम वजितुं वारुणबाणप्रवणो लक्ष्मणः।

---

अयन् ज्वालया अग्निशिखया भीतानि दीपितानि अग्निशोषाणि कांसु-क्रान्ति वसनानि विशयदन् परिष्कुर्वन् स्थाने एव स्थितानां न तु चलितानां रिक्ताभ्राणां निर्जलमेघानां भरणस्य पूरणस्य करणं साधनम् अयं वारिपूरः जलप्रवाहः पुरः अग्रतः किं रोदसो द्यावाभूम्योरन्तरालं प्रथयति पूरयति नाम सम्भावनाम् इति सम्भावयामीति भावः।

(ठ) लघीति। वरुणं जलाधिदेवं शरावलीनां न लघीकरोमि शरव्यूहैः न प्रहरामीति भावः यस्मात् अयं वरुणः प्रणयनैः पूर्वं प्रहारतैः वार्यन्त्रतां जलयन्त्रतां बिभर्त्ति धारयति मम जलयन्त्रभूत आस्ते इति भावः साम्प्रतं महाकरुणया महत्या अनुकम्पया भोक्तुः त्यक्तुः वाचलक्ष्यमकर्तुरिममर्थः इति हेतोः अतएव उपकारिणः मे मम सीतावियोगेन यः दवथुः सन्तापस्तं स वरुणः वृष्ट्या वर्षणेन मार्ष्टि हि अपनयति खलु। वसन्ततिलकं वृत्तम्।

(ण) चैत्रभानवम् आग्नेयम्। अस्त्रमेतं निर्वापयितुं वारुणरूपं प्रवणः वारुणास्त्रप्रयोक्ता इत्यर्थः।

कङ्कालकः । अध तत्थ केवि कापञ्जो कुच्छअसस्स(त)चण्डि-
लणहसिहरेहिं खण्डिदकआ वराहा विअ पाएसु पडन्ति
उअणिमन्तिणोव्व जङ्घासु लग्गन्ति पुरिसकडिलग्गपडव्व-
ऊरुसु मव्वन्ति अस्सवारकरवालव्व णिअम्बविम्बे दोलन्ति
सुअणव्व मज्झत्था होन्ति विहुरकुडुम्बव्व पासेसु चिठ्-
ठन्ति तरुणीथणाव्व वच्छत्थले वित्थरन्ति वेणिदण्डव्व
पुठ्ठिठ्ठाणे घोलन्ति चिरमिलिअबन्धवव्व कण्ठे लग्गन्ति
कवोलगलिअजलबिन्दुव्व चिवुअग्गे ललन्ति चुम्बणरसि-
अव्व अहरं पीडअन्ति सुरहिपरिमलव्व जहिच्छं नासा-

---

(त) चण्डिलेति । चण्डिलैः तीक्ष्णैः नखशिखरैः नखाग्रैः । खण्डितकचाः छिन्नकेशाः । वराहा इव शूकरा इव पादयोः पतन्ति लुठन्ति इत्यर्थः । उपनिमन्त्रिता इव अयत्ननिमन्त्रिता इवेत्यर्थः जङ्घासु लगन्ति न त्यजन्तीति भावः । पुरुषस्य कटिलग्नपटा इव कटिदेशस्थितवसनानीव ऊर्वोः मज्जन्ति तिष्ठन्ति ततो न लम्बन्ते इति भावः अश्ववाराणाम् अश्वारोहिणां करवाला इव तलवारा इव नितम्बबिम्बे कटिपश्चाद्भागे दोलन्ति लम्बन्ते । सुजनाः साधव इव मध्यस्थाः अपक्षपातिनः शरीरमध्यभागस्थिताश्च भवन्ति । विधुराः अनाथा इत्यर्थः कुटुम्बाः परिजना इव पार्श्वयोः तिष्ठन्ति । तरुणीनां स्तना इव वक्षस्थले विस्तरन्ति विस्तारं गच्छन्ति । वेणीदण्डा इव केशपाशा इव पृष्ठस्थाने पृष्ठदेशे घूर्णन्ति लम्बन्ते । चिरमिलितबान्धवाः बहुदिनागतमित्राणीव कण्ठे लगन्ति आलिङ्गन्ति । कपोलगलितजलबिन्दव इव चुबूकाग्रे समाग्रे लगन्ति पतन्ति । चुम्बनरसिका इव अधरदेशं पीडयन्ति दशन्ति । सुरभिपरिमला इव नासाविवरयोः यथेच्छं सञ्चरन्ति तिष्ठन्ति । सुभाषितं सुवचनमिव कर्णयोः प्रविशन्ति । बाला इव

विवरेसु सञ्चरन्ति सुहासिणव्व कण्णेसु प्पइसन्ति सिवि-णअव्व अच्छीसु लग्गन्ति प्पठ्ठाणतिलअव्व भाले विप्फु-रन्ति णीवव्व समालम्बिदा सीसे समारुहन्ति भुअङ्गाव्व केसगाहे अहिरमन्ति (४८) ।

रावणः । अथ प्लवङ्गयूथपतिषु किं कुरुते कुम्भकर्णः ।

कङ्कालकः । तदो तेण ताणं मज्झे केवि (थ) हदा पादेहिं कुप्परिदा कुप्परप्पहारेहिं कीलिदा कीलेहिं सक्करीकदा

---

(४८) अथ तत्र केऽपि कपयः कुम्भकर्णस्य चलितुमनसोऽवसरैः अविज्ञातकथा वराहा इव पादयोः पतन्ति उपनिमन्त्रिता इव अङ्केषु वसन्ति पुरुषकटिवस्त्रपटा इवोर्वोर्मिलन्ति अन्तःपारवारवाला इव नित-म्बबिम्बे दोलन्ति सुजना इव मध्यस्था भवन्ति शिशुरकुटुम्बा इव पार्श्वयोस्तिष्ठन्ति तरुणीजना इव वक्षःस्थले विहरन्ति ग्रैवेयका इव पृष्ठस्थाने घूर्णन्ति चिरमिलितबान्धवा इव कण्ठे लगन्ति कपोलनलि-नजलबिन्दव इव चिबुकाग्रे वसन्ति चुम्बनरसिका इवाधरं पीडयन्ति सुरभिपरिमला इव यथेच्छं नासाविवरयोः सञ्चरन्ति सुभाषितमिव कर्णयोः प्रविशन्ति स्वप्ना इवाक्ष्णोर्लगन्ते प्रस्थानतिलका इव भाले विस्फुरन्ति नीपा इव समालम्बिताः शीर्षे समारोहन्ति भुजङ्गा इव केशपाशेऽभिरमन्ते ।

---

निद्रा इव अक्ष्णोः चक्षुषोः लग्नास्तिष्ठन्ति । प्रस्थाने कुत्रचिद् गमन-काले कृताः तिलका इव भाले ललाटे विस्फुरन्ति शोभन्ते । नीपाः अमद्रा इव समालम्बिता हस्ताश्रया इत्यर्थः शीर्षे शिरसि समारोहन्ति अधितिष्ठन्ति । भुजङ्गा इव विटा इव केशपाशे कामिन्या इति शेषः ।

(थ) केऽपि वानराः पद्भ्यां हताः आहताः, कूर्परप्रहारैः क-

करसंपुडप्पीडणेण अप्फालिदा तलप्फालेहिं चप्पडिदा चवेडाहिं णिव्वाविदा मुठ्ठीहिं वथिदा अचलणेहिं (५०)।

करङ्कः। एवमेवैतत्।

मुष्ट्या पिनष्टि सुदृढैश्च तलैस्तृणेढि

पङ्क्त्यां निशुम्भति करेण च हन्त हन्ति।

तूर्णं च कर्णमतिकुर्पति कूर्पराभ्या-

मस्त्रायितावयव एष तवानुजन्मा ॥ ५३ ॥ (८)

सुमुखः। जनपीडापगममभिनीय। देव! दिष्ट्या युगपत्-

---

(५०) ततस्तेन तेषां मध्ये कोऽपि हताः पद्भ्यां कूर्परिताः कूर्परप्रहारैः कीलिताः कीलैः शर्करीकृताः करसंपुटोत्पीडनैरास्फालिता-स्तलास्फालैश्चिपिटीकृताश्चपेटाभिर्निर्वापिता मुष्टीभिर्व्यथिताश्च चरणाभ्याम्।

---

कोणस्याघातैः कूर्परिताः कूर्परैरोगिणः कृता इत्यर्थः कीलैः मुष्टिप्रहारैः कीलिताः आहताः, करसम्पुटोत्पीडनैः अञ्जलिप्रहारैः शर्करीकृताः चूर्णिताः तलास्फालैः करतलताडनैः आस्फालिताः ताडिताः। चपेटाभिः चपेटाघातैः चिपिटीकृताः पेषिता इत्यर्थः मुष्टिभिः निर्वापिताः निहताः। चरणाभ्यां व्यथिताः पीडिताश्च।

(८) मुष्ट्येति। एष तव अनुजन्मा अनुजः कुम्भकर्णः अस्त्रायितानि अस्त्रवदाचरितानि अवयवानि यस्य तथाभूतः तथा हि मुष्ट्या पिनष्टि दलति, सुदृढैः अतिकठिनैः तलैः करतलैः तृणेढि हिनस्ति पङ्क्त्यां निगृभ्णाति निःशेषेण हन्ति। करेण च हन्त हर्षे हन्ति नाशयति, तूर्णं शीघ्रं कूर्पराभ्यां कर्णम् अतिकुर्पति आहन्ति। वसन्ततिलकं वृत्तम्।

स्वपरबलविनाशशङ्कितेन सौमित्रिणा संहृतं वारुणमस्त्रम् ।

तथाहि ।

ज्वालापल्लवितो भवत्यतितरां नाद्याप्ययं पावकः
संवृत्तो रणरेणुधूसरवपुः स्नात्वा रविर्भास्वरः ।
शान्तः स्थाणुविलोचने च विषमच्छात्कारनादो महान्
प्रक्षाल्याम्बरमुर्वरां च विरते दिव्यास्त्रजे वारिणि ॥५४॥ (ध)

वामनः । करङ्कः ।

नासारन्ध्रनिरोधतः श्रवणयोश्छिद्रद्वयाच्छादना-
च्चक्षुःसम्पुटघट्टनान्मुखमहाव्यादानसङ्कोचनात् ।
दोर्मूलद्वयपीडनाच्च कुरुते क्रुद्धस्तवात्रानुजो
दिङ्मातङ्गपराक्रमानपि कपीन् हाहारवव्यापदम् ॥५५॥(न)

---

(ध) ज्वालेति । दिव्यास्त्रजे दिव्यास्त्रस्य वारुणस्य प्रभावात् जाते वारिणि जले अम्बरम् आकाशम् उर्वरां शस्यशालिनीं भुवञ्च प्रक्षाल्य अभिषिच्य । विरते निवृत्ते सति अयं पावकः अग्निः अद्यापि अतितराम् अत्यर्थं ज्वालाभिः शिखाभिः पल्लवितः विस्तारितः न भवति । रणरेणुभिः संग्रामरजोभिः धूसरं वपुः शरीरं यस्य तथाभूतः रविः स्नात्वा अस्तयारिणीति भावः भास्वरः दीप्यमानः क्षालितरजस्कत्वादिति भावः । संवृत्तः सञ्जातः । स्थाणोर्हरस्य विलोचने नेत्रे महान् विषमः प्रचण्डः छात्कारनादः रवविशेषः शान्तः निवृत्तः जलसेकेन उष्मापगमादिति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(न) नासेति । अत्र रणभूमौ क्रुद्धः तव अनुजः दिङ्मातङ्गानां दिग्गजानामिव पराक्रमो येषां तान् अपि कपीन् वानरान् नासा-रन्ध्रयोः निरोधतः अवरोधात् कृतकुम्भकतया तत्र प्रविष्टानां निर्गम-मनवाप्त्यैरिति भावः श्रवणयोः कर्णयोः छिद्रद्वयस्य आच्छादनात्

अपि च लङ्कापते पौलस्त्य!

धुतानां भवतो भ्रात्रा कपीनां तनुकम्पतः।

रोमावलम्बनभ्रष्टा विनष्टाः पञ्च कोटयः ॥ ५६ ॥ (प)

दर्शयतो दुर्मुखः सत्रासम्। किं उण (फ)बहलतेल्लकज्जलविद्धकज्जलविलित्तं विअ तरुणतापिच्छच्छविच्छोलिदं विअ सजलजलअजालमालिदं विअ सिदिकण्ठकण्ठप्पहापिहिदं विअ अवणुसणाराअणकन्तिसव्वस्सं विअ जममहि-

---

कराभ्यामाकर्षणादित्यर्थः ततोऽपि निर्गमनाक्षमत्वादिति भावः। चक्षुषोः सम्पुटघट्टनात् निमीलनात् मुखस्य यत् महत् व्यादानं विस्तारः तस्य सङ्कोचनात् दोर्मूलयोः हृदयस्य पीडनाच्च हाहारवस्य हाहाकारस्य शोकसूचकनिनादस्य आसरं कुरुते कपीन् पराजयते इति भावः। शार्दूलविक्रीडितं वृत्तम्।

(प) धुतानामिति। भवतः तव भ्रात्रा तनुकम्पतः शरीरस्य कम्पनेन धुतानां चलितानां कपीनां वानराणां पञ्च कोटयः रोमाणि एव कुम्भकर्णस्येति शेषः। अवलम्बनानि आश्रयाः तेभ्यः भ्रष्टाः च्युताः पतिता इत्यर्थः विनष्टा मृताः।

(फ) बहलेति। बहलेन तैलेन मिश्रितं यत् कज्जलं तेन विलिप्तमिव चित्रितमिव। तरुणेति। तरुणया तापिच्छानां तमालानां कान्त्या प्रभया छन्नमिव आवृतमिव। सजलेति सजलं सजलं यत् जलदजालं मेघसमूहः तेन मालितमिव शोभितमिव। शितिकण्ठेति शितिकण्ठस्य हरस्य कण्ठप्रभाभिः नीलाभिरिति भावः पिहितमिव आच्छादितमिव। अवनुसेति अवनतत्वं प्राप्तं नारायणस्य कान्तिसर्वस्वं येन तादृशमिव। यमेति यमस्य यः महिषः तस्य विषाणाभ्यां शृङ्गाभ्यां कीर्णमिव व्याप्तमिव। हेरम्बेति। हेरम्बस्य गणेशस्य दानकर्दमेन मदजलपङ्केन करम्बितमिव युक्तमिव।

सविसाणेहिं किणं विअ हेरम्बदाणकद्दमकरम्बिअं विअ भुवणङ्गणं वट्टदि (५१)।

रावणः। (ब) ननु क्व पुनस्तमस्काण्डैकचण्डो मार्त्तण्डो वर्त्तते। विचिन्त्य विहस्य च।

अराममपलक्ष्मणं भुवनमद्य निर्वानरं
विधाय शरवीचिभिर्नियतमिन्द्रजिद्रोषितः।
जिघांसति स मां गुरुं रघुभुवामितीव क्वचि-
द्भिया दिनकरे गते त्रिजगदेतदन्धं स्थितम् ॥५८॥(भ)

भूयो विहस्य। तदहो! दिनकरः क्व न दृश्यते वत्स-मेघनादस्य।

---

(५१) किं पुनर्वंशस्तम्भैर्नीलमिश्रितकज्जलविलिप्तमिव तरुणतापिच्छ-कान्तिच्छन्नमिव सजलजलदजालमालितमिव शितिकण्ठकण्ठप्रभा-पिहितमिवाप्रतुलनारायणकान्तिसर्वस्वमिव यममहिषविषाणाभ्यां कीर्णमिव हेरम्बदानकर्दमकरम्बितमिव भुवनाङ्गणं वर्त्तते।

---

(ब) ननु भोः क्व कुत्र तमसाम् अन्धकाराणां काण्डे विस्तारे एकचण्डः एकप्रचण्डः मार्त्तण्डः सूर्य्यः वर्त्तते तिष्ठति सूर्य्यस्यादर्श-नात् अन्धकारनिकराविर्भाव इति भावः।

(भ) अराममिति। रोषितः कोपितः इन्द्रजित् अद्य शरवी-चिभिः शरजालैः भुवनम् अरामं अपलक्ष्मणं निर्वानरञ्च विधाय नि-यतं निश्चितं रघुभुवां रघुवंशीयानां गुरुम् आदिपुरुषं मां जिघांसति हन्तुमिच्छति इतीव भियेति शेषः दिनकरे क्वचित् कुत्रापि गते वि-लोमे सति एतत् त्रिजगत् त्रिभुवनम् अन्धं तिमिरमयं स्थितम्। पृथ्वीवृत्तम्।

दक्षिणतः सुषेणः । देव ! पदातिलवस्तु सुमुखो मन्यते । रणाङ्गणचारिणो (म) वैरिणोऽन्धीकरणकारणतामिस्रमस्त्रमवतारितं युवराजेन्द्रजिता यतः ।

चक्रद्वन्द्वैर्विरहकलनाकातरैर्दीनदृष्टो
दत्तौत्सुक्यः कुवलयदृशां साभिसारव्रतानाम् ।
दृग्दौर्बल्यं विदधदधिकं हस्तहार्य्योऽन्धकारो
राजावर्त्तद्युतिविरचितां क्ष्मां च खं चातनोति ॥५८॥(य)

वामतः कङ्कालकः । तधा अ (र) दिढडज्झन्तकलेवरं जज्जरिअन्तमवलोइअ पवङ्गवग्गं पधाविदो समं दलिद-

---

(म) रणाङ्गणेति । रणाङ्गणचारिणः संग्रामभूमिवर्त्तिनः वैरिणः शत्रोः लक्ष्मणस्येति शेषः अन्धीकरणकारणं तामिस्रम् अस्त्रं युवराजेन इन्द्रजिता अवतारितं प्रयुक्तम् ।

(य) चक्रेति । विरहकलनया विच्छेदोपस्थित्या कातरैः चक्रवाका निशि विच्छिद्यन्ते इति समयप्रसिद्धिरत्रानुसन्धेया । चक्रद्वन्द्वैः चक्रवाकमिथुनैः दीनं सशोकं यथा तथा दृष्टः अवलोकितः साभिसारव्रतानाम् अभिसरणशीलानां अभिसारिकाणामित्यर्थः कान्तार्थिनी तु या याति सङ्केतं साभिसारिकेति लक्षणात् । कुवलयदृशां नीलोत्पलाक्षीणां नारीणां दत्तम् औत्सुक्यं कान्तसमीपगमनोत्कण्ठा येन तादृशः, अधिकम् अत्यर्थं दृशां चक्षुषां दौर्बल्यं दर्शनासामर्थ्यं विदधत् जनयन् हस्तहार्य्यः, हस्तेन हर्त्तुं ग्रहीतुं शक्यः घन इत्यर्थः अन्धकारः राजावर्त्तस्य राजपट्टस्य विराटदेशीय हीरकमणेरित्यर्थः द्युत्या इव विरचिताम् अलङ्कृतां क्ष्मां पृथिवीं खम् आकाशञ्च आतनोति विस्तारयति । मन्दाक्रान्तावृत्तम् ।

(र) दृढेति । दृढं यथा तथा दह्यमानं कलेवरं शरीरं यस्य तादृशम् अतएव जर्जरितम् अतिपीडितमिति यावत् कुम्भकर्णेनेति

पवणोलेण णीलेण रहसुग्गीवो किदो अ सरलीकिदभुअ-दण्डमण्डले सुवेलसेलमूलादो उप्पाडिअ णिज्झरजम्बाल-पिच्छिला सिला (५२)।

अपरञ्च। यथाऽभिहितं कङ्कालेन।

अन्ध्रीनितम्बफलकस्य नरोत्तमानां
वक्षःस्थलस्य च दधत्युपमानमुद्राम्।
भ्रातुस्तवाद्य हृदि साहसकेलितल्पे
प्रक्षिप्यते हरिनरेण शिलेयमुर्वी ॥ ५८ ॥ (ल)

---

(५२) तथा च दृढदह्यमानकलेवरं जर्जरितमवलोक्य प्लवङ्गवर्गं प्रधावितः समं दलिताञ्जननीलेन नीलेन रभसोद्ग्रीवः सुग्रीवः कृता च सरलीकृतभुजदण्डमण्डले सुवेलशैलमूलादुत्पाट्य निर्झरजम्बालपिच्छिला शिला।

---

धेः प्लवङ्गवर्गं वानरगणम् अवलोक्य दृष्ट्वा सुग्रीवः दलितं मर्दितं यत् अञ्जनं तद्वत् नीलः नीलवर्णः तेन नीलेन सेनापतिना समं सह रभसेन वेगेन उद्ग्रीवः उन्नतग्रीवः सन् प्रधावितः कुम्भकर्णं प्रतीति शेषः। कृतेति सरलीकृते भुजदण्डमण्डले सुवेलशैलस्य मूलात् निर्झरस्य जम्बालेन शैवालेन पिच्छिला शिला उत्पाट्य कृता धृता इत्यर्थः।

(ल) अन्ध्रीति। हरीणां वानराणां नरेण ईश्वरेण सुग्रीवेणेत्यर्थः अन्ध्रीणाम् अन्ध्रदेशभवानां नारीणां नितम्बफलकस्य नरोत्तमानां महापुरुषाणां वक्षःस्थलस्य च उपमानमुद्राम् उपमीयते अनेनेति उपमानं तस्य मुद्रां भावं दधति उपमानभूते इत्यर्थः साहसस्य बहुधा कारितस्य विक्रमस्येत्यर्थः केलितल्पे क्रीडाशयनीये तव भ्रातुः कुम्भकर्णस्य हृदि वक्षसि इयम् उर्वी महती शिला प्रक्षिप्यते। वसन्ततिलकं वृत्तम्।

रावणः । विहस्य । तदिदं मृणालकाण्डेन (ख) गण्डशैल-ताडनम् ।

करङ्कः । कथं भिन्नैव । रावणस्तद्दृष्ट्वा ।

संग्रामभीषणविभीषणपूर्वजस्य

मुष्ट्या दृढं प्रकलिताद्य तथा शिलेयम् ।

खण्डं यथा पतति मेदुरमुर्वरायां

दृष्टं तदम्बुजपरागकणप्रमाणम् ॥ ६० ॥ (ग)

रावणः । विहस्य । त एवं वर्ण्यन्ते येभ्यः कुप्यति कुमार-कुम्भकर्णः ।

दर्शयतो दुर्मुखः । अच्छरिअं । किं उण एदे (घ) णाम-न्तणीरन्ध्रन्धआरा प्फुरन्तससिअन्तमणिणो विसट्टन्तकुव-

---

(ख) मृणालेति । मृणालस्य काण्डेन तन्तुना वा मृणालमेव काण्डः शरः तेन । गण्डशैलस्य गुहाशिलायाः ताडनं मृणालदण्डेन गण्डशैलताडनं यथा निष्फलं तथा कुम्भकर्णहृदि शिलाप्रहार इति भावः ।

(ग) संग्रामेति । अद्य इयं शिला संग्रामे भीषणः प्रचण्डः यः विभीषणस्य पूर्वजः कुम्भकर्ण इत्यर्थः तस्य मुष्ट्या मुष्टिप्रहारेण दृढम् अत्यर्थं तथा चूर्णिता, यथा उर्वरायां शस्याढ्यायां पृथिव्यां मेदुरं चिक्कणं स्निग्धमित्यर्थः अम्बुजानां पद्मानां परागकणप्रमाणं पद्म-रेणुमात्रमित्यर्थः दृष्टं खम् तदित्यव्ययं तत् तस्याः शिलाया इत्यर्थः खण्डं चूर्णं पतति । वसन्ततिलकं वृत्तम् ।

(घ) णामितेति । नामितं नीरन्ध्रं निविडम् अन्धकारं यैः त-थोक्ताः । स्फुरदिति स्फुरन्तः शशिकान्तमणयः चन्द्रकान्ता येभ्यः तादृशाः । विकसदिति विकसत् विकाशं गच्छत् कुवलयानां नीलोत्पलानां

लग्गवलग्गा संफुल्लिदपुट्टइणीकुसुमा सरसाअमाणपाणगो-ट्ठिणो णिद्दविदमणंसिणीमाणा णिसिज्झन्तवम्मह-सिलीमुहा भमन्तमअणुमत्तकामिणीसत्था दिउणरोदावि-दविरहिणीणअणा तिउणहरिसाविदवल्लहसङ्कट्टणा च-उग्गुणपच्छादिदपरिहरिअपिअप्पसाअणप्पणामा पञ्चउण-पअडाविदसुरअसोहिदमिहुणा अ समन्तदो मिअङ्का वट्टन्ति (५२)।

---

(५२) आश्चर्य्यं ! किं पुनरेते नाशिततमोरश्म्यकाराः स्फुरच्छशि-कान्तमणयो विकसत्कुवलयचषकाः सङ्कुचितकमलिनीकुसुमाः सरसायमा-नपानगोष्ठ्यो निर्वापितमनस्विनीमाना निषिध्यमानमन्मथशिलीमुखा भ्रमदुन्मत्तकामिनीसार्था द्विगुणरोदितविरहिणीनयनाः त्रिगुणह-र्षितवल्लभसङ्घट्टनाश्चतुर्गुणप्रच्छादितपरिहृतप्रियप्रसादनप्रणामाः पञ्च-गुणप्रकटितसुरतशोभितमिथुनाश्च समन्ततो मृगाङ्का वर्त्तन्ते।

---

चषकं मद्यपात्रं येभ्यः तथाभूताः। सङ्कुचितेति सङ्कुचितानि निमीलि-तानि कमलिनीनां पद्मिनीनां कुसुमानि कमलानि यैः तथाविधाः। सरसेति सरसायमानाः स्फुरन्त्यः पानगोष्ठ्यः सुरापानसभाः येभ्यः तादृशाः। निर्वापितेति। निर्वापिताः निःशेषेण तापिताः पीडिताः मनस्विनीनां मानवतीनां मानाः प्रणयकोपा यैः तथाभूताः। नि-षिध्यमानेति निषिध्यमानानि नास्ति युष्माभिः प्रयोजनं वयमेव काम-कार्य्यं साधयाम इति निवार्य्यमाणानि मन्मथस्य कामस्य शिलीमुखानि शरा यैः तथोक्ताः। भ्रमदिति भ्रमन्त्यः इतस्ततो धावन्त्यः मदनोन्मत्ताः कामार्त्ताः कामिनीनां रमणीवर्गाः यैः तथाभूताः। द्विगुणेति द्विगुणं यथा तथा रोदितानि विरहिणां नयनानि यैः तथाभूताः। त्रिगुणेति त्रिगुणं यथा तथा हर्षिता आनन्दिताः वल्लभसङ्गता अभिर-

रावणः। (सोत्साहमाकाशे) भोः सेवाविदग्ध (स) सुधादीधिते!। जानासि लङ्केश्वरमाराधयितुम्।

सदा दिगन्तस्थितसान्द्रचन्द्रिकाः
सुखाय नक्तञ्चरचक्रवर्त्तिनः।
इति स्थितोऽयं बहुभिः स्वमूर्त्तिभि-
र्दिवाऽपि मां शीतरुचिर्निषेवितुम्॥ ६१॥ (ह)

सुतनः। देव! (च) चिन्तयामि तामिस्रमस्तं तिरयितुं चान्द्रमसमायुधमाहृतं सुमित्रापुत्रेण यतः।

कन्दर्पस्य प्रथमसुहृदः शोषयन्तोऽम्बुराशीन्
शेफालीनां धृतसुमनसो लीढभासश्चकोरैः।

छिन्न इति भावः व्यक्ताः कामिन्यः यैः तथोक्ताः। चतुर्गुणेति चतुर्गुणं यथा तथा प्रच्छादितः तिरोहितः परिहृतः परित्यक्तश्च प्रियप्रसादनार्थं प्रणामो यैः तथाविधाः। पञ्चगुणेति पञ्चगुणं यथा तथा प्रकटितेन विस्तृतेन सुरतेन मोहितानि मिथुनानि दम्पती यैः तादृशाः। मृगाङ्काः चन्द्रमसः समन्तात् चतुर्दिक्षु वर्त्तन्ते उल्लसन्ति।

(स) सेवाविदग्ध! सेवायां परिचर्य्यायां विदग्धः विचक्षणः तत्सम्बुद्धौ। सुधादीधिते! चन्द्र!।

(ह) सदेति। दिगन्तस्थिताः सान्द्राः घनाश्चन्द्रिकाः यस्य सदा सर्वस्मिन् काले दिवापीति भावः नक्तञ्चराणां राक्षसानां चक्रवर्त्तिनः अधिपतेः ममेति शेषः सुखाय भवतीति शेषः। इति हेतोः अयं शीतरुचिः चन्द्रः दिवापि दिवसेऽपि बहुभिः स्वमूर्त्तिभिः स्वदेहैः मां निषेवितुम् आराधयितुं स्थितः उपस्थित इत्यर्थः। वंशस्थविलं वृत्तम्।

(च) चिन्तयामि सम्भावयामि तिरयितुं ध्वंसयितुम्।

निर्यान्त्येते विशिखमुखतः पश्य राकामृगाङ्काः
पङ्कश्यामं तिमिरशिबिरं दूरमुत्सारयन्तः ॥ ६२ ॥ (क)

करङ्कः । देव ! शिलोद्दलनवैलक्ष्ये । (ख)

उद्वेल्लितोरगजनोज्झितचन्दनेन
कर्पूरपादपसरद्रसनिर्भरेण ।
खण्डेन देव ! मलयस्य वलीमुखेन्द्रो
हेलोद्धृतेन निजिघांसति कुम्भकर्णम् ॥ ६३ ॥ (ग)

रावणः । अहो ! मर्कटकीटस्याध्यवसायः । (घ)

---

(क) कन्दर्पस्येति । पश्य अवलोकय, कन्दर्पस्य कामस्य प्रथमे अपत्यं सुहृदः, अम्बुराशीन् समुद्रान् प्लावयन्तः आर्द्रयन्तः, शेफालीनां तरूणां धुतानि रञ्जितानि सुमनसः पुष्पाणि यैः तादृशाः चकोरैः पक्षिविशेषैः लीढभासः पीतकिरणाः, पङ्कवत् श्यामं नीलं तिमिरशिबिरम् अन्धकारनिवहं दूरम् उत्सारयन्तः ताडयन्त एते राकामृगाङ्काः पूर्णशशिनः विशिखमुखतः शराग्रात् निर्यान्ति निर्गच्छन्ति । मन्दाक्रान्तावृत्तम् ।

(ख) शिलोद्दलनेति । शिलाया उद्दलनेन चूर्णनेन यद् वैलक्ष्यं लज्जितत्वं हतमानत्वादिति भावः तस्मिन् सति ।

(ग) उद्वेल्लितेति । हे देव ! वलीमुखानां वानराणाम् इन्द्रः सुग्रीवः उद्वेल्लितेन चलितेन उरगजनेन भुजङ्गवर्गेण उज्झिताः त्यक्ताः चन्दनाश्चन्दनतरवः यस्य तादृशेन कर्पूरपादपेभ्यः कर्पूरवृक्षेभ्यः सरन् निर्गच्छन् रसानां निर्यासानां निर्भरः अतिशयः यस्य तथाभूतेन हेलया अवहेलया उद्धृतेन उत्पाटितेन मलयस्य पर्वतभेदस्य खण्डेन कुम्भकर्णं निजिघांसति निहन्तुमिच्छति । वसन्ततिलकं वृत्तम् ।

(घ) मर्कटकीटस्य वानराधमस्य इत्यर्थः अध्यवसायः उद्योगः ।

दक्षिणतो दुर्मुखः । राअसेहर ! पेक्ख (ङ) णिअमगह-ग्गासंकासङ्कन्तबिम्बचन्दरविणो बहुराहुदंसणचमक्कन्तका-मिणीदिण्णविसमच्छिविक्खोहभग्गपल्लत्थङ्गुलीकिसलअसमु-प्पोसिदा अप्पसण्णवअणरत्तीसूइदा चमक्किदचन्दं ते उर-वित्थरन्तविविहबहुबम्हघोसा भुवणुद्देसा दीसंति (५५) ।

रावणः । सविमर्शम् । (च)

ममासुरस्य त्रिदशाः परं द्विषो
विबाधयिष्ये दशकन्धरेण तान् ।
इहेति मां राहुरयं सबान्धवो
रणेऽद्य पूर्वोपचिकीर्षुरागतः ॥ ६४ ॥

(५५) राजशेखर ! प्रेक्षस्व निजपक्षग्रहशङ्कासङ्क्रान्तबिम्बचन्द्ररव्यो बहुराहुदर्शनचमत्कृतकामिनीदत्तविषमाक्षिविक्षोभभग्नपर्यस्ताङ्गुलीकि-सलयसमुत्पोषिता अप्रसन्नवदनरात्रिसूचिताश्चमत्कृतचन्द्रान्तःपुरवि-स्तारिविविधबहुब्रह्मघोषा भुवनोद्देशा दृश्यन्ते ।

---

(ङ) निजेति । निजपक्षग्रहात् स्वपाशात् या शङ्का, तया सङ्कु-चत् बिम्बं मण्डलं ययोः तादृशौ चन्द्ररवी येषु तथाभूताः । अप्रसन्नेति अप्रसन्नं मलिनं वदनं यस्याः तादृश्या रात्र्या रजन्याः सूचिताः प्रक-टिताः । चमत्कृतेति चमत्कृतेभ्यः आश्चर्यदर्शनात् विस्मितेभ्यः चन्द्रस्य अन्तःपुरेभ्यः अन्तःपुरवर्गेभ्यः विस्तरन्तः समुच्चरन्तः विघ्नविनाशार्थमिति भावः । विविधा बहुप्रकाराः बहवः ब्रह्मघोषा वेदध्वनयः येषु तथाविधाः ।

(च) सविमर्शं विविच्येत्यर्थः ।

ममेति । त्रिदशाः देवाः असुरस्य मम परम् अत्यर्थं द्विषः शत्रवः तान् द्विषः देवान् दशकन्धरेण रावणेन विबाधयिष्ये यात-

आकाशे । (ज) स्वर्भानो ! मा भैषीः प्रत्यर्थिनामभयकारणं रावणः ।

लक्ष्मणः । मन्ये (झ) शैतांशवमायुधं बाधितुं राहवीयमस्त्रमिदमुदीरितं देव ! युवराजेन यतः ।

रयचलितविमानैः खर्गिभिर्भग्नमार्गा
ग्रहचरितविदां च व्यञ्जितातङ्कमुद्राः ।
प्रचयगतसहस्रोल्लासनास्थूलधाराः
प्रतिशशि शितदंष्ट्रा राहवः सम्पतन्ति ॥ ६५ ॥

वामतः करङ्कः ।

अत्रान्तरे त्वदनुजेन धनुर्विधूय
सन्धानकर्मणि कृतश्च समीरबाणः ।

---

विमानानि इति शेषः अयं सर्वाश्रयः राज्ञः अस्य इह रणे उपचिकीर्षुः उपकर्तुमिच्छन् ननु माम् आगतः प्राप्तः । वंशस्थविलं वृत्तम् ।

(ज) स्वर्भानो ! राहो !

(झ) शैतांशवं चान्द्रमायुधं अस्त्रप्रयुक्तमिति शेषः बाधितुं खण्डयितुम् । राहवीयं राहोरिदम् । उदीरितं प्रक्षिप्तम् ।

(ञ) रयेति । रयेण वेगेन चलितं विमानं विमानं येषां तादृशैः भयात् द्रुतचालितविमानैरित्यर्थः खर्गिभिः खेचरैः भग्नाः रुद्धाः मार्गाः पन्थाः येषां तथोक्ताः ग्रहाणां ज्योतिषाम् अन्तरीक्षचराणामित्यर्थः चरितं चेष्टितं विदन्तीति तथोक्तानां ग्रहचर्याभिज्ञानामित्यर्थः व्यञ्जिताः प्रकटिता आतङ्कमुद्रा भयसङ्केताः यैः तथाभूताः बहूनां राहूणाम् अदृष्टचरत्वादिति भावः प्रचयगतसहस्राणां गतसहस्रसंख्यानां वा उल्लासना प्रकाशना तस्याः स्थूलधाराः स्थूलविस्ताराः तथा शिताः तीक्ष्णा दंष्ट्रा येषां तथाविधाः राहवः प्रतिशशि प्रतिचन्द्रं सम्पतन्ति । मालिनीवृत्तम् ।

सार्धं महीध्रशकलेन सुवेलमूला-
द्वारां निधौ निपतितः कपिचक्रवर्ती ॥ ६६ ॥ (ट)

रावणः । सहर्षक्रोधम् । तर्हि सलिलेन्धने(ठ)वह्नावाहुतीभूतः करङ्कः ।

यावन्न पाणिमपि संवृणुते ऽनुजस्ते
यावन्न शाम्यति च धिक्करणं सुराणाम् ।
तावन्नियोद्धुमुदधेः प्रथमः कपीना-
मस्य स्थितस्तडिति ताडितदोः पुरस्तात् ॥ ६७ ॥ (ड)

---

(ट) अत्रेति । अत्रान्तरे अस्मिन्नवसरे त्वदनुजेन कुम्भकर्णेन धनुः विधूय आस्फाल्य सन्धानकर्मणि समीरणाख्यः वायव्यास्त्रं ततश्च प्रयुक्तश्च, कपिचक्रवर्ती सुग्रीवः सुवेलस्य पर्वतस्य मूलात् तलात् महीध्रशकलेन पूर्वोक्तेन मलयखण्डेन सार्द्धं वारां निधौ समुद्रे निपतितश्च वायव्यास्त्रप्रभावादिति भावः । वसन्ततिलकं वृत्तम् ।

(ठ) सलिलेन्धने सलिलम् इन्धनं काष्ठं यस्य तादृशे सलिलदाहके इत्यर्थः वह्नौ वाड़वानले इत्यर्थः ।

(ड) यावदिति । यावत् ते तव अनुजः कुम्भकर्णः पाणिमपि भुजमपि वायव्यास्त्रसन्धाने नियोजितमिति भावः न संवृणुते न सङ्कोचयति, सुराणां देवानां धिक्करणं धिक् सुग्रीव ! त्वम् एतत् वायव्यास्त्रमपि सोढुं न शक्नोषीति निर्भर्त्सनं न शाम्यति न निवर्त्तते च, तावत् कपीनां प्रथमः प्रवरः सुग्रीवः उदधेः समुद्रात् तडिति झटिति अस्य कुम्भकर्णस्य पुरस्तात् ताडितदोः प्रहृतभुजः कुम्भकर्णस्य भुजं तेन मलयखण्डेन ताडयन्नित्यर्थः नियोद्धुं स्थितः उपस्थितः । वसन्ततिलकं वृत्तम् ।

रावणः। स्वगतम्। वेगवत्तया (ढ) वालिनमप्यतिशेते। विचिन्त्य प्रकाशम्। प्लुतिप्रधानैव वानरजातिः।

दक्षिणतो दुर्मुखः। लङ्कापरमेस्सर! पेक्ख पेक्ख (ण) कोत्थुहमणिणिवेससंच्छिदवच्छत्थलवणमालापालम्बचुम्बणागददिव्वमहुअरमञ्जुगुञ्जारवविकिण्णकण्णा गरुडप्पहापुञ्जपिञ्जरिदरोदसीगब्भवित्थारा णिज्जिददलिदिन्दीवरदामकन्तिणो आकण्णाकट्ठिअसारङ्गधारिणो मुरारिणो संचरन्ति (५६)।

---

(५६) लङ्कापरमेश्वर! प्रेक्षस्व प्रेक्षस्व कौस्तुभमणिनिवेशलाञ्छितवक्षःस्थलवनमालाप्रालम्बचुम्बनागतदिव्यमधुकरमञ्जुगुञ्जारवविकीर्णकर्णा गरुडप्रभापुञ्जपिञ्जरितरोदसीगर्भविस्तारा निर्जितदलितेन्दीवरदामकान्तय आकर्णाकृष्टशार्ङ्गधारिणो मुरारयः सञ्चरन्ति।

---

(ढ) वेगवत्तया अतिवेगेन वालिनम् अपि अतिशेते अतिक्रामति अभिभवतीत्यर्थः।

(ण) कौस्तुभेति। कौस्तुभमणेर्निवेशेन लाञ्छितं वक्षःस्थलं येषां तादृशाः। वनमालेति वनमाला एव प्रालम्बः ऋजुलम्बि माल्यं तस्य चुम्बनाय आगता ये दिव्या मधुकराः तेषां मञ्जुषु मनोज्ञेषु गुञ्जारवेषु गुणगुणध्वनिषु विकीर्णौ दत्तौ कर्णौ यैः तथोक्ताः। गरुडेति गरुडस्य स्ववाहनस्य प्रभापुञ्जेन पिञ्जरिताः पिङ्गलीकृताः रोदसोः द्यावापृथिव्योः गर्भविस्ताराः अभ्यन्तरप्रदेशाः येषां तथाभूताः। निर्जितेति निःशेषेण जिताः तिरस्कृताः दलितेन्दीवरदाम्नां विकसितनीलोत्पलस्रजां कान्तयः प्रभाः यैः तथोक्ताः। आकर्णेति आकर्णं कर्णपर्यन्तम् आकृष्टं शार्ङ्गं शृङ्गविकारं धनुरित्यर्थः धारयन्तीति तथाभूताः मुरारयः विष्णवः।

रावणः। ससम्मर्दम्। (त)

अयं हि सेवारचितार्द्रमानसो
न वक्षसो मे कमलां हरिष्यति।
इति स्वशक्त्या कृतमूर्त्तिविस्तरैः
रजोऽपि मां रञ्जयितुं समागतः॥ ६८॥ (थ)

आकाशे हंहो नारायण! न (द) प्रणतदारापहारी दशकण्ठः।

सुमुखः। देव! सम्भावयामि (ध) सैंहिकेयहेतिविहतये वैष्णवं प्रहरणमिदं विस्ताश्लिष्टं लक्ष्मणेन यतः।

लक्ष्मीकण्ठग्रहणरसिकाः सत्वरत्पाञ्चजन्य-
ध्वानश्रेणीभरितककुभो दोर्भिरुच्चैश्चतुर्भिः।
क्रामन्त्यन्तर्भुवनभवनं विष्णवो जिष्णवोऽमी
श्यामासक्तग्रहरणनमद्राहुसंहारकाराः॥६९॥ (न)

---

(त) ससम्मर्दं सहर्षम्।

(थ) अयमिति। अयम् अजो विष्णुरपि मे वक्षसः वक्षस्थलात् कमलां लक्ष्मीं न हरिष्यति रावण इति शेषः इति हेतोः सेवार्थे रचितं नियुक्तम् आर्द्रं भक्तिप्रवणं मानसं येन तथाभूतः सन् स्वशक्त्या निजप्रभावेण कृतैः मूर्त्तिविस्तरैः कायव्यूहैः मां रञ्जयितुम् आराधयितुं हि निश्चितं समागतः उपस्थितः। वंशस्थविलं वृत्तम्।

(द) प्रणतेति। प्रणतस्य दारान् अपहरतीति तथाभूतः।

(ध) सैंहिकेयेति। सैंहिकेयाहेतेः राहुकीलास्त्रस्य विहतये ध्वंसार्थम्। वैष्णवं विष्णोरिदं विष्णुदैवतं वा प्रहरणम् अस्त्रम्।

(न) लक्ष्मीति। चतुर्भिः उच्चैः दीर्घैः दोर्भिः भुजैः लक्ष्म्याः कामलयाः कण्ठग्रहणे कण्ठालिङ्गने रसिकाः प्रणयिनः, सत्वरत्नीभिः

मानतः कबन्धकः । पुरो भूदेण (प) मग्गवत्तिणा वाणर-
वीरेण तक्खणसण्णिज्झं तक्कुम्भअण्णवाणासणमक्खिविअ खित्तं
धरणिपिठ्ठे रोसभरविभत्तमञ्जिठ्ठाए दिठ्ठीए दठ्ठूण
देवकणिठ्ठेण मुक्का चक्कावली पअट्टिदा पट्टिसा पेसिदा
दंसिदमारणवेसट्टी भुसुण्डी खित्ता णीसङ्कं सङ्कुमाला
आक्खित्तं मोग्गरोग्गिण्णं उप्फेरिदपुलअफारपअक्कमेण
कम्पाविदोकरमालग्गो खग्गो वाणरचक्कवट्टिणा वि परि-
हरिणाउहकप्पेण णिउब्भअं अब्भब्भवसिअ अप्फोडिदो

---

निर्गच्छन्तीभिः पाञ्चजन्यस्य सकलस्थितशङ्खभेदस्य ध्वानश्रेणीभिः
निनदैः भरिताः पूरिताः ककुभः दिशः यैः तथाभूताः चक्रेण प्रह-
रणेन अस्त्रेण सुदर्शनेनेत्यर्थः नमतां राज्ञां संहारकाराः ध्वंसिन
इत्यर्थः श्यामाः नीलकान्तयः जिष्णवः जयशीलाः अमी विष्णवः अन्त-
र्भुवनभवनं भुवनान्तरालरूपं स्थूलं क्रामन्ति व्याप्नुवन्ति । मन्दाक्रान्ता-
वृत्तम् ।

(प) पुरोभूतेन अग्रवर्त्तिना मार्गवर्त्तिना रणमार्गसञ्चारिणा
वानरवीरेण सुग्रीवेण तत्क्षणं सद्यः एव आस्फाल्यमानं कुम्भकर्णस्य
बाणासनं शरासनं धनुरित्यर्थः आक्षिप्य आलप्य कुम्भकर्णहस्तादा-
च्छिद्य इत्यर्थः धरणीपृष्ठे भूतले क्षिप्तं दूरतः निक्षिप्तमित्यर्थः ।
रोषभरेण क्रोधातिशयेन मञ्जिष्ठया मञ्जिष्ठारागेणेव रञ्जितया रक्तया
इति भावः दृष्ट्या चक्षुषा । देवस्य कनिष्ठेन कुम्भकर्णेन चक्रावली
चक्राख्यानाम् आवली श्रेणी मुक्ता निक्षिप्ता, पट्टिशाः अस्त्रभेदाः
प्रवर्त्तिताः प्रयुक्ताः, दर्शितमारणवेषया दर्शितानां वर्णितानां अव-
स्थानामपीत्यर्थः मारणे हनने वेषया समर्था भुशुण्डी अस्त्रविशेषः
प्रेषिता निक्षिप्ता, शङ्कुमाला शङ्कुनाम् अस्त्रविशेषाणां माला श्रेणी
निःशङ्कं यथा तथा क्षिप्ता, मुद्गरस्य उद्गीर्णं पतनम् आक्षिप्तं परि-

भुअदण्डो किलिकिलिदं अ सद्दसंदोहभरिअभुअणन्तरं प्पधाविदाओ संदंसणकोदूहलफुल्लगल्लफलआओ सुरसुन्दरीओ समारूढो लङ्काउरीप्पाआरसिहरेसु णिसाअरजणो वसुधाणिवेसिदसिलासंघादेण वाणरलोएण पाससंठाविदविविहाउहेण रक्खसवग्गेण अ अङ्गीकिदमुदासीणत्तणं तदो दो वि समं वग्गिअअलीणा मल्लजुज्झेण तहिं अ गाढअरं हत्थग्गहं मग्गन्ति सिरेण सिरणिवेसिणो हुडुक्कविक्कमेण परिक्कमन्ति कक्खाबन्धविणिहिदहत्था उच्छलन्ति भुअदण्डसंदंसेण कन्धरां धरन्ति जहन्तरकत्तरीहिं

---

स्वक्रम्, उत्प्रेरितं जनितं पुलकं रोमाञ्चः येन तादृशेन स्फारेण उत्त- तेन पदक्रमेण पादविक्षेपेण कराग्रे लग्नः स्थितः खड्गः कल्पितः । वानरचक्रवर्तिना कपिराजेन सुग्रीवेणापि परिहृतः निराकृतः आयुधानां कलापः कुम्भकर्णप्रेरितास्त्रसमूह इत्यर्थः येन तादृशेन सता नियुद्धं घोरं युद्धम् अध्यवस्य आस्थाय भुजदण्डः आस्फोटितः ताडितः । किलकिलेति किलकिलितं स्वजातीयरवेण गर्जितञ्च इत्यर्थः । शब्दसन्दोहेन तुमुलकोलाहलेन भरितं पूरितं भुवनान्तरम् । सन्दर्शनेति सन्दर्शनाय समरदर्शनाय यत् कौतूहलं तेन फुल्लं विकसितं गल्लफलकं कपोलदेशः यासां तथोक्ताः । वसुधेति वसुधायां भूमौ निवेशितः आसन्नत्वेन स्थापितः शिलासङ्घातः येन तादृशेन । पार्श्वेति पार्श्वेषु संस्थापितानि हस्तेभ्यः अवनाम्य रक्षितानि विविधानि आयुधानि अस्त्राणि येन तथाविधेन । अङ्गीकृतम् आश्रितम् उदासीनत्वं माध्यस्थ्यम् । द्वावपि कुम्भकर्णवानरेन्द्रौ इत्यर्थः । वल्गितेति वल्गितं कम्पनं तत्र लीनौ रतौ । गाढतरं दृढतरं हस्तग्राहं हस्ता-हस्ति युद्धमित्यर्थः मार्गेते कामयेते । शिरसा मस्तकेन शिरसि प्रति-

रावणः । विहस्य । का पुनरेषा (फ) द्वन्द्वयुद्धमर्य्यादा ।

---

नाऽपि परिहृतायुधकलापेन नियुद्धमध्यवसायास्फोटितो भुजदण्डः किञ्चि-
त्किलितश्च मल्लसन्दोहभरितभुवनान्तरं प्रधाविताः सन्दर्शनकौतूहलकुतू-
हलकलकलाः सुरसुन्दर्यः समारूढो लङ्कापुरीप्राकारशिखरेषु निशाचर-
जनो वसुधानिर्वेशितशिलासङ्घातेन वानरलोकेन पार्श्वसंस्थापितविवि-
धायुधेन राक्षसवर्गेण चाङ्गीकृतमुदासीनत्वम् । ततो द्वावपि समं
वल्गितकलीनौ मल्लयुद्धेन तता च गाढतरं हस्तपादं मार्गेते शिरसा
शिरोनिवेशिनौ कुण्डलितक्रमैः परिक्रामतः । कक्षाबन्धविनिहितहस्ता-
वुन्मस्ततः । भुजदण्डसन्दंशेन कन्धरां धरतः । जङ्घान्तरकर्त्तरीभ्यां
पीडयतः । कुक्कुटसर्पैर्भिन्नतः । हुङ्कारैर्हुङ्कुरुतः । आस्फोटतिर्य्यक्-
पादप्रक्षेपेण न केवलं कर्षतः केशेषु । न नयने प्रतः । न नासावंशे
प्रहरतः । न दशतो दन्तैः । न खण्डयतो नखैः । एतयोश्च
पतनोत्पतनेषूत्प्लवन्ति । गलद्गण्डशैलाः भवन्ति कुलशैलाः । दिक्करि-
कातरत्वप्रसक्तचीत्कारपूरिता घूर्णति वसुन्धरा । प्रतिक्षोभभवनतधरि-
त्रीभारशङ्कितकन्धरः कम्पते महाकूर्मः । तद्युध्यते देवस्य धनुर्भङ्गः ।

---

ताण्डवविशेषेण यः तिर्य्यक् पादप्रक्षेपः वक्रपदप्रहारः तेन । उत्प्ल-
वन्ति उच्छलन्ति सप्त सागराः समुद्राः । गलदिति गलन्तः स्खलन्तः
गण्डशैलाः शाखापर्वता येभ्यः तादृशाः । दिक्करीति दिक्करिणाम्
ऐरावतानां कातरत्वेन युक्तेन चीत्कारेण पूरिता व्याप्ता । प्रतीति
प्रतिक्षोभवशेन प्रतिभयेन नमन्त्या धरित्र्याः पृथिव्या भारेण शङ्किता
कुण्ठिता कन्धरा ग्रीवा यस्य तथाभूतः । धनुर्भङ्गः शरासनभङ्गम् ।

(फ) द्वन्द्वयुद्धमर्य्यादा द्वन्द्वयुद्धस्य उभयमात्रीयसंग्रामस्य मर्य्यादा सीमा
उभयोर्मल्लयोर्यादृशः समाहारः समुचितः, नायं तादृश इति भावः ।

दक्षिणतो दुर्मुखः । एदे पअडिदणट्ठईविब्भमण्णुआ मुसलीकदकादम्बरीपाणविहिदुम्मादा जुवदीकदजरदी-अणा उपणीदकुसुमबाणप्पअरा विरहिणीकण्ठवट्टिदप-ञ्चमतरङ्गा णिअङ्कवालमित्ता दूदीकददक्खिणसमीरणा सव्वदो संचरन्ति मदणा (५८) ।

रावणः । सहर्षम् ।

यावन्ति लोकहृदयानि जगत्त्रये ऽत्र
तावद्भवैरनुगतो मदनैर्मनोभूः ।

---

(५८) एते प्रकटितनर्त्तकीविभ्रमकृत्याः मुसलीकृतकादम्बरीपान-विहितोन्मादा युवतीकृतजरतीजना उपनीतकुसुमबाणप्रकरा विरहि-णीकण्ठवर्त्तितपञ्चमतरङ्गा मृगाङ्कबालमित्रा दूतीकृतदक्षिणसमीरणाः सर्वतः सञ्चरन्ति मदनाः ।

---

(व) प्रकटितेति । प्रकटितानि प्रकाशितानि नर्त्तकीनां विभ्र-मकृत्यानि विलासवर्त्तनानि यैः तादृशाः । मुसलीकृतेति मुसली-कृतानां मधुराणामित्यर्थः कादम्बरीणां सुराविशेषाणां पानेन वि-हितः कृतः उन्मादः यैः तथाभूताः । युवतीति अयुवतयः युवतयः कृताः जरतीजनाः वृद्धा नार्य्यः यैः तथाविधाः वृद्धा अपि कामोद्रे-केण युवतय इवाचरन्तीति भावः । उपनीतेति उपनीताः संगृ-हीताः कुसुमान्येव बाणप्रकराः शरसङ्घाता यैः तथोक्ताः । विर-हिणीति विरहिणीनां कण्ठेषु वर्त्तिता वृत्तिं नीताः पञ्चमतरङ्गाः पञ्चमरागस्य तरङ्गा वेगा यैः तथाविधाः विरहिण्यः दुःखातिशय-मनुभवन्त्यः पञ्चमस्वरेण कामार्त्ता विलपन्तीति भावः । मृगाङ्केति

शम्भोर्भिया भगवतः शरणाय शङ्के

मां रावणं समरचण्डभुजं प्रपन्नः ॥ ७० ॥ (भ)

आकाशे । हे मकरध्वज ! मदनुग्रहेण (म) मत्परिग्रहेण च न त्वां देवदेवोऽपि बाधिष्यते

रावणः । जाने वैष्णवमस्त्रं स्तम्भयितुं (य) पौष्पकेतनमायुधमातन्यते मन्दोदरीनन्दनेन यतः ।

चिह्नोत्सङ्गस्फुरितमकराः पुष्पधन्वान एते

द्राक् तन्वन्तो मधुसहचरं पञ्चमं रागराजम् ।

लक्ष्मीलीलाललितचरितैरच्युतान् वञ्चयित्वा

श्वेतद्वीपं रतिरतिकृतो मन्मथाः प्रापयन्ति ॥७१॥ (र)

---

मृगाङ्कस्य चन्द्रमसः बालमित्राः अभिनवबान्धवाः । दूतीति अद्भुताः दूताः सन्ता दक्षिणसमीरणाः मलयपवनाः यैः तादृशाः मदनाः कामाः ।

(भ) यावन्तीति । अत्र जगत्त्रये त्रिभुवने लोकानां जनानां हृदयानि मनांसि यावन्ति वशंगतानि तावद्भिः तत्संख्यभूतैः मदनैः अनुगतः परिवृतः मनोभूः कामः भगवतः शम्भोः शिवात् भिया हेतुना शरणाय आत्मत्राणाय समरेषु सङ्ग्रामेषु चण्डभुजं प्रचण्डबाहुवीर्यनिबद्धः रावणं मां प्रपन्नः प्राप्तः इति शङ्के मन्ये । वसन्ततिलकं वृत्तम् ।

(म) मदनुग्रहेण मम कृपया, मत्परिग्रहेण ममाश्रयेण । देवदेवः शिवः । बाधिष्यते पीडयिष्यति ।

(य) स्तम्भयितुं दमयितुम् । पौष्पकेतनं मादनम् आतन्यते प्रयुज्यते । मन्दोदरीनन्दनेन मेघनादेन ।

(र) चिह्नेति । चिह्नेन लाञ्छनेन उत्सङ्गेषु अङ्केषु स्फुरिताः

वानरः कलकलः । (ख) सव्वङ्गसङ्गदणिबिडणिपीडणापरव्वसगदो प्पअण्डभुअबलेण गअणङ्गणे अन्दोलिअ कुमारकुम्भअण्णेण धरणिपिट्ठे झडिति ताडिदो सुग्गीवो (५८) ।

रावणः । सहर्षम् । तर्हि मत्तकरेणुकरगतस्य (ग) कदली-कन्दस्य दशां लम्भितः ।

करङ्कः ।

कथापञ्जरदात्यूहं कपीनां चक्रवर्त्तिनम् ।

---

(५८) सर्वाङ्गसङ्गतनिबिडनिपीडनापरवशगतः प्रचण्डभुजबलेन गगनाङ्गणे आन्दोल्य कुमारकुम्भकर्णेन धरणीपृष्ठे झटिति ताडितः सुग्रीवः।

---

राजिताः मकराः येषां तथोक्ताः मकरध्वजधारिण इत्यर्थः पुष्पधन्वानः कुसुममयधनुर्धराः मधुसहचरं वसन्तसहितं पञ्चमं रागराजं सोद्दीपन-हेतुभूतस्वरविशेषं तन्वन्तः विस्तारयन्तः रत्या सह रतिं कुर्वन्तीति तथोक्ता एते मन्मथाः कामाः समग्राः कमलायाः लीलया विलासेन वलितानि मनोहराणि यानि चरितानि चेष्टितानि तैः अच्युतान् विष्णून् द्राक् झटिति वञ्चयित्वा प्रतार्य मोहयित्वेति यावत् श्वेत-द्वीपं वैकुण्ठमित्यर्थः प्रापयन्ति गमयन्ति । वैष्णवमस्त्रं शान्तिप्रधानं कामास्त्रेण पराभूयते इति भावः । मन्दाक्रान्तावृत्तम् ।

(ख) सर्वेषु अङ्गेषु सङ्गतायाः प्राप्तायाः निविडायाः गाढायाः निपीडनायाः प्रहारस्येत्यर्थः परवशता अधीनता तं गतः प्राप्तः सर्वा-ङ्गेषु अतिप्रहारार्त्त इत्यर्थः आन्दोल्य दोलयित्वा झटिति सुग्रीवः ताडितः पातितः ।

(ग) मत्तेति । मत्तस्य करेणोः हस्तिनः करेणुरिभ्यां स्त्री नेभे इत्यमरः । करं शुण्डादण्डं गतः तस्य । कदलीकन्दस्य रम्भाकाण्डस्य । लम्भितः प्रापितः ।

कृत्वा त्वदनुजो ऽभ्येति दिष्ट्या त्वं देव! वर्धसे ॥७२॥ (ग)

रावणः स्वगतम् ।

यदर्पितं प्राज्यबलेन वालिना
विधाय दोर्मूलवशं दशाननम् ।
तदुद्धृतं शल्यमनेन मानिना
विधाय कक्षाकुहरे हरीश्वरम् ॥ ७३ ॥ (घ)

कञ्चुकः । कुम्भअस्सकक्खन्तरगदं सुग्गीवमवलोइअ (ङ) रहसभम्पवक्किअरसणाणूउरकेऊरं णच्चिदुं पउत्ताओ सअलविंदारअविन्दवन्दिसुन्दरीओ, ता पेक्खदु देवो (६०) ।

(६०) कुम्भकर्णकक्षान्तरगतं सुग्रीवमवलोक्य रभसभ्रंशत् क्वणद्रशनानूपुरकेयूरं नर्त्तितुं प्रवृत्ताः सकलवृन्दारकवृन्दवन्दिसुन्दर्यः । तत्प्रेक्षतां देवः ।

(ग) कक्षेति । हे देव ! त्वदनुजः तव कनिष्ठः कुम्भकर्णः कपीनां चक्रवर्त्तिनं सम्राजं सुग्रीवं कक्षा एव पञ्जरं तत्र दात्यूहं पक्षिविशेषं कृत्वा कक्षदेशे संस्थाप्येति यावत् अभ्येति आगच्छति, तस्मात् त्वं दिष्ट्या भाग्येन वर्द्धसे वृद्धिं गच्छसि जयलाभेनेति भावः । पथ्यावक्त्रं वृत्तम् ।

(घ) यदर्पितमिति । प्राज्यबलेन प्रभूतपराक्रमेण वालिना दशाननं मां दोर्मूलवशं कक्षान्तर्गतं विधाय यत् अर्पितं निहितं मम हृदीति शेषः अनेन मानिना वीरेण कुम्भकर्णेन हरीश्वरं वानरराजं कक्षाकुहरे विधाय कृत्वा तत् शल्यं मम हृदयस्थमिति भावः उद्धृतम् उत्पाटितम् अस्य वालिनः सकाशात् प्राप्तं निकारदुःखम् अपनीतमिति भावः । वंशस्थविलं वृत्तम् ।

(ङ) रभसेति । रभसेन हर्षेण वेगेन वा रभसो वेगहर्षयोरित्यमरः।

रावणः । सहर्षम् ।

किं शच्या परतो रतिर्धनपतेर्दूरे भवन्तु स्त्रिय-

श्चन्द्रान्तःपुरमेतदस्तु च पृथक्को वैरिणीषूत्सवः ।

साकं शक्रजितः कलत्रनिवहैः सार्धं च दारैर्मम

प्रीत्युल्लासितपाणिपल्लवयुगं मन्दोदरी नृत्यतु ॥ ७४ ॥ (छ)

इति चर्चरीं कुरुतः । किं तत्र एते ते (ज) प्रेङ्खोलितखट्वाङ्गा चटुलप्रकटाट्टहासा प्रचण्डडमरुडात्कारडामरा चञ्चत्तरक्षु-

---

कणत्कृतानि रणनाः काञ्च्यः नूपुराः केयूराणि च यस्मिन् तद् यथा तथा । सकलेति सकलाः सर्वाः वृन्दारकवृन्दानां देवगणानां या वध्वः अवरुद्धाः सुन्दर्यः कामिन्यः ।

(छ) किमिति । परतः शत्रुवनितया इत्यर्थः शच्या इन्द्राण्या रतिः क्रीडनं किम् ? तुच्छमित्यर्थः । धनपतेः कुबेरस्य स्त्रियः कान्ताः दूरे भवन्तु तिष्ठन्तु एतत् चन्द्रस्य अन्तःपुरिकावर्ग इत्यर्थः पृथक् अस्तु च तिष्ठतु च नैतासु मम प्रीतिरस्तीति भावः यतः वैरिणीषु शत्रुभूतासु आसु उत्सवः प्रीतिः कः ? नास्तीत्यर्थः । तर्हि किं क्रियतामित्याशङ्क्येनाह साकमिति मन्दोदरी मम प्रधानमहिषी शक्रजितः मेघनादस्य कलत्रनिवहैः कान्ताभिः साकं सह मम दारैः अन्यैरिति शेषः सार्धं च प्रीत्या आनन्देन पुत्रजयजनितेनेति भावः । उल्लासितं पाणिपल्लवयुगं यस्मिन् तत् यथा तथा नृत्यतु नृत्यं करोतु । शार्दूलविक्रीडितं वृत्तम् ।

(ज) प्रेङ्खोलितेति । प्रेङ्खोलितानि दोलितानि खट्वाङ्गानि यैः ताहशाः खट्वाङ्गधारिण इत्यर्थः । चटुलेति चटुला चटुलः प्रकटाः प्रचण्डाः अट्टहासा हास्यविशेषा येषां तथाविधाः । प्रचण्डेति प्रचण्डं चटुला डमरुं डात्कारेण शब्दविशेषेण डामराः प्रचण्डाः । नृत्यद्भिरिति

त्तालवेआला चमक्कंतसुरासुरपुरन्धिणो ललन्तचूडामणिच-न्दखण्डा खल खलन्तवेल्लिदामरकल्लोलिणीप्पवाहा तडत-ड्डितताडिदडुड्डुमरडमरुअरवरोद्दा घणघणिदत्थिसु-हकुहरगब्भनिबिडमिलिद जरठदाढा रोसफुक्कारफुल्लिद-फणाभारहाराहिहारिणो पअण्ड रूअधारिणो चण्डीसा संचरन्दि (६१) ।

---

(६१) किं पुनरेते ते प्रोत्कीलितखट्वाङ्गा बहुलप्रकटाट्टहासाः प्रसभमुक्तडात्कारडामरा रभसोत्तालवेतालास्त्रस्तसुरपुरन्ध्रयो ललच्चूडामणिचन्द्रखण्डाः खलखलायमानवेल्लितामरकल्लोलिनीप्रवाहा-स्तडतड्डितताडितोड्डुमरडमरुकरवरौद्राः घणघणितदन्तिविषमुखकुह-रगर्भनिबिडमिलज्जरठदंष्ट्रा रोषफूत्कारफुल्लितफणाभारहाराहिधारिणः प्रचण्डरूपधारिणश्चण्डीशाः सञ्चरन्ति ।

---

रभसेन्न: रभसेन वेगेन उत्ताला: उत्कटाः वेताला भूतविशेषा येषां तथाविधाः । त्रस्तेति त्रस्ताः भीताः सुराणां देवानां पुरन्ध्र्यः कान्ता येभ्यः तथाभूताः । ललदिति ललन्तः विराजन्तः चूडासु मणयः रत्न-भूता इत्यर्थः चन्द्रखण्डाः अर्द्धचन्द्रा येषां तथारूपाः । खलेति खलख-लाय मानाः कलकलध्वनियुताः वेल्लितायाः शिरःसु घूर्णितायाः अम-रकल्लोलिन्याः गङ्गायाः प्रवाहा येषां तद्रूपाः । तडेति तड्तड् इति अव्यक्तशब्देन ताडितानां वादितानाम् उड्डुमराणां उद्धतां डमरुकाणां वाद्यभेदानां रवेण शब्देन रौद्राः प्रचण्डाः । घणेति घणघण् इति अव्यक्तध्वनिमत्यः दन्तिषेषु उदारेषु इक्कवृक्ष इत्यर्थः सुखान्येव कुहराणि छिद्राणि तेषां गर्भेषु अभ्यन्तरेषु निविडं दृढं यथा तथा मिलन्त्यः जरठाः परिणताः दंष्ट्रा दन्ताः येषां तथाभूताः । रोषेति रोषेण क्रोधेन यः फुत्कारः रवविशेषः तेन फुल्लितान् स्फीतान्

रावणः । सहर्षम् ।

मह्यं तदा धृतमुदा शशिशेखरेण
दत्तो वरो न शिरसां सहशम्भिदा यः ।
तत्साम्प्रतं स भगवान् धृतभूरिमूर्त्ति-
रभ्यागतः पुनरनुग्रहवाञ्छया माम् ॥ ७५ ॥ (क)

प्रहस्तः । देव! सम्भावयामि कन्दर्पबाणविहतये (ख)
शाण्डपरशवमस्त्रमातन्यते तृतीयेन दाशरथिना यतः ।
ऊर्ध्वाक्षिक्रोडकुण्डोल्लसितहुतवहज्योतिरुच्चभ्रुणाभिः (ग)
कुर्वन्तो देहदाहं पुरमथनमनोन्माथिनां मन्मथानाम् ।
चूडावष्टब्धचन्द्राञ्चलसुरसरितो भूषिताः पन्नगेन्द्रैः
श्रीकण्ठाःश्यामकण्ठाःप्रणतसुरशताःसाट्टहासाश्चरन्ति॥७६॥

---

फणाभारान् हरन्ति वहन्तीति तादृशा ये अहयः भुजङ्गाः तान् धर-
न्तीति तथोक्ताः प्रचण्डरूपधारिणः भयानकरूपाः षण्डीशाः पशु-
पतयः ।

(क) मह्यमिति । तदा शशिशेखरेण हरेण धृतमुदा प्रीतेनेत्यर्थः
मह्यं शिरसां छिदा छेदेन सदृशः यः वरः न दत्तः, स भगवान् धृत-
भूरिमूर्त्तिः गृहीतकायव्यूहः सन् साम्प्रतं पुनरनुग्रहवाञ्छया तं वरं
दातुमिति शेषः मां प्राप्तः । वसन्ततिलकं वृत्तम् ।

(ख) कन्दर्पेति । कन्दर्पबाणस्य कामास्त्रस्य विहतये विध्वंसनाय
शाण्डपरशवं पाशुपतम् । आतन्यते आविष्क्रियते तृतीयेन दाशरथिना
लक्ष्मणेन ।

(ग) ऊर्ध्वेति । ऊर्ध्वं उपरि ललाटे इत्यर्थः यत् अक्षि नेत्रं
तस्य क्रोड एव कुण्डम् अग्निस्थापनस्थानविशेषः तस्मिन् उल्लसितः
प्रज्वलितः यः हुतवहः अग्निः तस्य ज्योतिषाम् उच्चभ्रुणाभिः उद्-

रावणः। भगवन् भर्ग! स्वल्पकण्ठवनच्छेदसाहसमनल्पः प्रसादः। (घ)

नासतो नेपथ्ये कलकलः।

वेगोत्खातान्त्रतन्त्रीचयचलचरणः सत्वरदन्तयन्त्र-(ङ)
प्रान्तग्रस्तोरुनासासरणिररुणदृक् क्षुभ्यतः कुम्भकर्णात्।
लूनव्याकीर्णकर्णः खरनखशिखरैरेष शाखामृगेन्द्रः
कम्प्रलाङ्गूलयष्ट्या तडतडिति शिरस्ताडयन् खं प्रपन्नः॥ ७७॥

---

ण्वपर्णैः पुरमथनानां हराणां मनोज्ञायिनां चित्तविकारिणां मन्मथानां कामानां देहदाहं कुर्वन्तः चूडासु बद्धा अर्द्धचन्द्रा येषां तथोक्ताः चलाः शिरसि भ्रमन्त्यः सुरसरितः गङ्गाः येषां तथाविधाः पन्नगेन्द्रैः भुजगेन्द्रैः भूषिताः अलङ्कृताः श्यामकण्ठाः नीलकण्ठाः कालकूटपानादिति भावः। प्रणतं सुराणां देवानां शतं यान् तादृशाः साट्टहासाः अट्टहासवन्तः श्रीकण्ठाः शम्भवः चरन्ति। स्रग्धरावृत्तम्।

(घ) भर्ग शिव। स्वल्पेति स्वल्पम् अत्यल्पं कण्ठवनानां छेदे साहसं मया कृतमिति शेषः, प्रसादः भवदनुग्रहः अनल्पः अतिमहान्। मया दश शिरांसि छित्त्वा यद् भवदाराधनं कृतं तदतिसामान्यम् अनुग्रहस्तु भवतोऽतिबहुलः यदर्थं कायव्यूहधारणमङ्गीकृतमिति भावः।

(ङ) वेगेति। एष शाखामृगाणां वानराणाम् इन्द्रः सुग्रीवः वेगेन उत्खातः निःसारित इत्यर्थः कुम्भकर्णोदरादिति भावः अन्त्रतन्त्रीणां चयः राशिर्याभ्यां तादृशौ चलौ विक्षिप्यमाणौ चरणौ यस्य तथाभूतः पादप्रहारेण कुम्भकर्णस्य उदरात् अन्त्राणि बहिष्कुर्वन्नित्यर्थः सत्वरतां दशनयन्त्राणां प्रान्तैः ग्रस्ता दंशनेनोत्पाटिता इत्यर्थः उर्वी महती नासा एव सरणिः रथ्या येन तादृशः दंष्ट्राभिः कुम्भकर्णस्य नासां छिन्दन्नित्यर्थः अरुणदृक् लोहितनेत्रः, खरैः अतितीक्ष्णैः नखशिखरैः नखाग्रैः क्षुभ्यतः क्षोभं प्राप्नुवतः कुम्भकर्णात् लूनौ छिन्नौ व्याकीर्णौ विक्षिप्तौ कर्णौ येन तथाभूतः कुम्भकर्णस्य कर्णावपि नखा-

रावणः । सविषादम् । अहो प्रमादः (च) छलप्रहारित्वं वानराणां नावधारितं वत्सेन ।

कञ्चुकी । एस सुग्गीवो कुमारकुम्भअण्णं (छ) विच्छिण्णमवकरिअ गअणं उप्पअन्तो गदो ज्जेव्व तावससआसम् (१२) ।

करङ्कः । (ज) कपिचक्रवर्त्तिचापलकोपितस्य मध्यमपौलस्त्यः समरसमारम्भमेव शरणं मन्यमानो लङ्कापुरीगोपुरादुपाहृत्तः सम्मुखीभूतस्यास्य सकलवाहिनीपरिवृतः स्वयमेव तापसः ।

---

(१२) एष सुग्रीवः कुमारकुम्भकर्णं विच्छिन्नमवकृत्य गगनमुत्पतन् गत एव तापससकाशम् ।

---

पेच वलयमित्यर्थः तथा कम्पमानया लाङ्गूलयष्ट्या लाङ्गूलदण्डेन तड़तड़् इति शब्देन शिरः कुम्भकर्णस्येति शेषः ताड़यन् प्रहरन् सन् खम् आकाशं प्रपन्नः उत्पतितः । लब्धरोहणम् ।

(च) छलप्रहारित्वं रन्ध्रप्रहारित्वम् । प्रमादः अनवधानता प्रमादोऽनवधानता इत्यमरः । वत्सेन कुम्भकर्णेन । सुग्रीवं निर्जित्य कक्षदेशे गृहीत्वा छलात् अनवहितत्वात् ईदृशी दुरवस्था कृतेति भावः ।

(छ) विच्छिन्नं क्षतविक्षतम् अवकृत्य विधाय । तापससकाशं रामसमीपम् ।

(ज) कपीति । कपिचक्रवर्त्तिनः सुग्रीवस्य चापलेन अत्याचारेण कोपितः अतिक्रोधित इत्यर्थः मध्यमपौलस्त्यः कुम्भकर्णः समरसमारम्भं युद्धव्यापारमेव शरणं प्रतीकारमिति यावत् मन्यमानः विवेचयन् उपाहृत्तः चलितः संग्रामभूमिमिति शेषः । तापसः रामः ।

कञ्चुकी । (झ) पुरदो ऽवसरिअ चउद्दिसं परिवुदो वाणरसेणावदीहिं तस्स पुरदो जम्बवन्तमइन्दमहासुहदुम्महप्पहुदिणो ठिदा रिक्खाहिवा । गअगवअगवक्खकडक्खपुरस्सरा पच्छादो गोलाङ्गुलवलाधिवा दहिमुहदरीमुहदुम्मुहप्पहाणा वामदो सरभकेसरिकिसोरप्पमुहा पदक्खिणदो हविअ वल्गिदुं पउत्ता (६२) ।

रावणः । सोऽयं पिपीलिकापतङ्गन्यायः (ञ) ।

कञ्चुकी । तदो अ (ट) मुग्गरप्पहारपरम्पराहिं मुच्छाविअअतिरिक्कभग्गो णिरग्गलगिलिदगोलंगूलवग्गो चूस्सिअवाणरवाहिणीसण्णिवेसो पउत्तो तावसाहिमुहं समा-

---

(६२) पुरतोऽपसृत्य चतुर्दिशं परिवृतो वानरसेनापतिभिः । तस्य पुरतो जाम्बवन्मैन्दमहासुखदुःसहप्रभृतयः स्थिता ऋक्षाधिपाः । गयगवयगवाक्षकटाक्षपुरःसराः पश्चाद् गोलाङ्गूलबलाधिपाः । दधिमुखदरीमुखदुर्मुखप्रधाना वामतः । शरभकेसरिकिशोरप्रमुखाः प्रदक्षिणतो भूत्वा वल्गितुं प्रवृत्ताः ।

---

(झ) पुरतः सम्मुखात् अपसृत्य वानरसेनापतिभिः चतुर्दिशं परिवृतः वेष्टितः कुम्भकर्ण इति शेषः । ऋक्षाधिपाः भल्लूकपतयः । वल्गितुं लम्फितुं पराक्रमितुमिति यावत् ।

(ञ) पिपीलिकेति । यथा पिपीलिकाः पतङ्गं प्रति धावन्ति तथा वानरा इमे कुम्भकर्णं प्रतीति भावः ।

(ट) मुद्गरेति । मुद्गरप्रहारपरम्पराभिः अनवरतमुद्गरप्रहारैरित्यर्थः मूर्च्छायिताः मोहं गमिताः अतिक्रान्ताः श्रेष्ठाः ऋक्षभल्लाः भल्लूकाः येन तथाभूतः । निरर्गलेति निरर्गलं यथा तथा गिलिताः

साहितमुच्छाविच्छेदेहिं च तेहिं चउद्दिसं अक्कमिज्जन्तो णीरन्ध्ररोसन्धआरन्धदाए समं पासत्थिदेण णिअपरिअणेण विविहवलीमुहाणं कवलकेलिकम्मणि पउत्तो (६४)।

नेपथ्ये। देव दाशरथे! त्वर्य्यतां वानरपरित्राणाय।

हिड्माताङ्गशिरस्तटीचिपिटिनं प्रेतप्रभोः सैरिभं
भूयो दर्शितशृङ्गभङ्गविपदं बिभ्रन्महामुद्गरम्।
शोणाशोषितसारणीकवलनक्षीबोऽमरप्रेयसी-
हासः स्वांश्च परांश्च खादति रणे नक्तञ्चरेन्द्रानुजः॥७८॥ (ठ)

---

(६४) ततश्च मुद्गरप्रहारपरम्पराभिर्मूर्च्छायितातिक्रान्ताक्षभङ्गो निर्गलगिलितगोलाङ्गूलवर्गचूर्णितवानरवाहिनीसन्निवेशः प्रवृत्तस्तापसाभिमुखं समासादितमूर्च्छाविच्छेदैश्च तैश्चतुर्दिशमाक्रम्यमाणो नीरन्ध्ररोषान्धकारान्धतया समं पार्श्वस्थितेन निजपरिजनेन विविधवलीमुखानां कवलकेलिकर्म्मणि प्रवृत्तः।

---

भक्षिताः गोलाङ्गूलवर्गाः वानरसङ्घा येन तथाविधः। चूर्णितेति चूर्णितः विध्वंसितः वाहिनीनां सेनानां सन्निवेशः वासस्थानं येन तादृशः सन् कुम्भकर्ण इति शेषः तापसस्य रामस्य अभिमुखं प्रवृत्तः चलितः। समासादितेति समासादितः प्राप्तः मूर्च्छाविच्छेदः मोहोपशमः यैः तथाविधैः लब्धचैतन्यैरित्यर्थः तैः भल्लूकवानरवर्गैः चतुर्दिशं समन्तात् आक्रम्यमाणः आसाद्यमानः नीरन्ध्रेण घनेन रोषान्धकारेण क्रोधतिमिरेण अन्धतया ज्ञानशून्यतयेत्यर्थः पार्श्वस्थितेन पार्श्ववर्त्तिना निजपरिजनेन राक्षसवर्गेणेति यावत्। समं सह विविधानां वलीमुखानां वानराणां कवलकेलिकर्मणि भक्षणरूपे क्रीडाव्यापारे प्रवृत्तः उद्यतः।

(ठ) हिड्माताङ्गेति। नक्तञ्चराणां राक्षसानामिन्द्रस्य रावणस्य

रावणः । अहो प्रकृतिः अध्यवसायश्च वत्सस्य ।

करङ्कः । देव ! (ड) दोर्दण्डबन्धुरितधनुर्दाशरथिरभ्यर्णवर्त्तिते कुम्भकर्णस्य कुम्भकर्णेनापि गुरुमुद्गरचूडामणिः पाणिरनणीयानुत्तम्भितस्तापसवधाय ।

रावणः । अभङ्गुरः सङ्गरः सदा मे वत्सस्य । (ढ)

करङ्कः । हाहा ! धिक्कष्टम् !

हस्तः स्थितो नभसि यत् जिघांसयैव
मत्ताङ्गनातिलकदानविधानदक्षः ।
उद्दामरामशरखण्डनतः प्रकोष्ठात्
पृष्ठे भुवो निपतितः सह मुद्गरेण ॥ ७८ ॥ (ण)

---

अनुजः कुम्भकर्णः दिङ्नागकुलस्य ऐरावतस्य या शिरस्तटी कुम्भप्रदेश इत्यर्थः तां चिपिटयति चिपिटकमिव करोतीति तथाभूतं तथा । प्रेतप्रभोः यमस्य सैरिभे महिषे दर्पिता शृङ्गभङ्ग एव विपद् येन तादृशं यममहिषशृङ्गविध्वंसिनमित्यर्थः महामुद्गरं बिभ्रत् दधानः शोणायाः शोणिताख्येव सारणी नदी तस्याः, कवलनेन पानेन क्षीणः मदः तथा अमरप्रेयसीः देवाङ्गनाः हासयतीति तथाभूतः सन् रणे स्वांश्च निजान् गणांश्च परान् वानरगणांश्च खादति भक्षयति । शार्दूलविक्रीडितं वृत्तम् ।

(ड) दोर्दण्डेति । दोर्दण्डेन भुजदण्डेन आकर्षणेनेति भावः बन्धुरितम् आनतं धनुर्येन तादृशः दाशरथिः रामः अभ्यर्णः समीपवर्त्ती । गुर्व्विति गुरुः महान् मुद्गरचूडामणिः यत्र तादृशः अनणीयान् अतिविशालः पाणिः बाहुः तापसवधाय रामविनाशाय उत्तम्भितः उत्तोलितः ।

(ढ) अभङ्गुर अविनश्वरः अव्याहत इति भावः सङ्गरः संग्रामः ।

(ण) हस्त इति । मत्तानां शीधुपायिनीनाम् अङ्गनानां कामि-

लक्ष्मणः। देव! पाणी (त) विअ बाहुदण्डो वि दे खण्डिदो (६५)।

रावणः। शान्तम्।

मूर्च्छानमत्प्लवगपुङ्गवरक्तसिक्तः
सद्दन्तिदन्तवलयैः कृतकङ्कणश्रीः।
आमूलतो मदनुजस्य भुजो भुजङ्ग-
भीमाकृतिर्झटिति हा! कृपणेन लूनः॥ ८०॥ (घ)

---

(६५) देव! पाणिरिव बाहुदण्डोऽप्यस्य खण्डितः।

---

नीनां तिलकदानविधाने ललाटेषु तिलकार्पणानुष्ठाने दक्षः निपुणः, यत् जिघांसया रिपुहननेच्छया नभसि आकाशे स्थितः एष हस्तः उद्दामेन उत्कटेन रामस्य शरेण यत् खण्डनं कर्त्तनं तेन तृतीयाया-स्तप्रत्ययः। मुष्टिना सह प्रकोष्ठात् मणिबन्धोपरिभागात् भुवः पृष्ठे भूतले निपतितः।

(त) पाणी इवेति। यथास्य पाणिद्वयं खण्डितं तथा बाहू अपीत्यर्थः।

(घ) मूर्च्छेति। हा इति खेदसूचकमव्ययं मूर्च्छया नमतां पततां प्लवगपुङ्गवानां वानरेन्द्राणां रक्तेन सिक्तः सिक्तः, सद्दन्तिनां दिग्गजानां दन्तवलयैः दशनखण्डैः खण्डमुत्पाटितैरिति भावः कृता कङ्कणस्य हस्ताभरणविशेषस्य श्रीः शोभा यस्य तादृशः, भुजङ्गस्येव भीमा भीषणा आकृतिर्यस्य तथाविधः मदनुजस्य कुम्भकर्णस्य भुजः आमूलतः मूलादारभ्य झटिति सहसा कृपणेन मानवबाणेन लूनः छिन्नः। वसन्ततिलकं वृत्तम्।

इति मूर्च्छति ।

करङ्कः । समाश्वसितु देवी वामपाणिप्रणीतमुद्गरः (द) किमपि दुर्मदो राममाक्रामति तवानुजः ।

रावणः । किञ्चिदुच्छ्वायावलोकयति ।

नेपथ्ये ।

एतद्विलूनमिषुणाऽर्द्धविधूपमेन
लङ्केश्वरानुजशिरो दशनार्दितोष्ठम् ।
संस्कारसङ्कलितकोपकषायगण्डं
चण्डाञ्चितभ्रु पतति स्थिरदृष्टि रामे ॥ ८१ ॥ (ध)

सर्वे क्षोभं नाटयन्ति ।

पुनर्नेपथ्ये ।

सद्यो राघवमल्लभल्ल ! दलितग्रीवाप्रकाण्डं पत-
न्निद्रालोर्द्रुहिणप्रणम्रसदृग्दंष्ट्राकरालं शिरः ।

---

(द) वामेति । वामेन पाणिना प्रणीतः गृहीतः मुद्गरो येन तथाविधः । दुर्मदः अतिप्रचण्डः ।

(ध) एतदिति । अर्द्धविधूपमेन अर्द्धचन्द्रसदृशेन इषुणा शरेण विलूनं छिन्नं दशनैः दन्तैः अर्दितः पीड़ितः दष्ट इत्यर्थः ओष्ठः यस्य तथाभूतं संस्कारेण पूर्ववासनेन सङ्कलितः आकुलः यः कोपः क्रोधः तेन कषायौ रक्तौ गण्डौ यस्य तादृशं चण्डं कुटिलं यथा तथा अञ्चिता प्रसृता भ्रूः यत्र तथाविधं तथा रामे स्थिरा निश्चला दृष्टिर्यस्य तथाभूतं, लङ्केश्वरस्य यः अनुजः कुम्भकर्णस्तस्य शिरः पतति । वसन्ततिलकं वृत्तम् ।

द्राक् शाखामृगचक्रचूर्णनभयादादाय तारापथात्
प्रक्षिप्तं च महार्णवे हनुमता दृष्टं च गत्वा सुरैः ॥ ८२ ॥ (न)

रावणः । हा वत्स ! कां दशां दशकण्ठेन नीतोऽसि ।

नेपथ्ये ।

देवाः ! सर्वे विमानान्यपनयत रविस्यन्दनो यातु दूरे
विन्ध्ये शाखामृगेन्द्राः ! परिहरत रणप्राङ्गणं राक्षसाय ! ।
वेगस्रस्ताञ्जनाद्रिप्रतिनिधिरवधिः सर्वविस्मापकानां
लङ्कातङ्कैकहेतुर्निपतति वियतः कौम्भकर्णः कबन्धः ॥ ८३ ॥ (प)

रावणः । शोकनाटितकेन ।

प्रेमः सोऽद्यापि मह्यं त्यजति न भवता कण्ठसूत्रार्द्धकृष्टो
गौरीसिंहेन्द्रदन्तिक्षितयरणविधिं त्वत्प्रणीतं स्मरामि ।

---

(न) वत्स इति । राक्षसमल्ल राक्षसवीर ! रावणसम्बोधनमेतत् । वत्सः भल्लेन अस्त्रविशेषेण इषितः खण्डितः ग्रीवा एव प्रकाण्डो यस्य तादृशम् अवलत् पुनःपुनः दंष्ट्राभिः करालं भीषणं तारापथात् आकाशात् पतत् निशाचरः प्रियमित्रस्य दुहितृप्रणयः ब्रह्मप्रपौत्रस्य कुम्भकर्णस्य शिरः हनुमता शाखामृगाणां वानराणां चक्रस्य समूहस्य चूर्णनभयात् द्राक् झटिति आदाय महार्णवे प्रक्षिप्तम्, सुरैः देवैः दृष्टञ्च । शार्दूलविक्रीडितं वृत्तम् ।

(प) देवा इति । हे देवाः ! सर्वे यूयं विमानानि आकाशयानानि अपनयत अपसारयत । रवेः सूर्यस्य स्यन्दनः रथः दूरे यातु गच्छतु । हे शाखामृगेन्द्राः ! राक्षसाय ! विन्ध्ये सर्वे यूयं रणप्राङ्गणं संग्रामस्थलं परिहरत त्यजत । वेगेन स्रस्तः पतितः यः अञ्जनाद्रिः तस्य प्रतिनिधिः सदृशः सर्वेषां विस्मापकानां विस्मयजनकवस्तूनाम्

तच्चास्ते त्वच्चरित्रं लिखितमिव पुरो मद्दृशां यत्सुमेरु-(फ)
वंशेनोदस्यमानो रचितचटुशतं मोचितः स्वर्गिवर्गैः ॥८४॥

इति रोदिति ।

इन्द्रजितः सुतः । अयमपरः क्षते क्षारावसेकः । (ब)

आकर्णाकृष्टचापोन्मुखविशिखशिखाशेखरः शूलपाणि-
र्बिभ्राणो भैरवत्वं बहलकहकहारावरौद्राट्टहासः ।
ध्यातः सौमित्रिणाऽथ प्रसरदुरुतरोत्तालवेताल माल-(भ)
स्तद्गात्रादुद्भवद्भिः समजनि शिखिभिर्भस्मसादिन्द्रजिच्च ॥८५॥

---

अवधिः सीमा कुम्भकर्णस्य अयं कौम्भकर्णः कबन्धः छिन्नशिराः कायः तच्छाया आतच्छायाः एकोऽद्वितीयः छेदः सन् विरतः आकाशात् निपतति ।

(फ) शेष इति हे वत्स ! भवता कण्ठस्थलस्य कण्ठस्थितस्य यश-स्थलस्य अर्द्धेन हृष्टः सः शेषः अनन्तनागः अद्य इदानीमपि शय्यां न त्यजति, त्वया प्रणीतं कृतं गौर्य्याः सिंहेन्द्रः दन्ती ऐरावतश्च तयो-र्द्वितयेन द्वयेन सह रणविधिं युद्धव्यापारं स्मरामि । वंशेन त्वया उदस्यमानः उत्क्षिप्यमाणः सुमेरुः स्वर्गिणां देवानां वर्गैः रचितम् उक्तं चटुशतं स्तोत्रवचनशतं यस्मिन् तत् यथा तथा मोचितः इति यत्, तच्च तव चरित्रं मम दृशां नेत्राणां पुरः अग्रतः लिखितमिव चित्रितमिव आस्ते तिष्ठति । शार्दूलविक्रीडितं वृत्तम् ।

(ब) क्षते क्षतस्थाने क्षारस्य लवणस्य अवसेकः अर्पणमित्यर्थः ।

(भ) आकर्णेति । अथ अनन्तरं सौमित्रिणा लक्ष्मणेन आकर्णं यथा तथा आकृष्टे चापे धनुषि उन्मुखम् ऊर्द्ध्वमुखं यत् विशिखं शरः तस्य शिखाया अग्रं शेखरः शिरोभूषणं यस्य तादृशः शूलं पाणौ यस्य तथाविधः भैरवत्वं भयङ्कराकृतिं बिभ्राणः धारयन् बहलः कहकहा-रावो यस्मिन् तादृशः रौद्रः प्रचण्डः अट्टहासो यस्य तथोक्तः तथा

रावणः मूर्च्छति सर्वे यथोचितमुपचरन्ति।

रावणः। मूर्च्छाविच्छेदनाटितकेन।

शेतां सम्प्रति वासवश्चिरभवन्निद्राजडैर्लोचनै-
र्जायन्तां विबुधोपभोग्यकुसुमाः सर्वेऽपि दिव्यद्रुमाः।
बन्धाः स्वर्गसदाञ्च सन्त्वनिगडाः प्राप्तोऽसि तं गोचरं
यद्वक्त्रैरपि वत्स! नाम दशभिर्वक्तुं न यः शक्यते॥८१॥ (म)

सानन्दं रुदित्वा। हंहो किङ्कराः! मन्दोदरीं द्रष्टुमिच्छामि। इति परिक्रम्य सर्वे निष्क्रान्ताः।

॥ इति वीरविलासो नामाष्टमोऽङ्कः॥

---

प्रचरन्तो उद्भवन्तो उद्धतराः अतिमहतो उल्काः प्रचण्डाः वेतालानां भूतानां माला श्रेणी यस्मात् तथाविधः शम्भुः ध्यातः चिन्तितः। तस्य चिन्तितोपस्थितस्येति भावः। शम्भोः वक्त्रात् मुखात् उद्भवद्भिः शिखिभिः अग्निभिः इन्द्रजित् भस्मसात् अजनि च भस्मीभूतश्च।

(म) शेतामिति। सम्प्रति इदानीं वासवः इन्द्रः चिरेण भवन्त्या निद्रया जडैः लोचनैः शेताम् निद्रां भजताम्। सर्वेऽपि दिव्यद्रुमाः देवतरवः विबुधैः देवैः उपभोग्यानि कुसुमानि येषां तादृशाः जायन्तां भवन्तु। स्वर्गसदां देवानां बन्धाः बन्धनानि अनिगडाः निगडशून्याः सन्तु च। हे वत्स! मेघनाद! दशभिरपि मम वक्त्रैः यः वक्तुं न शक्यते नाम, तं गोचरं स्थानं यमालयमित्यर्थः प्राप्तोऽसि गतोऽसि। शार्दूलविक्रीडितं वृत्तम्।

## ॥ नवमोऽङ्कः ॥

अतः परं रावणवधो भविष्यति ।

ततः प्रविशति यमपुरुषः । (क) तत्रभवतो लुलापलक्ष्मणः सकलप्राणभृतां विहितविनाशस्य कीनाशस्य किमपि विश्वातिशायिनी प्रभविष्णुता । यतः ।

नित्यस्मिताम्बुरुहविष्टरसन्निविष्टः
स्वेच्छाविनिर्मितचतुर्दशलोक एकः ।
ब्रह्मेति यः किमपरं कविता श्रुतीनां
तस्यापि निःश्वसितसंहृतिराः ! कृतान्तात् ॥ १ ॥ (ख)

---

(क) तत्रभवतः पूज्यस्य लुलापलक्ष्मणः लुलापो महिषः लक्ष्म चिह्नं वाहनत्वेनेति भावः यस्य तादृशस्य कीनाशस्य यमस्य कीनाशौ यम दैवयोरिति शेषः ।

(ख) नित्येति । नित्यं सततं स्मितं विकसितं यत् अम्बुरुहं तदेव विष्टरम् आसनं तत्र सन्निविष्टः, स्वस्य इच्छया विनिर्मिताः चतुर्दश लोका भूर्भुवःस्वरादीनि जगन्ति येन तथाविधः एक अद्वितीयः श्रुतीनां कविता रचयिता प्रचेतेत्यर्थः ब्रह्मा इति यः कीर्त्यते इति शेषः आः ! किमपरं वक्तव्यमिति शेषः । तस्य ब्रह्मणोऽपि कृतान्तात् यमात् निश्वसितस्य प्राणवायोः संहृतिः संहारः । ब्रह्मणोऽपि संहर्ता यमः, का कथा अन्येषामिति भावः ।

परिक्रम्य पार्श्वे विलोक्य च । अहो ! नभश्चरचक्रवर्त्तिनो वीरकचूडामणेः (ग) किमपि निष्प्रतीपमाम्नातं यदेषोऽस्मि तेनापि भगवता भूर्भुवःस्वस्त्रयविहितनियमेन यमेन विजनेऽपि श्रवसि समादिष्टः । यथाज्ञापितोऽस्मि पुरुहूतेन यदुत विनतानन्दनः स्यन्दनरूपतामारोप्यास्माभिः परिकल्पितमातलिसूतसुनीतसारथिर्दाशरथेः समरसीम्नि जैत्रं पत्रं कृतः सम्प्रति तु तादृशस्य रामभद्रस्य तादृशेन रावणेन सह द्वन्द्वयुद्धमनुमन्यामहे दिदृक्षामहे च तदुद्धृत्य निजाक्षपटलपटलीभ्यो लङ्कालोकलेख्यमानय येन जानीमः ।

> कदा केषां च केभ्यश्च वर्षो लङ्कानिवासिनाम् ।
> रामात्तु दशकण्ठस्य किंविधो भविता वधः ॥ २ ॥ (घ)

---

(ग) वीरकेति वीरकाणां वीरपुरुषाणां चूडामणेः शिरोरत्नस्य वीरप्रधानस्येति भावः । किमपि अनिर्वचनीयं निष्प्रतीपम् अव्याहतम् आम्नातम् आदेशः शासनमित्यर्थः । तेनापि का कथान्येषामिति भावः भूर्भुव इति भूर्भुवःस्वस्त्रये त्रिलोक्यामित्यर्थः विहितः कृतः नियमो येन तादृशेन, विजनेऽपि न तु सर्वजनसमक्षं रावणस्य शासनभयादिति भावः । श्रवसि कर्णे । समादिष्टः आज्ञापितः । पुरुहूतेन इन्द्रेण । यदुत भोः ! विनतानन्दनः गरुडः । स्यन्दनरूपतां रथाकृतिम् । परिकल्पितः विहितः मातलेः सूतः पुत्रः यः सुनीतः, स एव सारथिः यस्य तथाभूतः । जैत्रं जयसाधनं पत्रं वाहनम् । द्वन्द्वयुद्धम् उभयोर्मल्लयोः परस्परं यत् युद्धं तत् । निजाभ्यः स्वाभ्यः अक्षपटलपटलीभ्यः व्यवहारपुस्तकनिचयेभ्यः उद्धृत्य निःसार्य लङ्कालोकानां लङ्कावासिनां लेख्यं गणनापत्रम् आनय येन जानीमः ।

(घ) कदेति कदा कस्मिन् समये केषां लङ्कानिवासिनां केभ्यः

येन तत्रैव चणे (ङ) चारणोपदिश्यमानमहावीरप्रकाण्ड-प्रचाराः पुत्रदर्शनकुतूहलिना दिव्यरूपेण परमसुहृदा दशरथेन सह संग्राममसीमानमवतराम इति तन्मद्रमुख। महाचपटलिकं महचनाद्विभगुप्तमादिश येन लङ्कालेख्यकमुद्धृत्य समर्पयति पुरन्दरस्यावबाय तथाविभगुप्तमेवोपसर्पामि। परिक्रामितकेन विचिन्त्य। अहो! दशाननः सर्वेषामुपरि पराक्रमेण। तथाहि।

यत्र दृष्टे हरेरक्ष्णां सहस्रं कुड्मलायते।

कृतान्तदण्डःसोऽप्यस्य कण्ठे किमपि कुण्ठितः॥२॥(च)

अपिच।

अवतरति विधाय ब्रह्मदण्डं प्रचण्डं

सकलजननभाजां कल्पितान्ते कृतान्ते।

---

वीरेभ्यः चयः विनाशः स्यात् इति शेषः, किञ्चेति त्वयैः दशकण्ठस्य रावणस्य रामात् किंविधः कथं प्रकारो वधः भविता इति पूर्वेण जानीम इत्यनेनान्वयः।

(ङ) चारणेति। चारणैः वन्दिभिः उपदिश्यमानाः कीर्त्यमाना महावीरप्रकाण्डानां प्रचारा गतिविशेषा येभ्यः, तथाभूताः। संग्रामसीमानं रणक्षेत्रम्। महाचपटलिकं व्यवहारपुस्तकाध्यक्षम्। सर्वेषामुपरि वर्त्तते इति शेषः।

(च) यत्रेति। यत्र यस्मिन् दशानने दृष्टे सति हरेरिन्द्रस्य अक्ष्णां चक्षुषां सहस्रं कुड्मलायते मुकुलीभवति निमीलतीत्यर्थः भयादिति भावः। सः प्रसिद्धः कृतान्तस्य यमस्य दण्डोऽपि अस्य रावणस्य कण्ठे किमपि अवर्णनीयं यथा तथा कुण्ठितः वक्रीभूतः।

समरशिरसि यस्य प्राप भङ्गं धुताङ्गः
खुरदलितधरित्रीचित्रकायो लुलापः ॥ ४ ॥(छ)

कथमयं चित्रगुप्तः।

ततः प्रविशति चित्रगुप्तः। अङ्कभङ्गनाटितकेन।

दिवानिशं राक्षसमण्डलस्य
प्रचण्डरामानुचरैर्जितस्य।
निबध्नतो मे निधनप्रपञ्चं।
स्थितः करः खेदजडाङ्गुलीकः ॥ ५ ॥(ज)

पुरुहूतः। उपसृत्य कर्णे। एवमेवम्

चित्रगुप्तः। यदादिशति स्वामी। इदमर्प्यते। निबन्धो-द्धरणनाटितकेन(झ)। न खलु कश्चिदिह प्रच्छन्नो वा मत्तो वा

---

(छ) अवतरतीति। सकलजननभाजां सर्वेषां प्राणिनां कल्पितः विहितः अन्तः नाशः येन तादृशे कृतान्ते यमे प्रचण्डं तीक्ष्णं मन्यु-दण्डं विधाय गृहीत्वा यस्य रावणस्य समरशिरसि रणाग्रे अवतरति सति लुलापः महिषः धुताङ्गः कम्पितकलेवरः तथा खुरैः दलितया धरित्र्या पृथिव्या तद्रजसेत्यर्थः चित्रः धूसरः कायः शरीरं यस्य तथा-भूतः सन् भङ्गं प्राप पलायाञ्चक्रे इत्यर्थः स दशाननः सर्वेषामुपरीति पूर्वेणान्वयः। मालिनीवृत्तम्।

(ज) दिवानिशमिति। दिवानिशम् अहोरात्रं प्रचण्डैः महा-वीरैः रामानुचरैः वानरेन्द्रैरिति यावत् जितस्य निहतस्य राक्षस-मण्डलस्य निशाचरसमूहस्य निधनप्रपञ्चं विनाशविस्तरं निबध्नतः लि-खतः मे मम करः खेदेन परिश्रमेण जडा अवशाः अङ्गुल्यः यस्य तथाभूतः सन् स्थितः। उपेन्द्रवज्रावृत्तम्।

(झ) निबन्धोद्धरणनाटितकेन निबन्धेभ्यः व्यवहारपुस्तकेभ्यः उद्-

यो मन्त्रं निर्भेदयेत् साक्षात्करणाय तत् प्रतिवाचय।
पुरुषो वाचयति।

अतिक्रान्ते कृते काले प्राप्ते त्रेतादिवत्सरे।
कृष्णकार्त्तिकपक्षाद्यदिवसोदययोगिनि ॥ ६ ॥(ञ)
रामैकरतसुग्रीवप्लवङ्गमबलैर्बलात्।
लङ्काऽलङ्कारतां बिभ्रत्युपरुद्धा महोदधेः ॥ ७ ॥ (ट)
धूम्राक्षं क्रोधधूम्राक्षमकम्पनमकम्पनम्।
हतवानञ्जनीजन्मा भिन्नाञ्जनसमप्रभम् ॥ ८ ॥ (ठ)
प्रहस्तो दीर्घहस्तेन नीलेनाशु निमीलितः।
द्वितीयेऽह्नि द्विधा चक्रे कुम्भकर्णं रघूद्वहः ॥ ९ ॥(ड)

---

करणं यद्विकरणं तदेव नाटितकम् अभिनयकरणेन। प्रच्छन्नः गूढ-रूपेण स्थितः। मत्तः मद्यपानेन विकृतमतिरित्यर्थः। निर्भेदयेत् प्रकाशयेत्।

(ञ) अतिक्रान्ते इति। कृते सत्ये काले युगे इति यावत् अति-क्रान्ते गते सति, कृष्णकार्त्तिकपक्षस्य कार्त्तिककृष्णपक्षस्य इत्यर्थः आद्यदिवसे प्रथमदिने प्रतिपदीत्यर्थः यः उदयः तद्योगिनि त्रेतायां द्वितीययुगस्य इत्यर्थः आदिवत्सरे प्रथमवर्षे।

(ट) रामे एकरतः अत्यासक्तः यः सुग्रीवः तस्य प्लवङ्गमबलैः वान-रानीकैः अलङ्कारतां बिभ्रती धारयन्ती जगदलङ्कारभूतेत्यर्थः लङ्का आमहोदधेः महासमुद्रपर्य्यन्तम् उपरुद्धा अवरुद्धा।

(ठ) तत्र अञ्जनीजन्मा अञ्जनासुतः हनूमान् क्रोधेन धूम्रे अ-क्षिणी यस्य तादृशं धूम्राक्षं नाम राक्षसं तथा भिन्नाञ्जनेन मर्दित-कज्जलेन समा प्रभा यस्य तद्रूपम् अतिकृष्णवर्णमित्यर्थः न कम्पते इति अकम्पनं नाम राक्षसञ्च हतवान्।

(ड) दीर्घहस्तेन महाभुजेन नीलेन वानरसेनापतिना प्रहस्तः

नरान्तकस्यान्तकोऽभूदङ्गदो रुचिराङ्गदः ।
नीतो देवान्तकश्चान्तं त्रिशिराश्च हनूमता ॥ १० ॥ (ठ)
ऋषभेण महापार्श्वः पार्श्वपीडनतो हतः ।
चक्रेऽतिकायं निष्कायं तृतीयेऽह्नि च लक्ष्मणः ११ (ण)
कुम्भकर्णोद्भवौ कुम्भनिकुम्भौ दम्भपण्डितौ ।
हरिराजहनूमद्भ्यां चक्राते यमसेवकौ ॥ १२ ॥ (त)
मकराक्षं सरोजाक्षः खरपुत्रं खरान्तकः ।
रामो गुणद्रुमारामो निजघान घनौजसम् ॥ १३ ॥ (थ)
मेघनादं महानादं सायकैर्हतनायकैः ।
लक्ष्मणः सिंहलक्ष्माणं बबाध प्रियबान्धवः ॥ १४ ॥ (द)

---

चाशु शीघ्रं निमीलितः निहतः । द्वितीयेऽह्नि दिवसे रघूद्वहः रामः कुम्भकर्णं द्विधा चक्रे चिच्छेद ।

(ठ) रुचिरौ अङ्गदौ यस्य तादृशः अङ्गदः नरान्तकस्य अन्तकः नाशकः अभूत् । हनुमता च देवान्तकः त्रिशिराश्च अन्तं नाशं नीतः प्रापितः ।

(ण) ऋषभेण वानरसेनान्या महापार्श्वः पार्श्वपीडनतः पार्श्वयोः पीडनात् प्रहारादित्यर्थः हतः नाशितः । लक्ष्मणः तृतीयेऽह्नि दिवसे अतिकायं निष्कायं चक्रे हतवानित्यर्थः ।

(त) हरिराज हनुमद्भ्यां सुग्रीवेण हनुमता च इत्यर्थः कुम्भकर्णोद्भवौ कुम्भकर्णसुतौ दम्भपण्डितौ अतिदाम्भिकौ कुम्भनिकुम्भौ यमसेवकौ चक्राते यमालयं प्रेषितौ इत्यर्थः ।

(थ) सरोजाक्षः पद्मलोचनः गुणद्रुमाणां गुणरूपाणां द्रुमाणाम् आरामः उपवनभूतः सर्वगुणाकर इत्यर्थः खरान्तकः खरराक्षसहन्ता रामः घनौजसं महाबलं खरस्य पुत्रं मकराक्षं निजघान हतवान् ।

(द) प्रियाः बान्धवाः यस्य तथोक्तः लक्ष्मणः हताः नायकाः प्रधान-

महोदरो विरूपाक्षो विरूपाक्षो महोदरः।
चतुरेण चतुर्थेऽह्नि सुग्रीवेण रणे हतौ ॥ १५ ॥ (ध)
संग्रामे वीरसंग्रामे राजितः समराजितः।
चक्रे रणमहाचक्रं मार्गणैर्मर्ममार्गणैः ॥ १६ ॥ (न)
दृग्धकण्ठो धृतोत्कण्ठो राघवाद्‌स्त्रलाघवात्।
पञ्चमेऽहनि पञ्चत्वं प्रयासेन प्रयास्यति ॥ १७ ॥ (प)

युगलकमृप्रति। चित्रगुप्तः। तदपरिहीणकालं (फ) भगवन्तमुपतिष्ठ येन पुरन्दरादेशमनुतिष्ठति स्वामी।

इति निष्क्रान्तौ विष्कम्भकः।

ततः प्रविशतः पुरन्दरदशरथौ चारणमिथुनं च।

---

वीरा यैः तादृशै सायकैः शरैः महानादं सिंहनादमिव सिंहविक्रममिति भावः मेघनादं वधाय हतवान्।

(ध) रणे चतुरेण रणपण्डितेन सुग्रीवेण चतुर्थेऽह्नि दिवसे महत् उदरं यस्य तादृशः महोदरः विरूपे विकटे अक्षिणी यस्य तादृशः विरूपाक्षश्च हतौ।

(न) समरेषु संग्रामेषु अजित राजितः वानरसेनापतिः वीराणां संग्रामः समूहो यत्र तादृशे संग्रामे मर्ममार्गणैः मर्मभेदिभिरित्यर्थः मार्गणैः शरैः रणमहाचक्रं महान्तं रणमित्यर्थः चक्रे कृतवान्।

(प) पञ्चमेऽहनि दिवसे दशकण्ठः रावणः अस्त्रलाघवात् अस्त्रेषु लघुहस्तात् राघवात् रामात् धृता उत्कण्ठा येन तादृशः सन् प्रयासेन युद्धव्यापारेण पञ्चत्वं प्रयास्यति प्राप्स्यति।

(फ) अपरिहीणेति। अपरिहीणः कालो यस्य तत् यथा तथा यथाकालमित्यर्थः भगवन्तम् अन्तकम् उपतिष्ठ सेवस्व प्रभोरन्तिकमुपगच्छेत्यर्थः।

चारणः । आर्य्य मातले ! सकलदानवेश्वरपुराक्रमणं (व) सौत्रामणं अतिदृक्कुतूहलोत्तानितलोकलोचनपक्ष्माणमैरावणलक्ष्माणं गगनाङ्गणसञ्चरणवेगतरलितमाणिक्यं किङ्किणीनिनदनिःस्यन्दनं स्यन्दनमितः कुरु । अयमसावतिसुरासुरसङ्गरनिवेशो रामरावणयोः समरसंरम्भोद्देशः ।

सर्वे रथवेगं नाटयन्ति ।

द्वयरथः । भगवन् (भ) गीर्वाणनाथ ! इतः प्रसादं विधाय निधीयन्तां दृष्टयः ।

> अयमनुकृतवक्षोफुल्लतापिञ्छगुच्छो
>
> रणभुवमवतीर्णः कार्मुकी रामभद्रः ।

---

(व) सकलेति । सकलानां दानवेश्वराणां पुराणि नगराणि आक्रम्यन्ते अनेनेति तथोक्तं सुत्रामा गोत्रभिद् वज्री वासवो वृत्रहा वृषेत्यमरः । तस्य इदं सौत्रामणम् ऐन्द्रमित्यर्थः । अतिदृक्कुतूहलेन अत्युत्कटदर्शनकौतुकेन उत्तानितानि उद्‌क्षेपितानि लोकलोचनानां पक्ष्माणि लोमानि येन तादृशम् । ऐरावणलक्ष्माणम् ऐरावतचिह्नम् । गगनाङ्गणेषु अन्तरीक्षप्रदेशेषु यत् सञ्चरणं तस्य वेगेन रयेण तरलितानि चलितानि माणिक्यानि स्वाङ्गन्यस्ता रत्नविशेषाः यस्य तादृशम् । किङ्किणीनां क्षुद्रघण्टिकानां निनदाः ध्वनयः निस्यन्दन्ते निःसरन्ति यस्मात् तथाभूतं स्यन्दनं रथम् इतः अस्मिन् प्रदेशे कुरु स्थापयेति यावत् । अतीति सुरासुराणां देवासुराणां सङ्गरनिवेशं संग्रामोद्देशमतिक्रान्त इति तथोक्तः देवासुरसंग्रामवेलातिशायीत्यर्थः समरसंरम्भस्य युद्धव्यापारस्य उद्देशः स्थानम् ।

(भ) गीर्वाणनाथ ! देवराज ! प्रसादम् अनुग्रहं विधाय कृत्वा ।

अयमपि दशकण्ठः कुण्ठिताम्भोदशोभः
परिकलयति बाणं भ्रान्तकोदण्डदण्डः ॥ १८ ॥ (म)

कर्णं दत्त्वा आकाशे । किमाह रभसोल्लासितहृदयामोदमुद्रो (य) रामभद्रः ।

भो लङ्केश्वर ! दीयतां जनकजा रामः स्वयं याचते
कोऽयं ते मतिविभ्रमः स्मर नयं नाद्यापि किञ्चिद्गतम् ।
नैवं चेत् खरदूषणत्रिशिरसां कण्ठासृजा पङ्किलः
पत्री नैष सहिष्यते मम धनुर्ज्याबन्धबन्धूकृतः ॥ १९ ॥ (र)

---

(म) अयमिति । अनुकृतः वल्गा खतया सह फुल्लः विकसितः तापिञ्छगुच्छः तमालकुसुमस्तवकः येन तादृशः कार्मुकी धनुष्पाणिः अयं रामभद्रः । कुण्ठिता सङ्कोचिता तिरस्कृता इति यावत् अम्भोदस्य जलधरस्य शोभा येन तादृशः अयं दशकण्ठः रावणः भ्रान्तः आस्फालितः कोदण्डदण्डः धनुर्यष्टिर्येन तथाभूतः सन् बाणं परिकलयति गृह्णाति वा योजयति । मालिनी वृत्तम् ।

(य) रभसेति । रभसेन वेगेन उल्लासिता विकासिता आमोदमुद्रा हर्षावेशः यस्य तादृशः ।

(र) भो इति । भो लङ्केश्वर ! जनकजा जानकी दीयतां प्रत्यर्प्यतां मह्यमिति शेषः रामः स्वयं साक्षात् याचते प्रार्थयते । ते तव अयं कः मतिविभ्रमः बुद्धिविपर्य्यासः ? नयं नीतिं स्मर अद्यापि किञ्चित् मोक्षादिकं न गतं न नष्टम् ? । चेत् यदि एवं न करोषीति शेषः तदा खरदूषण त्रिशिरसां जनस्थानवासिनां राक्षसानां कण्ठासृजा कण्ठशोणितेन पङ्किलः लिप्त इति यावत् धनुषः ज्यया मौर्व्या बन्धेन प्रबन्धपाशेनेति भावः बन्धूकृतः मिलीकृतः एषः मम पत्री शरः न सहिष्यते त्वामिति शेषः । शार्दूलविक्रीडितं वृत्तम् ।

पुरन्दरः । सखे (क) भूपालकल्प ! कतिहायनः पुनरयं वत्सो रामभद्रो येनेदृशान्यतिपरिचितप्रवेशानि च वचांसि वक्तुं शिक्षितः ।

दशरथः । सविनयम् । देव ! भवदनुग्रहस्यैष प्रभावः स खल्वयस्कान्तमणेरनुभावो (ख) यदयो द्रवति । आकाशे कर्णं दत्त्वा । किमाह राक्षसराजः ? । (ग) रे रे राम दोर्दण्डचण्डिमाहृतराम ! त्वत्पूर्वपुरुषस्यापि प्रहरणैर्नैव सोढमासीत् तथाहि । स मया ।

भृङ्गः स्तम्बेरमेणेव मदलम्पटचेष्टितः ।
अनरण्यो वरेण्यश्रीश्चपेटी चिपिटीकृतः ॥२०॥(घ)

किञ्च रे अनरण्यकुलकुमार !

---

(क) भूपालकल्प ! पृथिवीन्द्र ! कतिहायनः कतिवर्षीयः ! अतिपरिचितेन अतिहृद्येन प्रवेशानि वाक्यानि ।

(ख) अयस्कान्तमणेः लोहकर्षकविशेषस्य अनुभावः प्रभावः, अयः लोहधातुः द्रवति गलति ।

(ग) रे रे इति । धनुर्भङ्गरूपकर्मव्यवहार्यं दोर्दण्डचण्डिम्ना बाहु-दण्डवीर्येण हृता रामा कान्ता यस्य तादृश राम ! तव पूर्वपुरुषस्य अनरण्यस्यापि प्रहरणैः अस्त्रैः नैव सोढं सोढुं न शक्यं आसीत् महिम-मदीय पूर्वपुरुषेणापि न सोढुं शक्यः आसीदित्यर्थः ।

(घ) भृङ्ग इति । मदेषु दानवारिषु लम्पटं चापलं चेष्टितं यस्य तादृशः मदलम्पटचेष्टित इत्यर्थः भृङ्गः भ्रमरः स्तम्बेरमेण गजेन्द्रेणेव वरेण्या श्रेष्ठा श्रीर्यस्य तादृशः महाबलशालीत्यर्थः अनरण्यः चपेटा चपेटाघातेन चिपिटीकृतः पिष्ट इत्यर्थः ।

चक्रे चक्रं मुरारेर्मयि कुपितवधूकुण्डलक्षेपलीला-
मस्मिन्नंसे विभिन्नस्तडिति विसलताकाण्डवत् कालदण्डः।
वक्षस्यूर्जस्वि वज्रं गतमिह च तुलां स्त्रैणहारप्रहारै-
र्यत् सत्यं पत्रिणस्ते मम वपुषि घने मन्मथास्त्रीभवन्ति॥२१॥(ख)

पुरन्दरः। विचिन्त्य। अहो! महदन्तरं रामरावणयो-र्वचनचातुर्य्यं प्रति यदा मतिः(ङ)परिणमन्ती पुरुषमुदात्तयति न वयः।

चारणः। कर्णं दत्त्वा आकाशे। किमाह रामभद्रः?। तर्हि सम्प्रतामयमनङ्गबाणोपमानो बाणः (च)।

---

(ख) चक्रे इति मुरारेः नारायणस्य चक्रं सुदर्शनं मयि कुपितायाः वध्वाः कुण्डलक्षेपस्य कुण्डलस्य कर्णभूषणविशेषस्य यः क्षेपः प्रहारः स एव लीला विलासः स्तामिनं प्रतीति भावः। तां चक्रे ततवत्। कुपितकामिनी कुण्डलप्रहार इव सुदर्शनप्रहारो मयि जात इति भावः। कालस्य यमस्य दण्डः अस्मिन् अंसे स्कन्धे विसलताकाण्डवत् मृणालदण्ड इव तडिति विभिन्नः खण्डितः चूर्णित इत्यर्थः। ऊर्जस्वि अतितेजस्वि वज्रं कुलिशम् इह वक्षसि स्त्रैणहारप्रहारैः स्त्रीणां हारप्रहारैः तुलां साम्यं गतं प्राप्तम्। ते तव पत्रिणः शराः घने निविडे अतिकठिने इत्यर्थः मम वपुषि शरीरे मन्मथास्त्रीभवन्ति कामास्त्रभूतानि कुसुमानि भवन्ति इति यत् तत् सत्यम्। स्रग्धरावृत्तम्।

(ङ) परिणमन्ती परिपाकं गच्छन्ती। उदात्तयति महान्तं करोति।

(च) अनङ्गेति। अनङ्गस्य कामस्य यः बाणः कौसुम इति भावः स उपमानं यस्य तथाविधः।

चारणी। सव्वत्थं पच्चक्ख। भअवं पुरन्दर! णिवेसीअन्तु (क)विसट्टकमलकाणणमणोहरा हदोहदो अच्छिविक्खोहा। जदो पढमं कोदंडमंडलादो पलअकेउदंडप्पमाणो बाणो पच्छा कोसलणरिंदणंदणस्स वअणादो वाणी णिग्गदा भअवं इंदाणीवल्लह! अस्सुदपुव्वं अदिट्ठपुव्वं च रामचंदचरिदं जं दाणिं दसाणणस्स मंदोदरीचडुलचुंबणविलुत्ततिलअबंधे णिडालवट्टे जअधअदंडत्तणमुवणीदो बाणो (१)।

चारणः। सुगेहिनि! सुदृष्टिरसि।

यस्मिन्नङ्कमम्बिकापतिरसौ देवस्तृतीयं वह-
त्याद्यं यत्र च रोचनाम्बुतिलकं न्यस्यन्ति पृथ्वीभुजः।

---

(१) भगवन् पुरन्दर! निवेश्यन्तां विशदकमलकाननमनोहरा हत-हतोऽक्षिविक्षेपाः। यतः प्रथमं कोदण्डमण्डलात् प्रलयकेतुदण्डप्रमाणो बाणः पश्चात् कोशलनरेन्द्रनन्दनस्य वदनाद्वाणी निर्गता। भगवन्निन्द्राणीवल्लभ! अश्रुतपूर्वमदृष्टपूर्वं च रामचन्द्रचरितं यदिदानीं दशाननस्य मन्दोदरीचटुलचुम्बनविलुप्ततिलकबन्धे ललाटपट्टे जयध्वज-दण्डत्वमुपनीतो बाणः।

---

(क) विशदानि विकसितानि यानि कमलवनानि तद्वत् मनो-हराः। कोदण्डमण्डलात् धनुर्मण्डलात् प्रलये कल्पान्ते उदितः यः केतुदण्डः दण्डाकृतिरुत्पातविशेषः तत्प्रमाणः तद्रूप इत्यर्थः। कोशल-नरेन्द्रनन्दनस्य रामस्य। मन्दोदरीति मन्दोदर्याश्चटुलचुम्बनेन चा-टुचुम्बनेन विलुप्तः तिरोहितः तिलकबन्धः तिलकन्यासः यस्मात् तादृशः। जयध्वजदण्डत्वं जयपताकायष्टित्वं उपनीतः प्रापितः।

क्रोधे द्राक् भ्रुकुटीपुटेन घटते यत्र त्रिभङ्गात्मना
तत्रैव त्रिदिवद्रुहः प्रथमतो रामेण बाणोऽर्पितः ॥२२॥ (ख)

चारणी । सविषादम् । हद्धि ! हद्धि ! हदासदसकन्धरेण वि णिब्भरदलदिंदीवरवणाहिरामस्स रामस्स(ग) गिरिसिलाविसालं वच्छत्थलमुद्दिसिअ कअंतदाढाजरठो सरो सन्धिदो (२) ।

दशरथः । कः कोऽत्र भोः ! धनुर्धनुः(घ) पुरन्दरप्रसादीकृतसखिभावे सति दशरथे कथमिव रावणो रामभद्रं प्रहरतु ।

---

(२) हा धिक् ! हा धिक् ! हताशदशकन्धरेणापि निर्भरदलदिन्दीवरवनाभिरामस्य रामस्य गिरिशिलाविशालं वक्षस्थलमुद्दिश्य कृतान्तदंष्ट्राजरठः शरः संहितः

---

(ख) यस्मिन्निति । असौ देवः अम्बिकापतिः त्रिलोचन इत्यर्थः यस्मिन् ललाटपट्टे इति भावः । तृतीयं त्र्यम्बकं नेत्रं वहति धत्ते, यत्र च पृथ्वीभुजः राजानः आद्यं प्रथमं सर्वकार्य्यात् प्रागिति शेषः रोचनाम्बु तिलकं गोरोचनाजलतिलकं न्यस्यन्ति दधति, यत्र क्रोधे सति द्राक् झटिति त्रिभङ्गात्मना त्रिभङ्गरूपेण घटते भ्रूकुट्या त्रिभङ्गं भवतीति भावः । रामेण त्रिदिवद्रुहः स्वर्गशत्रोः रावणस्य तत्रैव ललाटपट्टे इति शेषः प्रथमतः अग्रतः बाणः शरः अर्पितः योजितः निक्षिप्त इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

(ग) निर्भरेति । निर्भरं सम्यक् यथा तथा दलत् विकसत् यदिन्दीवरवनं नीलोत्पलसमूहः तद्वत् अभिरामः सुन्दरस्तस्य गिरिशिलाविशालं पर्वतशिलाविस्तारम् । कृतान्तस्य यमस्य या दंष्ट्रा दन्तः तद्वत् जरठः कठिनः ।

(घ) पुरन्दरेति पुरन्दरेण देवराजेन प्रसादीकृतः सखिभावः सख्यं यस्य तादृशे देवराजसहाये इति भावः सति वर्त्तमाने ।

पुरन्दरः । सखे दशरथ । इक्ष्वाकुकुलमिदं तदनुचितं(क) क्षत्रधर्मस्य दिव्यभावस्य च यदन्यवृत्तिरपि पक्षं गृह्णाति ।

दशरथः । तत् कथयतु वन्द्यः(ख) किमत्र साम्प्रतम् ।

पुरन्दरः । यदत्र साम्प्रतमसाम्प्रतं वा राघवधुरन्धरो रामदेव एव तद्वेद ।

नारदः ।

यन्मैथिलीमदनतल्पतलं यदास्त-
मारीचरत्नमृगचर्म शिलाघनं च ।
रामस्य वक्षसि चिरोज्झितहारदाम्नि
तस्मिन्नयं दशमुखेन शरो निखातः ॥ २३ ॥(ग)

दशरथः । कथं राघव ! निपुणोऽसि यदेकेन बाणेन हृदये द्वयं ताडितं रामो दशरथश्च ।

नारदः ।

मन्दोदरीस्तनविसूत्रितकुङ्कुमं य-
द्यद्दन्तिघातकणचूर्णविकीर्णहारम् ।

---

(क) क्षत्रधर्मस्य क्षत्रियाचारस्य दिव्यभावस्य देवत्वप्राप्ततायाश्च । अन्यवृत्तिः यो ऽन्यवृत्तिर्न भवति स इत्यर्थः इक्ष्वाकुकुले उभयोरेव पक्ष-पातनियमः न तु कस्यापि तत्र साहाय्यकरणावकाश इति भावः ।

(ख) वन्द्यः पूज्यः । साम्प्रतं युक्तम् ।

(ग) यदिति । यत् वक्षः मैथिल्याः सीतायाः मदनतल्पतलं काम-शय्यास्थानम् । यत् आस्तं धृतं मारीचस्य रत्नमृगस्य चर्म येन तथोक्तं शिलाघनं पाषाणवत् कठिनञ्च, दशमुखेन रावणेन रामस्य चिरेण उज्झितं त्यक्तं हारदाम हारभूषणं येन तादृशे तस्मिन् वक्षसि अयं शरः निखातः निक्षिप्तः । वसन्ततिलकं वृत्तम् ।

लङ्केश्वरस्य हृदि तव भवद्भुजाऽपि
मारीचरक्तपिहितो निहितः पृषत्कः ॥ २४ ॥(ज)

चारणौ । चमत्कारम् ।(झ)आअण्णाकड्ढिदकोदंडमंडलनि-
ग्गलंतसरधोरणीणीरंधणिरुध्धभुअणकंदरो सुट्ठु क्खु राम-
रावणाणं णिब्भरो समरसंरम्भो अहह ! का वि लक्खणजेठ्-
ठस्स दसरहणंदणस्स धाणुक्कदा जेण अदिक्कमिअ रहवर-
केउदण्डं सरच्छडा पअट्टंति (२) ।

पुरन्दरः । सखे महीमहाराज! अमुना (ञ)रामशरविद्यावै-
शारद्येन देवं त्रिपुरान्तकरं शङ्करमनुस्मारितोऽस्मि ।

---

(२) आकर्णाकृष्टकोदण्डमण्डलनिर्गच्छच्छरधोरणीनीरन्ध्रनिरुद्धभु-
वनकन्दरः सुष्ठु खलु रामरावणयोर्निर्भरः समरसंरम्भः । अहह !
कापि लक्ष्मणज्येष्ठस्य दशरथनन्दनस्य धानुष्कता येनातिक्रम्य रथवर-
केतुदण्डं शरच्छटाः प्रवर्त्तन्ते ।

---

(ज) मन्दोदरीति । हे राजन् ! भवद्भुजा तथाभूतेनापि
रामेण यत् मन्दोदर्य्याः स्तनयोः विलुलितं विमृष्टं कुङ्कुमं येन तथा-
भूतं यस्य वज्रघातस्य कुलिशप्रहारस्य कणचूर्णेन विकीर्णः विरचितः
हारो यस्मिन् तादृशे तव लङ्केश्वरस्य हृदि मारीचस्य रक्तेन पिहितः
मारीचघातीत्यर्थः पृषत्कः शरः निहितः निक्षिप्तः । वसन्ततिलकं वृत्तम् ।

(झ) आकर्णेति । आकर्णाकृष्टं यत् कोदण्डमण्डलं धनुर्मण्डलं
तस्मात् निर्गच्छन्तीभिः शरधोरणीभिः बाणपरम्पराभिः नीरन्ध्रं यथा
तथा निरुद्धम् आच्छन्नं भुवनकन्दरं जगदभ्यन्तरं यस्मिन् तादृशः नि-
र्भरः निरतिशयः । धानुष्कता धनुःशिक्षेत्यर्थः । रथवरस्य रथश्रेष्ठस्य
पुष्पकस्येत्यर्थः केतुदण्डं ध्वजयष्टिम् । शरच्छटाः बाणपरम्पराः ।

दशरथः। रावणावलोकनाटितकेन। कथं रामभद्रचरित-प्रमोदवते भगवते महेन्द्रायापि कुप्यति दशास्यः। कर्णे दत्त्वा आकर्णये। किमाह रावणः?।

स्मर्त्तुं युक्तः स तव समयः संयतं त्वां विमोक्तुं
शच्या यस्मिन्नहमतिशुचा याचितो भर्तृभिक्षाम्।
यद्वा क्षुद्रो जन इव कथं कथ्यतां राक्षसेन्द्रः
पाणौ यस्य क्षयगरजुषामौषधं चन्द्रहासः ॥२५॥(ट)

अपि च रे(ठ) कपिललोमशबाहो अहल्याजार!
बाणान् स्यन्दनकेतुयष्टिसुहृदो रामस्य नामाङ्कितान्
दृष्ट्वा वासव! किं दृशां दशशती निःशल्यमुत्फुल्लति
शश्वत्तापसकामिनोऽस्य विमतेराज्ञो तु कृत्वा शिर-
स्त्वां कारागृहदत्तगाढनिगडं कर्त्ता प्रगे रावणः॥ २६॥(ड)

---

(ञ) रामेति। रामस्य शरविद्यायां यत् वैशारद्यं वैचक्षण्यं तेन।

(ट) स्मर्त्तुमिति। स समयः तव स्मर्त्तुं युक्तः स्मरणीय इत्यर्थः। यस्मिन् समये शच्या तव पत्न्या अतिशुचा अतिशोकार्त्तया संयतं कारानिबद्धं त्वां विमोक्तुम् अहं भर्तृभिक्षां याचितः। यद्वा अथवा क्षुद्रो जनइव राक्षसेन्द्रः रावणः कथं कथ्यताम् लोकैरिति शेषः क्षुद्रं जनम् आत्मश्लाघिनं यथा लोकाः कथयन्ति तथा रावणं मा कथयन्तु इति भावः। यस्य रावणस्य पाणौ क्षयगरजुषां सर्वविषसेविनां सर्वि-ज्ञानामित्यर्थः औषधं दमन इति भावः चन्द्रहासः तदाख्यः असिः विद्यते इति शेषः।

(ठ) कपिलौ पिङ्गलौ लोमशौ बाहू यस्य तत्सम्बोधनः तत् सम्बुद्धौ, अहल्यायाः गौतमपत्न्या जारः उपपतिः तत्सम्बुद्धौ जारस्तूपपतिः समावित्यमरः।

(ड) बाणानिति। रे वासव! इन्द्र! रामस्य नामाङ्कितान् स्यन्द-

दशरथः। भूय आकाशे कर्णं दत्त्वा। किमाह वत्सो मे रामभद्रः? अहो! (ढ) वालिबालवयस्य पौलस्त्य! भवादृशेभ्यो वीर-वरपरिभाषाः प्रवर्त्तन्ते तत् किमिदं नाम यदन्यः प्रति-पक्षोऽन्यस्मै कुप्यते तदेहि मामेव योधय। यदुन्मार्गमा-र्गणाद् दाशरथिना क्षत्रियेण भवान् विनेय एव। विचिन्त्य। किमाह रावणः? रेरे मानुषीपुत्र अयमसावक्षत्रियो रावणः स भवान् क्षत्रियो रामः तद् दृश्यतां कतरो विनेयः कतरो विनेतेति। किमाह रामभद्रः? हंहो अमानुषी-पुत्र! अयमसौ क्षत्रियो रामः स भवानक्षत्रियो रावणस्त-दद्य दृश्यतां कतरो विनेयः कतरो विनेतेति।

---

शक्तयष्टिसङ्कटः रथध्वजदण्डनिपातिन इत्यर्थः शाणान् शरान् इत्वा तत्र दृशां दधती सहस्रं नयनानीत्यर्थः निःशल्यम् उद्धृतहृदयशल्य-मिति भावः यथा तथा किं कथम् उत्फुल्लति विकसति आनन्देनेति भावः। रावणः आजौ युद्धे अस्य विमतेः दुर्बुद्धेः तापसश्चासौ कामी चेति तथोक्तस्य तपश्चरणेऽपि स्त्र्यासक्तेरिति भावः रामस्य सद्यः सहसा शिरः कृत्त्वा छित्त्वा प्रगे प्रातःकाले त्वां कारागृहे दत्तं गाढं कठिनं दुर्भेद्यमिति यावत् निगडं यस्य तादृशं कर्त्ता करिष्यति। शार्दूलवि-क्रीडितं वृत्तम्।

(ढ) वालीति। वालिनो वानरराजस्य बालवयस्य! बाल्यमित्र! वा शैशवमित्र! शैशवे स्थितो वाली त्वां सन्ध्यायां लाङ्गूलेनाकृष्य चतुर्षु सागरेषु जलं पाययामासेति प्रसिद्धिरिति बोध्यम् उपहासोक्तिः। यद्वा वालिनः वालानां लोम्नां वयस्यः तत्सम्बन्धी वाली त्वां लाङ्गूल-लोमान्तर्गतं कृत्वा सन्ध्यामुपासाञ्चक्रे इति च प्रसिद्धिरिति बोध्यम्। भवादृशेभ्यः महद्भ्यः इति भावः वीरवराणां वीरश्रेष्ठानां परिभाषाः

चारणः। समन्विनाथ्य। अतिहि सुदूरमन्तरं(च)कार्मुककर्मणि विरिञ्चिविरोचनकुलतिलकयोरनयोर्हस्तलाघवस्य तथाहि।

रघुपतिवदनेन्दौ कार्मुकैः पङ्क्तिसंख्यै-
र्दश विकिरति बाणान् यातुधानप्रधानः।
दशभिरपि च काण्डैरेककोदण्डपाणी
प्रहरति दशवक्त्रीं राघवो रावणस्य ॥ २७ ॥ (द)

---

प्राप्तः आश्रित इत्यर्थः विवरविस्तरः गर्भसमूहः येभ्यः तथोक्ताः। निष्ठुरेति। निष्ठुरं निर्दयं यथा तथा निःशेषेण तापिताः गन्धर्ववर्गाः यैः तथाविधाः। प्रकटेति। प्रकटं सम्यक् विध्वंसिताः स्थानात् च्याविताः सिद्धानां सङ्घाः समूहा यैः तथाभूताः। गगनेति। गगनाङ्गणेषु उच्चाटिताः शकुन्तानां पक्षिणां सन्तानाः निवहाः यैः तथोक्ताः। क्व कुत्र, प्रस्तुताः चलिताः। शरसङ्घाताः शरश्रेणयः। एतयोः रामरावणयोः।

(च) सुदूरम् अति महत् अन्तरं प्रभेदः। कार्मुककर्मणि धनुर्व्यापारे। विरिञ्चिः ब्रह्मा विरोचनः सूर्य्यः तयोः कुलतिलकयोः वंशभूषणयोः अनयोः रावणदाशरथ्योरित्यर्थः हस्तलाघवस्य हस्तयोः क्षिप्रकारिता।

(द) रघुपतीति। यातुधानप्रधानः राक्षसश्रेष्ठः रावणः पङ्क्तिसंख्यैः दश वामहस्तधृतैरित्यर्थः कार्मुकैः धनुर्भिः रघुपतेः रामस्य वदनेन्दौ मुखशशिनि दशबाणान् विकिरति विक्षिपति। राघवः रामः एककोदण्डपाणी एकधनुर्धरः सन् दशभिः काण्डैः शरैः अपि च अपिचकारोऽत्र एवार्थकः। रावणस्य दशानां वक्त्राणां समाहारः तां दशवक्त्रीं दशमुखानीत्यर्थः प्रहरति विध्यति। मालिनीवृत्तम्।

अपि च। सुरचक्रवर्त्तिन्! इह हि कामिनामनुरागप-
रिग्रहो(ध)गुणलवलाभलोभेन दोषप्रमोषमावहति तथा हि।

रामक्षिप्तान् प्रतीच्छत्ययमिह विशिखान् वक्षसा राक्षसेन्द्रः
सीताहस्ताम्बुजाग्रार्पितमलयभवस्थासकान्मन्मथान्धः।
सोल्लासं हारवल्लीकवचपरिचिते ते तु तस्मिन् विशन्तः
स्वेदाम्भःप्रारभन्ते पुलकमुपनयन्त्युन्नतिं चार्पयन्ति ॥२८॥(न)

आकाशे कर्णं दत्त्वा। किमाह (प) सविचिकित्साक्रोधं
रामः? न केवलममुना समबाणवर्षेण रावणप्रमार आर-

---

(ध) अनुरागस्य परिग्रहः ग्रहणम् अनुरागितेतिभावः। गुणल-
वस्य गुणलेशस्य स्वल्पस्यापि गुणस्येत्यर्थः लाभे यः लोभः लालसा तेन
दोषाणां प्रमोषम् अपहरणम् आवहति करोति कामिनः सदोषमपि
वस्तु अनुरागभाजनस्य, एवं बहु मन्यन्ते इति भावः

(न) रामक्षिप्तानिति। इह संग्रामे अयं मन्मथान्धः कामान्धः
राक्षसेन्द्रः वक्षसा रामेण क्षिप्तान् प्रहितान् सीताया हस्त एव अम्बुजं
पद्मं तस्य अग्रेण अर्पितं न्यस्तं मलयभवं चन्दनमित्यर्थः स्थासकं
चूर्णविशेषः येषु तान् विशिखान् शरान् प्रतीच्छति गृह्णाति सीतानु-
रागितया तत्प्रियवस्तूनामपि प्रियत्वात् सादरग्रहणमितिभावः।
ते तु शराः हारवल्ली हारावली सा एव कवचं वर्म तेन परिचिते
अभ्यस्ते हारालङ्कारे इत्यर्थः तस्मिन् वक्षसि सोल्लासं सानन्दं विशन्तः
प्रविशन्तः सन्तः स्वेदाम्भः स्वेदजलं प्रारभन्ते निःसारयन्ति पुलकम्
रोमाञ्चम् उपनयन्ति जनयन्ति, उन्नतिम् औद्धत्यं सौभाग्यगर्वमित्यर्थः
अर्पयन्ति ददति च। रामशराणां सीताहस्तानुलिप्त गन्धचूर्णतया
रावणहृदि तत्स्पर्शात् स्वेदरोमाञ्चौ सात्त्विकभावौ सौभाग्यगर्वश्च
समुदित इति भावः। स्रग्धरावृत्तम्।

(प) सविचिकित्साक्रोधं विचिकित्सया संशयः विचिकित्सा तु संशयः

श्यते अपितु एतस्य जानकीकरतलस्पर्शकेलिसम्भावनीयगा-
त्रेषु पलितेषु रोमाञ्चकञ्चुकं यावदामोच्यते तावत् विश्वामि-
त्रोपदिष्टमन्त्रैर्दिव्यास्त्रैरमुमायोधयामि।

चारणी। सचमत्कारम्। किं उण एदं (फ) आमूलफ-
लिदप्फुलिंगजडिलजालावलीविलीणतुहिणसरणिसारणी-
पूरिज्जमाणमंदाइणीचंदभाआपहुदिणदीसत्थमंथरिदवित्था-
रो सअलकुलसेलचक्कवट्टी कुवेराधिठ्ठिदं दिसमधिव-

---

इत्यमरः क्रोधश्च ताभ्यां सहितं यथा तथा। रावणप्रमारः रावण-
विनाशः। जानकीति जानक्याः करतलस्पर्श एव केलिः तेन सम्भाव-
नीयानि आदरणीयानि गात्राणि अवयवाः येषां तादृशेषु पलितेषु शरेषु
रोमाञ्चकञ्चुकं सत्त्वगुणोद्रेकात् रोमाञ्चरूपमावरणं यावत् आमोच्यते
त्रियते, तावत् विश्वामित्रेण उपदिष्टो मन्त्रो येषां तादृशैः दिव्यास्त्रैः
अमुं रावणम् आयोधयामि।

(फ) आमूलेति। आमूलात् फलिता प्रसृता स्फुलिङ्गैः अग्नि-
कणैः लिषु स्फुलिङ्गोऽग्निकण इत्यमरः। जटिला व्याप्ता या ज्वाला-
वली शिखासमूहः तया विलीना विलयं गता गलिता इत्यर्थः याः तुहि-
नसरणीसारण्यः तुषारमयरथ्यारूपा नद्यः ताभिः पूर्यमाणानां
मन्दाकिनीचन्द्रभागाप्रभृतीनां नदीनां सार्थैः सङ्घैः मन्थरितः आर्द्री-
कृतः विस्तरः आभोगः यस्य तथाभूतः सकलानां कुलशैलानां चक्रवर्ती
अधीश्वरः कुवेरेण अधिष्ठितां दिशम् उत्तरामित्यर्थः अधिवसन्
अधितिष्ठन् हिमवान्। सन्तपनेति सन्तपनेन सन्तापेन उत्तरलानां
चलितानां शिलाजतूनां शैलेयानां गन्धौषधिविशेषाणां निस्यन्दनिर्भ-
रेण दह्यमानैः सरणैः पदैः बहुमथेन आक्रान्तितानाम् उच्चैर्नदतां
करीन्द्राणां प्रवेशेन समुच्छलताम् आलोड्यमानानां स्रोतसां सलिलैः
क्षालितेभ्यः प्रविद्रुतेभ्यः तटान्तेभ्यः निपततां प्रस्तराणां विस्तारात्

संतो हिमवंतो संतव णुत्तरलसिलाजदुणिसंदणिज्झरद्-हिज्जंतचरणचंकमणक्कंदिअकरिन्दप्पवेससमूससंतसोत्तस-लिलमट्टप्फालिदतडंतणिवतंडप्पत्थर वित्थारप्पअट्टसद्दसंदो-हभरिदगंभीरगुरुगुहाकुहरमज्झो विंझो सिमिसिमाअं-तसंततसिरिखंडमंडलीप्पब्भट्टभुअङ्गभोअभरिज्जं तत्तंबव-ण्णीसोत्तसंत्तासिदसिप्पिसंपुडमुहपलोट्टमोताहलकरंबिद-तंबण्णीपवणविच्छिण्णअंबडंबरालंकिदक्खिणमहीवलओ मलओ डाहकुविदकुंभसंभवमहामुणिगेहिणीदिण्णविव-

---

बाहुल्यात् प्रवृत्तः उद्भूतः यः शब्दसन्दोहः शब्दसमूहः तेन भरितं पूरितं गुरु महत् गुहाकुहराणां कन्दराभ्यन्तराणां मध्यं यस्य तथा-विधः विन्ध्यः विन्ध्यगिरिः । सिमेति सिमसिमायमानानां सन्तापेन तादृग्ध्वनतामित्यर्थः सन्ततानाम् अविरलानां श्रीखण्डानां चन्दनानां मण्डलीभ्यः श्रेणिभ्यः भ्रष्टा विच्युता ये भुजगाः सर्पाः तेषां भोगैः शरीरैः उत्तापितैरिति भावः भ्रियमाणा पूर्य्यमाणा या ताम्रपर्णी तन्नाम्नी नदीविशेषः तस्याः स्रोतसि प्रवाहे सन्त्रासितानां भीतानां भुजङ्गेभ्य इति भावः शुक्तीनां जलचरविशेषाणां सम्पुटमुखेभ्यः आव-रणयुगलाग्रेभ्यः पतितैः निःसृतैः मुक्ताफलैः करम्बितेन खचितेन युक्तेने-त्यर्थः ताम्रपर्णीपवनेन तदाख्यनदीवातेन विच्छिन्नः भग्नः यः भित-म्बडम्बरः मध्यप्रदेशविस्तारः तेन अलङ्कृतं शोभितं दक्षिणं महीवलयं पृथिवीभागः येन तथाभूतः मलयः तदाख्यो गिरिः । दाहेति दाहेन अग्निसन्तापेन कुपिता या कुम्भसम्भवस्य महामुनेरगस्त्यस्य गेहिनी पत्नी लोपामुद्रा इत्यर्थः तया दत्तानां विषमदृष्टीनां कटाक्षाणाम् विक्षेपसमूहेन सङ्कुचितानां कुण्ठितानां शापभयादिति भावः । चटु-लानां चपलानां जालुकानां रत्नाकराभ्यन्तराणां किरातभेदानां उत्पीडात्

पुरन्दरः। ध्रुवं प्रसन्नमाग्नेयमामन्त्रितं (ब) पौलस्त्यदमनविधावस्ततन्द्रेण रामचन्द्रेण। यतः।

रामनर्त्तितमहाधनुर्मुखात्
यत्र यत्र निपतन्ति सायकाः।
तत्र तत्र जलधेर्जलोच्चये
कार्य्यतो विरचयन्ति वाडवम् ॥२९॥ (भ)

अपिच।

सद्यः कल्पद्रुमाणां मणिकुसुमवतां वर्त्तते दावदाहः (म)
सान्द्रस्युत्तप्तधारास्रुतिकृतकरकावृष्टयस्तोयवाहाः।
रामस्योच्चण्डचापप्रणिहितहुतभुङ्मार्गणार्चिःप्रपञ्चै-
स्तूर्णोत्तीर्णः समुद्रं सरति च विसरो मेरुहेमद्रवस्य ॥३०॥

---

(ब) आमन्त्रितम् आहूतं पौलस्त्यस्य रावणस्य दमनविधौ शासनव्यापारे। अस्ततन्द्रेण अनलसेन सोत्साहेनेति यावत्।

(भ) रामेति। रामेण नर्त्तितम् आस्फालितं यत् महाधनुः, तस्य मुखात् सायकाः शराः यत्र यत्र निपतन्ति, तत्र तत्र जलधेः समुद्रस्य जलोच्चये जलराशौ कार्य्यतः दहनव्यापाररूपकार्य्यवशात् वाडवं विरचयन्ति प्रथयन्ति वाडवानलवत् समुद्रजलानि दहन्तीति भावः। रथोद्धतावृत्तम्।

(म) सद्य इति। रामस्य उच्चण्डात् प्रचण्डात् चापात् धनुषः प्रणिहितस्य प्रक्षिप्तस्य हुतभुङ्मार्गणस्य आग्नेयशरस्य अर्च्चिषां ज्वालानां प्रपञ्चैः विस्तरैः मणिकुसुमवतां रत्नपुष्पशालिनां कल्पद्रुमाणां देवतरुविशेषाणां सद्यः दावदाहः दवानलसन्तापः वर्त्तते। तोयवाहाः मेघाः उत्तप्तानां धाराणां स्रुत्या स्रावेण कृता जनिता करकावृष्टिः शिलावृष्टिर्यैस्तादृशाः सन्तः अत्युत्तापकाश्च एव करका-

चारणः । आकाशे कर्णं दत्त्वा । किमाह रावणः ? कथं दिव्यास्त्रसमरसमारम्भी रामस्तदहमपि समारभे । यथा ।

आग्नेयास्त्रं हृदयदवथुर्वारुणं हन्त शस्त्रं
धारावाष्पं पवनशरतां यान्ति च श्वासदण्डाः ।
तज्जानक्या किमिव न कृतं रक्षसां स्वामिनो मे
दिव्यैरस्त्रैर्यदयमपरं तापसः कर्त्तुकामः ॥ २१ ॥ (य)

चारणौ । (र) आमूलमुद्दलितपारिजाततरुराजयो उत्कम्पि-तानल्पकल्पपादपा विस्फुलिङ्गसंतानसंततसंताना विमहि-

---

सृष्टिप्रसिद्धेरिति भावः । क्रन्दन्ति रुदन्तीवेति प्रतीयमानोत्प्रेक्षा अचेतनानां जलदानां रोदनासम्भवादिति ध्येयम् । विस्फूर्जतीति चार्थः मेरोः सुमेरुपर्वतस्य हेम्नां द्रवस्य विसरः प्रसरः विस्तार इत्यर्थः अजस्रं तूर्णं यथा तथा उत्तोर्य्यः अनु चरति व्याप्नोतीत्यर्थः । स्रग्धरावृत्तम् ।

(य) आग्नेयास्त्रमिति । हन्त खेदे । हृदयदवथुः हृदयस्य सन्तापः आग्नेयास्त्रं धारावाष्पम् अनवरताश्रुधारा वारुणं शस्त्रं श्वासदण्डाः दण्डवदायता इत्यर्थः निश्वासाः पवनशरतां वायव्यास्त्रत्वं यान्ति च । जानक्या रक्षसां स्वामिनो मे मम तत् किमिव न कृतं सर्वमेव आग्नेयास्त्रादिकार्य्यं कृतमित्यर्थः अननुरागादिति भावः अयं तापसो रामः दिव्यैरस्त्रैः यत् अपरं कर्त्तुकामः चिकीर्षुरित्यर्थः । जानकीनिमित्तं सर्वं एव आग्नेयास्त्रादिप्रहारसहस्रः मनस्तापादिर्मया सोढः तापसेनान्यत् किं कर्त्तुं शक्यते इति तात्पर्य्यार्थः ।

(र) आमूलेति । आमूलं मूलपर्य्यन्तम् उद्दलिता उत्पाटिताः भग्ना वा पारिजाततरुराजाः यैः तथोक्ताः । उत्कम्पितेति उत्कम्पिताश्चालिता अनल्पा बहवः कल्पपादपाः कल्पतरवः यैः तथा-

द्दामंदमंदारद्दुमा णिद्दलिदणंदणवणहरिअंदणा इमे आक्ख-
लिदसत्तभुअणावसाणा पवमाणा पवट्टंति (क)

पुरन्दरः । (ख)नूनमात्मनि कार्शानवमस्त्रमसमर्थं सम-
र्थयता त्रिभुवनाभोगभङ्गनिमित्तमग्निमारुतसंयोग इति
सामीरणमास्त्रितं राक्षसराजेन तथाहि ।

दिव्यानां यानपङ्क्तीर्दिशि दिशि विकिरन् भग्नचिह्नोरुदण्डं
पद्मानां स्वर्द्रुमाणाममरमधुलिहां रुग्णशाखाप्रकाण्डः ।
भञ्जन् बर्हावतंसं हरसुतशिखिनः पिच्छविच्छेदनाभि- (ग)
र्वायुर्वात्येष चण्डो जलधितटरुहां मर्दनो विद्रुमाणाम् ॥३२॥

---

(क) आमूलोद्दलितपारिजाततरुराजा उत्कम्पितानल्पपादपा विच्छलितसन्तानतरुसन्ताना विमर्दितामन्दमन्दारद्रुमा निर्गलितनन्दन-वनहरिचन्दना इमे आस्खलितसप्तभुवनावसानाः पवमानाः प्रवर्त्तन्ते ।

---

विधाः विच्छलितेति । विच्छलिताः भञ्जिताः सन्तानतरूणां देवतरुविशे-षाणां सन्तानाः सङ्घाः यैः तादृशाः । विमर्दितेति विमर्दिता अमन्दा उत्कृष्टाः मन्दारद्रुमा यैः तथाविधाः । निर्गलितेति । निर्गलिताः पतिताः नन्दनवनस्य हरिचन्दनाः चन्दनविशेषा येभ्यः तद्रूपाः । आ-स्खलितेति आस्खलितं वितर्कितं सप्तानां भुवनानाम् अवसानं ध्वंसः येभ्यः तथोक्ताः पवमानाः वायवः प्रवर्त्तन्ते वहन्ति ।

(ख) नूनं मन्ये निश्चितं वा । कार्शानवं कृशानोरिदं कृशानु-दैवतं वा आग्नेयमित्यर्थः असमर्थम् अक्षमं सोढुमिति शेषः । समर्थयता सम्भावयता त्रिभुवनस्य आभोगभङ्गनिमित्तं विस्तारविध्वंसनार्थं सर्व-संहारार्थमिति यावत् अग्निमारुतयोः संयोगः इति विविच्येति भावः सामीरणं वायव्यम् आस्त्रितं प्रयुक्तम् ।

(ग) दिव्यानादिति । दिव्यानां खेचराणां यानपङ्क्तीः विमा-

भारती । किं उण(ग)मसिणवट्टिदरायवट्टसिणिद्धमुद्ध-सामलच्छाएण वि च्छाइज्जइ गअणङ्गणं दुद्दिणेण आवण्णि-ज्जइ कलकलरवुक्कंठाविसंठुलकंठाहिं तंडवाडंबरो सिहं-

---

मानि इत्यर्थः भग्नं छिन्नं वल्कलं येषां तादृशाः तरवः महान्तः वृक्षाः स्तम्बवटयः यस्मिन् तद् यथा तथा दिशि दिशि विकिरन् विक्षिपन् अमरा मरणरहिता मधुलिहः भ्रमराः येषु तादृशानां तदीयमधुनः अमृतसदृशत्वेन तेषां दिव्यत्वादिति भावः । पञ्चानां सङ्ख्यानां देवतरूणां मन्दारपारिजातसन्तानकल्पतरुहरिचन्दनानामित्यर्थः रुग्णाः भग्नाः शाखाः प्रकाण्डाः स्कन्धाश्च येन तथाभूतः शाखाः प्रकाण्डांश्च रुजन्नित्यर्थः । पिच्छानां विच्छेदनाभिः छेदनैः हरसुतस्य कार्त्तिके-यस्य यः शिखी मयूरः तस्य बर्हावतंसं पिच्छरूपं भूषणं भञ्जन् खण्ड-यन् तथा जलधितटरुहां घट्टतटजातानां सिद्रुमाणां प्रवालानां द्रुमविशेषाणां वा मर्दनः दलनः एषः प्रचण्डो वायुः वाति वहति । स्रग्धरावृत्तम् ।

(ग) मसृणेति । मसृणं कोमलं वर्त्तितं परिष्कृतं यत् राज-पट्टं नीलवर्णमणिविशेषः तद्वत् स्निग्धं मुग्धं सुन्दरञ्च तेन श्यामला छाया कान्तिर्यस्य तथाभूतेन दुर्द्दिनेन मेघावरणेनेति यावत् मेघाच्छ-न्नेऽह्नि दुर्द्दिनमित्यमरः । अपि गगनाङ्गणम् अन्तरीक्षाभोगः छाद्यते आव्रियते । आवर्ज्यते आप्लुयते कर्त्तुमारभ्यते इति यावत् । कलेति कलः मधुरास्फुटः यः कलरवः केकारव इत्यर्थः तस्मिन् या उत्कण्ठा औत्सुक्यं तया विसंष्ठुलः व्यग्रः कण्ठो यासां तादृशीभिः शिखण्डिनां मयूराणां मण्डलीभिः श्रेणिभिः ताण्डवानां नृत्यानाम् आडम्बरः उद्योगः । निर्विघ्नायते नीरन्ध्रायते न विच्छिद्यते इत्यर्थः । सुधा-वेति सुधाकरखण्डा इव पाण्डुराः शुभ्राः ताभिः । मण्डितेति म-ण्डिता शोभिता आच्छादिता वा ब्रह्माण्डकन्दरा त्रिभुवनान्तरं याभिः

डिमंडलीहिं णिबिडिज्जइ मिणालदंडपंडुराहिं मंडिदव-
ह्मंडकंदराहिं जलधाराधोरणीहिं गज्जिज्जइ णिविदुल्ला-
सिअवंसकरिंदकरीरिसएहिं फारप्फालिदगंभीरभेरी
भीसणेहिं जलहरेहिं (७)।

पुरन्दरः। मन्ये पवनोद्दीपितदहनाश्रमशान्तये जलध-
रास्त्रमिदमाहृतं रामभद्रेण तथाहि।

तैलस्निग्धान्ध्रनारीचिकुरविरचनामेचकाः शक्रचाप-
ज्योतिर्लक्ष्माण एते निचुलपरिचिताघातकाचान्तवाराः।
न्यस्यन्तः केतकीनां मुकुलपरिकरं केकिनां नृत्यकारा (घ)
स्तारावर्तीर्नमन्तः कमलकवलनाः पूरयन्त्यम्बुवाहाः॥ ३१॥

---

(७) किं पुनर्मेघच्छायर्सितराजपट्टस्निग्धश्यामलच्छायेनापि
छाद्यते गगनाङ्गणं दुर्दिनेन। आवर्त्यते कलकलरवोत्कण्ठाविसंष्ठुल-
कण्ठाभिस्ताण्डवाडम्बरः शिखण्डिमण्डलीभिः। निबिडायते मृणा-
लदण्डपाण्डुराभिर्मण्डितब्रह्माण्डकन्दराभिर्जलधाराधोरणीभिः। ग-
र्ज्यते निबिडोल्लासितवंशकरीरैः करीन्द्रसदृशैः स्फारोत्स्फारितगम्भी-
रभेरीभीषणैर्जलधरैः।

---

तादृशीभिः जलधाराणां धोरणीभिः परम्पराभिः। निबिडेति नि-
विडं घनं यथा यथा तथा उल्लासिता उज्ज्विताः वंशानां करीराः
अङ्कुराः यैः तादृशैः करीन्द्रसदृशैः गजराजतुल्यैः। स्फारेति स्फारं
प्रकटं यथा तथा उत्स्फारिताः ताडिताः या गम्भीरभेर्य्यः तद्वत्
भीषणाः प्रचण्डध्वनय इत्यर्थः तैः।

(घ) तैलेति। तैलेन स्निग्धा अन्ध्रनारीणां अन्ध्रदेशीयकामिनीनां
ये चिकुराः कुन्तलाः चिकुरः कुन्तलो बालः कचः केशः शिरोरुह इत्य-

ततश्च । रोदसीकन्दराभोगमानयष्टिसमक्रमैः ।

क्रियतेऽर्णवमग्नेव धाराम्भोभिर्जगत्त्रयी ॥२४॥(ख)

भारती । पेक्खदु देवो(ङ) अण्णोण्णजुज्झंतजलहत्थिसत्था कल्लोलकेलिणिलुक्कंतगिरिपक्खिणो लक्ख् खिज्जंततिअसिंदसिंधुरबंधवा समुल्लसंतपौजससेसा दीसंतदेवद्दुमपादवालवाला अवलोइज्जंतणाराअणसुअरससुध्वरिदधरिणिवेढणिलुक्कणट्ठाणा वित्थरंतकोत्थुहसगोत्तमणिकरंबिदपा-

---

भरः । तेषां विरचना विन्यासा इव मेचकाः श्यामलाः शक्रचापस्य इन्द्रधनुषः ज्योतिः वर्ष्म येषां तादृशाः शक्रधनुषालङ्कृता इत्यर्थः निपुणैः स्वचेतनैः परिचिताः मेघोदये एव तेषामुद्भवादिति भावः चातकैः पक्षिभेदैः आचान्तं पीतं पयः जलं येषां तथोक्ताः चातकीनां मुकुलपरिकरं मुकुलनिचयं व्यस्यन्तः अर्पयन्तः, केकिनां मयूराणां नृत्य-कारा: नर्तनकारिणः कमलवनघ्नाः पद्मविध्वंसिनः अम्बुवाहाः मेघाः तारापथेषु अन्तरीक्षेषु उद्भ्रमन्तः उद्यन्तः सन्तः पूरयन्ति आच्छादयन्ति जगन्तीति शेषः । स्रग्धरावृत्तम् ।

(ख) रोदसीति । रोदस्योः द्यावाभूम्योः यः कन्दराभोगः अभ्य-न्तरविस्तारः तस्य मानयष्टेः परिमाणदण्डस्य समः क्रमः अवयव येषां तादृशैः दिवो भूमेश्च कियदन्तरम् इति दिदृक्षयेव मानयष्टिरूपधारि-भिरिति भावः धाराम्भोभिः जलधाराभिरित्यर्थः जगतां त्रयी त्रिभु-वनम् अर्णवमग्नेव समुद्रपूरितेव क्रियते ।

(ङ) अन्योन्येति । अन्योन्यं परस्परं युध्यमानाः जलहस्तिनां सार्थाः सङ्घाः येषु तथोक्ताः । कल्लोलकेलये तरङ्गविहाराय निरुत्-क्रान्ताः उड्डीनाः गिरिपक्षिणः सामुद्रिकपर्वतवासिपतङ्गा येभ्यः ता-दृशाः । लक्ष्यमाणाः दृश्यमानाः त्रिदशेन्द्रस्य देवराजस्य सिन्धुरबान्धवाः

आलजंबाला उच्छलंतलच्छीबालविलासुद्देसा सप्पपंचपं-
चजणजणणीसंखिणीसणाहा ससंभमभमंतकच्छवडिंभ-
गब्भा पअडिज्जंतदामोदरणिद्दाविमद्दसअणिज्जसेसरमणि-
ज्जा माहवमहातिमिगोत्तगिलिज्जंततिमिंगिला णिब्भरं
भरंति भुअणाइं इमे समुद्दा (८) ।

---

(८) प्रेक्ष्यतां देवः । अन्योन्ययुध्यमानजलहस्तिसार्थाः कल्लोल-
केलिभिरतिक्रान्तगिरिपक्षिणो लक्ष्यमाणनिद्रेन्द्रसिन्धुरबान्धवाः
समुल्लसत्पीयूषघोषा दृश्यमानदेवद्रुमपादपालवाला अवलोक्यमाननाराय-
णसूकरसमुद्धृतधरणिपृष्ठनिलयनस्थाना विस्तार्यमाणकौस्तुभसगोत्र-
मणिकरम्बितपातालजम्बाला उच्छलल्लक्ष्मीबालविलासोद्देशा सप्रपञ्चप-
ञ्चजनजननीशङ्खिनीसनाथाः ससंभ्रमभ्रमत् लघुकच्छपडिम्भगर्भाः

---

उभ्रभ्रमः सहचरा येषु तथाविधाः । समुल्लसन् प्रकाशतां गच्छन्
पीयूषस्य अमृतस्य घोषः येषु तथाविधाः । दृश्यमानाः देवपादपानां
देवतरूणाम् आलवालाः जलवेष्टनानि येषु तादृशाः । अवलोक्यमानं
दृश्यमानं नारायणसूकरेण आदिवराहेण समुद्धृतस्य धरणीपृष्ठस्य भूत-
लस्य निलयनस्थानं निमज्जनप्रदेशः येषु तथाविधाः । विस्तार्यमाणाः
प्रकाशमानाः कौस्तुभसगोत्रैः कौस्तुभरत्नसजातीयैः मणिभिः करम्बिताः
पूरिताः पातालजम्बालाः रसातलपङ्का येषु तथाविधाः । उच्छलन्
प्रकाशतां गच्छन् लक्ष्म्याः कमलायाः बालविलासस्य शैशवक्रीडनस्य
उद्देशः स्थानं येषु तथोक्ताः सप्रपञ्चा सवंशा पञ्चजनस्य तदाख्यस्य
महासुरस्य जननी माता या शङ्खिनी तया सनाथाः सहिताः । सस-
म्भ्रमम् आकुलं यथा तथा भ्रमन्तः लघुकच्छपस्य कच्छपपतिनः पा-
तालवासिनो नारायणस्य डिम्भगर्भाः शावकसङ्घा येषु तद्रूपाः ।

पुरन्दरः। नूनमात्मनि वारुणास्त्रमप्यतन्त्रं (ख) मन्यमानेन त्रिभुवनाभोगगर्भमहाकन्दरप्लावनाय जलं जलसंपृक्तं महाजलाय कल्पते इत्यौदन्वतमस्त्रमाहूतं पौलस्त्येन तथाहि।

कुर्वन्तो वाडवाग्नेर्द्रुतकरिमकरग्रासमर्चिःप्रचारं (क)
दैत्यस्त्रीमुक्तहाहारवचकितवलच्छुक्तिनिर्मुक्तमुक्ताः।
पश्चात्क्षेपेण चण्डोड्डमरितपयसः पक्षिणां क्ष्माधराणां
त्रीन् लोकान् प्लावयन्ति प्रसभविरचितावर्त्तमुद्राः समुद्राः ॥ ३५

---

प्रकटायमानदामोदरनिद्राविमर्दशयनीयशेषरमणीया माधवमहातिमिगोलगिल्यमानतिमिङ्गिला निर्भरं भरन्ति भुवनानीमे समुद्राः।

---

प्रकटायमानः प्रकाशमानः दामोदरस्य विष्णोर्निद्राविमर्दस्य निद्रार्थं देहपातनस्य शयनीयं शय्याभूत इत्यर्थः यः शेषः अनन्तनागः तेन रमणीयाः सुदर्शनाः। माधवस्य महातिमेः मत्स्यरूपिणो नारायणस्येत्यर्थः गोलैः कुक्षैः वंशीयैरित्यर्थः गिल्यमानाः तिमिङ्गिलाः जलचरविशेषा येषां तथाभूता इमे समुद्राः भुवनानि जगन्ति निर्भरम् अत्यर्थं भरन्ति व्याप्नुवन्ति।

(ख) अतन्त्रं सोढुमक्षमम्। त्रिभुवनाभोगस्य गर्भं उदरमेव महाकन्दरं महागुहा तस्य प्लावनाय युगपत् सर्वसंहारायेति भावः। जलं वारुणास्त्रसम्भूतमिति भावः जलेन सामुद्रेण सम्पृक्तं संयुक्तं महाजलाय जलप्लावनाय इत्यर्थः कल्पते प्रभवति इति विविच्य औदन्वतम् उदन्वतः समुद्रस्य इदम् तद्दैवतं वा अस्त्रं सामुद्रास्त्रमित्यर्थः।

(क) कुर्वन्न इति। द्रुतः त्वरः करिणां जलहस्तिनां मकराणाञ्च ग्रासो यस्य तादृशं वाडवाग्नेः अर्चिषां ज्वालानां प्रचारं प्रसारं

पुरन्दरः। मन्ये (ग) त्रिभुवनपरित्रावनपयः पाननिमित्तमगस्त्योपदिष्टमगस्त्यास्त्रं धनुषि संहितं रघुकुलराजपुत्रेण तथाहि।

लोपामुद्रानिबद्धोपचरणविधयो धौतवल्कोत्तरीया
रत्नानामाधिराज्ये विरचितरतयो ब्रह्मसूत्राञ्चितांसाः
एते निर्यान्त्यगस्त्याचलचुलुकपुराचान्तसप्ताब्धिवारो (घ)
रुद्राक्षाक्षावलीभिर्द्विगुणवलयिता बिभ्रतः कर्णपाली॥२६॥

---

प्रवीणाः विचक्षणाः पीतप्रस्रवणाः इत्यर्थः निर्वाणनगरस्य मोक्षपुर्याः राजमार्गाः राजपथाः मोक्षधर्मोपदेशिन इति भावः। धर्मद्रुमस्य धर्मतरोः महान्तः आरामाः उपवनानि धर्मक्षेत्रभूता इत्यर्थः क्रोधपादपानां कोपतरूणां प्रचारस्य विस्तारस्य परशवः छेदनास्त्राणि र्जितक्रोधा इत्यर्थः निविडिता निबिडं नियद्धा जटाजूटस्य जटाकलापस्य बन्धः यैः तादृशाः निबद्धजटाकलापा इत्यर्थः। कमण्डलुभिः जलपात्रविशेषैः अलंकृता अलङ्कृता हस्ता येषां तादृशाः कमण्डलुपाणय इत्यर्थः प्रकटितं प्रकाशितं योगपट्टं योगसाधनोपकरणविशेषः यैः तथाभूताः योगपट्टधारिण इत्यर्थः ब्रह्मसूत्रेण यज्ञोपवीतेन पवित्रिताः विशोभिताः स्कन्धमध्याः येषां तथोक्ताः यज्ञोपवीतवन्तः इत्यर्थः अमी संख्या बहव इत्यर्थः।

(ग) त्रिभुवनेति। त्रिभुवनस्य परित्रावनस्य व्यापनसमर्थस्य इत्यर्थः पयसः सलिलस्य पाननिमित्तं पानार्थम् अगस्त्येनोपदिष्टं शिक्षितम् अगस्त्यास्त्रम् अगस्त्यदैवतम् अस्त्रम्।

(घ) लोपेति। लोपामुद्रया स्वपत्न्या निबद्धः कृतः उपचरणविधिः सेवाविधिर्येषां तादृशाः लोपामुद्रया परिसेविता इत्यर्थः धौतं क्षालितं वल्कोत्तरीयं येषां तादृशाः धौतवल्कलोत्तरीयवन्त इत्यर्थः

चारणः। (ङ)सविस्मयम्। नमुचिमथनमन्यरितमन्यो ! शतमन्यो ! दिव्येनास्त्रजातेन दिव्यमस्त्रजातं विजित्य तत् किमपि कृतं रक्षोलक्ष्मीविरामेण रामेण यदनिशं विमृश-तोऽपि मे न चेतः प्रत्येति न वाच उच्चरन्ति। निरङ्कुशा दशाननस्याशा। विभाव्य सावष्टम्भम्। यद्देदं निवेद्यते।

विश्वाशादानदत्ताचरमुखरमुखं चन्द्रहासोपपाद्य-
च्छेदक्रीडारसज्ञं तदिदमनवधिक्रोधहुङ्कारधारि।
सार्द्धं शुद्धान्तनारीनयनजपयसासूयितं देवदारै- (च)
राकण्ठाद्दाशकण्ठं भुवि पतति शिरो रामभल्लाग्रलूनम्॥३७॥

---

रत्नानां आधिराज्ये साम्राज्ये विरचिता कृता रतिः वासना यैः तादृशाः रत्नाधिराज्यार्थिन इत्यर्थः अम्बुकूलेषु अञ्चिताः पूजिताः अंशाः स्कन्धा येषां तथाभूताः रङ्गाणाम् अचाववीभिः अपमान-नाभिः द्विगुणं यथा तथा वलयिताः वेष्टिताः कर्णपाशैः कर्णपाशान् बिभ्रतः दधानाः एते अगस्त्याः चलेन चञ्चलेन चुलुकपुटेन गण्डूषो-दरेण आचान्तानि पीतानि सप्तानाम् अब्धीनां वारि जलानि यैः तथाभूताः पीतसप्तसागरसलिला इत्यर्थः सन्तः निर्यान्ति निर्गच्छन्ति। आग्धरावृत्तम्।

(ङ) नमुचिमथन ! नमुचिर्नामासुरविशेषः तस्य मथनः निसूदनः तत्सम्बुद्धौ। मन्यरितमन्यो ! मन्यरितः मन्दः मन्युः क्रोधः शोको वा यस्य तत्सम्बुद्धौ हे क्रोधशोकविवर्जित ! दिव्यत्वादितिभावः। शत-मन्यो ! शतं मन्यवः क्रतवः यस्य तादृशः तत्सम्बुद्धौ हे शताश्वमेध-याजिन्नित्यर्थः। रक्षोलक्ष्मीविरामेण राक्षसश्रीध्वंसिना इत्यर्थः विमृ-शतः विचारयतः प्रत्येति विश्वसिति। निरङ्कुशा अव्याहता इत्यर्थः। सावष्टम्भं सधैर्यम्।

(च) विश्वेति। विश्वेषां जगतां आशादाने दत्तैः विप्रशैः

पुरन्दरः । हंहो ! (झ) ऐन्दुमतेय ! अतिदुष्करं कृतं रामभद्रेण यतः ।

शम्भोरग्रे निजकरचरचन्द्रहासप्रसूतां
लङ्कानाथः किमपि सुचिरोविंस्मरन्नेष कालात्
धाराज्योतिस्तरलितशिखैः साम्प्रतं रामबाणैः
कण्ठच्छेदव्यतिकरकृजं लम्भितः स्मारितश्च ॥ १८ ॥(ज)

---

अधरैः शब्दरचित सुखानि यस्य तादृशं चन्द्रहासेन तदाख्येन असिना उपपाद्या निष्पाद्या याः छेदक्रीडाः मस्तकच्छेदनरूपाणि क्रीडनानि तासां रसं आस्वादाभिज्ञं अनवधिना अमेयेन क्रोधेन हुङ्कारं धारयतीति तथोक्तं गृहीतनारीणां हठहृतानां निर्जितान्तःपुर-नारीणां नयनजपवशा अम्बुधा सार्द्धं देवदारैः देवाङ्गनाभिः बन्दी-भूताभिरितिभावः असूचितम् अपूर्वया निरीक्षितमिति यावत् । आकण्ठात् रामभद्रस्य अस्त्रविशेषार्पणेन नूनं रावणकण्ठं रावणीयं शिरः भुवि पतति । स्रग्धरावृत्तम् ।

(झ) ऐन्दुमतेय ! इन्दुमती अजराजपत्नी तस्या अपत्यं पुमान् ऐन्दुमतेयः दशरथः तत्सम्बुद्धौ ।

(ज) शम्भोरिति । सुचिरोः अतिदीर्घात् कालात् अतिक्रान्त-बहुकालव्यापारादिति यावत् हेतोः शम्भोः हरस्य अग्रे समक्षं तदाराधनार्थमिति यावत् निजकरे चरन् तिष्ठन् चन्द्रहासः तेन प्रसूतां तच्छेदनसमुद्भूतामित्यर्थः कण्ठच्छेदानां व्यतिकरेण परम्परया दत्तां पीडां किमपि अचिन्त्यप्रकारं यथा तथा तादृशव्यापारस्य अविस्मरणीयत्वादिति भावः । विस्मरन् एषः लङ्कानाथः दशकण्ठः धाराज्योतिषा तरलिताः चञ्चलिताः शिखाः अग्राणि येषां तादृशैः रामबाणैः साम्प्रतं लम्भितः प्रापितः स्मारितश्च तां पीडामिति शेषः । मन्दाक्रान्तावृत्तम् ।

दशरथः । शौर्य्यगाम्भीर्य्ये त्रिभुवनातिशायिनी राक्षसराजस्य यदित्थं(झ)गतेऽपि न चलितं प्राणाहङ्कारेण तथाहि ।

एतन्नूनं दशमुखशिरः स्रंसते कण्ठपीठा-
च्चक्षुर्धत्ते धनुषि समरे चैतदुग्राट्टहासम् ।
एतद्रामं प्रति च कुरुते धिक्शतं क्रोधवाचा-
मेतल्लङ्कामभि च भवति स्त्रीजनाश्वासनाय ॥३८॥(ञ)

चारणी । विहस्य । ता अज्जप्पहुदि दसाणणं णवाणणं(ट) वाहरिस्सामो (२) ।

चारणः । प्रिये मञ्जुवादिनि ! जानाम्यथैव निरान-

---

(२) तदद्यप्रभृति दशाननं नवाननं व्याहरिष्यामः ।

---

(झ) इत्थं गतेऽपि एतमवस्थायामपि प्राणा पूर्ववत् ।

(ञ) एतदिति एतत् दशमुखस्य रावणस्य शिरः नूनं छिन्नं सत् कण्ठपीठात् स्रंसते पतति । एतत् उग्रः अट्टहासः यस्मिन् तादृशं शिरः समरे धनुषि चक्षुः धत्ते । एतत् शिरः रामं प्रति क्रोधवाचां धिक् शतं कुरुते च । एतत् शिरः स्त्रीजनानां हतभर्तृकाणामितिभावः आश्वासनाय लङ्कामभि लङ्काभिमुखमित्यर्थः भवति च । मन्दाक्रान्तावृत्तम् ।

(ट) नवाननं छिन्नैकमुखत्वादितिभावः । व्याहरिष्यामः कथयिष्यामः । मञ्जुवादिनि ! मधुरभाषिणि !। निराननं निर्मस्तकं सर्वेषामेव छेत्स्यमानत्वादितिभावः अभिधास्यसि कथयिष्यसि । ओङ्कारः प्रणवः रावणस्य शिरोमण्डलस्य छेद एव विद्या तस्याः यथा विद्यायाः आद्यः प्रणवः तथैतत् एकशिरश्छेदनं सर्वशिरश्छेदनात् प्रथम इति भावः ।

नमप्यभिधास्यसि नन्वयमीश्वरो रावणशिरोमण्डलच्छेद-
विद्यायाः ।

चित्ररथः । प्रतिज्ञगृहीता (ठ) प्रतिभोदयिनी दिव्यवाक्
बद्धो वाससि ग्रन्थिः ।

चारणः । कर्णं दत्त्वा आकाशे । किमाह रामभद्रः ?। रेरे
राक्षसीपुत्र !

यच्छीर्षं चरणाब्जयोः प्रथमतस्त्यक्तप्रणामक्रियं
प्रेमार्द्रेण सविभ्रमेण च पुरा येनेक्षिता जानकी ।
लूनं ते तदिदं च राक्षसशिरो जातं च शान्तं मनः
शेषच्छेदविधिस्तु सम्प्रति परं स्वर्बन्दिमोक्षाय मे ॥४०॥(ड)

पुनः कर्णं दत्त्वा आकाशे । किमाह रावणः ?। रे रे क्षत्रि-

---

(ठ) प्रतिज्ञगृहीता चाभिनिवेशादरं श्रुतेतिभावः प्रतिभोदयिनी प्रतिभा स्फुरन्ती मतिः तस्या उदयिनी उदयवतीत्यर्थः दिव्या वाक् चारणवाणीत्यर्थः । वाससि वस्त्रे ग्रन्थिः बद्धः दिव्यवाचः सत्यार्थमितिभावः ।

(ड) यदिति । यत् शिरः प्रथमतः पूर्वं गौर्याः पार्वत्याः चरणाब्जयोः पादपद्मयोः त्यक्ता प्रणामक्रिया येन तादृशम् । पुरा प्रेमार्द्रेण सविभ्रमेण च सविलासेन च येन शिरसा जानकी ईक्षिता दृष्टा, हे राक्षस ! तत् इदं शिरः लूनं छिन्नम् अभूदिति शेषः । मनश्च शान्तं जातं ममेति शेषः सम्प्रति मे मम इति कर्त्तरि षष्ठी । शेषाणां नवानां शिरसां छेदविधिस्तु परं केवलं स्वर्बन्दिनां बन्दीकृतानां सुराङ्गनानां मोक्षाय मोचनाय भविष्यतीति शेषः । शार्दूलविक्रीडितं वृत्तम् ।

यीपुत्र ! (ढ) सुलभविभ्रमचर्मचक्षुरसि तदवलोकय वात-मदन लूनं शिरः ।

दशरथः । विलक्ष्य । सप्रणामम् । सकलभूर्भुवःस्वस्त्रयैक-वीर ! (ण) शुनासीर ! मायाविनिर्मितलक्ष्मणशिरोदर्शनेन विलक्षः क्रुद्धो रामः शितकाण्डमण्डलीभिरकाण्डचण्डाभिरन्तरितमार्त्तण्डमण्डलाभिरखण्डोड्डमरितत्रिभुवनाभोगाभिरभिवर्षितुं प्रवृत्तः ।

चारणी । देव ! पेक्ख पेक्ख (त) निविडभिउडीकोडि-कुडिललाडवट्टाइं जरढदाढदंडघरणिठ्ठुरदट्ठ ठाहरठ्ठाइं रहसणीसरंतदीहहुंकारदारुणणासावंसवि रंतराइं

(ढ) सुलभः सहजः विभ्रमः भ्रान्तिः यस्य तादृशं चर्मचक्षुः चर्मनिर्मितं चक्षुर्यस्य तादृशः । अवलोकय पश्य ।

(ण) शुनासीरः इन्द्रः यथा शुनासीरः पुरुहूतः पुरन्दर इत्यमरः । विलक्षं लज्जासहितं यथा तथा महापुरुषस्य कोपलक्षणाद्दर्शनादिति भावः । शितकाण्डमण्डलीभिः निशितशरनिकरैः, अकाण्डचण्डाभिः सहसा प्रचण्डाभिः । अन्तरितम् आच्छादितं मार्त्तण्डमण्डलं सूर्यमण्डलं याभिः तथोक्ताभिः । अखण्डं सम्यक् उड्डमरितः व्यथितः त्रिभुवनस्य आभोगः अन्तरं याभिः तादृशीभिः ।

(त) निविडेति । निविडाभिः घनाभिः भ्रुकुटीनां भ्रूभङ्गीनां कोटिभिरग्रैः कुटिलानि ललाटपट्टानि येषां तानि । जरठैः प्रवि-णतैः कठिनैरित्यर्थः दंष्ट्रादण्डधरैः दशनदण्डप्रवरैः निष्ठुरं दृढं यथा तथा दष्टाः अधरोष्ठा येषां तथोक्तानि । रभसेन वेगेन निःसरद्भिः दीर्घैः हुङ्कारैः दारुणानि भीषणानि नासावंशविवराणाम् अन्तराणि अभ्यन्तरभागा येषां तादृशानि । रामशरधाराधोरणीभिः रामप्रहित-शरपरम्पराभिः छिन्नानि अतएव विपन्नानि मलिनानि ।

रामसरधाराधोरणीभिः चउद्दिसं झत्ति निवडंति छिण्ण-
विवण्णाइं लंकेसरसिराइं (१) ।

इत्यादि । अपि च ।

यस्यां यस्यां ककुभि रभसस्फुटदंष्ट्राकरालं
सङ्ग्रामर्त्तुर्निपतति शिरो भल्लनिर्लूनकण्ठम् ।
तस्यास्तस्यास्तरलितदृशा स्वर्गिवर्गेण नष्टं
प्राक्संस्कारक्रमभयवता योजनानां शतानि ॥४१॥(च)

वद्दावलोक्य । अहो ! मायाविता राक्षसस्य ।

रामबाणक्षतः पातो न यावदवधार्य्यते ।
क्रियते तावदुच्छेदो मूर्ध्नां रावणमायया ॥ ४२ ॥ (छ)

---

(१) देव प्रेक्षस्व प्रेक्षस्व निबिडभ्रुकुटीकोटिकुटिलललाटपट्टानि करटदंष्ट्राङ्कुरनिष्ठुरदष्टाधरोष्ठानि रभसनिस्सरद्दीर्घहुङ्काररावच्छाननविवरान्तराणि रामशरधाराधोरणीभिश्चतुर्दिशं झटिति निपतन्ति छिन्नविवर्णानि लङ्केश्वरशिरांसि ।

---

(च) यस्यामिति । रभसेन वेगेन स्फुटाभिः दंष्ट्राभिः करालं भीषणं भल्लेन निर्लूनः निःशेषेण छिन्नः कण्ठो यस्य तादृशं सङ्ग्रामभर्त्तुः रावणस्य शिरः यस्यां यस्यां ककुभि दिशि पतति, स्वर्गिवर्गेण स्वर्गवासिसमूहेन तरलिते चकिते भयादिति भावः दृशौ नेत्रे यस्य तथाभूतेन तस्याः तस्याः ककुभः दिशः प्राक्संस्कारस्य पूर्वानुभवस्य क्रमेण भयवता भयशालिना सता योजनानां शतानि नष्टं पलायितम् । मन्दाक्रान्ताछन्दः ।

(छ) रामेति । रामस्य बाणेन क्षतः पातः यावत् न अवधार्य्यते

अतश्च।

लङ्कावीरस्य मायाचयचतुरमतेर्मैथिलीनाथचाप-
व्यापारोद्भ्रान्तबाणव्रणनधृतरुषः स्वां प्रतिज्ञां विवक्षोः।
ग्रीवागर्भप्रणालीसरणिसमुदितैकैकवर्णक्रमेण (ध)
च्छिन्नोद्भिन्नैर्मुखाब्जैः कथमपि हि गिरामेति पङ्क्तिः समाप्तिम्॥ ४

कथं दृष्ट्वा आकाशे किमाह रामभद्रः ?। प्रतिकूलं हि दैवं (न) स्वारब्धमपि कार्यं विपर्यासयति तथाहि।

धनुर्ध्वंसः किल जनकजासङ्गमस्यैकहेतु-
स्तेनारब्धं दशमुखवधाडम्बरं राघवेण।

---

निपात्यते, तावत् रावणस्य मायया मूर्ध्नां शिरसाम् उद्भेदः क्रियते। छेदपातसमकालमेव पुनःशिरोयोजनमिति भावः।

(ध) लङ्केति। मायाचयेषु मायाविस्तारेषु चतुरा मतिर्यस्य तादृशस्य अतिमायिन इत्यर्थः। मैथिलीनाथस्य सीतापतेः रामस्य चापव्यापारात् धनुर्मोचनात् उद्भ्रान्ताः निर्गताः ये बाणाः शराः तैः व्रणनेन क्षतेन धृतरुषः जातक्रोधस्य स्वां निजां प्रतिज्ञां प्राणात्ययेऽपि सीताया अप्रत्यर्पणरूपामिति भावः विवक्षोः वक्तुमिच्छोः लङ्कावीरस्य रावणस्य छिन्नानि पुनरुद्भिन्नानि तैः मुखाब्जैः वदनकमलैः उपलक्षितेति शेषः गिरां वाचां पङ्क्तिः श्रेणिः ग्रीवाया गर्भेषु या प्रणाली एव सरणिः तत्र समुदितानाम् एकैकवर्णानां क्रमेण कथमपि अतिकष्टेनेत्यर्थः समाप्तिं निष्पत्तिं सम्पूर्णतामित्यर्थः एति प्राप्नोति छिन्नोत्थितानि शिरांसि युगपत् राम निर्भर्त्सनार्थं प्रवृत्तेन एकैकवर्णेन सम्पूर्णमेकवाक्यं समापयामासुरिति भावः।

(न) स्वारब्धं सम्यक् आरब्धम्। विपर्यासयति विपरीतं करोति।

छिन्नं छिन्नं पतति च शिरो जायते चान्यदन्य-
ल्लङ्काभर्तुस्तदिह करवै हा! कथं मन्दभाग्यः ॥४४॥(प)

पुनराकाशे। किमाह रावणः? हंहो! राम! (फ) किमलीकशिरःखण्डनाडम्बरेण विडम्बयसि आत्मानं न पुनः स्वेच्छाजन्मनां रावणावयवानां विच्छेदः।

पुनराकाशे किमाह रामः?। रावण! अयं मे प्रीतये भवज्जम्भकभावः (ब)। तथाहि।

यन्मूलतो दशशिरांसि भवन्ति यच्च
च्छेदेषु तानि शतशोऽथ सहस्रशश्च।
तत् साधु राक्षसपते! कथमन्यथाऽय-
मुत्सृज्यतां जनकजाहरणापवादः ॥ ४५ ॥ (भ)

---

(प) शत्रुध्वंस इति। शत्रोः रावणस्य ध्वंसः विनाशः जनक-जायाः सीतायाः लम्भने प्राप्तौ एकः अद्वितीयः हेतुः कारणं विना रावणवधं सीतां न प्राप्स्यामीति भावः तेन हेतुना राघवेण मया दशवदनस्य वधाडम्बरं वधोद्योगः आरब्धं कृतम्। लङ्काभर्तुः रावणस्य शिरः छिन्नं छिन्नं सत् पतति च, अन्यत् अन्यत् तत् शिरः जायते च, अतः इह विषये मन्दभाग्यः हतभाग्यः अहं हा इति खेदे, कथं करवै केन प्रकारेण कार्यं साधयामीत्यर्थः। मन्दाक्रान्तावृत्तम्।

(फ) अलीकानां मायारचितानामित्यर्थः शिरसां खण्डनाडम्बरेण छेदनप्रयासेन। विडम्बयसि प्रतारयसि। स्वेच्छाजन्मनां स्वेच्छया निजेच्छामात्रेणेत्यर्थः जन्म येषां तादृशानां रावणस्य अवयवानां विच्छेदः विध्वंसः।

(ब) भवतः जम्भकभावः मायावित्वं वा साम्भवम्।

पुनराकाशे किमाह रावणः ? । आः (भ) क्षत्रियखेट ! कापटिकतापस ! धनुरारोपणसमयप्रथमगृहीतां सीताम-भिलषन्नुपपतिरिव शीर्षच्छेद्योऽसि ।

पुनराकाशे । किमाह रामः ? । रेरे पिशाचापसद !
रम्भोपभोगरभसेन निरर्गलोऽसि
नो मैथिलीहरणनामसहोऽपि रामः ।
नन्वस्मि भास्करकुलप्रभवो रघुभूषा
पूषा स एव हि निजान्वयकर्मसाक्षी ॥ ४६ ॥ (य)

---

(भ) यद्दिति । मूलतः मूलादारभ्य इत्यर्थः वद इव शिरांसि छिन्नानीतिशेषः भवन्ति, यस्य छेदेषु अपि सततः अत्र संख्यायाः तानि पुनरुद्भवन्तीति शेषः, हे राक्षसपते ! तत् साधु भद्रम् । अन्यथा अयं जनकजाहरणापराधः सीताहरणदुःखमिति यावत् कथं उत्सृज्यतां त्यज्यतां मयेतिशेषः एतत् छेदने मम दुःख-शान्तिर्नास्ति पुनः पुनस्तव शिरसां छेदने एव तद्दुःखशान्तिर्भवतीति भावः । वसन्ततिलकं वृत्तम् ।

(भ) क्षत्रियखेट ! क्षत्रियापसद ! कापटिकतापस ! धूर्त-तपस्विन् ! धनुरारोपणस्य धनुर्भङ्गस्य समये प्रथमं गृहीता मयेतिशेषः ।

(य) रम्भोपभोगेति । रम्भायाः स्नुषायाः नलकूबरभार्याया उपभोगेन यः रभसः हर्षः रभसो वेगहर्षयोरित्यमरः । साहसं वा तेन निरर्गलः दुष्कार्यकरणे निर्बाध इति भावः असि भवसि । रामः मैथिल्याः हरणस्य नामसहो नो नामापि सोढुं न शक्नोतीत्यर्थः । ननु भोः ! भास्करकुलप्रभवः सूर्यवंश्यः अस्मि, स रघुभूषा हिवः आल-रीयस्य भूषा अलङ्कारभूत इत्यर्थः पूषा सूर्य एव निजान्वयस्य स्ववंशस्य कर्मणां साक्षी साक्षात् द्रष्टा हि ।

(र) तदित्थमभिदधानमपवित्रं वक्त्रमितो निर्विंशतु ते शुचिम् ।

माल्यः । विभाव्य पंचस च । किमपि (ल) निरुपमानं राघवकोदण्डपाण्डित्यमसदृशाकारश्च पौलस्त्यपुरुषकारः ।

अतः ।

छिन्नं शिरो निपतदन्तरतस्तदेत-
दादाय देव ! निजमेव दशाननेन ।
मुक्तं च वक्षसि ककुत्स्थकुलध्वजस्य
जातश्च कुड्मलितपङ्कजचारुचक्षुः ॥ ४७ ॥ (व)

दशरथः । हा वत्स रामभद्र ! कतरदिदं प्रहरणं (श) यदमुनापि मूर्च्छितोऽसि ।

---

(र) तत् तस्मात् इत्थम् एवम्प्रकारं सीतामभिलषन्नुपपतिरिव शीर्षच्छेदोऽस्तीति वचनमितिभावः अभिदधानं वदत् अतएव अपवित्रं ते वक्त्रं मुखम् इतः अस्मात् मत्तः सकाशादितियावत् । शुचिं पावित्र्यं निर्विंशतु भुनक्तु, निर्वेशो भृतिभोगयोरित्यमरः ।

(ल) निरुपमानम् अतुल्यं किमपि अनिर्वचनीयमित्यर्थः राघवस्य रामस्य कोदण्डपाण्डित्यं धनुर्विद्यावैचक्षण्यम् । असदृशाकारश्च निरुपमश्च पौलस्त्यस्य रावणस्य पुरुषकारः पराक्रमः ।

(व) छिन्नमिति । हे देव ! बाबव ! दशाननेन रावणेन छिन्नं रामेण खण्डितं अतएव निपतत् तदेतत् निजमेव स्वमेव शिरः अन्तरतः मध्यात् आदाय गृहीत्वा ककुत्स्थकुलध्वजस्य रामस्य वक्षसि मुक्तं निक्षिप्तम् कुड्मलिते मुकुलिते पङ्कजे इव चारुणी मनोज्ञे चक्षुषी यस्य तादृशः राम इति शेषः जातश्च । शिरश्छेदप्रहारेण मूर्च्छितश्च इति भावः । वसन्ततिलकं वृत्तम् ।

(श) प्रहरणम् अस्त्रम् । अहमा अस्त्रेण [illegible]मेवेतिभावः ।

पुरन्दरः । सखे दशरथ ! रामभद्रं प्रति (घ) अलं वाचावाचीभिरन्वेष सकलवीरप्रकाण्डचन्द्रचूडकोदण्डस्य दलयिता ।

चारणः । कर्णं दत्त्वा आकाशे । किमाह रामः ? । तदवयवान्तरच्छेदपुरःसरं शिरःखण्डनकर्म विरचयामि मा कश्चन नियतप्रतिबन्धो मायाविधिः स्यात् ।

चारणः । न केवलमभिहितमनुष्ठितं च । पुनराकाशे कर्णं दत्त्वा । किमाह रामः ? ।

छिन्नोन्नतो वहति कार्मुकमस्य मुष्टि-
र्लूनोदितः शरवरं च करो बिभर्त्ति ।
छिन्नोत्थितं च मुखमर्पितदृष्टि लक्ष्ये
धिक् तन्नमेव विफलोऽम्बुधिसेतुबन्धः ॥ ४८ ॥ (ङ)

---

(घ) कठ्यावाचीभिः अलम् अयं रामभद्रे शोकसूचकं वाक्यं न प्रयोक्तव्यमितिभावः । सकलवीराणां प्रकाण्डस्य श्रेष्ठस्य चन्द्रचूडस्य हरस्य यत् कोदण्डं धनुः तस्य दलयिता भङ्क्ता । अवयवान्तराणाम् अन्येषामङ्गानां छेदपुरःसरम् अन्यानि अङ्गानि छित्त्वेत्यर्थः शिरः खण्डनकर्म शिरश्छेदनव्यापारं विरचयामि करोमि नियतः निश्चितः प्रतिबन्धः मायारूप इत्यर्थः यस्य तथाविधः मायाविधिः ऐन्द्रजालिकव्यापारः कश्चन मा स्यात् न प्रभवतु अयं भावः यदि कापि माया स्यात् यत् शिरश्छेदनेऽपि पुनरुद्भवः, तदन्येषामङ्गानामपतः खण्डने तत्प्रभावस्य अपगमसम्भवादिति भावः ।

(ङ) छिन्नोन्नत इति । अस्य रावणस्य मुष्टिः छिन्नः पुनरुन्नतः सन् कार्मुकं वहति । लूनः छिन्नः पुनरुदितः उत्थितश्च करः शरवरं

दशरथः। (ङ) यच्छिद्यमानमुच्छलच्छीर्षमायाप्रपञ्चवञ्चितराघवशरलाघवमनच्छमवगच्छन्नेष विंशत्यर्द्धकन्धरो दुर्धरधनुर्धरोऽत्युच्चकैर्विकटकवचसज्जनिजशरीरसहस्रनिर्माणच्छद्मकर्मणि परां प्रवीणतामुपदर्शयति तत्र विधेः किमत्र प्रतिपत्स्यते रामभद्रः।

पुरन्दरः। यत् (घ) कुलाचलसन्दोहदहनकर्मणि भगवान् कालाग्निरुद्रः।

---

बिभर्त्ति च। एवं कृतं किन्तु पुनरद्यितस्य वत्से शरव्ये भवीति भावः अर्पिता दृष्टिर्येन तयोक्तं भवतीति शेषः तत् तस्मात् धिक् मामिति शेषः एषः मम अम्बुधौ सेतुबन्धः विफलः निष्फलः। वसन्ततिलकं वृत्तम्।

(ङ) यच्छ इति। यच्छः छिद्यमाना या उच्छलन्ती शीर्षावलिः सा एव मायाप्रपञ्चः मायाविस्तारः तेन वञ्चितस्य प्रतारितस्य राघवस्य शरलाघवं शरवर्षणे क्षिप्रहस्तताम् अनच्छं व्यर्थमिति यावत् अवगच्छन् जानन् एषः विंशत्यर्द्धकन्धरः दशाननः दुर्धरम् अन्यैर्धर्त्तुमशक्यं धनुर्धरतीति तथाभूतः सन् अत्युच्चकैः अतिमहता विकटेन कवचेन वर्मणा सज्जानां वर्जितानाम् आवृतानामित्यर्थः निजशरीराणां सहस्रस्य निर्माणं विरचनमेव छद्मकर्म मायाव्यापारः तस्मिन् परां महतीं प्रवीणतां पाण्डित्यं दक्षतामित्यर्थः उपदर्शयति प्रदर्शयति कायव्यूहेन युध्यते इति भावः। प्रतिपत्स्यते प्रतिविधास्यति करिष्यतीति यावत्।

(घ) कुलेति। कुलाचलानां कुलपर्वतानां हिमाद्रिप्रभृतीनां सन्दोहस्य समूहस्य दहनकर्मणि भस्मीकरणव्यापारे भगवान् कालाग्निरुद्रः कल्पान्ते संहाररूपी अग्निमयो रुद्रः यत् प्रतिपद्यते इति शेषः रामः तत् प्रतिपत्स्यते इति योज्यम्।

चारणः। ससंभ्रमम्। यदादिशति (क) त्रिदशचक्रवर्त्ती पश्य।

यावन्तो भुवि चाम्बरे च ककुभां कोणोपकोणेषु च
व्यावल्गन्ति धनुर्धराः कवचिनो मायामया रावणाः।
रामः स्वर्गजनाशिषां पदमसावेकोऽपि कोपोद्धत-
स्तावद्धा प्रतिवक्त्रयोजितशरश्रेणीभिरालक्ष्यते ॥ ४८ ॥ (ख)

दशरथः। अद्य फलितं मे पुरन्दरप्रसादेन यत् समरसीमनि वत्सरामभद्रं दशाननादुत्कर्षवन्तं पश्यामि।

चारणः। कर्णं दत्त्वा आकाशे। किमाह रामः?। भवतु भगवतः कुशिकनन्दनाज्जृम्भकास्त्रप्रदानप्रसङ्गोपात्तं (ग) मायाहरमस्त्रं सन्दधामि।

चारणः। सम्यगवलोक्य। दशरथं प्रति। महाराज! कारयचक्षुषोपारणं दृश्यतां द्रष्टव्यम्।

---

(क) त्रिदशचक्रवर्त्ती देवेन्द्रः।

(ख) यावन्त इति। भुवि पृथिवीतले च अम्बरे आकाशे च ककुभां दिशां कोणोपकोणेषु कोणेषु उपकोणेषु च यावन्तः धनुर्धराः कवचिनः मायामयाः रावणाः व्यावल्गन्ति विचरन्ति युध्यमाना इति शेषः। स्वर्गजनाशिषां देवगणाशीर्वादानां पदं स्थानं देवगणैराशीर्भिरभिनन्द्यमान इत्यर्थः असौ एकोऽपि रामः कोपोद्धतः क्रोधस्फीतः सन् प्रतिवक्त्रं प्रतिमुखं रावणानामिति भावः योजिताभिः निक्षिप्ताभिः शरश्रेणीभिः शरनिचयैः तावद्धा तावत्परिमाणः आलक्ष्यते प्रतीयते यावन्तः रावणाः तावन्त एव रामा लक्ष्यन्ते इति भावः। शार्दूलविक्रीडितं वृत्तम्।

(ग) जृम्भकेति। जृम्भकाणाम् अस्त्रविशेषाणां प्रदानप्रसङ्गे उपात्तं शिक्षितं ग्रहीतमित्यर्थः मायाहरम् इन्द्रजालध्वंसकरमित्यर्थः।

मायाहरशरन्यासादेष नक्तञ्चरेश्वरः
एकशेषशिराः सम्प्रत्येकशेषो रणे स्थितः ॥ ५० ॥ (घ)

सर्वतोऽवलोक्य । (ङ) रावणभयशरणागतसमग्रनाकिनि पिनाकिनि त्रिभुवनस्वस्त्ययननिमित्तमुदाहृतब्रह्मणि ब्रह्मणि निरन्तरचिन्तानिश्चेतसि प्रचेतसि सम्भावितजगन्नाशे कीनाशे समुपालब्धविधौ भगवति विधौ परिम्लायति रिपुग्रामनिधनदे धनदे दूरोत्क्षिप्तरणे समीरणे विगलित-वसौ विभावसौ दुरपत्यजनननिश्चितपुलस्त्येऽगस्त्ये कल्याण-मनुध्यायति ध्यानचक्षुषि मुनिवरिष्ठे वशिष्ठे गायति साम विश्वाम्बुजविकाशमित्रे विश्वामित्रे भयालापस्फुरिताधरे

---

(घ) मायेति । एषः नक्तञ्चरेश्वरः रावणः मायाहरस्य शरस्य न्यासात् निक्षेपात् सम्प्रति एकशेषम् एकावशिष्टं शिरो यस्य तादृशः तथा एक एव शेषो यस्य तथाभूतः निःसहाय इत्यर्थः रणे स्थितः ।

(ङ) रावणेति । रावणभयात् शरणागताः समग्रा नाकिनः देवाः यस्य तादृशे पिनाकिनि हरे । त्रिभुवनेति त्रिभुवनस्य त्रिज-गतः स्वस्त्ययननिमित्तं मङ्गलार्थम् उदाहृतम् उच्चारितं ब्रह्म वेदः येन तादृशे ब्रह्मणि । निरन्तरेति । निरन्तरा सार्वकालिकी या चिन्ता उद्वेगः तया निर्गलितं चेतः चित्तं यस्य तादृशे अचेतने प्रचेतसि वरुणे प्रचेता वरुणः पाशीत्यमरः । सम्भावितेति सम्भावितः चिन्तितः जगतां नाशो येन तादृशे कीनाशे यमे कीनाशो यमदैवयोरिति शेषः । समुपालब्धेति । समुपालब्धः तिरस्कृतः विधिः दैवं येन तादृशे विधौ चन्द्रमसि । परिम्लायति परितो म्लानिं गच्छति रिपु-ग्रामाणां शत्रुसङ्घानां निधनदे विनाशदायिनि धनदे कुबेरे । दूरात् उत्क्षिप्तः परित्यक्तः रणो येन तादृशे समीरणे वायौ । विगलित

विद्याधरे निर्वाणोद्यतचारणे हाहारवमुखरवृन्दारकवृन्दं भुवनाभोगं विदधता जीवितनिरपेक्षेण राक्षसराजेन निजस्यन्दनं सविधीकृत्य समुद्भ्रान्तसारथिर्दाशरथिरथः सपदि दोर्दण्डमण्डलेन धूर्बन्धे विधृतो भ्रामितश्च ।

दशरथः । साकूतं प्रणम्य । भगवत्यो रघुकुलदेवता दशरथमनुगृह्णीत भगवन्निन्द्र ! गृहाण (च) दम्भोलिमम्भोधरलाञ्छनं धनुर्वा नन्वेष कवलीक्रियते रामचन्द्रो रावणराहुणा । इति मूर्च्छति ।

---

वसु दीप्तिर्यस्य तथाभूते विभावसौ अग्नौ सूर्ये च दुरपत्यजननेन कुलग्लानोत्पादनेन निन्दितः पुलस्त्यः येन तादृशे अगस्त्ये । कल्याणं जगतां मङ्गलमनुध्यायति चिन्तयति ध्यानचक्षुषि समाधिना सर्वदर्शिनि मुनीनां वरिष्ठे श्रेष्ठे वशिष्ठे । गायति उच्चारयति साम वेदविशेषं विश्वानि अम्बुजानीव तेषां विकाशे मित्रः सूर्यः तथाभूते विश्वामित्रे महर्षौ । भयालापेन सभयवचनेन स्फुरितोऽधरो यस्य तादृशे विद्याधरे देवयोनिविशेषे । निर्वाणेति निर्वाणे वधे उद्यतं प्रवणं वधोन्मुखमित्यर्थः चारणानां देवयोनिविशेषाणां हाहाकाररवेण मुखरं वृन्दारकाणां देवानां वृन्दं गणः यत्र तादृशं भुवनाभोगं जगदभ्यन्तरं विदधता कुर्वता । जीवितनिरपेक्षेण जीवनं प्रति निस्पृहेण । निजस्यन्दनं स्वं रथं सविधीकृत्य समुत्तोल्य समुद्भ्रान्तः भयविह्वलः सारथिर्यस्य तथाविधः दाशरथिरथः रामस्य स्यन्दनं सपदि सहसा दोर्दण्डमण्डलेन बाहुदण्डसमूहेन धूर्बन्धे युगकाष्ठबन्धनस्थाने विधृतः भ्रामितः घूर्णितश्च ।

(च) दम्भोलिं वज्रम् । अम्भोधरेषु मेघेषु लाञ्छनं चिह्नं यस्य तादृशम् । कवलीक्रियते ग्रस्यते ।

पुरन्दरः। प्रियवयस्य! किमाकुलोऽसि कियत्कालं जलदतिरस्करिणी (छ) मार्त्तण्डमण्डलमन्तरयति।

दशरथः। सर्वमनवलोकयन् इतश्चाग्य। समरसुन्दर! पुरन्दर! पश्य पश्य।

वत्सस्य साश्वः सारथिः सचक्रध्वजधूर्युगः।
व्योम्नि भ्रमरकभ्रामं भ्राम्यतेऽनेन हा! रथः॥ ५१॥ (ज)

इति पतति।

पुरन्दरः। अये! किमपि महाबलपराक्रमो राक्षसराजः।

नारदः। कियद्वा (झ) वर्णनमर्णवस्यायं मकरालय इति।

वेल्लद्विद्युल्लतालीच्छुरितपरिकरैरम्बुदैर्वान्तवार्भि-
र्दिव्यानां व्योमयानैर्भयचकितवधूवल्गुमुक्तार्त्तनादैः।
लङ्केन्द्रे चापहस्तभ्रमितरथपथप्रस्थितैस्तारकाणा-
मुक्ताशैवालवालैरिव च विरचिता वल्गनोराजनश्रीः॥ ५२॥ (ञ)

---

(छ) जलद एव तिरस्करिणी जवनिका आवरणविशेष इत्यर्थः मार्त्तण्डमण्डलं सूर्यबिम्बम् अन्तरयति आवृणोति। ईदृक् रणपाण्डित्यं रावणस्य न चिरायेति भावः।

(ज) वत्सस्येति। हा इति खेदे अनेन रावणेन वत्सस्य साश्वः सारथिः सरथाङ्गविशेषः सचक्रध्वजधूर्युगः चक्रध्वजधूर्युगैः सहितः रथः व्योम्नि आकाशे भ्रमरकभ्रामं भ्रमरो यथा भ्रमति तद्वदित्यर्थः भ्राम्यते घूर्ण्यते।

(झ) कियदिति। अर्णवस्य समुद्रस्य कियत् वर्णनम्? यतोऽसौ मकरालयः मकराणां हिंस्रजलचरजन्तुविशेषाणाम् आलयः आश्रयः। रावणो हि मकरवत् दुर्धर्ष इति भावः।

(ञ) वेल्लदिति। वेल्लन्तीभिः स्फुरन्तीभिः विद्युल्लताभिः

नेपथ्ये कलकलानन्तरम् ।

यद्वक्त्राणां दशानामिव दश ककुभः शासितुं स्पष्टिरासी-
द्विंशत्या यस्य दोर्भिर्दशगुणितमिव प्राप्तवान् वीरधर्मम् ।
लङ्केन्द्रः संयतेन्द्रो रणभुवि दशभिर्मैथिलीवल्लभेन (ट)
ज्योतिर्दीप्तैः क्षुरप्रैः स खलु विरचितो निर्विबन्धः कबन्धः ॥५३

दशरथः । आकर्ण्य । कः पुनरयमकारणबन्धुः श्रवणामृतवर्षिणा वचनेनास्मानाश्वासयति ।

चारणः । नेयमाश्वासना किं पुनर्विभीषणप्रियकरणाय लङ्कावैतालिक एष निवेदयति ।

---

सौदामिनीपरम्पराभिः स्फुरिताः व्याप्ताः परिकराः अवयवाः येषां तादृशैः यान्तयाभिः जलवर्षिभिः अम्बुदैः मेघैः, भयचकितानां भयार्त्तानां वधूनां देवाङ्गनानां वक्त्रैः मुखैः मुक्तः आर्त्तनादो येषु तादृशैः दिव्यानां स्वर्गिणां व्योमयानैः विमानैः लङ्केन्द्रेण रावणेन अपहृतं भ्रमितस्य रथस्य यः पन्थाः तस्मिन् प्रस्थितैः तारकाणां नक्षत्राणाम् उत्तालैः महद्भिः चक्रवालैः मण्डलैरेव वक्त्रस्य रावणमुखस्येत्यर्थः नीराजनश्रीः विरचितेव । स्रग्धरावृत्तम् ।

(ट) यदिति । दश ककुभः दिशः शासितुमिव दशानां यस्य वक्त्राणां स्पष्टिरासीत् । यस्य विंशत्या दोर्भिर्भुजैः दशगुणितमिव वीरधर्मं वीर्यमित्यर्थः प्राप्तवान् । मैथिलीवल्लभेन रामेण रणभुवि संयतः कारानिबद्धः इन्द्रो येन तादृशः स रावणः ज्योतिर्दीप्तैः ज्योतिषा अग्निरित्यर्थः क्षुरप्रैः अस्त्रविशेषैः निर्विबन्धः नास्ति विशेषेण बन्धः यस्य तादृशः निरर्गल इत्यर्थः कबन्धः छिन्नशिराः कायः विरचितः कृतः खलु । निहत इति भावः । स्रग्धरावृत्तम् ।

दशरथः। तत् किमिव नेदं सहस्रचक्षुषापि भगवता (ठ) नयनाञ्जलिपुटपेयीकृतम्।

चारणः। शृणु यथा।

यावल्लोलाचलच्चक्रध्वजहरितरलालातचक्रायमाणं
भूगोलास्फालहेतोर्भ्रमयति नभसि स्यन्दनं राक्षसेन्द्रः।
दोर्दण्डैश्चण्डवेगोद्धृतहरगिरिभिः—

दशरथः। [illegible]। सुखप्रपाता रावणकरान्दोलित-स्यन्दनभ्रमणभङ्गिस्तद्धारय धारय वत्सम्।

चारणः। सहर्षम्।—द्राक् क्षुरप्रेण तावत्
तस्यैवाकर्ण्य वाणीं दशममपि शिरश्छिन्नवान्नाम रामः॥५४॥(ड)

---

(ठ) नयनाञ्जलिपुटपेयीकृतं नयनरूपेण अञ्जलिपुटेन अपेयं पेयं कृतं पेयीकृतम्। दृष्टमित्यर्थः।

(ड) यावदिति। राक्षसेन्द्रो रावणः यावत् नभसि आकाशे भूगोलस्य भूमण्डलस्य आस्फालहेतोः विध्वंसनार्थमित्यर्थः लोलाश्चञ्चलाः चलाः रथावयवविशेषाः चक्राणि ध्वजाः केतुपटाः हरयः अश्वाश्च य-स्मिन् तत् अतएव अलातचक्रायमाणम् अङ्गारमण्डलाकारं स्यन्दनं रथं चण्डवेगेन प्रबलवेगेन उद्धृतः उत्क्षिप्तः हरगिरिः कैलासः यैः तादृशैः दोर्दण्डैः बाहुयष्टिभिः भ्रामयति घूर्णयति, सुखप्रपाता सुखेन अना-यासेन अवलीलया पात्यते इति सुखप्रपाता रामोपरि सुखेन पातनीया इत्यर्थः। रावणस्य करैः आन्दोलितस्य गृहीतस्य स्यन्दनस्य रथस्य भ्रमणभङ्गिः घूर्णनचातुरी। घूर्ण्यमानं स्यन्दनं राक्षसराजेन राम-चन्द्रस्योपरि यदि पात्यते तर्हि महाननर्थः स्यात् तत् यत्नं रामभद्र धारय परित्राहीति सन्दर्भार्थः। तावत् रामः तस्य रावणस्य वाणीं दुर्वचनम् आकर्ण्यैव श्रुत्वैव क्षुरप्रेण अस्त्रविशेषेण द्राक् झटिति दशममपि शिरः छिन्नवान् नाम चकर्त खलु। स्रग्धरावृत्तम्।

पुरन्दरः । विहस्य । शब्दे भवत एव(ढ)शब्दवेधित्वं शिक्षितमभ्यस्तं च रामभद्रेण किंपुनरुपाध्यायादधिकः संवृत्तः ।

विमृश्य । तदेतदुद्दामरामक्षुरप्रप्रवेशिनो भ्रूक्षेपस्य भूर्भुवःस्वस्तितयडामरं सूदितदशकन्धरमदं भद्रमाजृम्भितम् ।

दशरथः । तत् प्रियं नः ।

चारणी । ता किंण (ण) पडुपडहझल्लरीविहुरिसं सवंसकंसतालमिस्सं सिंखसंखं भूरिभेरीविपंचीप्पपंचभांकारझंकारभंगिगब्भिणीकुसुमवरिसपुव्वं अणवच्छिण्णमप्फालिदो देवदाहिं विजअदुंदुही (१) ।

---

(१) तत् किमिति न पटुपटहझल्लरीभिन्नं सवंशकांस्यतालमिश्रं शिःशङ्खशङ्खं भूरिभेरीविपञ्चीप्रपञ्चभाङ्कारझङ्कारभङ्गिगर्भं कुसुमवर्षपूर्वमनवच्छिन्नमास्फालितो देवताभिर्विजयदुन्दुभिः ।

---

(ढ) शब्दवेधित्वं शब्दमनुसृत्य लक्ष्यं विध्यतीति शब्दवेधी तस्य भावः तत्त्वम् । अधिकः शिक्षाधिक इत्यर्थः । उद्दामे अतिभीषणे रामस्य क्षुरप्रे प्रवेशिनः प्रविष्टस्य आविर्भूतस्य इत्यर्थः । भूर्भुवःस्वस्तितये त्रिजगत्यामित्यर्थः डामरम् उद्भटम् अतिप्रबलमित्यर्थः सूदितः नाशितः दशकन्धरस्य रावणस्य मदः गर्वः येन तादृशं भद्रं सुन्दरम् आजृम्भितं विचेष्टितम् ।

(ण) पटुभिः महद्भिः पटहैः झल्लरीभिश्च वाद्यभेदैरित्यर्थः भिन्नं संवलितम् । तथा सवंशेन वेणुसहितेन कांस्यतालेन मिश्रं सहितं शिःशङ्खाः शङ्खाः शङ्खसमा इति यावत् यत्र तत्, भूरयः बहवः भेरीणां वाद्यविशेषाणां विपञ्चीनां वीणाविशेषाणाञ्च ये प्रपञ्चाः विस्ताराः तेषां भाङ्काराणां झङ्काराणाञ्च या भङ्गयः वैचित्र्याणि ताः

चारणः। शृणु यथा।

हेलाखण्डितचण्डहेमहरिणैर्बाणैः कुलं रक्षसां
शेषीभूतविभीषणं गुणनिधौ कृत्वापि रामे स्थिते।
प्रत्युज्जीवनशङ्कया यमजितो लङ्कापतेः कातरै-
र्नो मुक्ताः कुसुमस्रजो न च सुरैरास्फालितो दुन्दुभिः ॥५५॥(त)

नेपथ्ये।

बाणैर्लाञ्छितकेतुयष्टिशिखरो मूर्च्छानमत्सारथि-
र्मांसास्वादनलुब्धगृध्रविहगश्रेणीभिरासेवितः।
रक्षोनाथमहाकबन्धपतनक्षुण्णावदङ्गो हयै-
र्क्लेशित्वा स्मृतमन्दुरास्थितिकृतैर्लङ्कां रथो नीयते ॥५६॥(थ)

---

गर्भं यस्य तत् तथा कुसुमवर्षपूर्वं पुष्पवृष्टिपुरःसरम् अनवच्छिन्नं निरवच्छिन्नम् अनवरतमित्यर्थः आस्फालितः ताडितः।

(त) हेलेति। गुणनिधौ गुणाकरे रामे हेलया अक्लेशेन खण्डितः नाशितः चण्डः भीषणः हेमहरिणः सुवर्णमृगरूपी मारीचो नाम राक्षस इत्यर्थः यैः तथोक्तैः बाणैः रक्षसां कुलं शेषीभूतः विभीषणो यत्र तादृशं विभीषणमात्रशेषमित्यर्थः कृत्वा स्थितेऽपि यमजितः अन्तकजयिनः लङ्कापतेः रावणस्य प्रत्युज्जीवनशङ्कया पुनर्जीवनभयेन कातरैः सन्देहाकुलैरित्यर्थः सुरैः देवैः कुसुमस्रजः पुष्पमाल्यानि नो मुक्ताः पुष्पवृष्टिर्न कृतेति भावः दुन्दुभिः न आस्फालितः वादितश्च। शार्दूलविक्रीडितं वृत्तम्।

(थ) बाणैरिति। बाणैः रामशरैः लाञ्छितं क्षतमिति यावत् केतुयष्टेः ध्वजदण्डस्य शिखरम् अग्रं यस्य तथाभूतः मूर्च्छया नमन् पतन् सारथिर्यस्य तादृशः, मांसास्वादने मांसभक्षणे लुब्धानां लालसानां गृध्राणां विहगानाम् अन्येषां पक्षिणाञ्च श्रेणीभिः आसेवितः आप्तः रक्षोनाथस्य रावणस्य यः महान् कबन्धः देहः तस्य पतनेन

पुरन्दरः। सखे! दशरथ! अयमनन्यसदृशाकारी रामभद्रपुरुषकारः। अतश्च।

निर्दग्धत्रिपुरेन्धनोऽस्तु गिरिशः क्रौञ्चाचलच्छेदने
पाण्डित्यं विदितं गुहस्य किमु तावज्ञातयुद्धोत्सवौ।
लूत्वा पङ्कजलावमाननवनं चैतस्य लङ्कापते-
र्वीराणां चरिताद्भुतस्य परमे रामः स्थितः सीमनि॥५७॥(द)

चारणः। विहस्य। अवगतदशकन्धरवधैर्विबुधैरिदानीं सत्वरैर्दाशरथौ (ध) हर्षपुष्पवर्षमारभ्यते। नेपथ्ये।

सर्वा गीर्वाणवन्द्यो! व्रजत निजगृहान् बन्धुमाधोरण! द्राक् स्वर्गेभस्तम्भशालां नय सुरकरिणं यामिकाः! यात देवाः!।

---

ध्वजः चूर्णितः अत्र अवयवविशेषः दशकः ध्वजश्च यस्य तादृशो रथः रावणस्येति भावः इषुभिः अर्धैः सूतया मन्दुरायां वाजिशालायां स्थित्वा हृतैः आकृष्टैः षड्भिः हुत्वा हुमावर्तं कृत्वा कष्टं नीयते। शार्दूलविक्रीडितं वृत्तम्।

(द) निर्दग्धेति। गिरिशः शिवः निर्दग्धं निःशेषेण भस्मीकृतं त्रिपुरमेव इन्धनं काष्ठं येन तथाविधः अस्तु भवतु। गुहस्य पाण्डित्यं पराक्रमवैचक्षण्यं क्रौञ्चाचलस्य क्रौञ्चपर्वतस्य छेदने विदारणे विदितं ज्ञातम्। तौ गिरिशकार्त्तिकेयौ अज्ञातयुद्धोत्सवौ अविदित संग्रामविधौ किम्? नैवेतिभावः। किन्तु रामः एतस्य लङ्कापतेः रावणस्य आननवनं शिरोमण्डलं पङ्कजलावं कमलच्छेदमिवेत्यर्थः लूत्वा छित्त्वा वीराणां चरिताद्भुतस्य अद्भुतचरितस्य परमे सीमनि स्थितः। शम्भुः स्कन्दश्च वीरश्रेणौ परं राघवः सर्वश्रेष्ठ इति भावः। शार्दूलविक्रीडितं वृत्तम्।

(ध) दाशरथौ रामे।

भूयो दिव्यद्रुमाणां ननु भवतु वने नन्दने सन्निवेशो
द्वारि क्षिप्तं महेन्द्रे दशवदनशिरः किङ्करैरन्तकस्य ॥ ५८ ॥(न)

चारणः । (प)नाकनरलोकनायकौ दिष्ट्या वर्धेथे पुरन्दरप्रतीहारवचनेन अपरिचितेन च रामशरीरसौन्दर्येण । तथाहि ।

रणरसिकसुरस्त्रीमुक्तमन्दारदामा
स्वयमयमवतीर्णो लक्ष्मणन्यस्तहस्तः ।
विरचितजयशब्दो वन्दिभिः स्यन्दनाग्रा-
द्दिनकरकुललक्ष्मीवल्लभो रामचन्द्रः ॥ ५९ ॥ (फ)

इति निष्क्रान्ताः सर्वे । रावणवधो नाम नवमोऽङ्कः ॥

---

(न) सर्वा इति हे गीर्वाणवन्द्यः बन्दीकृताः ! सुरनार्यः ! सर्वा यूयं निजमन्दिरान् व्रजत गच्छत । हे आधोरण ! हस्तिपक ! द्राक् झटिति सुरकरिणम् ऐरावतं गन्तुं स्वर्गभर्तुर्गजशालाम् ऐरावतबन्धनालयं नय प्रापय । हे यामिकाः ! प्रहरिणः देवाः ! यात गच्छत स्वान् स्थानानीतिशेषः । नन्दने वने भूयः पुनः दिव्यद्रुमाणां पारिजातादीनां सन्निवेशः स्थितिः भवतु ननु । यत् यस्मात् अन्तकस्य यमस्य किङ्करैः दूतैः दशवदनस्य रावणस्य शिरः ऐन्द्रे द्वारि देवराजभवनद्वारे क्षिप्तं पातितम् ।

(प) नाकनरलोकनायकौ इन्द्रदशरथौ । पुरन्दरस्य इन्द्रस्य प्रतीहारवचनेन दौवारिकवाक्येन पूर्वोक्तेन सर्वा इत्यादिना ।

(फ) रणेति । रणरसिकाभिः संग्रामप्रियाभिः सुरस्त्रीभिः मुक्तं दत्तं मन्दारदाम मन्दारपुष्पमाल्यं यस्मै तथाविधः लक्ष्मणेन न्यस्तः धृतः हस्तः यस्य तथाभूतः वन्दिभिः स्तुतिपाठकैः विरचितः कीर्तितः जयशब्दो यस्य तथाभूतः दिनकरस्य सूर्यस्य या कुललक्ष्मीः तस्या वल्लभः प्रियः अयं रामचन्द्रः स्यन्दनाग्रात् रथोपरिभागात् स्वयं अवतीर्णः अवरोहतिस्म इत्यर्थः । मालिनीवृत्तम् ।

## ॥ अथ दशमोऽङ्कः ॥

अतः परं रावणानन्दो भविता ।

ततः प्रविशति सशोका लङ्का ।

लङ्का । हा ! (क) दुद्धरतवविसेसपरितोसिदारविन्दासण ! तिहुअणेक्कमल्ल ! दसकण्ठ ! हा हेलाबन्दीकिदमहिन्द ! मेहणाद ! हा समरसंरम्भसुप्पसण ! कुम्भकण्ण ! कहिंपि देहि मे पडिवअणम् (१) ।

प्रविश्य सत्वरा अलका । पुरोऽवलोक्य । कथमियं लङ्काऽस्तमितेऽपि (ख) सञ्चरितकुण्ठे दशकण्ठे दुःखिता । विमृश्य ।

---

(१) हा ! दुर्द्धरतपोविशेषपरितोषितारविन्दासन ! त्रिभुवनैकमल्ल ! दशकण्ठ ! हा हेलाबन्दीकृतमहेन्द्र ! मेघनाद ! हा समरसंरम्भसुप्रसन्न ! कुम्भकर्ण ! कापि देहि मे प्रतिवचनम् ।

---

(क) दुर्द्धरेति । दुर्द्धरेण दुश्चरेण तपोविशेषेण परितोषितः अरविन्दासनः कमलासनः ब्रह्मा येन तादृशः तत्सम्बुद्धौ । हेलया अवलीलया बन्दीकृतः महेन्द्रः येन तत्सम्बुद्धौ । समरसंरम्भे युद्धव्यापारे सुप्रसन्न । प्रीत । प्रियसंग्राम इत्यर्थः ।

(ख) अस्तमिते नाशं गमिते । सञ्चरितं कुण्ठं यस्मिन् तादृशे । दुश्चरितस्य सर्वे आक्रोश एव भवति लोकानां दशकण्ठस्तु न तथेति अपि

परिपालना हि भृत्यान् स्वामिनः स्मारयति न गुणग्रामः।

प्रकाशम्। सखि लङ्के! वलीमुखबलबलात्कारमाकर्ण्य निखिलनाकतलतिलकायमानयाऽमरावत्या मर्त्यमण्डलमौलकया चोज्जयिन्या रसातलभोगभङ्गिभूतया च भोगवत्या तदनुचरैरेव त्रिभुवनवासिनाऽपि पुरीचक्रेण कुशलप्रश्नाय भवतीं प्रति प्रहिता। अहं च सखीस्नेहादागतास्मि।

छिन्ना न दिव्यतरवस्तव कच्चिदारात्?
कच्चिद् धृता न परिखाः कनकाम्बुजिन्यः।?
भ्रुष्टानि कच्चन न रत्नमहाट्टहाणि?
कच्चिच्च काञ्चनमयो दलितश्च सालः?॥१॥ (ग)

---

मर्त्यार्थः। परिपालना प्रतिपालनम्। वलीमुखानां वानराणां बलेन बलात्कारं आक्रमणं तनेतिभावः। निखिलनाकतलस्य समस्तस्वर्गराज्यस्य तिलकायमानया ललाटभूषणस्वरूपया अमरावत्या इन्द्रपुर्या। मर्त्यमण्डलेषु मौलकया आनुज्ज्वलया। रसातलस्य पातालस्य यः भोगः सुखं तस्य भङ्गिभूतया वैचित्र्यस्वरूपिण्याः भोगवत्या पातालपुर्या इत्यर्थः। पुरीचक्रेण नगरीसमूहेन। प्रहिता प्रेरिता।

(ग) छिन्नेति। तव आरात् समीपे स्थिता इति शेषः। दिव्यतरवः सुरद्रुमाः पारिजातादयः कच्चित् न छिन्नाः? कनकाम्बुजिन्यः स्वर्णपद्मवत्यः परिखाः प्राकारवृतिभूताः जलाशयः कच्चित् न, धृताः न पूरिताः? अवस्करनिचयैरितिभावः। रत्नमहाट्टहाणि रत्ननिर्मितानि महान्ति गृहाणि कच्चन न भ्रुष्टानि न दग्धानि?।

Digitized by Google

वहा सवाक्सम्भम्। (घ) सहि केलासुच्छङ्गवासिणि! कुवेरसच्चरिदे! देवणिलये! अलए! किं णाम ण संपसं? तधा अ तेण केसरिकलत्तसंभवेण समीरसंभूदेण वाणरेण सुउमारकामिणीकरअलकोमलेहिं किसलयेहिं लाडलल-णाहरोठ्ठमञ्जिठ्ठे कुसुमअकुसुमत्थवएहिं वन्दीकिदसुर-सुन्दरीचरणप्पहारदोहलअसंकन्तालत्तअलंछिदेहिं उक्ख-वन्धेहिं लीलामन्दिरं मअरधअस्स कुलभवणं मलअम-मपअट्टिणो दक्खिणसमीरणस्स विस्सामठ्ठाणं हिअस्स पढमणिलओ णिच्चं वसन्तस्स पेरन्तणिवेसिदकप्पपाअव-प्पहुदिपंचविहदेवदुमा असोअवणिआ सव्वा संचुणिआ पाआलपरिचुंबी परिहापरिक्खेवोवि त्थलत्थिदिं लंभिदो

---

काञ्चनमयः सर्वमयः शालः प्राकारश्च कश्चित् न दलितः विध्वंसित-श्च?। वसन्ततिलकं वृत्तम्।

(घ) सवाक्सम्भं निःशङ्कं अनुत्त्रैरितिभावः। कैलासस्य उत्सङ्गे क्रोड़े वसतीति तथाभूते कुबेरेण सञ्चरिते व्याप्ते सेविते! देवनिलये! देवावासभूते!। किं नाम न सम्पन्नं न घटितम्? सर्वमेव अत्र घटितमित्यर्थः। केसरिकलत्रसम्भवेन केसरिणः तदाख्यस्य वानरस्य यत् कलत्रं पत्नी अञ्जना इत्यर्थः ततुसम्भवेन तद्गर्भजातेन समीरस-म्भूतेन वायुपुत्रेण वानरेण हनुमता इत्यर्थः। सुकुमारेति। सुकुमा-राणि च कोमलानि यानि कामिनीनां करतलानि तद्वत् कोमलैः मृदुलैः किसलयैः पल्लवैः। लाटेति। लाटललनानां लाटदेशीयकामि-नीनां अधरोष्ठवत् याः मञ्जिष्ठा लताविशेषाः ताभिः एकसुभगः अतिसुन्दर इत्यर्थः स्तवकः येषां तादृशैः। वन्दीकृतेति वन्दी-

अविच्छिण्णसंचरणचदुरेण वि मलअमरुदेण अलङ्घणिज्जं
कणअपाआरचक्कं सुमरणसेसं संपादिदं मणिभवणवि-
द्धंसणदंसणे उण णिक्करुणस्स वि जणस्स किं भणिअदि
अंसुधाराधोरणी किं उण सिणेहमइं पिअसहिं समास-
ज्ज पाणपरिच्चअणववसाएहिं विरदह्मि (२) ।

---

(२) सखि ! कैलासोत्सङ्गवासिनि ! कुबेरसहचरिते ! देवनिलये अलके !
किं नाम न सम्पन्नं ? तथा च तेन केरलिकचलनसम्भवेन समीरसम्भूतेन
वानरेण सुकुमारकामिनीकरतलकोमलैः किसलयैर्लोटलताधरोष्ठ-
श्लिष्टैः कलभगमनकैर्वन्दीकृतसुरसुन्दरीचरणप्रहारदोहदसंक्रान्तालक्त-
कलाञ्छितैर्लक्ष्मैर्लीलामन्दिरं मकरध्वजस्य कुलभवनं मलयमार्गप-
थिको दक्षिणसमीरणस्य विश्रामस्थानं हृदयस्य प्रथमनिलयो नित्यं
वसन्तस्य पर्यन्तनिवेशितकल्पपादपप्रभृतिपञ्चविधदेवद्रुमाऽशोकवनिका
सर्वा मम ...िता पातालपरिचुम्बी परिखाप्रतिक्षेपोऽपि स्वकस्थितिं
लम्भितोऽविच्छिन्नसञ्चरणचतुरेणापि मारुतेन मलयजेनालङ्घनीयं कनक-
प्राकारचक्रं स्मरणशेषं सम्पादितं मणिभवनविध्वंसनदर्शने पुनर्नि-
ष्करुणस्यापि जनस्य किं भण्यतेऽश्रुधाराधोरणी । किं पुनः स्नेहमयीं
प्रियसखीं समासाद्य प्राणपरित्यजनव्यवसायेभ्यो विरताऽस्मि ।

---

लतानां सुरसुन्दरीणां चरणप्रहारः पादताडनमेव दोहदकं वृक्ष-
पोषकौषधविशेषः तेन संक्रान्तानि यानि अलक्तकानि तैः लाञ्छिताः
शोभिताः तैः लक्ष्मैः पादपार्श्विभिः । लीलामन्दिरं क्रीडागृहं
मकरध्वजस्य कामस्य । कुलभवनं कुलक्रमागतं गृहम् । विश्रामस्था-
नम् आरामनिकेतनम् । प्रथमनिलयः आद्यः आशयः । पर्यन्तेति ।
पर्यन्तेषु प्रान्तेषु निवेशिताः रोपिताः कल्पपादपप्रभृतयः पञ्चविधाः

अलका। सखि! धर्मजेतरि (ङ) भीषणविभीषणे विभीषणे विजेतरि तत्रभवती किं सशोकशङ्कुरेव तन्निधिनाथपूर्ववल्लभे! लङ्के! विरमन्तु मध्यस्थगितैकावलीकल्पा बाष्पजलकणश्रेणयः। विरज्यतु च जरठकाञ्चनारकुड्मलकोटिपाटला दृष्टिः। धौतमाञ्जिष्ठपटाम्बरदीनाधरमुद्रा समासादयतु त्वां लक्ष्मीं लघूभवन्तु च प्रमाणानुक्ततमृणालदण्डाः श्वासदण्डाः।

---

देवद्रुमाः यस्याः तादृशी सन्तानः कल्पवृक्षश्च मन्दारः पारिजातकः। पञ्चैते देवतरवः पुंसि वा हरिचन्दनमित्यमरः। पातालपरिचुम्बी रसातलस्पर्शी त्यर्थः परिखा प्रतिक्षेपः प्राकारवेष्टनजलराशिः स्थलस्थितिं स्थलस्य या स्थितिः मर्यादा तां लम्भितः प्रापितः अवस्करादिभिः पूरित इत्यर्थः। अविच्छिन्नेति। अविच्छिन्नम् अविश्रामं यत् सञ्चरणं भ्रमणं तत्र चतुरेण निपुणेनापि मार्त्तण्डमण्डलेन सूर्यबिम्बेन अलङ्घनीयम् अनतिक्रमणीयं कनकप्राकारचक्रं सर्वमवप्राकारमण्डलं शरणशेषं नामशेषमित्यर्थः सम्पादितं कृतं भग्नमित्यर्थः। मणिभवनस्य रत्नमन्दिरस्य विध्वंसनदर्शने विध्वंसं दृष्ट्वेत्यर्थः। किं भण्यते? कथ्यते? अम्बुधाराधोरणी नेत्रसलिलवृष्टिः। किं पुनः वक्तव्यमिति शेषः। प्रियसखीं त्वामिति शेषः। समासाद्य प्राप्य प्राणपरित्यजनव्यवसायेभ्यः जीवनविसर्जनचेष्टितेभ्यः विरता निवृत्ता।

(ङ) धर्मजेतरि धर्मेण लब्धविजये भीषणानां भयानकानां शत्रूणामिति भावः। भीषणे दमने इत्यर्थः विजेतरि शासितरि, सशोकशङ्कुः शोकशङ्कुसहिता। निधिनाथस्य कुबेरस्य पूर्ववल्लभे पूर्वप्रियतमे पूर्वं लङ्कायाः कुबेराध्युषितत्वादिति भावः। विरमन्तु निवर्त्तन्तां मध्ये वक्षसि इत्यर्थः स्थगिता स्थिता या एकावली एकसरो हारविशेषः

वच्छा । जं तिणेत्तमित्तस्स (च) णअरी भवदि (१) ।

नेपथ्ये ।

रुद्राणि ! लक्ष्मि ! वरुणानि ! सरस्वति ! द्यौः !
सावित्रि ! धात्रि ! सकलाः कुलदेवताश्च ! ।
गुर्वर्थिनी विशति शुष्मणि रामरामा
तत्सन्निधत्त सहसा सह लोकपालैः ॥ २ ॥ (छ)

---

(१) यत् त्रिनेत्रमित्रस्य नगरी भवति ।

---

तत्कालाः तादृश्य इत्यर्थः माध्यअवलवाणां न्योचयः धाराः । मा रहिहीति भावः । चिरव्यस्य निवर्त्तितां जरठस्य परिचितस्य विपुलस्य- त्वचः काञ्चनस्य चारकूटस्य च या कोटिः तद्वत् पाठका रक्ता । भीत चालितं माञ्जिष्ठं मञ्जिष्ठारागः यस्मात् तादृशं पटच्चरं वसनं तद्वत् दीना विषादपूर्णेति भावः । अधरमुद्रा अधराभोगः स्वां निजां श्यामा- यिकीमित्यर्थः । लक्ष्मीं शोभां समासादयतु प्राप्नोतु । लघूभवन्तु चलाः श्यामायिका भवन्तु इत्यर्थः प्रमाणेन परिमाणेन न्यूनकृताः सूचाग्र- दराः यैः तादृशाः श्वासदराः दीर्घनिश्वासा इत्यर्थः ।

(च) त्रिनेत्रः शिवः तस्य मित्रं कुबेरः तस्य ।

(छ) रुद्राणीति । हे रुद्राणि ! पार्वति ! लक्ष्मि ! वरुणानि ! वरुणभार्ये ! सरस्वति ! द्यौः ! स्वर्गाधिष्ठात्रि देवते इत्यर्थः सावित्रि ! धात्रि ! पृथिवि ! सकलाः सर्वाः कुलदेवताश्च ! । रामस्य रामा कान्ता जानकी शुद्ध्यर्थिनी शुद्धिकामा सती शुष्मणि अग्नौ विशति, तत् तस्मात् लोकपालैः इन्द्रादिभिः सह सहसा सत्वरं सन्निधत्त सन्नि- हिता भवत । वसन्ततिलकं वृत्तम् ।

लङ्का । साकाङ्क्षितकेन । किं उण विसुद्धिकारणम् ? (४) ।

अलका । राघवसम्बन्धवासः किल । विचिन्त्य । किञ्च च ।

कालुष्यहेतुर्वैदेह्या न राघवसद्मस्थितिः ।
ध्वान्तबन्दीकृताऽपीन्दोर्न कला जातु मीलति ॥ ३ ॥ (ज)

लङ्का । ता एहि गदुअ पेक्खह्म (५) ।

अलका । कुबेरप्रसादादिहस्थैव दिव्येन चक्षुषा पश्यामि ।

लङ्का । ता ममावि पिअसही णिवेददु (६) ।

अलका । इयं रामराज्ञी(झ)स्वाहावल्लभे भगवत्यात्मान-

---

(४) किं पुनर्विशुद्धिकारणम् ? ।

(५) तदेहि गत्वा प्रेक्षामहे ।

(६) तन्ममापि प्रियसखी निवेदयतु ।

---

(ज) कालुष्येति । राघवसद्मनि स्थितिः वैदेह्याः सीताया न कालुष्यस्य मालिन्यस्य हेतुः कारणम् । ध्वान्तेन तिमिरेण बन्दीकृता आक्रान्ता इत्यर्थः अपि इन्दोश्चन्द्रस्य कला जातु कदाचित् न मीलति न मलिनीभवति । अत्र कालुष्यहेतुर्मीलति इति चेति एकस्यैव साधारणधर्मस्य पृथक् निर्दिष्टत्वात् प्रतिवस्तूपमालङ्कारः तदुक्तं प्रतिवस्तूपमा तु स्यात् वाक्ययोर्गम्यसाम्ययोः । एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथगिति ।

(झ) रामराज्ञी रामस्य राज्ञी सीता स्वाहावल्लभे स्वाहा अग्नेः पत्नी तस्या वल्लभे अग्नौ कुररीव पक्षिणीविशेष इव करुणः

मान्दुलीकुर्वाणा कुररीव करुणक्रेङ्कारकातरया गिरा
देवीं वाचमभिसन्धाय स्तौति विघ्नविकारणं च ब्रूते ।

लङ्का । किं विअ सुणावेदु (७) ।

अलका ।

यद्गीर्वाणाः क्रतुबलिलिहो यत्स्मरश्चित्तजन्मा
सीमोन्माथी न च यदुदधिर्जुह्वते यत्र विप्राः ।
यः कृत्स्नस्य प्रलयदिवसो ये च ये च प्रकाशाः
कृत्स्नः सोऽयं जयति महिमा पावकः पावकस्य ॥ ४ ॥ (ञ)

किञ्च

मित्रं मन्त्री गुरुः शिष्यः स्वामी भृत्यश्च मे सदा ।
राम एव यथा नान्यस्तथा मां पातु पावकः ॥ ५ ॥ (ट)

---

(७) किमिव श्रावयतु ।

---

शोकजनकः यः क्रेङ्कारः स्वरविशेषः तेन कातरया दीनया देवीं वाचं वाग्देवीं सरस्वतीमित्यर्थः अभिसन्धाय उद्दिश्य ।

(ञ) यदिति । गीर्वाणा देवाः यत् क्रतुबलिलिहः यज्ञीयांश-भोक्तारः, स्मरः कामः यत् चित्तजन्मा मनसिजः, उदधिः समुद्रः यत् न सीमोन्माथी सीमानं वेलामित्यर्थः नातिक्रामतीत्यर्थः विप्राश्च यत्र जुह्वते हव्यं प्रक्षिपन्ति, कृत्स्नस्य जगत इति शेषः यः प्रलय-दिवसः संहारदिनं ये च ये च प्रकाशाः तेजोमया इत्यर्थः सोऽयं कृ-त्स्नः समग्रः पावकस्य सर्वस्य अग्नेः महिमा जयति सर्वोत्कर्षेण वर्त्तते इत्यर्थः । मन्दाक्रान्तावृत्तम् ।

(ट) मित्रमिति । यथा राम एव सदा मे मम मित्रं बन्धुः, मन्त्री

सखीं प्रति । नातः परमवच्छहृदयैः (ठ)श्रोतुं द्रष्टुं वा शक्यते ।

सखा । तं भणिअं जणअणन्दिणीए जेण रावणप्पदीणं वि दलिआइं हिअआइं गअणङ्गणादो वि बाहविन्दुसन्दोहा णिवडन्ति । तदो तदो ? (८) ।

अलका । ततश्च ।

वह्निर्ज्वाला: सृजति कियतीर्जानकी किं विधत्ते
कीदृक् छाया रघुपतिमुखे कर्म्म किं लक्ष्मणस्य ।
इत्थं यावद्विमृशति जनः कौतुकोत्तानिताक्ष-
स्तावच्छन्नं गगनमखिलं द्योतमानैर्विमानैः ॥ ६ ॥ (ड)

---

(८) तद् भणितं जनकनन्दिन्या येन रावणपत्नीनामपि दलितानि हृदयानि । गगनाङ्गणादपि बाष्पविन्दुसन्दोहा निपतन्ति । ततस्ततः ? ।

---

सचिवः, गुरुः आचार्य्यः, शिष्यः अन्तेवासी भृत्यः सेवकः भर्त्ता वा नाथः अपरो नेत्यर्थः तथा पावकः मां पातु रक्षतु शोधयतु इत्यर्थः ।

(ठ) अवच्छहृदयैः क्षुद्रहृदयैरित्यर्थः ।

(ड) वह्निरिति । वह्निः कियतीः ज्वालाः शिखाः सृजति विस्तारयति, जानकी किं विधत्ते करोति, रघुपतेः रामस्य मुखे कीदृक् छाया कान्तिः ? लक्ष्मणस्य किं कर्म्म लक्ष्मणः किं करोतीत्यर्थः ? जनः तत्रत्यो लोकः कौतुकेन औत्सुक्येन उत्तानिते विकसिते अक्षिणी यस्य तादृशः सन् इत्थं यावत् विमृशति तर्कयति, तावत् द्योतमानैः विराजमानैः विमानैः व्योमयानैः अखिलं समस्तं गगनम् अन्तरीक्षं छन्नं पूरितम् । खेचराः सर्वे द्रष्टुमागता इति भावः । मन्दाक्रान्ताछन्दम् ।

ततश्च ।

सीतामुदीक्ष्य सुमुखीं शिखिनः प्रवेशे
मुक्तास्तथा सुमनसः सुरसुन्दरीभिः ।
स्रग्विक्रयः सकलखेचरमालिकानां
जातो यथा चिरतरं त्रिदिवे महार्घः ॥ ७ ॥ (ठ)

ततश्च । (ड) प्रोद्घुष्टमरुन्धतीप्रभृतिभिरन्तर्हिताभिः पतिव्रताभिः ।

यत्पौलस्त्यगृहोषिता प्रविशति त्वां देव ! शुद्ध्यर्थिनी
सीतेयं प्रथमा सतीषु कुरु तज्ज्योतिर्जलार्द्रोज्ज्वलम् ।
धर्मध्यानमयाग्निकाष्ठमृदुलान्यङ्गानि दग्धानि चेत्
एतस्याः क्व नु शोधकोऽपि भगवन् ! संशुद्धये यास्यसि ॥ ८ (त

---

(ठ) सीतामिति । शिखिनः अग्नेः प्रवेशे प्रवेशसमये अग्नौ प्रविशन्तीमित्यर्थः सुमुखीं सीताम् उदीक्ष्य दृष्ट्वा सुरसुन्दरीभिः तथा सुमनः पुष्पाणि मुक्ताः त्यक्ताः यथा त्रिदिवे स्वर्गे सकलानां खेचरमालिकानां खेचरमालाकाराणां महार्घः महामूल्यः स्रग्विक्रयः पुष्पमाल्यविक्रयः चिरतरं बहुकालं जातः । वसन्ततिलकं वृत्तम् ।

(ड) प्रोद्घुष्टं प्रकर्षेण उद्घोषितम् अरुन्धती वशिष्ठपत्नी तत्प्रभृतिभिः तत्प्रमुखाभिः ।

(त) यदिति । हे देव ! अग्ने ! यत् यस्मात् इयं सतीषु साध्वीषु प्रथमा अग्रगण्या सीता पौलस्त्यस्य रावणस्य गृहे उषिता कियत्कालं स्थिता अतएव शुद्ध्यर्थिनी सती त्वां प्रविशति, तत् तस्मात् ज्योतिः स्वं तेजः जलार्द्रोज्ज्वलं जलार्द्रम् आजलं सम्यक् मन्दं कुरु । चेत् यदि धर्मेण निदाघेन ध्यानाः ये अग्निकाष्ठाः तद्वत् मृदुलानि अति-

लवङ्गा । अहो ! देवदाणं वि सीदापक्खवादो अथवा सव्वो गुणेसु रज्जदि ण सरीरेसु (ट) ।

अथवा । अहो ! खलु भोः पतिव्रतामयं ज्योतिरनभिभवनीयं ज्योतिरन्तरैः (ठ)। यतः ।

प्रविशन्त्या चितावह्निं जानक्या परिशुद्धये ।
भेदः कोऽपि न निर्णीतः पयसः पावकस्य वा ॥९॥(ड)

हाहा ! किमपि निष्करुणचेता हिरण्यरेताः (ढ) ।

विशुद्धये प्रविष्टाऽसौ वैदेही हव्यवाहनम् ।
अभ्रंलिहानां ज्वालानां चक्रेण च तिरोहिता॥१०॥(ण)

---

(ट) अहो ! देवतानामपि सीतापक्षपातोऽथवा सर्वो गुणेषु रज्यते न शरीरेषु ।

---

कोमलानि एतस्याः अपि अङ्गानि दग्धानि त्वयेति शेषः, हे भगवन् ! शोधकः शुद्धिकारकस्त्वं संशुद्धये शुद्ध्यर्थं क नु कुत्र वसु वाञ्छसि ? तत्र शुद्ध्यर्थं गन्तव्यस्थानलोपः भविष्यतीति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(ठ) ज्योतिरन्तरैः अपरैः ज्योतिर्भिरित्यर्थः ।

(ड) प्रविशन्त्येति । परिशुद्धये विशुद्ध्यर्थं चितायाः ज्वलत्काष्ठनिचयस्य वह्निं मध्यं प्रविशन्त्या जानक्या सीतया पयसः जलस्य पावकस्य अग्नेश्च कोऽपि भेदः न निर्णीतः न निश्चितः जलवद् अग्नि-रनुभूत इति भावः ।

(ढ) हिरण्यरेताः अग्निः ।

(ण) विशुद्धये इति । विशुद्धये हव्यवाहनम् अग्निं प्रविष्टा असौ

चतुरा। (प) कंकेल्लिवेल्लिआवणदहणो पिक्करुणाणं पढमोदाहरणं हुदवहो। चतुरां प्रति। तदो तदो ? (१०)।

चतुरिका। सखि लङ्के! पतिक्कान्तासु (फ) च कतिपयोसु कालकलासु।

वह्नेः शुद्धिविधायिनो भगवतस्तेजोभिरत्युद्धतै-
र्ज्वालानामनलूयया विरचितां मौलिस्रजं बिभ्रती।
पादाङ्गुष्ठनखाग्रदत्तनयना नीरन्ध्रविन्यासत-
स्तोकालक्ष्यमुखी चितावलयतो द्राक् मैथिली निर्गता॥११॥(ब)

---

(१०) कङ्केलिकेलिकाननदहनो निष्करुणानां प्रथमोदाहरणं हुतवहः। ततस्ततः ?।

---

वैदेही सीता अभ्रंलिहानां गगनस्पर्शिनीनां ज्वालानां शिखानां समूहेन तिरोहिता अन्तर्नीता च।

(प) कङ्केलीनाम् अशोकानां केलिकाननस्य क्रीडोपवनस्यापि दहनः दाहकः। निष्करुणानां निर्दयानां प्रथमम् उदाहरणं दृष्टान्तभूतः हुतवहः अग्निः।

(फ) अतिक्रान्तासु गतासु कालकलासु अल्पक्षणेषु इत्यर्थः।

(ब) वह्नेरिति। शुद्धिविधायिनः शोधकस्य भगवतः वह्नेः अत्युद्धतैः अतिप्रबलैः तेजोभिः अपिरञ्जाध्याहार्यः। ज्वालानाम् अनलूयया अलिपङ्क्त्या विरचितां मौलिस्रजं शिरोदाम बिभ्रती धारयन्ती मैथिली पादाङ्गुष्ठस्य नखाग्रे दत्ते न्यस्ते नयने यया तादृशी नीरन्ध्रः अविरलः यः विन्यासः ज्वालानामवस्थानमिति यावत् तस्मात् स्तोकम् अल्पम् आलक्ष्यं दृश्यं मुखं यस्याः तथाभूता सती चितावलयतः अग्निमण्डलात् द्राक् झटिति निर्गता बहिर्गता। शार्दूलविक्रीडितं वृत्तम्।

आदौ न मध्ये नान्ते च सीताया हव्यलेहिनि ।
शुद्धस्येव सुवर्णस्य जातो वर्णविपर्य्ययः ॥ १२ ॥ (भ)

लङ्का । अणुचिदश्रारी हुदवहो जं जणअतणयासुद्धि-
कारणं भोदि (११) ।

अलका । सखि! (म) सर्वाङ्गहिरण्मयि ! यथा ।
शुद्धायाः क इवात्र शोधनविधिः ? स्वःसैन्धवीनामपां
पूतानां परिपूतये किमपरं ? तत्ते सखी मन्यते ।
लावण्यामृतसारणीसरणिभिर्निर्वाणरोचिर्लतो (य)
निर्दग्धुं कलयाऽपि हन्त ! न शिखी शक्तोऽभवन्मैथिलीम् ॥ १३ ॥

---

(११) अनुचितकारी हुतवहो यज्जनकतनयाशुद्धिकारणं भवति ।

---

(भ) नेति । सीताया हव्यलेहिनि अग्नौ शुद्धस्य सुवर्णस्येव वर्ण-
विपर्य्ययः वर्णस्य अन्यथाभावः मालिन्यमिति भावः आदौ न मध्ये न
अन्ते च न जातः ।

(म) सर्वाङ्गहिरण्मयि ! स्वर्णमयसर्वशरीरे इत्यर्थः लङ्कायाः स्वर्ण-
भूमित्वप्रसिद्धेरिति भावः ।

(य) शुद्धाया इति । अत्र जगति शुद्धायाः सत इति भावः ।
सीतायाः शोधनविधिः क इव ? पूतानां स्वतः शुद्धानां स्वःसैन्धवीनां
स्वर्गसिन्धुभवानाम् अपां मन्दाकिनीपयसामित्यर्थः परिपूतये विशुद्धये
अपरम् अन्यत् किं तत् ते तव सखी अहमिति भावः मन्यते ?
न किमपीत्यर्थः । शिखी अग्निः लावण्यामृतानां याः सारण्यः नद्यः
तासां सरणिभिः प्रवाहैः सीताया इति भावः निर्वाणाः शमिताः
रोचिर्लताः ज्वालानिचया यस्य तथाभूतः अतएव हन्त इति कलयापि
अंशतोऽपि ईषदपीत्यर्थः मैथिलीं निर्दग्धुं न शक्तोऽभवत् न शशाक ।
शार्दूलविक्रीडितं वृत्तम् ।

नेपथ्ये ।

योगीन्द्रश्च नरेन्द्रश्च यस्याः स जनकः पिता ।

वक्ता । ता किं तिस्सा (१२) ।

नेपथ्ये ।

सा शुद्धा रामगृहिणी वह्नौ दशरथस्नुषा ॥ १४ ॥ (र)

ततश्च ।

बद्धः सेतुर्लवणजलधौ क्रोधवह्नेः समित्त्वं
नीतं रक्षःकुलमधिगताः शुद्धिमन्तश्च दाराः ।
तेनेदानीं विपिनवसतावेष पूर्वप्रतिज्ञो
दिष्ट्याऽयोध्यां व्रजति दयिताप्रीतये पुष्पकेण ॥ १५ ॥ (ल)

तस्मात् (व)प्लवङ्गयूथपतयः ! सर्वे गोलाङ्गूलसेनानायकाः ! निःशेषाच्छभल्लचमूपालकाश्च ! महाराजसुग्रीवो वः समाज्ञाप-

---

(१२) तत् किं तस्याः ।

---

(र) योगिन्द्र इति । योगिनामिन्द्रः प्रवरश्च नरेन्द्रश्च सः प्रसिद्धो जनकः यस्याः पिता, सा दशरथस्य स्नुषा पुत्रवधूः रामगृहिणी सीता वह्नौ शुद्धा ।

(ल) बद्ध इति । लवणजलधौ सेतुः बद्धः, रक्षसां कुलं क्रोधवह्नेः क्रोधाग्नेः समित्त्वं काष्ठत्वं दाह्यत्वमिति भावः । नीतं राक्षसा निहता इति भावः । शुद्धिमन्तः अग्निविशुद्धाश्च दाराः पत्नी अधिगताः प्राप्ताः । तेन हेतुना इदानीं विपिनवसतौ वनवासे दिष्ट्या भाग्येन पूर्णप्रतिज्ञः एषः रामः दयितायाः सीतायाः प्रीतये सन्तोषाय पुष्पकेण तदाख्येन विमानेन अयोध्यां व्रजति गच्छति मन्दाक्रान्ताछन्दः ।

(व) प्लवङ्गयूथपतयः ! वानरसेनापतयः ! गोलाङ्गूलसेनानायकाः !

यति यदुत सज्जीभवन्तु भवन्तस्त्रिभुवनैकमङ्गलकलसेन रघुवंशमुक्तामणिना क्षात्रधर्मरक्षाविधिसिद्धमन्त्रेण रामदेवेन सममयोध्यां गन्तुम्।

सम्प्रेषितश्च हनुमान् भरतस्य पार्श्वं
लङ्काङ्गनाचकितनेत्रनिरीक्षितश्रीः।
यात्येष वारिनिधिलङ्घनदृष्टसारो
राज्याभिषेकसमयोचितकार्य्यसिद्ध्यै॥ १६॥ (ग)

अलका। तदावामपि रामभद्रदर्शनसुखमनुभवावः।

इति निष्क्रान्ते। विष्कम्भः।

ततः प्रविशतो विमानयानेन रामलक्ष्मणौ सीतात्रिजटे सुग्रीवविभीषणौ च।

रामः। सीतां प्रति।

---

गोलाङ्गूलानां वानरविशेषाणां सेनानायकाः सेनापतयः॥ निःशेषाः सर्वे ऋक्षभल्लानां भल्लूकानां चमूपालकाः सेनाध्यक्षाः॥ त्रिभुवनस्य एकः अद्वितीयः मङ्गलकलसः माङ्गलिकपूर्णकुम्भः तेन। रघुवंशस्य मुक्तामणिना मौक्तिकरत्नेन उज्ज्वलकारिणेत्यर्थः। क्षात्रधर्मस्य रक्षाविधेः पालनव्यापारस्य सिद्धः फलवान् मन्त्रः तेन।

(ग) सम्प्रेषित इति। वारिधेः समुद्रस्य लङ्घनेन दृष्टः सारः बलं सामर्थ्यमित्यर्थः यस्य तादृशः अतएव भरतस्य पार्श्वं सम्प्रेषितश्च एष हनुमान् लङ्काङ्गनाभिः राक्षसीभिरित्यर्थः चकितनेत्रं पुनरयं किं करोति वेति सभयनयनं यथातथा निरीक्षिता दृष्टा श्रीः यस्य तादृशः सन् राज्याभिषेकस्य समये उचितानि यानि कार्य्याणि, तेषां सिद्ध्यै सम्पादनाय याति गच्छति। वसन्ततिलकं वृत्तम्।

यच्चक्षुः शशिशेखरस्य धनदाल्लङ्केश्वरेणाहृतं
तन्मन्याच्च विभीषणे परिहृतं दत्तं च तेनाऽपि नः ।
किञ्चिन्न्यञ्चितकन्धरेण शिरसा कृत्वा प्रसन्नां दृशं
तद्भक्त्या ललिताङ्गि ! पुष्पकमिदं वन्दस्व मोदस्व च ॥ १७ ॥ (ग)

सीता वन्दते ।

रामः । पश्चादवलोक्य ।

यस्यामजर्जरितचन्द्रिकमर्कपादै-
स्त्रासान्निशाचरपतेरुषसि व्यभासि ।
व्यावर्त्य वक्त्रकमलं कमलाक्षि ! पश्य
लङ्केति तां नवविभीषणराजधानीम् ॥ १८ ॥ (घ)

---

(ग) यदिति । लङ्केश्वरेण रावणेन शशिशेखरस्य हरस्य चक्षुः धनदात् यत् आहृतं निर्जित्य लब्धं तस्य मन्यात् नाशात् यत् विभीषणे परिहृतं विभीषणेन लब्धमिति भावः तेनापि विभीषणेनापि नः अस्मभ्यं दत्तञ्च, हे ललिताङ्गि चार्वङ्गि ! किञ्चित् ईषत् न्यञ्चिता नता कन्धरा ग्रीवा यस्य तादृशेन शिरसा प्रसन्नां दृशं कृत्वा प्रसन्न-नयनेन इत्यर्थः भक्त्या तदिदं पुष्पकं विमानरत्नं वन्दस्व मोदस्व च आनन्दमनुभव च । शार्दूलविक्रीडितं वृत्तम् ।

(घ) यस्यामिति । हे कमलाक्षि ! यस्यां लङ्कायाम् अर्कस्य सूर्य्यस्य पादैः किरणैः पादा रश्म्यङ्घ्रितुर्य्यांशा इत्यमरः । निशाचरपतेः रावणस्य त्रासात् भयात् उषसि प्रभाते अजर्जरिता अक्षीणा चन्द्रिका यस्मिन् तद् यथा तथा व्यभासि विभासितं विराजितमित्यर्थः । सूर्य्यः उषसि तथा रश्मीन् विस्तारयितुं समर्थ आसीत् यथा रावणाभिमतचन्द्रिकायां मालिन्यं न स्यादिति भावः । वक्त्रकमलं

सीता । अवलोक्य । एसा (छ) सा विणआणन्दणसमा-णीदमेरुमहाजम्बूसाहासमुप्पसा सुणीअदि (१३) ।

रामः । आम् मैथिलि ! एवं पुराविद आचक्षते । पुरो दर्शयन् ।

अग्रे विलोकय कृशाङ्गि ! कुतूहलेन
दत्त्वा दृशं तरुणकेतकपत्रदीर्घाम् ।
नानास्त्रमन्त्रणपरं कपिराक्षसानां
युद्धं कचाकचि तलातलि च प्रवृत्तम् ॥ १८ ॥(च)

अन्यतो दर्शयन् ।

अत्रासीत् फणिपाशबन्धनविधिः शक्त्या भवद्देवरे
गाढं वक्षसि ताड़िते हनुमता द्रोणाद्रिराहृतः ।

---

(१३) एषा सा विनतानन्दनसमानीतमेरुमहाजम्बूशाखासमु-त्पन्ना श्रूयते ।

---

सुखपद्मं व्यावर्त्त्य उत्तोल्य लङ्केति तां नवविभीषणराजधानीं पश्य अवलोकय । वसन्ततिलकं वृत्तम् ।

(छ) विनतानन्दनेन गरुड़ेन समानीता मेरोः सुमेरोः महा-जम्बुवृक्षस्य शाखया समुत्पन्ना । पुरा किल गरुत्मान् मेरोः जम्बु-वृक्षस्य शाखामानीय इमां लङ्कां विरचितवानिति पुराणम् ।

(च) अग्रे इति । हे कृशाङ्गि ! तरुणं नवं यत् केतकपत्रं तद्वत् दीर्घाम् आयतां दृशं दत्त्वा अग्रे पुरतः कुतूहलेन कौतुकेन कपिरा-क्षसानां नानास्त्रमन्त्रणपरं विविधशस्त्रवर्षणसमन्वितं कचाकचि केशा-केशि तलातलि चपेटाचपेटि च प्रवृत्तं युद्धं युद्धक्षेत्रं विलोकय । वसन्ततिलकं वृत्तम् ।

दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं लम्भितः
केनाप्यत्र मृगाक्षि! राक्षसपतेः कृत्ता च कण्ठाटवी॥२०(क)

सीता विहस्य। अज्जउत्तो जाणादि को उण एसो (१४)।

रामो लज्जते।

सर्वे खर्वन्ते।

सुग्रीवः।

लङ्केन्द्रानुज एष मैथिलि! महान् योऽयं कबन्धः पुरो
वारां भर्त्तरि शैलसेतुरपरः प्रोतो यथा राजते।
निद्रालोरतितुन्दिलस्य श्वसतः कौम्भस्य घोणास्वजा-
मोघेनास्य भयस्पृशोऽपि निभृतं स्वर्वासिनो हासिताः॥२१(ख)

---

(१४) आर्यपुत्रो जानाति कः पुनरेषः।

---

(क) अत्रेति। हे मृगाक्षि! अत्र फणिपाशबन्धनविधिः नाग-पाशास्त्रबन्धनम् आसीत् अत्र भवत्या देवरे लक्ष्मणे शक्त्या तदाख्येन अस्त्रेण वक्षसि अवच्छेदे समप्री। गाढं दृढं यथा तथा ताड़िते प्रहृते रावणेनेति शेषः हनुमता द्रोणाद्रिः गन्धमादनगिरिः आहृतः आ-नीतः। अत्र दिव्यैः लक्ष्मणस्य शरैः इन्द्रजित् लोकान्तरं लम्भितः नीतः। अत्र केनापि जनेन राक्षसपतेः रावणस्य कण्ठाटवी कण्ठ-काननं कृत्ता छिन्ना च स्वमुखेन आत्मोत्कर्षस्य अनौचित्यात् रामेणे-त्यत्र केनापीति भङ्ग्या निबद्धमिति ध्येयम्। शार्दूलविक्रीडितं वृत्तम्।

(ख) लङ्केन्द्रानुज इति। हे मैथिलि! पुरः अग्रतः योऽयं महान् कबन्धः छिन्नशिराः कायः वारां भर्त्तरि वारिधौ प्रोतः बद्धः अपरः शैलसेतुर्यथा पर्वतनिर्मितसेतुरिव राजते, एष लङ्केन्द्रस्य राव-

ते च देवा वि(ग)प्पहसणणट्ट पेक्खाविदा(१५)।

कश्चित् स्थित्वा पुष्पकं प्रति। हंहो विमानराज!

धामविधवर्त्तिनीं गतिं किञ्चिदुच्चैर्भव कुतूह-

लो दिव्यदर्शनव्यतिकरस्य।

नाटितकेन।

यथा रोहति बद्धवेगं

नः शिरस्तां पुष्पकमानताङ्गि!।

म्बुधीनां वलयैर्विशालै-

स्तथा तथा सङ्कुचतीव पृथ्वी ॥ २२ ॥ (ङ)

---

(१५) आर्य्यपुत्रेण देवा अपि प्रहसननृत्यं प्रेक्षापिताः।

---

यस्य अनुजः कुम्भकर्णः। निद्रालोः अतिनिद्राशयस्य अतितन्द्रिलस्य अतिस्थूलोदरस्य खलतेः निष्क्रेशशिरसः क्षीबस्य मत्तस्य अस्य शोणाया नासिकाया असृजां शोणितानां नासाच्छेदभवानामिति भावः स्रोतेन प्रवाहेण भयस्पृशोऽपि भीता अपि स्वर्गवासिनः देवाः निभृतं गूढं हासिताः। शार्दूलविक्रीडितं वृत्तम्।

(ग) प्रहसननृत्यं प्रहसनं हास्यरसं नाटकं तस्य नृत्यं नर्त्तनं प्रेक्षापिताः दर्शिताः।

(घ) वसुधामविधवर्त्तिनीं पृथिवीसमीपचारिणीम्। दिव्यानां वस्तूनां दर्शनस्य व्यतिकरः सम्बन्धः तस्य।

(ङ) यथायथेति। हे आनताङ्गि! बद्धवेगं धृतरयं पुष्पकं यथा यथा व्योम्नः अन्तरीक्षस्य शिखाम् अग्रं रोहति उत्पतति तथा तथा पृथ्वी महाम्बुधीनां महासमुद्राणां विशालैः महद्भिः वलयैः

सीतां प्रति । सुरचारणकिन्नरविद्याधरसङ्कुलं गगन-
मीक्षतां मैथिली ।

प्रविश्य विद्याधरः । रामभद्र ! महेन्द्रादेशादेष रत्नशेखरो
विद्याधरकुमारस्ते दिव्यचरितं व्यनक्ति ।

रामभद्रः । अहो ! महान् प्रसादोऽस्मासु देवराजस्य ।

रत्नशेखरः । सीतां प्रति ।

बन्धे वारिनिधेः कृतेऽपि गिरिभिः सोढः शिरोमण्डल-
च्छेदो राक्षसपुङ्गवेन समरे यस्याः किमन्यत् कृते ।
कीदृक् सा जनकात्मजेति रभसाद्विद्याधरैर्द्वन्द्वशः
पाणिच्छत्रनिवारितार्ककिरणैस्त्वं कौतुकाद् दृश्यसे २३ (च)

सीता । अपवार्य ।

विद्याधराः सहचरीचतुरोक्तिमार्गे
रागस्पृशो गगनगर्भयथेष्टचेष्टाः ।

---

मण्डलैः सह सङ्घतीव खर्वीभवतीव दूरपतितत्वात् क्षुद्रवद् विभातीति भावः । उपजातिवृत्तम् ।

(च) बन्धे इति । वारिनिधेः समुद्रस्य बन्धे कृतेऽपि समुद्रबन्धनेऽपि तस्य चैतन्योदयो नाभूदित्यपि शब्दार्थः । यस्याः कृते निमित्तं राक्षसपुङ्गवेन रावणेन समरे युद्धे शिरोमण्डलच्छेदः सोढः दशशिरांसि छिन्नानि सोढानि इत्यर्थः किमन्यत् किमपरं वक्तव्यमिति शेषः सा जनकात्मजा कीदृक् इति रभसात् वेगात् द्वन्द्वशः विद्याधरैः विद्याधरमिथुनैरित्यर्थः पाणिभ्यां छत्रा अतएव निवारिताः अर्ककिरणाः आतपाः यैः तथाभूतैः सूर्यकिरणान् हस्ताभ्यामाच्छादयद्भिरित्यर्थः त्वं दृश्यसे अवलोक्यसे । शार्दूलविक्रीडितं वृत्तम् ।

निस्तल्पमल्पसमयं तिबिडाभ्रखण्ड-

कुञ्जान्तरेष्विह रताद्भुतमाद्रियन्ते ॥ २४ ॥ (छ)

रामः । प्रिये पृथ्वीपुत्रि ! (ज)नीरन्ध्रबन्धमपि वारिवाह-
व्यूहं द्विधा विधाय पुष्पकं प्रवर्त्तते विलोक्य विहस्य ।

क्षिप्तं त्वया काञ्चनकान्तिदाम

यन्मत्तवारणमुपेत्य कुतूहलिन्या ।

तेनामुना जलधरोऽयमरालकेशि !

सद्यस्तडिद्वलयवानिव पश्य जातः ॥ २५ ॥ (झ)

अपि च ।

हस्ते त्वया हारिणि हारयष्टिभि-

र्विमानवातायनतः कुतूहलात् ।

---

(छ) विद्याधरा इति । विद्याधराः देवयोनिविशेषाः सहच-रीणां स्वप्रियाणां विद्याधरीणां चतुराणां सविभ्रमाणाम् उक्तीनां वचनानां मार्गे पथि वचनचातुर्य्यामिति भावः । रागस्पृशः अनुरागा-विष्टाः अतएव गगनगर्भेषु गगनाभोगेषु यथेष्टचेष्टाः स्वेच्छाविहा-रिणः सन्तः इह एषु निविडानि घनानि अभ्रखण्डान्येव मेघशकला-न्येव कुञ्जान्तराणि भित्त्यभ्यन्तरप्रदेशाः तेषु अल्पसमयं किञ्चित्कालं निस्तल्पं शय्यारहितम् अतएव रताद्भुतम् अद्भुतं सुरतम् आद्रियन्ते सेवन्ते । वसन्ततिलकं वृत्तम् ।

(ज) नीरन्ध्रबन्धं निविडबन्धं वारिवाहव्यूहं मेघनिचयम् ।

(झ) क्षिप्तमिति । हे अरालकेशि ! कुटिलचिकुरे ! त्वया कुतू-हलिन्या कौतुकवत्या मत्तवारणं मत्तगजमुपेत्य प्राप्य मत्वेति यावत् यत् काञ्चनकान्ति कनकप्रभं दाम माल्यं क्षिप्तम्, तेन अमुना दाम्ना अयं जलधरः मेघः सद्यः सहसा तडिद्वलयवान् विद्युन्मण्डलशालीव जातः पश्य अवलोकय । इन्द्रवज्रावृत्तम् ।

कृते विदध्यात्सदृशीं प्रतिक्रिया-
मितीव धाराम्बु घनो निरस्यति ॥ २६ ॥ (ञ)

सीता। अज्जउत्त ! किं उण एदं(ट)करिदन्तच्छेदपण्डुरं पुव्वपच्छिमसिन्धुबन्धोभअपेरन्तं तदुत्तरदिसाकुहरपूरणधुरन्धरं दीसदि (१६)

रत्नशेखरः। जनकनन्दिनि ! किमत्र रावणारिणा(ठ) रत्नशेखरं पृच्छ। हिमालयः खल्वयम्।

सीता। किं जो सो(ड)विन्दारअविन्दवन्दिदहरचरण-

---

(१६) आर्य्यपुत्र ! किं पुनरिदं करिदन्तच्छेदपाण्डुरं पूर्वपश्चिमसिन्धुबन्धोभयपर्य्यन्तं तदुत्तरदिशाकुहरपूरणधुरन्धरं दृश्यते।

---

(ञ) कृत इति। यथा कृतज्ञत्वात् विमानस्य वत् वातायनं गवाक्षः तस्मात् हारयष्टिभिः हारैरपि मनोहरे कृते मेघस्यार्गणां तदुपरि निक्षिते सति घनः मेघः सदृशीं प्रतिक्रियां विदध्यात् कुर्य्यात् इतीव धाराम्बु वारिधारा निरस्यति उद्गिरति। तव सर्वमवलम्बमान इव वारिधारया तव कृतमभिवर्षतीति भावः। वंशस्थविलं वृत्तम्।

(ट) करिदन्तच्छेदवत् हस्तिदशनखण्डमिव पाण्डुरं शुभ्रं पूर्वपश्चिम सिन्धुबन्धोभयपर्य्यन्तं पूर्वापरसमुद्रावगाढोभयप्रान्तं उत्तरदिशायाः कुहरस्य अभ्यन्तरभागस्य पूरणे व्यापने धुरन्धरं समर्थतरं तदिदं किं वस्तु इति शेषः।

(ठ) रावणारिणा रामेण पृष्टेन इति शेषः। रत्नशेखरं तदाख्य विद्याधर कुमारम्।

(ड) वृन्दारकेति। वृन्दारकवृन्दैः देवगणैः वन्दितस्य अर्चितस्य

डिबिम्बचुंबिदसिलुच्चङ्गो (ढ) गङ्गासोत्तसीमन्तिदणिअंबो हेरम्बदन्तमुसलुल्लिहिदमेहलावम्भो णिवडिदहरवसहवरखुरखण्डिदधरणिपुठ्ठो चित्तसिहण्डिमण्डलावचिदमन्दारकुसुमप्पसरो गोरीगुरुत्ति णिव्विघ्घमग्घम्घ णिदो सुणीअदि (१७)।

रत्नशेखरः। स एवायम्।

श्रीकण्ठश्वशुरः स एष भगवान् मेनापतिः पर्वतः
पुत्रीवानुमया पुरः किमपरं हेरम्बमातामहः।

---

(१७) किं य एष वृन्दारकवृन्दवन्दितचन्द्रवरचप्रतिबिम्बचुम्बितशिलोच्चङ्गो गङ्गास्रोतःसीमन्तितनितम्बो हेरम्बदन्तमुसलोल्लिखितमेखलावम्भो निपतितहरवृषभवरखुरखण्डितधरणिपृष्ठचित्रशिखण्डिमण्डलावचितमन्दारकुसुमप्रसरो गौरीगुरुरिति निर्विघ्नमर्घार्चितः श्रूयते।

---

चन्द्रस्य वरप्रतिबिम्बेन प्रतिबिम्बेन चुम्बितः स्पृष्टः शिलोच्चङ्गः प्रस्तरतलं यस्य तादृशः।

(ढ) गङ्गेति। गङ्गायाः स्रोतसा सीमन्तितः नितम्बः मध्यभागः यस्य तथाभूतः। हेरम्बेति हेरम्बस्य गणेशस्य दन्तमुषलेन मुषलाकृतिना दन्तेन उल्लिखितः उद्घृष्टः मेखलावम्भः कटिवम्भः यस्य तथाविधः। निपतितेति। निपतितस्य निरुदस्य हरवृषभस्य शिववाहनस्य वरैः श्रेष्ठैः खुरैः खण्डितं दलितं धरणीपृष्ठं भूमिभागः यस्य तादृशः। चित्रेति चित्रशिखण्डिनां मयूराणां मण्डलैः गणैः अवचितः मन्दारकुसुमानां देवतरुविशेषपुष्पाणां प्रसरो यस्मिन् तथाभूतः। निर्विघ्नं निर्बाधं सर्वदाहिंसाततयेतिभावः अर्घार्चितः अर्घार्हः सर्वजनादरणीय इति भावः।

यस्यायं महिमा यदत्र शमिनः श्यामाकमुष्टिम्पचाः
स्वास्वेवाश्रमभूषु दिव्यवपुषः क्रीडन्ति कामाश्रया ॥२७॥(थ)

अपिच।

स्त्रीणां जन्ममहातरोः किमपरं सौभाग्यलाभोत्सव-
प्राप्तेरधिदैवतं गिरिसुता साप्यस्य कुञ्जान्तरे।
एकाङ्गुष्ठनिपीडितक्षिति तपस्तप्त्वा सहस्रं समा-
श्चन्द्रापीडशरीरसंविभजनप्रेमाणमापद्यत ॥ २८ ॥ (द)

सीता। अज्जउत्त! इधज्जेव अधधनारीसरो हरो संवुत्तो (१८)।

---

(१८) आर्य्यपुत्र! इहैवार्द्धनारीश्वरो हरः संवृत्तः।

---

(थ) श्रीकण्ठेति। पुरः अग्रतः स एषः उमया पुत्रीवान् गौरीदुहितृक इत्यर्थः हेरम्बस्य गणेशस्य मातामहः मेनायाः पतिः श्रीकण्ठस्य हरस्य श्वशुरः पर्वतः। किमपरं वक्तव्यमितिशेषः। यस्य पर्वतस्य अयं महिमा एतादृक् माहात्म्यं यत् अत्र पर्वते श्यामाकमुष्टिम्पचाः श्यामाकधान्यमुष्टिकृतहव्यः शमिनः तापसाः स्वासु एव आश्रमभूषु दिव्यवपुषः दिव्यदेहाः सन्तः कामाश्रया मदनादेशेन क्रीडन्ति। शार्दूलविक्रीडितं वृत्तम्।

(द) स्त्रीणामिति। स्त्रीणां जन्म एव महातरुः तस्य सौभाग्यं स्वामिवाल्लभ्यं तस्य लाभ एव उत्सवः स एवमितिशेषः किमपरं नान्यत् किमपीत्यर्थः। गिरिसुता पार्वती तस्य फलस्य प्राप्तेः अधिदेवता अधिष्ठात्री देवी गिरिसुताप्रसादमन्तरेण स्त्रीणां सौभाग्यस्य अप्राप्तेरितिभावः। सापि गिरिसुता अस्य पर्वतस्य कुञ्जान्तरे कुञ्जमध्ये एकाङ्गुष्ठेन निपीडिता क्षितिः यस्मिन् तद् यथा तथा सहस्रं समाः वत्सरान्

रत्नशेखरः । आं (थ) वासुन्धरेयि !

अत्रोढायां गिरिदुहितरि प्रीतिमानिन्दुमौलिः
प्रेमावेशाज्झटिति भगवानर्द्धनारीश्वरः सन् ।
मन्दं देवैः प्रणतचरणः प्रत्यभिज्ञानलेशा-
द्वामे पाणौ तदितरकरं ताडयित्वा जहास ॥ २८ ॥ (द)

रामः । किमुच्यते सर्वाश्चर्य्यनिधानं हि गौहार-महागिरिः ।

रत्नशेखरः । यथाम्नातं विराधविध्वंसनेन ।

अस्मिन्नूढा मृडानी द्युसरिदिह धृता दन्तिदैत्योऽत्र भिन्न-
श्छिन्नं ब्राह्मं शिरोऽस्मिन्निह गुरुनिधने निर्मिता मातरश्च ।

---

नयः तस्या चन्द्रापीडस्य हरस्य शरीरं संविभज्यते अनेनेति तथाभूतं प्रेमाणम् आपद्यत प्राप्नवती प्रेम्णा हरस्य अर्द्धाङ्गहारिणी अभूदिति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(थ) वासुन्धरेयि ! वसुन्धराया अपत्यं स्त्रीति तत्सम्बुद्धौ ।

(द) अत्रेति अत्र पर्वते गिरिदुहितरि पार्वत्यां ऊढायां परिणीतायां सत्यां भगवान् इन्दुमौलिः हरः प्रीतिमान् प्रेमावेशात् प्रणयातिरेकात् अर्द्धनारीश्वरः अर्द्धांशेन नारी अर्द्धांशेन ईश्वरः पुरुषः युगलरूपधारी सन् देवैः मन्दं क्रमशः प्रणतचरणः वन्दितपदः प्रत्यभिज्ञानस्य पूर्वानुभवस्य लेशात् अल्पत्वात् कारणादितिभावः । वामे पाणौ नार्य्याः करे इति भावः तदितरकरं दक्षिणं हस्तं पौरुषमितिभावः ताडयित्वा पूर्वं यथा आनन्देन हस्ताभ्यां वाद्यमकरोत् तथेतिभावः । जहास [illegible] अप्रतिभतां हासव्याजे जुगोपेति भावार्थः । मन्दाक्रान्ता वृत्तम् ।

दृक्श्रोत्रप्रीतिपेयं दलितसुरपुरीदुर्गमद्वारमुद्रं (ध)
सिद्धानां पूर्वसिद्धैरिति हरचरितं वर्ण्यते चित्रमत्र ॥२०॥

सीता । इह हिमवन्तमहीहरे चन्दसेहराहिं मअरध-धअविहण्णं (न) रहुउलमङ्गलरीआओ पसंसंतीओ आसि ता कहिं उण तम् (१९) ।

---

(१९) इह हिमवन्महीधरे चन्द्रशेखरान्मकरध्वजनिर्दहनं रघुकुल-मङ्गलरिकाः प्रशंसन्त्य आसन् तत् क्व पुनस्तत् ।

---

(ध) अस्मिन्निति । अस्मिन् पर्वते भवानी पार्वती अदा परि-णीता हरेणेति सर्वत्र योज्यम् । इह द्युसरित् गङ्गा धृता शिरसीति शेषः । अत्र दन्तिदैत्यः गजासुरः भिन्नः दलितः । अस्मिन् ब्राह्मं शिरः छिन्नं पूर्वं ब्रह्मणः पञ्च शिरांसि आसन् ततः केनचित् कारणेन भगवान् हरः क्रुद्धः तेषामेकं शिरश्चिच्छेदेति पुराणकथात्रानुसन्धेया । इह गुरोः श्वशुरस्य दक्षस्य निधने निधनार्थमित्यर्थः मातरः ब्राह्मी-त्याद्याः निर्मिताः सृष्टाश्च । अत्र सिद्धानां पूर्वसिद्धैः अतिपुरातनैः सिद्धपुरुषैः दृशां चक्षुषां श्रोत्राणाञ्च प्रीत्या आनन्देन पेयं दृश्यं श्राव्यञ्च इत्यर्थः दलिताः खण्डिताः सुरपुरीणां तिसृणामसुरनगरीणां दुर्गमा द्वारमुद्रा द्वारार्गलाः यस्मिन् तादृशं चित्रम् अद्भुतम् इति पूर्वोक्तं हरचरितं वर्ण्यते कीर्त्यते गीयते वा । स्रग्धरावृत्तम् ।

(न) रघुकुलमङ्गलरिकाः रघुकुलस्य महामाननीयाः अस्माकं मातृ इति भावः । क्व कुत्र ? । मरकतेति मरकतमणीनां मरीचि-वीचिभिः मयूखप्रभाभिः । वंशकरीराणां वंशाङ्कुराणां नीलका-न्तिभिः श्यामप्रभाभिः । परिकल्पितं रचितमिव अनूरुसारथेः सूर्यस्य रथयोजितानां तुरङ्गाणां हरितामितिभावः रोमराजिभिः श्यामवर्ण-लोमनिचयैः । शितिकण्ठानां मयूराणां याः कण्ठमण्डल्यः ताभिरिव

रत्नशेखरः । यदिदं निर्मितमिव मरकतमणिमरीचिवीचि-
भिराच्छादितमिव वंशकरीरनीलकान्तिभिः परिक-
ल्पितमिवानूरुसारथिरथतुरङ्गमरोमराजिभिरुत्पादितमिव
शितिकण्ठकण्ठमण्डलीमेचकरुचिसब्रह्मचारिभिरास्पदं
भगवतो वृषभध्वजस्य ।

एतत्सुन्दरि । देवदारुविपिनं शैलस्य गौरीगुरो-
रस्मिन् वासवशासनेन रचयन् सद्यः समाधिक्रियाम् ।
प्रत्यक्षं गिरिजन्मनः सुरजने स्तोत्राय सञ्जाञ्जलौ
रुद्रस्याम्बकपावकेन मदनो वेगादनङ्गीकृतः ॥ २१ ॥

सीता । परमेस्सरसरीरपरिक्खिदतिक्खविसिहस्स मअरधअ-
अस्स कदमो उण णिवेसो (२०) ।

---

(२०) परमेश्वरशरीरपरीक्षिततीक्ष्णविशिखस्य मकरध्वजस्य कतमः
पुनर्निवेशः ।

---

मेचकाः श्यामलाः ये रुचिसब्रह्मयाः प्रभावल्यः ताभिः तदभिरुप-
लक्षित मिति शेषः ।

(प) एतदिति । हे सुन्दरि ! गौरीगुरोः शैलस्य एतत् यदित्य-
ध्याहार्य्यं देवदारुविपिनं देवदारुवनं अस्तीति शेषः अस्मिन् मदनः
कामः वासवस्य इन्द्रस्य शासनेन आदेशेन समाधिक्रियां हरस्य
समाधिव्यापारं रचयन् प्रतिघ्नन् गिरिजन्मनः पार्वत्याः प्रत्यक्षं
समक्षं सुरजने देववृन्दे स्तोत्राय सञ्जाञ्जलौ स्तोत्रं कुर्वत्यपीतियावत्
रुद्रस्य अम्बकपावकेन नेत्राग्निना वेगात् सद्यः सपदि अनङ्गीकृतः
भस्मीकृतः । शार्दूलविक्रीडितं वृत्तम् ।

(फ) परमेश्वरस्य शरीरेण परीक्षितम् अनुभूतं तीक्ष्णं विशिखं शरः
यस्य तादृशस्य निवेशः स्थानम् ।

रत्नशेखरः ।

एतन्मैथिलि ! मन्मथाश्रमपदं रत्या स्वयं वर्द्धितै-
लीलाशाखिभिरञ्चितान्तिकमितः केलीशकुन्ताश्रयैः ।
शृङ्गारश्च रसो मधुश्च समयो देवश्च ताराधिपो
रागः पञ्चमसंज्ञकश्च ललितैस्ते यत्र सिद्धा व्रतैः ॥२२॥ (व)

सीता । सकौतुकम् । (भ) पुञ्जीकिदअज्जउत्तकित्तिसंता-
णाणुआरी रासीभूदहरट्टहाससरिससंणिवेसो पलअाणल-
पिण्डीकिदक्खीरसमुद्ददुद्धुक्करप्पडिरूवो कदरो उण एस
महिहरो (२१) ।

---

(२१) पुञ्जीकृतार्य्यपुत्रकीर्त्तिसन्तानानुकारी राशीभूतहराट्टहासस-
दृशसन्निवेशः प्रलयानलपिण्डीभूतक्षीरसमुद्रदुग्धोत्करप्रतिरूपः कतरः पुन-
रेष महीधरः ।

---

(व) एतदिति । हे मैथिलि ! इतः अस्मिन् प्रदेशे रत्या काम-
पत्न्या स्वयं वर्द्धितैः केलीशकुन्तानां क्रीडापक्षिणां आश्रयैः आश्रित-
क्रीडाशकुन्तैरित्यर्थः लीलाशाखिभिः केलितरुभिः अञ्चितं शोभितम्
अन्तिकं यस्य तादृशम् एतत् दृश्यमानमितिभावः मन्मथस्य कामस्य
आश्रमपदं यत्र शृङ्गारः रसश्च, मधुः वसन्तः समयश्च, देवः
ताराधिपः चन्द्रश्च, पञ्चमसंज्ञकः पञ्चमनामा रागश्च ते सर्वे
परिचारका इति शेषः ललितैः मनोहरैः व्रतैः नियमैः सिद्धाः सिद्धिं
गताः सर्व्वेषां मनांसि हरन्तीतिभावः । शार्दूलविक्रीडितं वृत्तम् ।

(भ) पुञ्जीकृतेति पुञ्जीकृतस्य राशीकृतस्य आर्य्यपुत्रकीर्त्तिसन्तानस्य
राघवयशस्तोमस्य अनुकारी सदृशः । राशीभूतस्य हराट्टहासस्य सदृशः

रामः । रुद्रावासः कैलास इति मे तर्कः ।

रत्नशेखरः । यथावगतं ताडकाताडनेन ।

कैलासः स्फटिकाद्रिरेष भगवानेनं भवानीसखः
सख्यादैलबिलस्य भक्तिजनितान्नित्यं शिवः सेवते ।
किञ्चास्मिन्ननुमेखलं नखमुखच्छेदैः समावेद्यते
हेलोत्पाटनपूर्वकालनिहितैर्लङ्कापतेर्विक्रमः ॥ २३ ॥ (म)

अत्र च ।

कैलासाचलकर्णिकेयमलका नेत्रैकपेया पुरी
देवस्य द्रविणप्रभोः किमपरं शृङ्गारसारस्य भूः ।
यस्यामस्तमितेऽथ राक्षसपतौ यक्षाङ्गनानाममी
वर्त्तन्ते प्रतिचत्वरं प्रतिगृहं प्रत्यापणं चोत्सवाः ॥ २४ ॥ (य)

---

निवेशः यस्य तादृशः । प्रलयानलेन कल्पान्तवह्निना पिण्डीभूतस्य घनीभूतस्य क्षीरसमुद्रस्य यः दुग्धानामुत्करः समूहः तस्य प्रतिरूपः अनुरूपः ।

(म) कैलास इति । एषः स्फटिकाद्रिः स्फटिकमणिमयः अचलः कैलासः, भगवान् भवानीसखः शिवः भक्तिजनितात् ऐलविलस्य कुबेरस्य सख्यात् हेतोः एनम् अचलं नित्यं सेवते आश्रयति । किञ्च अस्मिन् अनुमेखलं प्रतिमध्यभागम् हेलया अवलीलया उत्पाटनेन पूर्वकालं प्राक् रावणकर्त्तृककैलासोद्धरणे पर्वे इत्यर्थः निहितैः कृतैः नखमुखानां नखाग्राणां छेदैः खण्डैः लङ्कापतेः रावणस्य विक्रमः समावेद्यते सम्यक् विज्ञाप्यते । शार्दूलविक्रीडितं वृत्तम् ।

(य) कैलासेति । कैलासाचलस्य कर्णिका कर्णावतंसविशेषभूता नेत्रैकपेया दर्शनमनोरमा शृङ्गारसारस्य भूः क्षेत्रं विलासैकभूमिरिति भावः देवस्य द्रविणप्रभोः धनपतेः कुबेरस्य पुरी इयम् अलका नाम ।

राम: । दूरोऽवलोक्य । क: पुनरस्तमिताखिलककुबन्ध: सलिलस्कन्ध: (र) ।

रत्नशेखर: । उत्पत्तिसदनं(ल)कलहंसवयसामाकर: कनकारविन्दानां विलासदीर्घिका देवदेवस्य समवगाढतरान्तरसमदमहोत्सवा हेरम्बेण रभसाचान्तवीतवीचिभङ्गं गगनाङ्गणपरिभ्रमिणा चन्द्रहरिणेन लीढलीढसीकरकणं कूलकुलायकारिणा कुमारमयूरेण प्रसारितकराकृष्यमाणार्णस्कं करिमकरत्रासादैरावतेभसेवितग्राहलोपकण्ठं नीलकण्ठवृषेण समध्यासितपरिसरं सन्तानकारण्ये नारायणवराहेण वर्णितवैभवं वैकुण्ठकमठेनाभिलषितगर्भं पद्मनाभमहामत्स्येन नीतनीरं त्रिसन्ध्यमरुन्धतीकराकलितकमलिनीपत्रपात्रैरामन्त्रितपुरन्दरमानसं मानसं नाम दिव्यं सर: ।

सीतां प्रति ।

---

किमपरं वक्तव्यमस्या इति शेष: अद्य राक्षसपतौ अस्तमिते निहते यशाम् अलकायां प्रतिचत्वरम् अङ्गने अङ्गने प्रतिमन्दिरं मन्दिरे मन्दिरे प्रत्यापणम् आपणे आपणे च यक्षाङ्गनानाम् उत्सवा: वर्तन्ते । शार्दूलविक्रीडितं वृत्तम् ।

(र) अस्तमितेति । अस्तमिता: तिरोभूता अखिलानां ककुदां व्योमवस्तूनां बन्धा: प्रसरा: येन तथोक्त: [illegible] सलिलस्कन्ध: जलराशि: ।

(ल) उत्पत्तिसदनं जननमन्दिरं कलहंसवयसां [illegible] कलहंसा अस्मात् जायन्ते इति भाव: । [illegible] उत्पत्तिस्थानं कनकारविन्दानां स्वर्णकमलानाम् । [illegible] क्रीडावापी देव-

एतन्मानिनि ! मानसं सुरसरो निर्लूनहेमाम्बुजं
पार्वत्या प्रियपूजनार्थममुतो गङ्गा सरिन्निर्गता ।
अस्माच्छिवशिखण्डिभिश्च परमे पर्वण्युपादीयते
स्नानोत्तीर्णवृषाङ्कभस्मरजसां सङ्गात्पवित्रं पयः ॥२५॥(ख)

---

देवस्य हरस्य । समरगाढेति । समरगाढतरेण सलिलेषु अतिनिम-
ग्नेन अन्तरसमदेन अप्रकटमदेन महोष्मणा महदन्तस्तापेन हेरम्बेण
गणेशेन रभसेन वेगेन आचान्तः पीतः अतएव वीतः विगतः वीचीनां
तरङ्गाणां भङ्गः यस्य तथाविधम् । गगनाङ्गणपरिभ्रमिणा अन्तरीक्षे
भ्रमता इत्यर्थः चन्द्रहरिणेन चन्द्रस्य क्रोडस्थितेन मृगेण लीढलीढाः
अतिशयेन लीढा इत्यर्थः शीकरकणाः जलकणाः यस्य तादृशम् ।
कूले तटे कुलायकारिणा नीडकारिणा कुमारस्य कार्त्तिकेयस्य मयू-
रेण प्रसारितेन करेण आकृष्यमाणानि अर्णांसि पयांसि यस्य तथा-
विधम् । करिभ्यः जलहस्तिभ्यः मकरेभ्यश्च त्रासात् ऐरावतेन इभेन
हस्तिना सेवितः अध्युषितः शाङ्गवस्य शार्ङ्गधरितस्य उपकण्ठः समीपं
यस्य तथाभूतम् । नीलकण्ठस्य हरस्य वृषेण समध्यासितः आश्रितः
परिसरो यस्य तथोक्तम् । सन्तानकानां देवतरुविशेषाणाम् अरण्ये
कानने एतत्तटवर्त्तिनि इति भावः । नारायणवराहेण आदिवराहेण
स्थितेनेति शेषः वर्णितं व्याख्यातं वैभवं यस्य तथाभूतम् । वैकुण्ठक-
मठेन आदिकच्छपेन अभिलषितः गर्भः अभ्यन्तरवासः यस्य तादृ-
शम् । पद्मनाभमहामत्स्येन मीनावतारेण हरिणा नीतं नीरं
जलं यस्य तथाविधम् । त्रिसन्ध्यं तिसृषु सन्ध्यासु सायं प्रातर्मध्या-
ह्नेषु अरुन्धत्याः करेण आकल्पितैः गृहीतैः कमलिनीपत्रपात्रैः आम-
न्त्रितं पुरन्दरस्य देवराजस्य मज्जनं यस्य तादृशम् ।

(ख) एतदिति । हे मानिनि ! एतत् सुराणां सरः सरोवरं
मानसं पार्वत्या प्रियस्य हरस्य पूजार्थं निर्लूनानि हेमाम्बुजानि

सीता । को उण एसो (ञ) णिच्चतरुणतरुमण्डलीचुम्बिदमहाणिअम्बणिवेसो मत्तगण्डचण्डेक्करहचक्कचुम्बणमसिणसुवण्णसिहरो महीहरो दीसदि (२२) ।

रत्नशेखरः ।

नेत्रं वासुकिरत्र केशवभुजैः सन्दानितोऽयं पुरा
चक्रावर्त्तवतां परिभ्रमविधावितस्य देवासुराः ।
मन्थाः सोऽयमभूत्समुद्रकलशे तन्नीयतां कौतुका-
देष श्रोत्रपरम्परापरिचितो दृग्गोचरं मन्दरः ॥३६॥ (ध)

---

(२२) कः पुनरेष नित्यतरुणतरुमण्डलीपरिचुम्बितमहानितम्बसन्निवेशो मार्त्तण्डचण्डैकरथचक्रचुम्बनमसृणसुवर्णशिखरो महीधरो दृश्यते ।

---

सर्वकनकाभि पद्मानि तथाविधम् । पार्वती अस्मात् देवदेवपूजार्थं कनकपद्मानि चिनोतीति भावः । गङ्गासरित् अस्तुतः अस्मात् सरसः निर्गता । अस्माच्च चित्रशिखण्डिभिः देवर्षिभिर्मरीच्यादिभिः परमे उत्कृष्टे पर्वणि स्नानात् उत्तीर्णस्य हृताङ्गस्य हरस्य भस्मरजसां सङ्गात् पवित्रं पयः जलम् उपादीयते गृह्यते । शार्दूलविक्रीडितं वृत्तम् ।

(ञ) नित्येति । नित्यं सततं तरुणाभिः अभिनवाभिः तरुमण्डलीभिः वृक्षश्रेणीभिः परिचुम्बितः आश्लिष्टः महान्तो नितम्बस्य सन्निवेशः संस्थानं यस्य तादृशः । मार्त्तण्डेति । मार्त्तण्डस्य चण्डं महत् यत् एकं रथस्य चक्रं तेन चुम्बनमेव घर्षणेन मसृणं चिक्कणं सुवर्णशिखरं यस्य तादृशः ।

(ध) नेत्रमिति । अत्र महीधरे पुरा समुद्रमन्थनकाले इत्यर्थः

रामं प्रति। इतो विषमिषस्यन्दिनीं विद्वेषिषु (स) प्रसा-
दामृतवीचिमालिनीं सुहृत्सु निवेशय दृशम्।
क्षीराब्धिः परितोऽयमर्णवपतिर्जातं मृगाङ्कादिकं
पीयूषावधि रत्नजातममुतः किं चास्य तीरान्तरे।
मुक्त्वा कल्पभृतः स्वयंवरसुरान् सौभाग्यदानाग्रणी-
र्लक्ष्म्याऽस्मिन् कुसुमावली वरयितुं वैकुण्ठकण्ठेऽर्पिता॥१७(ह)

---

वासुकिः नागराजः नेत्रं मन्थनरज्जुरासीदिति शेषः, अयं शेषस्य नारायणस्य भुजैः बाहुभिः सन्दानितः संयमितः देवासुराः एतस्य परिभ्रमविधौ भ्रमणकर्मणि इत्यर्थः वल्लवतां गोपालत्वं यान्तुः गोपाला यथा मन्थनदण्डं भ्रामयित्वा दुग्धं मथ्नन्ति तथेति भावः। सः प्रसिद्धः अयं समुद्रकलशे मन्थाः मन्थनदण्डः अभूत्। तत् तस्मात् श्रोत्रपरम्पराभिः कर्णपरम्पराभिः परिचितः न तु कदाचित् दृष्ट इति भावः। एष मन्दरः कौतुकात् दृशोः गोचरं नीयतां दृश्यतामित्यर्थः। शार्दूलविक्रीडितं वृत्तम्।

(स) विद्वेषिषु शत्रुषु विषमिषस्यन्दिनीं गरलवर्षिणीं सुहृत्सु बन्धुषु प्रसादः एव अमृतं तस्य वीचिमाला विद्यते अस्यां तादृशीं दृशं नेत्रं निवेशय साभिनिवेशं पश्य इत्यर्थः।

(ह) क्षीराब्धा इति। परितः समन्तात् अयं क्षीराब्धिः दुग्धजलः अर्णवपतिः समुद्रः। अमुतः अमुष्मात् मृगाङ्कादिकं चन्द्रप्रभृति पीयूषावधि अमृतपर्य्यन्तं रत्नजातम् उत्कृष्टवस्तुसमूहः जातो जातौ यदुत्कृष्टं तद्रत्नमिह कथ्यते इति यादवः। जातम् उद्भूतम्। किञ्च अस्य क्षीराब्धेः तीरान्तरे तटदेशे अस्मिन् लक्ष्म्या कमलया कल्पभृतः वाञ्छितार्थप्रदातॄन् स्वयम्बरसुरान् स्वयम्बरे समागतान् सुरान् मुक्त्वा विहाय वरयितुं वैकुण्ठस्य नारायणस्य कण्ठे सौभाग्यदानाग्रणीः सौभाग्यं स्वामिवाल्लभ्यं तस्य दाने प्रदाने अग्रणीः तत्परा इत्यर्थः कुसु-

रामचन्द्र ! इतइतोऽपि इक्षतां द्रष्टव्यम् ।

यं नित्यं भगवान् प्रदक्षिणयति भ्राम्यत्प्रभापेसर-

ध्वान्तश्रेणिविभक्तवासरनिशाविन्यासरेखं रविः ।

धत्ते कां चन काञ्चनश्रियमसौ मेरुर्गिरीणां गुरु-

र्देवैः सार्धमधित्यकामधिवसत्यस्यामरग्रामणीः ॥१८॥ (ख)

सीतां प्रति ।

एतां पश्य पुरः सुमेरुशिखरे दम्भोलिपाणेः पुरीं

त्वत्पालोकनकौतुकोत्तरलितैर्व्यप्तां पुरन्ध्रीजनैः ।

यस्यास्तोरणगोपुरप्रणयिभिर्नामाङ्कितैर्मार्गणैः

पौलस्त्यस्य विनापि वर्णरचनां व्यक्ता प्रशस्तिःस्थिरा १९(क)

---

भावती सौभाग्यवर्द्धिनी पुष्पमाला इत्यर्थः अर्पिता दत्ता । शार्दूल-विक्रीडितं वृत्तम् ।

(ख) यमिति । भगवान् रविः सूर्यः नित्यं सततं भ्राम्यन्तीनां प्रभाणां मयूखानाम् प्रसरैः ध्वान्तश्रेणिभिः तिमिरनिकरैः विभक्ता विभज्य स्थापिता वासरनिशयोः दिवसरजन्योः विन्यासस्य विभागस्य रेखा यस्मिन् तादृशं यम् अचलं प्रदक्षिणयति प्रदक्षिणी-करोति, असौ गिरीणां पर्वतानां गुरुः श्रेष्ठः मेरुः काञ्चन अनि-र्वचनीयामित्यर्थः काञ्चनश्रियं स्वर्णकान्तिं धत्ते धारयति । अमराणां देवानां ग्रामणीः अधिराजः इन्द्रः देवैः सार्द्धम् अस्य अधित्यकाम् ऊर्द्धप्रदेशम् उपत्यकाद्रेरासन्ना भूमिरूर्द्धमधित्यकेत्यमरः । अधिवसति अधितिष्ठति । शार्दूलविक्रीडितं वृत्तम् ।

(क) एतामिति । पुरः अग्रतः सुमेरुशिखरे स्थितामिति शेषः त्वत्कं त्वदीयं यत् आलोकनं दर्शनं तस्मिन् कौतुकेन त्वद्दर्शनकुतूहलेन इत्यर्थः उत्तरलितैः चञ्चलितैः पुरन्ध्रीजनैः नारीगणैः व्याप्ताम् कौतुका-

रामः। हंहो पुष्पक! इतोऽपि किञ्चिदुच्चैर्भव न तृप्यति चेतो दिव्यदर्शनकुतूहलस्य। सर्वे विमानोर्ध्वगतिं नाटयन्ति।

सीता। केअईकेसरपराअप्पडिरूवो (ख) पङ्कघणसारपंसुप्पसरसरिच्छच्छवी मुत्ताहलविसदसोहासण्णिवेसो णिव्वेसिदाणंदकंदो हिअअस्स कुदो उण एतावंतो जोह्णावित्थरो (२२)।

रामः। मन्ये चन्द्रलोकसमीपे वर्त्तामहे।

रत्नशेखरः। यथाह मारीचहरिणारिः (ग)।

---

(२२) केतकीकेसरपरागप्रतिरूपः पङ्कघनसारपांशुप्रसरसदृशच्छविर्मुक्ताफलविशदशोभासन्निवेशो निवेशितानन्दकन्दो हृदयस्य कुतः पुनरेतावान् ज्योत्स्नाप्रसरः।

---

वतीं दम्भोलिपाणेः वज्रधरस्य इन्द्रस्य एतां पुरीम् अमरावतीमित्यर्थः पश्य अवलोकय। यस्याः अमरावत्याः तोरणेषु गोपुरेषु च द्वारेषु च प्रणयिभिः प्रीतैरिति यावत् नामाङ्कितैः रावणेति नामाक्षरचिह्नितैः मार्गणैः शरैः वर्णरचनाम् अक्षरविन्यासं विनापि पौलस्त्यस्य रावणस्य स्थिरा दृढा अख्या इत्यर्थः प्रशस्तिः प्रशंसालिपिरित्यर्थः न्यस्ता निहिता। शार्दूलविक्रीडितं वृत्तम्।

(ख) केतकीति। केतकीनां केतककुसुमानां केसरपरागस्य किञ्जल्करजसः प्रतिरूपः अनुरूपः। पङ्कस्य शुष्कस्य घनसारस्य चन्दनस्य यः पांशुप्रसरः रजःसमूहः तस्य सदृशी छविः कान्तिर्यस्य तादृशः, मुक्ताफलस्येव विशदः शोभासन्निवेशः यस्य तथाविधः। निवेशितः जनितः आनन्दकन्दः आनन्दस्य मूलं येन तादृशः।

(ग) मारीचहरिणारिः मृगरूपमारीचघाती राम इत्यर्थः।

सद्यश्चन्दनपङ्कपिच्छिलमिव व्योमाङ्गणं कल्पयन्
मत्तैरावतकान्तदन्तमुषलच्छेदोपमेयाकृतिः ।
उन्मीलत्ययमच्छमौक्तिकलताप्रालम्बलम्बैः करैः
कान्तानां स्मरलेखवाचनकलाकेलिप्रदीपः शशी ॥४०॥ (च)

सीतां प्रति ।

गौराङ्गीवदनोपमापरिचितस्ताराबधूवल्लभः
सद्यो मार्जितदाक्षिणात्यतरुणीदन्तावदातद्युतिः ।
चन्द्रः सुन्दरि ! दृश्यतामयमसौ चण्डीशचूडामणिः
संबन्धी रघुभूभुजां मनसिजव्यापारदीक्षागुरुः ॥४१॥ (छ)

---

(च) सद्य इति । व्योमाङ्गणम् अन्तरीक्षाभोगं सद्यः सपदि चन्दनपङ्कैः पिच्छिलमिव स्निग्धमिवेति यावत् कल्पयन् रचयन् । ऐरावतस्य कान्तः रम्यः यः दन्तमुषलस्य छेदः खण्डः तस्य उपमेया आकृतिर्यस्य तादृशः । अच्छा विशदा या मौक्तिकलताः तासां प्रालम्बाः माला इव लम्बाः तैः करैः किरणैः कान्तानां कामिनीनां स्मरलेखस्य कामव्यञ्जकलिपेः वाचनकलायां पाठन क्रियायां यः केलिः विलासः तस्य प्रदीपः अयं शशी उन्मीलति उदेतीति । शार्दूलविक्रीडितं वृत्तम् ।

(छ) गौराङ्गीति । हे सुन्दरि ! गौराङ्गीणां नारीणां वदनस्य या उपमा, तया परिचितः ताराणां वधूनाम् अश्विन्यादीनां वल्लभः प्रियः, सद्यः सपदि मार्जिताः परिष्कृताः दाक्षिणात्यतरुणीनां दक्षिणदेशीयाङ्गनानां ये दन्ताः तद्वत् अवदाता विशदा द्युतिर्यस्य तादृशः चण्डीशस्य हरस्य चूडामणिः रघुभूभुजां रघुवंशीयनृपतीनां सम्बन्धी रामचन्द्रनामबन्धनात् रघुवंशीयानां सूर्यकुलप्रसूतत्वात् चन्द्रवंशीयराजन्येषु, चन्द्रवंशीयानां सूर्यकुलेषु च तत्सम्बन्धस्य विहितत्वात् स्ववंशेषु निषिद्धत्वाच्चेति भावः । मनसिजस्य कामस्य व्यापारे दीक्षा-

अतः परमगम्या अस्मादृशां भुवः स च ब्रह्मलोक इति श्रूयते तत्र च किल (च) ब्रह्मर्षिपरिषत्परिवाढ़ी परमेष्ठी गरिष्ठं तपस्तप्यते ।

रामः ।

लक्ष्मीं वक्षसि कौस्तुभस्तवकिनि प्रेम्णा करोत्यच्युतो
देहार्द्धे वहति त्रिविष्टपगुरुर्गौरीं स्वयं शङ्करः ।
शङ्के पङ्कजसम्भवस्तु भगवानद्यापि वाच्यावधेः
सर्वाङ्गप्रणयां प्रियां कलयितुं दीर्घं तपस्तप्यते ॥४२॥ (छ)

सर्वे नमन्ति ।

सीता । भअवं ! गअणपुप्फ ! पुप्फअ ! संपदं (ज) परिचइअ अंबुरासिलंघी भव जेण थिरं जलणिहिजाणपत्तं

---

गुरुः शिक्षाचार्य्यः अयमसौ चन्द्रः दृश्यताम् । शार्दूलविक्रीडितं वृत्तम् ।

(च) ब्रह्मर्षीति । ब्रह्मर्षीणां भृग्वादीनां या परिषद् सभा तस्याः परिवाढ़ी अधिष्ठाता । गरिष्ठम् अतिगुरुतरम् ।

(छ) लक्ष्मीमिति । अच्युतः विष्णुः कौस्तुभस्तवकिनि कौस्तुभास्तमविभूषिते इत्यर्थः वक्षसि प्रेम्णा लक्ष्मीं करोति धारयति । त्रिविष्टपगुरुः त्रिजगद्गुरुः स्वर्गपतिर्वा शङ्करः शिवः स्वयं देहार्द्धे गौरीं वहति । भगवान् पङ्कजसम्भवः पद्मयोनिस्तु वाच्यावधेः आशैशवात् अद्यापि सर्वाङ्गप्रणयां सर्वाङ्गप्रणयवतीं प्रियाम् अलभमान इति शेषः तां कलयितुं लब्धुं दीर्घं तपः तप्यते चरति । शार्दूलविक्रीडितं वृत्तम् ।

(ज) परित्यज्य अवरुह्य इत्यर्थः अम्बुराशौ सहर्षं लम्यते इति तथोक्तः भव । स्थिरं निश्चलं जलनिधौ यानपात्रं पोतरूपं वाहनी-

सीमंतरेहं वारुणीतरुणीए अज्जउत्तप्पआवप्पसरप्पढममग्गं महासेउबंधं पेक्खह्म (२४)। विमानावतरणनाटितकेन।

रत्नशेखरः। स्वस्ति रामभद्राय साधयामि सम्प्रति। इति निष्क्रान्तः।

त्रिजटा। सीतां प्रति। (क) णीलमणिकुट्टिमं विअ वरुण-भवणंगणस्स णिग्गममग्गं विअ पाआलतलतिमिरचक्कवा-लस्स आलवालं विअ भुअणमहामहीरुहस्स गोठ्ठिठ्ठाणं विअ दिसाविलासिणीणं दप्पणं विअ गअणाभोअस्स महो-अहिं पिअसहि! प्पसहयमाणप्पसारिअच्छी पेक्ख (२५)।

---

(२४) भगवन्! गगनाङ्गणपुष्प! पुष्पक! साम्प्रतं परिणम्याम्बु-राशिवर्त्ती भव येन स्थिरं जलनिधियानपात्रं सीमन्तरेखां वारुणीतरुण्या आर्य्यपुत्रप्रतापप्रसरप्रथममार्गं महासेतुबन्धं पश्यामः।

(२५) नीलमणिकुट्टिममिव वरुणभवनाङ्गणस्य निर्गममार्गमिव पातालतिमिरचक्रवालस्यालवालमिव भुवनमहामहीरुहस्य गोष्ठीस्थान-मिव दिशाविलासिनीनां दर्पणमिव गगनाभोगस्य महोदधिं प्रियसखि! प्रहृतीयमानप्रसारिताक्षी पश्य।

---

तरुण्या वरुणदेव्याः सीमन्तरेखामिव आर्य्यपुत्रस्य रामस्य यः प्रताप-प्रसरः तस्य प्रथमम् आद्यम् मार्गं पन्थानम्।

(क) नीलमणिकुट्टिममिव समुद्रजलानां नीलवर्णत्वादिति भावः। वरुणस्य यत् भवनं गृहं तस्य अङ्गणस्य चत्वरस्य नीलकान्तमणिनिर्मि-तप्रदेशविशेषमिव। पातालतिमिराणां रसातलान्धकाराणां चक्रवा-लस्य मण्डलस्य निर्गममार्गमिव निःसरणपथमिव भुवनमेव महान्

लक्ष्मणः ।

यत् खातः सगरेण मर्त्त्यसरितं मन्दाकिनीं कुर्वता
पूर्णो यश्च भगीरथेन गिरिभिर्बद्धो यदार्य्येण च ।
तत्ते चित्रविचेष्टितं श्वशुरयोर्भर्त्तुश्च वारां निधिं (ञ)
वीक्षस्वैनमधो निधाय नलिनच्छायामुषी चक्षुषी ॥ ४३ ॥

सीता । आदिकंदं (ट) लच्छीलदाकंदलीए उदयहिं हरचूडाचंदस्स वारीवंधमेरावणस्स महाकलसं पेऊसस्स पणमामि भअवंतमुद्दसंतम् (२६) ।

---

(२६) आदिकन्दं लक्ष्मीलताकन्दल्या उदयाद्रिं हरचूडाचन्द्रस्य वारीबन्धमैरावणस्य महाकलसं पीयूषस्य प्रणमामि भगवन्तमुदन्वन्तम् ।

---

महीरुहः वृक्षः तस्य आलवालमिव वेष्टनविशेषमिव । दिशाः ककुभः एव विलासिन्यः तासां गोष्ठीस्थानं सम्मेलनस्थानमिव । गगनाभोगस्य दर्पणमिव आदर्शमिव । प्रसृतीयमाने करकोकनदद्वये प्रमार्ज्यमाणे अ-क्षिणी यस्याः तादृशी सती महोदधिं पश्य ।

(ञ) यदिति । हे आर्य्ये ! इत्यध्याहार्य्यम् । सगरेण यत् खातः मन्दाकिनीं मर्त्त्यसरितं मनुष्यलोकनदीं कुर्वता भगीरथेन यश्च पूर्णः इति नीतः, आर्य्येण च रामेण गिरिभिः पर्वतैः यश्च बद्धः, तत् ते तव श्वशु-रयोः सगरभगीरथयोः भर्त्तुः रामस्य च चित्रम् अद्भुतं विचेष्टितम् एनं वारां निधिं समुद्रं नलिनच्छायामुषी कमलकान्तिहारिणी चक्षुषी अधो निधाय वीक्षस्व अवलोकय । शार्दूलविक्रीडितं वृत्तम् ।

(ट) लक्ष्मीरेव लता तस्याः कन्दली नवाङ्कुरः तस्याः आदिकन्दम् आद्यवीजम् । हरचूडाचन्द्रस्य उदयाद्रिम् उदयाचलम् , ऐरावणस्य

रामः ।

धत्ते यत्किलकिञ्चितैकगुरुतामेणीदृशां वारुणी
वैधुर्य्यं विदधाति दम्पतिदृशां यच्चन्द्रिकार्द्रं नभः ।
यत्पीयूषभुजां च मन्मथसुहृन्नित्यं वयः सम्पदां (ठ)
यल्लक्ष्मीरधिदैवतं जलनिधेस्तच्चिह्नमाचेष्टितम् ॥ ४४ ॥

लक्ष्मणः ।

वह्निं योऽम्भःसमिद्भिर्ज्ज्वलयति जगतीद्वीपखण्डानि यस्य
स्वादिष्ठा यत्प्रसूतिस्त्रिदशयुवतयः श्रीः सुधा वारुणी च ।
सोऽपि क्षुब्धोनलीनैः शरपतनभयादद्रिभिः क्षुण्णपादै- (ड)
र्देवि ! त्वन्नतुं रामामिव वहति महाग्रैस्सेतुच्छलेन ॥ ४५ ॥

---

ऐरावतस्य वारीबन्धं बन्धनस्थानं वारी तु गजबन्धनीत्यमरः । पीयूषस्य अमृतस्य महाकलसं महाकुम्भम् । सर्वेषामेव एतासां समुद्रादुत्पत्तिरिति भावः ।

(ठ) धत्ते इति । वारुणी सुरा एणीदृशां मृगाक्षीणां यत् किल-किञ्चितस्य विलासविशेषस्य एकगुरुताम् अद्वितीयमाचार्य्यकं धत्ते, चन्द्रिकया आर्द्रम् अभिषिक्तं चन्द्रोदयादिति भावः नभः आकाशात् यत् दम्पतिदृशां प्रणयिनोः मानापरनाम्नां कोपानां वैधुर्य्यं अव-मिति भावः विदधाति करोति चन्द्रोदये मानिनीमानस्य भङ्गादिति भावः । पीयूषभुजाम् अमृताशिनां देवानां यत् नित्यं सततम् अजर-मित्यर्थः मन्मथस्य सुहृत् वयः यौवनम् । लक्ष्मीः सम्पदां यत् अधि-दैवतम् अधिष्ठात्री देवता, तत् सर्वं जलनिधेः समुद्रस्य चिह्नम् अङ्कि-तम् आचेष्टितं प्रभाव इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

(ड) वह्निमिति । हे देवि ! यः अम्भांसि जलानि समिधः

सुग्रीवः । देवि मैथिलि ! किमपि (ढ) महिमातिरेक-

स्त्रिभुवनजयपताकायते भगवतो भागीरथीवल्लभस्य ।

या स्त्रीणामधिदैवतं गिरिसुता तस्सोदरः सानुमान्

मैनाको रजताकरः सुतनयः शैलेश्वरो येन सः ।

पक्षच्छेदसमुद्यतेन्द्रकुलिशत्रासान्निलीय स्थितः

सोऽप्येतस्य करालकुक्षिकुहरे पातालजम्बालिनि ॥ ४६ ॥ (ण)

विभीषणः ।

हेरम्बमज्जनविधाविह दानगन्धा-

दार्द्रेन्दिनो धुतकरालकरं पतन्तः ।

पश्चादुपेत्य सपदि प्रमथैर्भ्रियन्ते

रुद्राङ्कुशैर्विरचिताङ्कुशकेलयोऽमी ॥ ४७ ॥ (त)

---

कानानि तैः वह्निं वाडवानलं स्वयमेव दीपयति । जगतोद्वीपचक्रवत्
पृथिवीद्वीपमाला यस्य निचयेन स्वादिता स्वादुतरा अतिरम्या इत्यर्थः ।
त्रिदशयुवतयः देवाङ्गनाः श्रीः लक्ष्मीः सुधा अमृतं वारुणी सुरा च
यत् प्रसूतिः यस्मात् प्रसूतिः उद्भवः । सोऽपि लङ्घीनदीनैः कुल-
पादैः अद्रिभिः महाशैलसेतुच्छलेन तव भर्तुरामां वहतीव । स्रग्धरा-
वृत्तम् ।

(ढ) महिमातिरेकः प्रभावातिशयः । भागीरथीवल्लभस्य समुद्रस्य ।

(ण) येति । स्त्रीणामधिदैवतम् अधिष्ठात्री देवता या गिरि-
सुता पार्वती तस्याः सोदरः सहोदरः मैनाकः । येन मैनाकेन रजता-
करः स शैलेश्वरः शैलराजः सुतनयः शोभनः तनयो यस्य तथाविधः ।
सोऽपि पक्षच्छेदे समुद्यतस्य इन्द्रस्य कुलिशत्रासात् वज्रप्रहारभयात्
निलीय निगूह्य एतस्य पातालजम्बालिनि रसातलपङ्कवति कराले
भीषणे कुक्षिकुहरे जठरान्तरे स्थितः । शार्दूलविक्रीडितं वृत्तम् ।

(त) हेरम्बेति । इह अस्मिन् समुद्रे हेरम्बस्य गणेशस्य मज्जन-

तिर्यक्प्रियमाणगतिमाढितवेन ।

सीता । अवखण्डिताखण्डलकोअंडमंडलप्पडिरूवी (ब) कदरो उण एसुद्देसो (२७) ।

विभीषणः ।

पश्यस्यग्रे जलधिपरिखं मण्डलं सिंहलानां
चित्रोत्तंसं मणिमयभुवा रोहणेनाचलेन ।
दूर्वाकाण्डच्छविषु चतुरं मण्डनं यद्वधूनां
गात्रेष्वभो भवति गमितं रत्नतां शुक्तिगर्भैः ॥४८॥ (ढ)

---

(२७) अवखण्डिताखण्डलकोदण्डमण्डलप्रतिरूपः कतरः पुनरेष उद्देशः ।

---

विधौ व्यागव्यापारे द्दागमनात् ऐरावतमदनिःसरणमनात् तद्गन्ध-माघ्रायेति भावः धुताः कम्पिताः कराणाः भीषणाः कराः शुण्डादण्डाः यस्मिन् तत् यथा तथा पतन्तः तत् समीपं धावन्त इत्यर्थः अमी दार्ढ्-न्तिनः वनहस्तिनः पश्चात् गणपतेः गजाननात् परमित्यर्थः उपेत्य आगत्य प्रमथैः शिवगणैः सपदि रुद्रस्य शम्भोः प्रभावैरिति भावः विरचिताः अनुष्ठिताः अङ्कुशानां हस्तिताडनदण्डविशेषाणां क्षेपाः येषु तथाविधाः सन्तः भ्रियन्ते आक्रम्यन्ते । गणपतिं ऐरावतमागत दृष्ट्वा तद्गागमनेन जातक्रोधास्तं प्रति धावन्तः वनहस्तिनः प्रमथगणैः रुद्रप्रभावेण निराक्रियन्ते इति भावः । मन्दाक्रान्तावृत्तम् ।

(ब) अवखण्डितस्य पूर्वस्य आखण्डलकोदण्डमण्डलस्य शक्रधनुषः प्रतिरूपः सदृशः ।

(ढ) पश्यसीति । अग्रे जलधिः परिखा यस्य तादृशं सर्वतः समु-द्रवेष्टितमित्यर्थः मणिमयीभूर्यस्य तादृशेन रोहणेन अचलेन पर्वतेन

किञ्च ।

जनश्च वाक्सुधासूतिर्मणिसूतिश्च रोहणः ।

नान्यत्र सिंहलद्वीपान्मुक्तासूतिश्च सागरः ॥४९॥ (ध)

सीता । इह किल भअवं अगत्थिमहेसी णिवसदि (२८) ।

रामः । इदं हि भगवतो (न) रत्नाधिपतेरधित्यकाया-माश्रमपदं धर्माश्रमपदं पुनरग्रे ।

सुग्रीवः ।

क्रान्त्वा स्फुटस्फुटितशुक्तिविमुक्तमुक्त-

मम्भोनिधिं विधुतदिक्प्रविभागमेतत् ।

प्राप्ता वयं नवरसाञ्जनपुञ्जनीलं

कूलं कुलायगणसंकुलतमालमालि ॥ ५० ॥ (प)

---

(२८) इह किल भगवानगस्त्यमहर्षिर्निवसति ।

---

शिखः अद्भुतः उत्तंसः शिरोभूषणविशेषः यस्य तादृशं सिंहलानां मण्डलं लङ्कानगर्या राज्यमिति यावत् पश्यसि । यत्र वधूनां नारीणां दूर्वाकाण्डच्छविषु दूर्वादलश्यामलेषु इत्यर्थः गात्रेषु शुक्तिगर्भैः शुक्तिगर्भस्थानेनेति भावः रत्नतां गमितं प्रापितं रत्नत्वेन परिणतमित्यर्थः अम्भः मुक्ताफलमिति भावः । चतुरं मनोहरं मण्डनं भूषणं भवति । मन्दाक्रान्तावृत्तम् ।

(ध) जन इति । सिंहलद्वीपात् अन्यत्र अन्यस्मिन् प्रदेशे वाक्सुधासूतिः वचनामृतवर्षी जनश्च, मणिसूतिः रत्नप्रसवी रोहणः । तदाख्य पर्वतश्च मुक्तासूतिः मौक्तिकाकरः सागरश्च न अस्तीतिशेषः ।

(न) रत्नाधिपतेः रत्नप्रसूतेरित्यर्थः रोहणस्य अधित्यकायां ऊर्द्ध्व-भूमौ । भगवतः अगस्त्यस्य ।

(प) क्रान्त्वेति । स्फुटं सम्यक् स्फुटिताभ्यः विकसिताभ्यः शुक्तिभ्यः

सीतां प्रति ।

चटुलचटुलनिमीलत्सर्वलीलास्तिमील-

नयनयुगमतन्द्रारब्धनिद्राविनोदम् ।

शुकहरितनितम्बं पश्य वंशीवनान्तै-

रचलमखिलपृथ्वीमाल्यवन्माल्यवन्तम् ॥ ५१ ॥ (फ)

सीता । जहिं किल तुम्हाणं (ब) वासारत्तो अदिक्कंतो (२९) ।

रामः ।

यां वैदेहि ।

द्युतिजितकरवालः सूतवंशीप्रवालः

स्फुटितकुटजमालः स्पष्टनीलत्तमालः ।

---

(२९) यत्र किल युष्माकं वर्षर्तुरतिक्रान्तः ।

---

विलक्षाः निःसृताः लक्षाः यस्य तादृशं विधुतः अनिश्चितः दिशां प्रविभागो यत्र तथाभूतम् अम्भोनिधिं समुद्रं क्रान्त्वा उत्तीर्य वयं नवरत्नाञ्जनपुञ्जवत् नीलं श्यामवर्णं कुशावनताः नीडस्थिताः यस्मिन् वायु तादृशः आसमासानां सुखविशेषाणां भाजाः श्रेयसः ता विद्यते अस्मिन्निति तथोक्तम् एतत् कूलं प्राप्ताः । वसन्ततिलकं वृत्तम् ।

(फ) चटुलेति । चटुलचटुलस्य अतिव्यग्रस्य सर्पस्य निमीलस्य सर्व-लीलया आवेशव्यापारेण अतिमीलन्ती नयनयुगे यस्य तादृशेन अतन्द्रेण तन्द्राहीनेन इनिना आरब्धः प्रवर्त्तितः निद्रया विनोदः प्रीतिः यस्मिन् तादृशं शुकैः पक्षिविशेषैः हरितः श्यामलः नितम्बो मध्यभागो यस्य तादृशं वंशीवनान्तैः वेणुवनविभागैः उपलक्षितमिति शेषः अखिलायाः पृथ्व्याः माल्यवत् माल्यमिव माल्यवन्तम् अचलं पर्वतं पश्य अवलोकय ।

(ब) वर्षर्तुः वर्षाकालः । अतिक्रान्तः अतिवाहितः ।

इह हि गतमरालः केतकालीकराले

शिखरिणि मम कालः सोऽभवन्मेघकालः ॥ ५२ ॥(भ)

पुरो दर्शयन् ।

अयं स ते चण्डि ! शिखण्डिपुत्रको

गिरेस्तटात्तत्क्षणमूर्ध्वकन्धरः ।

निरीक्ष्य नौ स्नेहरसार्द्रया दृशा

प्रियां पुरस्कृत्य करोति ताण्डवम् ॥ ५३ ॥ (म)

सीता । पुत्त ! एहि उज्झिअ विमाणसिहरं समा-रुह (३०) ।

---

(३०) पुत्र ! एहि उज्झीय विमानशिखरं समारोह ।

---

(भ) द्युतीति । इह अस्मिन् केतकानां आलीभिः राजिभिः करालै व्याप्ते शिखरिणि पर्वते द्युतिभिः प्रभाभिः जिताः करालाः येन तादृशः अतिश्याम इत्यर्थः स्फुताः उत्पन्ना वंशीनां प्रवालाः अङ्कुरा यत्र तथाविधः स्फुटिता विकसिताः कुटजानां पुष्पविशेषाणां मालाः श्रेणयः यस्मिन् तथोक्तः स्पष्टं सम्यक् नीलम्तः नीलीभवन्तः तमालाः यस्मिन् तथाविधः गता मानसं प्राप्ता मराला हंसा यस्मिन् तादृशः जलधरसमये मानसं यान्ति हंसा इति कविसमय प्रसिद्धिः । सः मेघकालः जलद प्रागमः कालः मम अभवत् अतिक्रान्त इति शेषः । अत्र स्मित्वा वर्षासमयवाक्यमितिभावः मालिनीवृत्तम् ।

(म) अयमिति । हे चण्डि ! कोपने मानिनीत्यर्थः चण्डस्तत्र कोपन इत्यमरः । अयं स ते तव शिखण्डिपुत्रकः पुत्रीकृतः मयूर इत्यर्थः गिरेस्तटात् तत्क्षणं सपदि ऊर्द्ध्वकन्धरः उत्क्षिप्तग्रीवः सन् स्नेहरसेन आर्द्रया सम्पृक्तया दृशा चक्षुषा नौ आवां त्वां माञ्च-

रामः । अतिसुमुखा जानकी ।

सुग्रीवः । सीतां प्रति ।

गुणवति ! फणिवीरुद्बद्धपूगप्रकाण्डः

प्रचुरमरिचवल्लीवल्लरीकः पुरस्तात् ।

मलय इह महाद्रिर्मन्दनचन्दनाना-

मयमधिलुठदेलाश्लिष्टकक्कोलयष्टिः ॥ ५४ ॥ (य)

सीता । रणरणअकारणं (र) कामिमिहुणाणं माणिणीमा-णगण्ठिणिठ्ठवणो जत्तो किल समीरणो पअट्टदि (३१) ।

---

(३१) रणरणककारणं कामिमिथुनानां कामिनीमानग्रन्थिनिष्ठापनो यतः किल समीरणः प्रवर्त्तते ।

---

अर्थः निरीक्ष्य प्रियां सकान्तां मयूरीं पुरस्कृत्य अपेक्ष्य ताण्डवं नृत्य करोति । वंशस्थविलं वृत्तम् ।

(य) गुणवतीति । हे गुणवति ! इह पुरस्तात् अग्रतः, फणिनः भुजङ्गा इव वीरुधः लताः, ताभिः बद्धा वेष्टिता पूगानां गुवाकानां वृक्षभेदानां प्रकाण्डाः स्कन्धाः यत्र तादृशः प्रचुराः बहवः, मरिचवल्लीनां मरिचलतानां वल्लर्यः मञ्जर्यः यत्र तथोक्तः, चन्दनानां मन्दनः चन्दनतरुनिचय इत्यर्थः अभिलुठन्तीभिः सञ्चरन्तीभिः, एलाभिः आश्लिष्टा आलिङ्गिताः कक्कोलयष्टयः तदाख्यवृक्षविशेषा यस्मिन् तथाविधः अयं महाद्रिः महापर्वतः मलयः, वर्त्तते इति शेषः। मालिनीवृत्तम् ।

(र) रणरणककारणम् उत्कण्ठाहेतुः कामिमिथुनानां कामिनां कामिनीनाञ्च इत्यर्थः। कामिनीनां मानग्रन्थिं दृढं मानमित्यर्थः निःशेषेण तपति खण्डयतीति तथोक्तः । एतत् समीरणस्य मानिनीनां मानभञ्जकत्वादिति भावः ।

रामः। देवि! यथा श्रुतवत्यसि।

ये दोलाकेलिदानव्यतिकरगुरवो ये लतागर्भकाराः
कोदण्डाभ्यासविद्याविधिषु विजयिनो ये स्मरस्वेदवाराम्।
तन्वन्तश्चैत्रमैत्रं मलयशिखरिणस्ते विनिर्यान्त्यमुष्मा- (ल)
दाकैलासं समीराः सुरतमखमहासाक्षिणो दाक्षिणात्याः॥ ५५ ॥

अपि च पुनः पश्य।

रत्नप्रसूरिति समस्ततरङ्गिणीषु
वारां निधेर्भगवतः सुभगं कलत्रम्।
अस्मिन्निरन्तरनितम्बिनि! ताम्रपर्णी
चक्षुःपथं व्रजतु मौक्तिककामधेनुः॥ ५६ ॥ (व)

---

(ल) ये इति। ये समीराः दोलया यः केलिः क्रीडनं तस्य दान-व्यतिकरे प्रदानसम्बन्धे गुरवः वसन्तवायौ वहति विलासिनः दोलया क्रीडन्तीति प्रसिद्धिः। ये लतानां गर्भकाराः गर्भाधानकारिणः वसन्तवातस्पर्शात् लतानां पुष्पोद्गमादिति भावः। तथा ये कोदण्डा-भ्यासविद्याविधिषु धनुर्विद्याभ्यासेषु अस्मिन् समये वीरजनाः धनुर्विद्यामभ्यस्यन्तीति प्रसिद्धेरिति भावः। स्मरस्वेदवारां कामजनितघर्मजलानां विजयिनः अपनेतार इत्यर्थः। चैत्रेण वसन्तमासेन सह मैत्रं सख्यं तन्वन्तः सुरतमेव मखः उत्सवः तस्य महासाक्षिणः दाक्षिणात्याः ते समीराः अमुष्मात् मलयशिखरिणः मलयपर्वतात् आकैलासं कैलासपर्वतपर्यन्तं विनिर्यान्ति वहन्ति। स्रग्धरावृत्तम्।

(व) रत्नप्रसूरिति। हे निरन्तरनितम्बिनि! निबिडनितम्बे! अस्मिन् मलये रत्नानां प्रसूः उत्पत्तिस्थानमिति समस्तासु तरङ्गिणीषु नदीषु मध्ये भगवतो वारां निधेः समुद्रस्य सुभगम् अतिप्रियं कलत्र

अस्यां (ग) पुनरिदं सौभाग्यकारणम् ।

रोधोरेखे चन्दनारण्यरूपे
वारि स्वाद्यं नारिकेलाम्भसोऽपि ।
यच्चैवान्यः सम्भवो मौक्तिकानां
तेनाम्भोधेर्वल्लभा ताम्रपर्णी ॥ ५७ ॥ (घ)

विमानवेगनाटितकेन रामः । पुरोऽवलोक्य ।

दन्तोलूखलिभिः शिलोञ्छिभिरियं कन्दाशनैः फेनपैः
पर्णप्राशनिभिः कुटीचरकुलैः काले च पञ्चाग्निभिः ।
नीवारप्रसृतिम्पचैश्च परितः पूतं मुनेराश्रमं
पश्यन्ती भव पावना भगवतः पातुर्निधेरम्भसाम् ॥ ५८ ॥ (ङ)

---

पत्नी मौक्तिकानां कामधेनुः यथाकामप्रसविनी इयं ताम्रपर्णी तदाख्या नदी चक्षुःपथं दृष्टिपथं नयेतिशेषः । प्रजतु गच्छतु ताम्रपर्णीं पश्येत्यर्थः ।

(ग) अस्यां ताम्रपर्ण्यां पुनः अधिकं सौभाग्यस्य प्रियवाल्लभ्यस्य कारणं हेतुः ।

(घ) रोध इति । चन्दनारण्यरूपे चन्दनवनावयवे रोधोरेखे कूलरेखायां तटप्रदेशे इत्यर्थः अस्याः स्थितमितिशेषः वारि जलं नदीपान्तवर्त्ति सलिलमित्यर्थः नारिकेलाम्भसः नारिकेलजलादपि स्वाद्यं सुस्वादम् । यच्च अन्यः अपरः मौक्तिकानां सम्भवः समुत्पत्तिरस्या इति शेषः तेन ताम्रपर्णी अम्भोधेः समुद्रस्य वल्लभा प्रिया । गुणाः प्रियत्वे हेतुरितिभावः । शालिनीवृत्तं मात्तौ गौ चेच्छालिनी वेदलोकैरिति लक्षणात् ।

(ङ) दन्तेति । दन्त एव उलूखलं दन्तोलूखलं तद् विद्यते येषां तैः दन्तेन उलूखलव्यापारं विदधद्भिरित्यर्थः । शिलोञ्छिभिः क्षेत्रात्

दृष्टवन्तश्च ।

हंहो पुष्पक ! वायुवेग ! मुनिना धूमः पुरः पीयते
छायां मा कुरु कोऽप्ययं दिनमणावेकाग्रदृष्टिः स्थितः ।
दूरादत्र भव प्रदक्षिणगतिः स्थाणोरिदं मन्दिरं
किञ्चित्तिष्ठ तपस्विनस्तव पुरो यावत्प्रयान्त्यन्यतः ॥५८॥(ङ)

सीता । अज्जउत्त ! (च) होमोहिज्जंतहुदवहा विवरिज्जंतकथमुत्ता पठिज्जन्तबटुचरणा वक्खिज्जन्तधम्मसास्त्रा

---

पतितानां धान्यगुच्छानां चयनं शिलम्, एकैकधान्योच्चयनम् उञ्छः तौ विद्येते येषां तादृशैः शिलवृत्त्या उञ्छवृत्त्या जीवद्भिरित्यर्थः कन्दाशनैः मूलभोजिभिः फेनपैः वत्सस्तनगलितदुग्धफेनपायिभिरित्यर्थः पर्णप्राशनिभिः पत्रभोजिभिः काले यथा समये पक्वाशिभिः सिद्धान्नभोजिभिश्च नीवारप्रसृतिम्पचैः नीवारधान्यमुष्टिपाकेन जीवद्भिश्च कुटीचरकुलैः तापसगणैः परितः समन्तात् पूतं पवित्रीकृतं परिवृतमिति भावः अम्भसां निधेः समुद्रस्य पातुः गण्डूषेण पीतसमुद्रस्य भगवतः मुनेरगस्त्यस्य आश्रमं पश्यन्ती सती पावना जगत्पवित्रकारिणी भव । शार्दूलविक्रीडितं वृत्तम् ।

(ङ) हंहो इति । हंहो वायुवेग ! पुष्पक ! पुरः अग्रतः मुनिना केनापीति शेषः धूमः पीयते । छायां मा कुरु, कोऽपि अयं मुनिः दिनमणौ सूर्ये एकाग्रा दृष्टिर्यस्य तादृशः सन् स्थितः, दूरात् प्रदक्षिणगतिः भव, इदं स्थाणोः शिवस्य मन्दिरं तव पुरः अग्रतः तपस्विनः यावत् अन्यतः प्रयान्ति, तावदत्र किञ्चित् तिष्ठ न खलु तेषां लङ्घनं कदापि कार्य्यमिति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(च) होमाय उह्यमाना आह्रियमाणाः हुतवहा अग्नयः यैः तादृशाः विव्रियमाणायां व्याख्यायमानायां कथायाम् आख्यायिकायां युक्ताः अभिनिवेशिनः पठ्यमानाः बटवः चरणाः वेदशाखाविशेषा यैः तादृशाः वर्ण्यमानं कीर्त्यमानं धर्मशास्त्रं यैः तथाभूताः उपदिश्य-

उपदिसिज्जन्तसमाधिमग्गा वरिवसिज्जन्तपदिहिवग्गा पण्ण-
सालासण्णिवेसं अज्झारोसाणां संसारगण्ठिविठ्ठवणा(२२)

राम: । प्रकृष्टं हि तप: किमपि (क) कामदुघम् । अग्रतो दर्शयन् ।

एते व्योमनि शोषयन्ति हरिणत्रासाच्चिरं चीवरे
सन्ध्याचामविधौ कमण्डलुमिमं पश्यन्ति रिक्तं क्षतम् ।
भिक्षन्ते च फलान्यमी करपुटीपात्रे वनानोकहा- (ख)
न्नेषामर्घविधौ च सन्निधिगताः पुष्यन्त्यकाण्डे लताः ॥६०॥

---

(२२) होमोह्यमानहुतवहा विक्रियमाणकथाकुला: पठ्यमानबहुच-
र्चा वर्ण्यमानधर्मशास्त्रा उपदिश्यमानसमाधिमार्गा वरिवस्यमानाति-
थिवर्गाः पर्णशालासन्निवेशमध्यासीनानामपि संसारग्रन्थिनिष्टपना: ।

---

मान: शिक्ष्यमाण: समाधिमार्ग: योगाचार: यै: तथाभूता: । वरि-
वस्यमाना: परिचर्यमाणा अतिथिवर्गा: यै: तथोक्ता: । पर्णशाला-
सन्निवेशम् आश्रिता इति शेष: । संसारग्रन्थे: भवबन्धनात् निष्टपना:
निस्तारका: ज्ञानोपदेशेनेति भाव: ।

(क) किमपि अचिन्तनीयं कामदुघम् अभीष्टप्रदमित्यर्थ: ।

(ख) एते इति । एते तापसा: हरिणत्रासात् मृगेभ्य: त्रासात् मृगाश्छिन्दन्ति वा भक्षयन्तीति भयादिति भाव: व्योमनि आकाशे चिरं चीवरे कौपीने वल्कले वा आर्द्रे इति भाव: शोषयन्ति शुष्कं कुर्वन्ति । सन्ध्यायाम् आचामविधौ आचमनक्रियायां रिक्तं क्षतं मृग्यो-क्षतं मृगैरिति भाव: इमं दृश्यमानं कमण्डलुं जलपात्रविशेषं पश्यन्ति । अमी च करपुटीपात्रे वनानोकहान् वनतरून् फलानि भिक्षन्ते या-चन्ते । एषाञ्च अर्घविधौ पूजाविध्यर्थमित्यर्थ: सन्निधिगता: समीपग-

समन्तादवलोक्य। कारय चक्षुषी (ग) पारणमवलोकय कु-म्भसम्भवमुनेराश्रमतरून्।

स्वाध्यायान्ते बटुपरिषदां येषु विश्रान्तिसौख्यं
लोपामुद्राकरपुटजलैः प्रत्यहं येऽवसिक्ताः।
आगस्त्येऽस्मिन् विधुतरजसामाश्रमे पादपानां
येऽप्युत्कर्षा यदतिथिजने सर्वकालं फलन्ति ॥६१॥ (घ)

लक्ष्मणः। सन्ति हि तपस्विसङ्करा (ङ) भुवः।

रामः। हंहो विमानराज! कच्चिदेकदेशमलङ्कुरु (च)

---

र्तिभ्यः लताः अकाले पुष्यन्ति विकसन्ति च। शार्दूलविक्रीडितं वृत्तम्।

(ग) पारणम् उपवासान्तभोजनम् अदृष्टपरवस्तुदर्शनादिति भावः। कुम्भसम्भवमुनेः अगस्त्यस्य।

(घ) स्वाध्यायान्ते इति। येषु तरुषु स्वाध्यायान्ते वेदपाठावसाने बटुपरिषदां ब्राह्मणबालकसमूहानां शिष्याणामित्यर्थः विश्रान्तिसौख्यं विश्रामजनितं सुखं भवतीति शेषः बटवः वेदपाठान्ते येषां तलेषु विश्रम्यन्तीत्यर्थः। ये तरवः लोपामुद्रया अगस्त्यभार्यया करपुटजलैः हस्ताहृतसलिलैः प्रत्यहम् अभिषिक्ताः। अस्मिन् आगस्त्ये आश्रमे विधुतानि अपनीतानि रजांसि रजोगुणधर्माः रागद्वेषादय इत्यर्थः उत्कर्षाः प्रभावाः, यद् अतिथिजने अभ्यागतानां परिचर्यार्थं सर्वकालम् असमयेऽपीति भावः फलन्ति फलानि जनयन्ति। मन्दाक्रान्ता-वृत्तम्।

(ङ) तपस्विसङ्कराः तापससङ्कीर्णाः भुवः प्रदेशाः।

(च) अलङ्कुरु भूषय। अग्निमारुतसम्भवम् अगस्त्यम् अनुवर्ते अनुसरामि अभिवादनार्थं समीपं गच्छामीत्यर्थः।

यावदहमग्निमारुतसम्भवं मुनिमनुवर्त्ते । सर्वे विमानावरोहणं नाटयन्ति ।

सुग्रीवविभीषणौ । देव । त्वय्यंतामेष(छ) मैत्रावरुणो विक-चुततरुतले भगवत्या लोपामुद्रया सममस्मान् वीक्षमाण-स्तिष्ठति ।

ततः प्रविशत्यगस्त्यो लोपामुद्रा च ।

अगस्त्यः । भगवति । धर्मसुते । (ज) लोपामुद्रे । ।

प्रीतिस्निग्धैः खेचरैरर्च्यमानो

बिभ्रद्व्योम्नः सीम्नि वैमानिकत्वम् ।

सेतोर्बन्धाद्राक्षसानां निरोधा-

द्दिष्ट्या रामो दृश्यते पूर्णकामः ॥ ६२ ॥ (झ)

रामः । उपसृत्य सपादोपग्रहम् ।

कामपुष्पप्रतीकाश । वह्निमारुतसम्भव । ।

---

(छ) मैत्रावरुणः अगस्त्यः ।

(ज) धर्मसुते । धर्मस्य प्रजापतेः सुता तत्सम्बुद्धौ ।

(झ) प्रीतीति । प्रीत्या आनन्देन विश्वकण्टकरावणविनाशजनिते-नेति भावः स्निग्धैः स्नेहवद्भिः अनुरागिभिरित्यर्थः खेचरैः स्वर्गिभिः अर्च्यमानः पूज्यमानः स्तूयमान इत्यर्थः व्योम्नः आकाशस्य सीम्नि प्रदेशे वैमानिकत्वं विमानचारित्वं बिभ्रत् दधानः सेतोर्बन्धात् राक्ष-सानां निरोधात् सेतुं बद्ध्वा राक्षसकुलविध्वंसनादित्यर्थः पूर्णकामः कृतार्थः रामः दिष्ट्या भाग्येन दृश्यते आवाभ्यामिति शेषः । शालिनी-वृत्तम् ।

मित्रावरुणयोः पुत्र! कुम्भयोने! नमोऽस्तु ते ॥६३॥(ञ)

सर्वे प्रणमन्ति।

अगस्त्यः।

का दीयतां तव रघूद्वह! सम्यगाशी-
र्निष्कण्टकानि विहितानि जगन्ति येन।
आशास्महे ननु तथापि सह स्ववीरै-
र्भूकाश्यपोपमसुतद्वितया वधूः स्यात् ॥ ६४ ॥ (ट)

रामः। परमनुगृहीतं रघुकुलम्।

लोपामुद्रा।

एह्येहि वत्स रघुनन्दन! रामचन्द्र!
चुम्बामि तेऽद्य वदनं करचुम्बुकेन।
सोढाः कथं कथय ते दशकण्ठबाणा-
श्छिन्नानि रावणशिरांसि कथं च तानि? ॥ ६५ ॥

---

(ञ) कायेति। कायपुष्पप्रतीकाश! कायकुसुमवत् श्यामवर्ण इत्यर्थः। अन्यत् स्पष्टम्।

(ट) केति। हे रघूद्वह! रघुश्रेष्ठ! तव का सम्यक् आशीः दीयताम्? कया आशिषा अहं त्वां वर्द्धयामीत्यर्थः। येन त्वया जगन्ति निष्कण्टकानि विहितानि कृतानि रक्षः कुलक्षयादिति भावः। ननु भोः तथापि आशास्महे आशाप्रकाशनं कुर्महे इत्यर्थः। स्ववीरैः निजैः वीरैः सुग्रीव-विभीषणादिभिरिति भावः। सह आशास्महे अत्र तथा यथेति पदद्वय-मूह्यं तथा आशिषं कुर्मः यथा वधूः जानकी भूकाश्यपोपमं पृथिवी-न्द्रसदृशं सुतद्वितयं पुत्रद्वयं यस्याः तथाभूता स्यात्। वसन्ततिलकं वृत्तम्।

(ठ) एह्येहि हे वत्स! रघुनन्दन! रामचन्द्र! अद्य करचुम्बुकेन

रामो लज्जते । अगस्त्यः । महानुभावापि लोपामुद्रा स्त्रीस्व-
भावसुलभं ब्रूते ।

लोपामुद्रा । रामं चिरयति वृथा ।

अभ्युद्धृतैर्गिरिभिरम्बुधिसेतुहेतोः
श्वश्रूरियं भगवती कुपिता किमुर्वी ? ।
कुम्भोद्भवस्य कथितं न पुनः किमस्य
जाता यदेकचुलुकेन चतुःसमुद्री ॥ ६६ ॥ (ड)

अगस्त्यः । सुतपस्विनि ! लोपामुद्रे ! वसिष्ठप्रतिष्ठितो(ढ)
राज्याभिषेकसमयो नातिदूरवर्त्ती तद्विसर्ज्जय राम-
भद्रम् ।

---

करायेव इत्यर्थः यद्यपि चूडकन्तु कुचापं स्यादित्यभिधानात् चूडक-
शब्देन कुचापं बुध्यते, तथाप्यत्र तत्कालासम्भवात् अपमानमवधीयते
इति बोध्यम् । ते तव धनुं चुम्बामि धनुर्यामीत्यर्थः । रघुकुलस्य
बाणाः शराः ते त्वया कर्त्तरि षष्ठी कथं सोढाः, तानि च रावणशि-
रांसि कथञ्च छिन्नानि ? कथय । वसन्ततिलकं वृत्तम् ।

(ड) अभ्युद्धृतैरिति । अम्बुधिसेतुहेतोः समुद्रे सेतुबन्धनार्थम्
अभ्युद्धृतैः गिरिभिः पर्वतैः भगवती श्वश्रूः इयम् उर्वी किं कुपिता ?
पर्वतानामुद्धरणेन त्वया कोपिता किम् इत्यर्थः । अस्य कुम्भोद्भवस्य
पुनः किं न कथितं समुद्रपारगमनार्थमिति भावः त्वयेति शेषः यत्
एकचुलुके एकस्मिन् गण्डूषे चतसृणां समुद्राणां समाहारः चतुःसमुद्री
न जाता । यदि त्वया अस्य समुद्रार्थं न्यवेदयिष्यथाः तदासौ एक-
चुलुकेन समुद्रम् अपास्यत् तदकृत्वा वृथा पर्वतोद्धरणेन पृथिव्याः मनः-
क्षोभं कृतवानसीति भावः । वसन्ततिलकं वृत्तम् ।

(ढ) वसिष्ठप्रतिष्ठितः वसिष्ठेनोपक्रान्तः ।

लोपामुद्रा । गच्छ रामचन्द्र ! गच्छ सगरभगीरथसदृशो भव ।

सर्वे । उत्थाय विमानावरोहं नाटयन्ति ।

सीता । दिट्ठिआ संपदं वसुमदी दीसदि (२२) ।

रामः । तत्रापि द्रविडाः ।

पर्णं नागरखण्डमार्द्रसुभगं पूगीफलैलास्तथा
कर्पूरस्य च यत्र कोऽपि चतुरस्ताम्बूलयोगक्रमः ।
देशः केरल एष केलिसदनं देवस्य शृङ्गारिण-
स्तद्दृष्ट्वा कुरु कोमलाङ्गि ! सफले द्राघीयसी लोचने ॥ १७ (थ)

किञ्च ।

नेत्रयात्राशरव्येषैस्त्र्यम्बकस्यापि ताडनी ।
भ्रूलता द्रविडस्त्रीणां द्वितीयं कामकार्मुकम् ॥ १८ ॥ (त)

---

(२२) दिष्ट्या साम्प्रतं वसुमती दृश्यते ।

---

(थ) पर्णमिति । हे कोमलाङ्गि ! यत्र पर्णं पत्रं ताम्बूलीलताया इति भावः आर्द्रसुभगं नागरखण्डं पर्णविशेषः पूगीफलानि गुवाकफलानि एलाश्च तथा कोऽपि चतुरः रम्यः कर्पूरस्य ताम्बूलयोगक्रमः सकर्पूरताम्बूलस्य योगे अभ्यवहारे क्रमः नियमः वर्त्तते इति शेषः अत्रत्याः सर्वे कर्पूरचूर्णगुवाकैलासहितं ताम्बूलमभ्यवहरन्तीति भावः । देवस्य शृङ्गारिणः कामस्य केलिसदनं क्रीडास्थानम् एष केरलो नाम देशः, तत् तस्मात् दृष्ट्वा एतं देशमिति शेषः द्राघीयसी अतिदीर्घे लोचने नयने सफले कुरु । शार्दूलविक्रीडितं वृत्तम् ।

(त) नेत्रेति । द्रविडस्त्रीणां द्राविडाङ्गनानां नेत्रयात्राः नयन-

सुग्रीवः। इत इतो दर्शयतु देव। सप्तगोदावरीतीरे (च) भीमो भगवान् भर्गः। प्रणम्यतामयम्।

रामः।

नमो नागावलीबद्धमहाधवलमूर्त्तये।
जटापल्लवकम्प्राय हरचन्द्रनशालिने॥६९॥ (छ)

सर्वे प्रणमन्ति।

रामः।

वाक्सत्त्वाङ्गसमुत्थैरभिनयैर्नित्यं रसोल्लासतो
वामाक्ष्यः प्रथयन्ति यत्र मदनक्रीडामहानाटकम्।
तत्रान्ध्रास्तव दक्षिणेन त इमे गोदावरीस्रोतसां (ज)
सप्तानामपि वारिनिधिप्रणयिनां द्वीपान्तराणि श्रिताः॥७०॥

---

विक्षेपाः कटाक्षा इति यावत् त एव शरक्षेपाः तैः त्र्यम्बकस्य हरस्यापि किमन्येषामिति भावः। ताडनी मोहिनीत्यर्थः भ्रूलता भ्रूवल्लीद्वितीयम् अपरं कामस्य कार्मुकं धनुः। कामधनुषा शरनिक्षेपेणैव हरचा-पविभङ्गस्य जातत्वादित्याशयेन त्र्यम्बकस्यापि ताडनीत्वमुक्तं वेदितव्यम्।

(च) सप्तगोदावरीतीरे यत्र गोदावर्य्याः प्रवाहाः सप्तधा विभज्य प्रवहन्ति तादृश्याः गोदावर्य्यास्तटे। भीमः भीषणमूर्त्तिः। भर्गः शिवः।

(छ) नम इति। नागावलीभिः भुजगश्रेणीभिः बद्धा वेष्टिता महाधवला अतिश्वेता मूर्त्तिर्यस्य तादृशाय जटा एव पल्लवाः कम्प्राः कम्पमाना यस्य तथाभूताय हरिचन्द्रनशालिने हरिचन्द्राङ्करेखाय इत्यर्थः तुभ्यमिति शेषः नमः।

(ज) वागिति। हे सुन्दरि इत्यध्याहार्य्यं यत्र अन्ध्रेषु तदाख्येषु देशेषु वामाङ्ग्यः सुन्दर्य्यः रसस्य शृङ्गारापरनाम्नः भावविशेषस्य उल्लासतः उद्रेकात् वाक् वचनं सत्त्वं मन इत्यर्थः अङ्गं शरीरं तेभ्यः समु-

किं वा।

हरनेत्राग्निदग्धस्य केतौ मकरलक्ष्मणः।
दृष्टिरम्बुपुरन्ध्रीणां लज्जा सञ्जीवनौषधिः॥ ७१॥ (न)

विभीषणः। उभयकूलप्ररूढनारिकेलनिकरक्रमुककुल-पालीश्लिष्टा कावेरी सरिदियम् (प)।

रामः।

कावेरी कबरीव भामिनि! भुवो देव्याः पुरो दृश्यतां
पूगैर्नागलताश्रितैरुपदिशत्याश्लेषविद्यामिव।
कर्णाटीजनमज्जनेषु जघनैर्यस्याः पयः प्लावितं (फ)
पीत्वा नाभिगुहाभिरात्तरुचिभिः प्राचीं दिशं नीयते॥७२॥

---

द्भुतैः वार्षिकैः शान्तिकैः आह्निकैश्च इत्यर्थः अभिनयैः चेष्टाविशेषैः नित्यं प्रतिदिनं मदनक्रीडा सुरतोत्सव एव महानाटकं महत् अभिनेयकाव्यमित्यर्थः प्रथयन्ति, रचयन्ति अत्र तव दक्षिणेन दक्षिणस्यां दिशि सप्तानामपि वार्निधिप्रणयिनां समुद्राभिगामिनां गोदावरीस्रोतसां द्वीपान्तराणि द्वीपविशेषान् आश्रिताः ते इमे अन्ध्राः दृश्यन्ते इति शेषः। शार्दूलविक्रीडितं वृत्तम्।

(न) हरेति। हरस्य नेत्राग्निना दग्धस्य भस्मीकृतस्य केतौ ध्वजदण्डे मकरलक्ष्मणः मकरचिह्नस्य मकरध्वजस्य कामस्य इत्यर्थः लज्जा योग्या इत्यर्थः सञ्जीवनस्य औषधिः अम्बुपुरन्ध्रीणाम् अम्बुदेवीवरा-ङ्गनाणां दृष्टिः। ताः कामिन्यः नेत्रपातेन कामं पुनः जनयन्तीति भावः।

(प) उभयेति। उभयकूलेषु प्ररूढैः जातैः नारिकेलनिकरैः नारिकेलतरुचयैः क्रमुककुलपालीभिः पूगश्रेणिभिश्च श्लिष्टा शोभिता इत्यर्थः।

(फ) कावेरीति। हे भामिनि! सुन्दरि! पुरः अग्रतः कावेरी

विष ।

कर्णाट्यो यत्र यत्रैव विक्षिपन्ति दृशौ दिशि ।

विक्षेपाध्येसरः कामस्तत्र तत्रैव धावति ॥ ७३ ॥ (ब)

सुग्रीवः । भरताग्रज ! अयमग्रे महाराष्ट्रविषयः ।

रामः ।

यत् क्षेमं त्रिदिवाय वर्त्म निगमस्याङ्गं च यत्सप्तमं

आदिष्टं यदेवचवादपि रसाचनुच यत्नाश्रयम् ।

तत्रास्मिन् मधुरं प्रसादि रसवत् कान्तं च काव्यामृतं

सोऽयं सुभ्रु ! पुरो विदर्भविषयः सारस्वतीजन्मभूः ॥ ७४ ॥ (भ)

---

मही भुवो देव्याः पृथ्वीदेव्याः कबरीव केशपाश इव इयन्तां कबरी केशपाशोऽस्त्रेत्यमरः । एषा नागलताञ्चितैः भुजगलतावेष्टितैः पूगैः क्रमुकैः पूगः क्रमुकवन्त्योरित्यमरः आश्लेषविद्यामिव आलिङ्गन-व्यापारमिव उपदिशति येन प्रकारेण आलिङ्गनं कर्त्तव्यं तत् शिक्षय-तीत्यर्थः । यस्याः पयः सलिलं कर्णाटीजनानां कर्णाटाङ्गनानां मज्जनेषु अवगाहनेषु अधनैः प्लावितं स्नापितम् अतएव आसप्तभिः व्रीडिताभिरवलाभिः नाभिमुद्राभिः नाभिगह्वरैः कर्णाटीनामिति भावः । पीत्वा प्राचीं पूर्वां दिशं नीयते । कावेर्याः पूर्वभागस्यैव कर्णाटत्वादिति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(ब) कर्णाट्य इति । कर्णाट्यः कर्णाटदेशाङ्गनाः यत्र यत्र दिशि दृशः नयनानि । विक्षिपन्ति कटाक्षेषयन्ते इत्यर्थः । कामः तत्र तत्रैव दिशि विक्षेपस्य नयनविस्फारस्य अध्येसरः सन् धावति ।

(भ) यदिति । हे सुभ्रु ! यत् त्रिदिवाय स्वर्गाय क्षेमं कुशलं स्वर्गसाधनप्रदर्शकमित्यर्थः वर्त्म पन्थाः, यत् निगमस्य वेदस्य सप्तमं शिक्षाकल्पादिषट्कभिन्नम् अङ्गं शिक्षाकल्पो व्याकरणं निरुक्तं छन्दो

किञ्च।

रतविद्याविदग्धानां विभ्रमोत्सवलम्पटः।

नित्यं कुन्तलकान्तानां किङ्करो मकरध्वजः ॥७५॥ (म)

सीता। जहिं उप्पण्णा मे पिदामहससुरस्स घरिणी इंदुमदी (२४)।

त्रिजटा। संस्कृतमाश्रित्य।

कौतुककेलिकलस्य किल भवति सखि! सुखधाम।

---

(२४) यत्रोत्पन्ना मे पितामहश्वशुरस्य गृहिणीन्दुमती।

---

ज्योतिषमिति षडङ्गानि वेदार्थप्रतिपत्तौ यथा साधकानि तथा अयम् अपीति अस्य देशस्य निगमीयषडङ्गत्वं वेदार्थप्रचारकुशलब्राह्मणा- धिष्ठानादिति भावः। यत्र ऐक्षवात् इक्षुजातात् रसादपि स्वादिष्टं सुमिष्टं रम्यतरमित्यर्थः। यत्र वाङ्मयं चक्षुः सततशास्त्रपर्यालोचना- दिति भावः। यस्मिंश्च तत् प्रसिद्धं मधुरं चित्तद्रवीभावमयो ह्लादो माधुर्यमुच्यते इति लक्षणोक्तं माधुर्यं गुणयुक्तम्। प्रसादि चित्तं व्या- प्नोति यः क्षिप्रं शुष्केन्धनमिवानलः। स प्रसादः समस्तेषु रसेषु रचनासु चेति लक्षणोक्तप्रसादगुणयुक्तं रसवत् शृङ्गारादिरससंवलितं काव्यं रमणीयं काव्यामृतम् आस्वाद्यते इति शेषः सः अयं पुरः अग्रतः सारस्वतीजन्मभूः विद्योत्पत्तिस्थानं विदर्भविषयः विदर्भाख्यः देशः दृश्यते इति शेषः। शार्दूलविक्रीडितं वृत्तम्।

(म) रतेति। अत्र अध्याहार्यम्। यत्र देशे मकरध्वजः कामः रतविद्यासु सुरतव्यापारेषु विदग्धानां निपुणानां कुन्तलकान्तानां कुन्तलदेशीयानामित्यर्थः नित्यं सततं विभ्रमोत्सवे विलासप्रकटने लम्पटः आसक्तः अतएव किङ्करः सेवक इवेति प्रतीयमानोत्प्रेक्षा।

का च सुता शशितिलकस्य विन्ध्यमहीधरधाम ॥ (य)

सीता । संस्कृतमाश्रित्य । नर्मदा ।

त्रिजटा । इयं णम्मदा दीसदि (३५) ।

सीता । इदो अम्हाणं अज्जसुमंतो णिवुत्तो (३६) ।

रामः । अपवार्य ।

अस्मद्द्वयकरयन्त्रनिपीडितानां

धाराम्भसां स्मरसि मज्जनकेलिकाले ? ।

सुभ्रु ! त्वया निजकुचावरणैकयोग्य-

मब्जावल्लिदलमावरणाय दत्तम् ॥ ७६ ॥ (र)

---

(३५) इयं नर्मदा दृश्यते ।

(३६) इतोऽस्माकमार्यसुमन्त्रो निवृत्तः ।

---

(य) कीदृगिति । हे सखि ! कोकिलकस्य कोमला अस्फुटमधुरध्वनेः सुखधाम सुखनिकेतनं कीदृक् ? । शशितिलकस्य चन्द्ररूपललाटभूषणस्य विन्ध्यमहीधरधाम विन्ध्यपर्वताश्रया शूलभृतः सुता कन्या का च ? नर्मदा । नर्मदाया जलस्य अव्यक्तमधुरत्वात् सुखधामत्वं सोमोद्भवत्वं विन्ध्यपर्वतनिःसृतत्वञ्चेति भावः ।

(र) अयीति । अयि सुभ्रु ! अत्र मज्जनकेलिकाले जलावगाहनक्रीडायाम् अस्मद्द्वयकरयन्त्रनिपीडितानां मदीयकररूपेण यन्त्रेण निपीडितानां धाराम्भसां सलिलधाराणां त्वदङ्गप्रक्षिप्तानामिति भावः संवरणाय आच्छादनाय त्वया निजकुचावरणैकयोग्यं केवलस्तनमात्राच्छादनयोग्यम् अब्जवल्लिदलं पद्मलतापत्रं दत्तं स्तनयोर्निक्षिप्तं स्म-रसि ? । वसन्ततिलकं वृत्तम् ।

किञ्च ।

तदिह कलहकेलौ सैकते नर्मदायाः
स्मरसि सुतनु ! कश्चिन्नौ पराधीनसुप्तम् ।
उपसजलसमीरप्रेङ्खणाचार्य्यकार्य्यं
तदनु मदनमुद्रां तच्च गाढोपगूढम् ॥ ७७ ॥ (ल)

विभीषणः । वामतो दर्शयन् । अयमसावितो विश्वम्भ- (व) राशिरःशेखर इव लाटदेशः ।

रामः ।

यद्योनिः किल संस्कृतस्य सुदृशां जिह्वासु यन्मोदते
यत्र श्रोत्रपथावतारिणि कटुर्भाषाक्षराणां रसः ।
गद्यं चूर्णपदं पदं रतिपतेस्तत्प्राकृतं यद्वच-
स्ताँल्लाटाँल्ललिताङ्गि ! पश्य नुदती दृष्टेर्निमेषव्रतम् ७८ (श)

---

(ल) तदिति । हे सुतनु शुभाङ्गि ! इह नर्मदायाः सैकते पुलिने नौ आवयोः कलहकेलौ केलिकलहे इत्यर्थः तत् पराधीनसुप्तं 'परा-ङ्मुखं शयनम् उपसजलं जलसहितस्य सैकतस्य समीपे इत्यर्थः यत् समीरप्रेङ्खनं पवनस्पन्दनं तदेव आचार्य्यकार्य्यं गुरुकार्य्यं यस्य तत् मानं त्यजेति शिक्षारूपमिति भावः तदनु ततः परं मदनमुद्रां कामा-वेशं तच्च गाढोपगूढं गाढालिङ्गनं कच्चित् स्मरसि ? । मालिनी-वृत्तम् ।

(व) विश्वम्भरेति । विश्वम्भरायाः पृथिव्याः शिरःशेखर इव शिरोभूषणमिव ।

(श) यदिति । हे ललिताङ्गि चार्वङ्गि ! यत् संस्कृतस्य योनिः उत्पत्तिस्थानं यस्मात् संस्कृतभाषा उत्पन्नेति भावः । सुदृशां सुनय-

सीतां प्रति ।

खेले सञ्चरितुं तरङ्गतरलभ्रूलेखमालोकितुं
रम्यं स्थातुमनादरार्पितमनोमुग्धं च सम्भाषितुम् ।
सम्यञ्चोज्जयिनीजनीर्विवदितुं हृद्यं च हे जानकि ।
प्रत्यङ्गार्पणसुन्दरं च न जनो जानाति रन्तुं परः ॥८१॥(ङ)

किञ्च ।

चकोर्य्य एव चतुराश्चन्द्रिकाचामकर्म्मणि ।
आवन्त्य एव निपुणाः सुदृशो रतनर्म्मणि ॥ ८२ ॥ (च)

सीता । संकुतमाश्रित्य ।

---

(ङ) खेले इति । हे जानकि । उज्जयिनीजनीः उज्जयिन्यां जनीः उत्पत्तीः अभिव्यक्तिरस्त्य इत्यमरः । तस्याञ्च उज्जयिन्यां जन्म विनेत्यर्थः परः जनः लोकः अन्यदेशीय इत्यर्थः खेले क्रीडने सञ्चरितुं विहर्त्तुमित्यर्थः तरङ्गवत् तरला चपला भ्रूलेखा यस्मिन् तत् यथा तथा आलोकितुं निरीक्षितुं सकटाक्षं द्रष्टुमित्यर्थः रम्यं स्थातुम् अनादरेण अयत्नेन अर्पितं अनितं मनसः मुग्धं मोहनं यस्मिन् तद् यथा तथा सम्भाषितुं वक्तुं हृद्यं मनोरमं विवदितुं तर्कान् प्रयोक्तुमित्यर्थः प्रत्यङ्गार्पणेन सुन्दरं सर्वाङ्ग सुन्दरमिति यावत् रन्तुञ्च न जानाति । उज्जयिनीवासिन एव एतत् सर्वं जानन्तीति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(च) चकोर्य्य इति । चकोर्य्यः पक्षिविशेषा एव चन्द्रिकायाः चामकर्म्मणि पानविधौ चतुराः निपुणाः । आवन्त्यः अवन्तीदेशभवाः सुदृश एव रतनर्म्मणि सुरतलीलायां निपुणा दक्षाः । अत्र गम्यसाम्ययोः वाक्ययोरेकस्यैव सामान्यधर्म्मस्य पृथङ्निर्द्देशात् प्रतिवस्तूपमालङ्कारः । तदुक्तं प्रतिवस्तूपमा सा स्यात् वाक्ययोर्गम्यसाम्ययोः । एकोऽपि धर्म्मः सामान्यो यत्र निर्द्दिश्यते पृथगिति ।

प्रावृषेण्यं हि मत्स्यानां किं समुत्पत्तिकारणम्।(क)

त्रिजटा। प्रतिसंक्रान्तेन। मात्स्याः।

सीता।

दृश्यन्ते सोपमानन्दहेतवश्च इमे जनाः॥ ८३॥ (ख)

रामः।

एतन्मालवमण्डलं विजयते सौजन्यरत्नाकरैः

सम्यग्विभ्रमधामभिः किमपरं शृङ्गारसारैर्जनैः।

यत्रावश्य विचित्ररत्नखचितभौमीर्नानाविधासम्मगां (ग)

नीयन्ते जलदोदयेषु दिवसाः कान्तासखैः कामिभिः॥ ८४॥

सीता। वेषियठ्ठिव्व (घ) वसुंधरापुरंधीए सीसंदपंकव्व

---

(क) प्रावृषेण्यमिति। प्रावृषेण्यं प्रावृषि वर्षासु भवं प्रावृषेण्यम्। वर्षासु कुत्र मत्स्यानां न प्रादुर्भाव उत्पत्तिरिति भावः।

(ख) दृश्यन्त इति। ते इमे सोपमानन्दहेतवः जनाः मालवीया इत्यर्थः दृश्यन्ते।

(ग) एतदिति। सौजन्यरत्नाकरैः अतिसुजनैरित्यर्थः सम्यग्विभ्रमस्य सुविलासस्य धामभिः आश्रयैः शृङ्गारसारैः शृङ्गाररसबाहुल्यैः जनैः उपचितमिति भावः एतत् मालवमण्डलं मालवदेशः विजयते शोभते। किमपरं किमन्यत् वक्तव्यमिति शेषः। यत्र मालवे जलदोदयेषु वर्षासु इत्यर्थः कान्तासखैः कान्तासहचरैः कामिभिः विलासिभिः नानाविधासक्तानां विविध प्रकारमवलम्बानां विचित्रा रत्नखची रत्नखचिताः प्रासादोपरिस्थभूमिः आरुह्य आश्रित्य दिवसाः नीयन्ते अतिवाह्यन्ते।

(घ) वेषियटिरिव केशपाश इव वसुन्धरापुरन्ध्र्याः पृथ्वी-

गअणस्स इंदणीलकंठिअव्व उत्तरदिसाए पुरदो कालिंदी दीसदि (२७)।

रामः।

सेयं सुभ्रु ! पुरः कलिन्दतनया गीर्वाणसिन्धोः सखी
वासः कालियपन्नगस्य यमुना दृग्गोचरे वर्त्तते।
वन्दस्वार्य्यमणीमिमां दुहितरं वैवस्वतस्यानुजां
यस्याः सर्व्वपरीक्षणक्षमदृषत्तापी स्वसा सोदरी ॥८५॥(छ)

सीता। प्रणमति।

लक्ष्मणः। आर्य्ये! अदूरवर्त्तिनी (च) भगवत्ययोध्या। इमेऽन्तर्वेदीभूषणं पञ्चालाः।

---

(२७) वेणिवर्त्तिरिव वसुन्धरापुरन्ध्र्या निस्यन्दपङ्कमिव गगनस्येन्द्र-नीलकण्ठिकेवोत्तरदिशः पुरतः कालिन्दी दृश्यते।

---

र्टिङ्कया। निस्यन्दपङ्कं निःसृतकर्दममिव गगनस्य गगनस्य नीलवर्ण-त्वादियमुत्प्रेक्षेति बोध्यम्। इन्द्रनीलकण्ठिकेव नीलकान्तमणिनिर्मित-कण्ठहार इव पुरतः अग्रतः कालिन्दी यमुना।

(छ) सेयमिति। हे सुभ्रु ! पुरः अग्रतः कलिन्दस्य सूर्य्यस्य तनया कन्या गीर्वाणसिन्धोः मन्दाकिन्याः सखी सहचरी कालियपन्नगस्य कालियाख्यभुजङ्गस्य वासः निकेतनं सा इयं यमुना दृग्गोचरे वर्त्तते दृश्यते इत्यर्थः सर्व्वेषां परीक्षणे क्षमा समर्था दृषत् प्रस्तरः निकषो-पलमित्यर्थः यत्र तादृशी तापी नाम नदी यस्याः सोदरी सहोदरी स्वसा भगिनी तामिमां वैवस्वतस्य यमस्य अनुजां कनीयसीम् आर्य्य-मणीम् अर्य्यमणः इयम् आर्य्यमणी तां सावित्रीं दुहितरं कन्यां यमुनां वन्दस्व प्रणम। शार्दूलविक्रीडितं वृत्तम्।

(च) आर्य्ये अदूरवर्त्तिनी निकटवर्त्तिनी। अन्तर्वेदीभूषणं अन्तर्वे-

रामः । सीतां प्रति ।

यत्रार्य्ये न तथानुरज्यति कविर्ग्रामीणगीर्गुम्फने
शास्त्रीयासु च लौकिकीषु च यथा भव्यासु नव्योक्तिषु ।
पाञ्चालास्तव पश्चिमेन त इमे वामा गिरां भाजना-
स्त्वद्दृष्टेरतिथीभवन्तु यमुनां विस्रोतसं चान्तरा ॥८६॥(च)

किञ्च ।

प्रपञ्चितकलातन्त्रे पाञ्चालीकेलिकर्मणि ।
सर्वाङ्गमोक्षं लभते युगपत् कुसुमायुधः ॥ ८७ ॥ (छ)

---

ईनां नदीद्वयमध्यवर्त्तिदेशानां भूषणम् अलङ्कारः नदीद्वयान्तर्गतदे-शानां मध्ये पञ्चालाः श्रेष्ठा इति भावः ।

(च) यत्रेति । यत्र पञ्चालेषु कविः कवयिता आर्य्ये शोभने ग्रामी-णानां ग्रामवासिनां गीर्गुम्फने वचनरचनायां तथा न अनुरज्यति अनुरक्तो भवति यथा शास्त्रीयासु शास्त्रसम्बन्धिनीषु लौकिकीषु व्यव-हारिणीषु भव्यासु सुन्दरीषु नव्योक्तिषु नवीनासु उक्तिषु च, अत्रत्याः कवयः ग्राम्यवचनं तथा नाद्रियन्ते यथा शास्त्रीयादिकमितिभावः । ते इमे तव पश्चिमेन पश्चिमायां दिशीत्यर्थः गिरां वाचां वामाः सुन्दराः भाजनाः पात्राणि शोभनवचना इत्यर्थः पञ्चालाः यमुनां त्रिस्रोतसं गङ्गाञ्च अन्तरा गङ्गायमुनयोर्मध्ये इत्यर्थः त्वद्दृष्टेः तव चक्षुषः अतिथीभवन्तु त्वया दृश्यन्तामित्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

(छ) प्रपञ्चितेति कुसुमायुधः कामः प्रपञ्चितं प्रकटितं कलानां चतुःषष्टिकामविद्यानां तन्त्रं समूहः यस्मिन् तादृशे पाञ्चालीनां पाञ्चालाङ्गनानां केलिकर्मणि विलासकर्मणि युगपत् समकालं सर्वेषां अङ्गानां पञ्चानामेव शराणामिति भावः मोक्षं प्रक्षेपं लभते प्राप्नोति । पञ्चशरस्य पञ्चशराणां समकाल एव पाञ्चालीनां विलास इति भावः ।

लक्ष्मणः । इदं पुनस्ततोऽपि (झ) मन्दाकिनीपरिक्षिप्तं महोदयं नाम नगरं दृश्यते ।

रामः ।

अश्रान्तसुधामवसुधामहितं द्विषद्भि-
र्नो गाहितं भवति गाधिपुरं पुरस्तात् ।
वैदेहि ! देहि शफरीसदृशं दृशं त-
दस्मिन्नितम्बिनि ! नितम्बवहद्युसिन्धौ ॥ ८८ ॥ (ञ)

इदं द्वयं सर्वमहापवित्रं
परस्परालङ्करणैकहेतुः ।
पुरं च हे जानकि ! कान्यकुब्जं
सरिच्च गौरीपतिमौलिमाला ॥ ८९ ॥ (ट)

---

(झ) मन्दाकिनीपरिक्षिप्तं मन्दाकिन्या गङ्गया परिक्षिप्तं वेष्टितम् । महोदयं महान् उदयः वृद्धिः उन्नतिरित्यर्थः यस्य तादृशम् अन्वर्थनामेत्यर्थः ।

(ञ) अश्रान्तेति । हे नितम्बिनि प्रशस्तनितम्बे वैदेहि ! अश्रान्त निरन्तरं शोभनानि धामानि गृहाणि यत्र तादृशं वसुधायां पृथिव्यां महितं पूजितं प्रशंसितमित्यर्थः द्विषद्भिः शत्रुभिः नो गाहितं न प्रविष्टं गाधेः राजवरस्य विश्वामित्रपितुः पुरं नगरं पुरस्तात् अग्रतः भवति वर्त्तत इति शेषः । तत् तस्मात् नितम्बे मध्यभागे वहतीति तथोक्ता द्युसिन्धुर्गङ्गा यस्य तादृशे अस्मिन् पुरे शफरीसदृशं शोभनां दृशं देहि अर्पय । वसन्ततिलकं वृत्तम् ।

(ट) इदमिति । हे जानकि ! कान्यकुब्जं तदाख्यं पुरं नगरञ्च गौरीपतेः हरस्य मौलिमाला मस्तुशिरःसञ्चारिणी गङ्गा सरिच्च

अपि च ।

यो मार्गः परिधानकर्मणि गिरां यः सूक्तिमुद्राक्रमो
भङ्गिर्या कबरीचयेषु रचनं यद्भूषणालीषु च ।
दृष्टं सुन्दरि ! कान्यकुब्जललनालोकैरिहान्यच्च य-
च्छिक्षन्ते सकलासु दिक्षु तरसा तत्कौतुकिन्यः स्त्रियः॥९०(ठ)

विमानवेगनाटितकेन कञ्चुकः । आर्ये ! दिव्यसरितोर्गङ्गा-
यमुनयोरयमपि सङ्गमः,

रामः । सीतां प्रति ।

न्यग्रोधोऽयं वन्द्यतां श्यामनामा
गङ्गोर्म्यैष्टा प्रेक्ष्यतां कालकीयम् ।
कालिन्दी च प्राविता तत्पयोभि-
स्तीर्थं ह्येतत् स्वर्गमार्गः प्रयागः ॥ ९१ ॥ (ड)

---

इदं इयं सर्वेषु जगत्सु महापवित्रम् अतिविस्तृतं परस्पराकृष्टरचनं
चैतच्च कान्यकुब्जं गङ्गामनुहरोति गङ्गा च कान्यकुब्जमित्यर्थः । उपेन्द्रव-
ज्रावृत्तम् ।

(ठ) य इति । हे सुन्दरि ! परिधानकर्मणि यः मार्गः रीतिः,
गिरां वाचां यः सूक्तिमुद्रायाः सुप्रयोगविधेः क्रमः नियमः, कबरी-
चयेषु केशपाशेषु या भङ्गिः कुटिलविन्यासः भूषणावलीषु अलङ्कारनिच-
येषु यत् रचनम् अङ्गेषु परिधानक्रमः, अन्यच्च यत् सकलासु दिक्षु,
कौतुकिन्य कौतुकवत्यः विलासिन्यः इत्यर्थः स्त्रियः तरसा बलेन शि-
क्षन्ते अभ्यस्यन्ति तत्सर्वं कान्यकुब्जललनालोकैः कान्यकुब्जीयनारीभिः
इह अस्मिन् कान्यकुब्जे दृष्टं नान्यत्र कुत्रापि ईदृशं वैचित्र्यं दृश्यते
इति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(ड) न्यग्रोध इति । अयं श्यामनामा न्यग्रोधः वटः, गङ्गोः

खर्वं वदन्ति ।

लक्ष्मणः । पूर्वतो दर्शयन् । इयमितो भगवतो भर्गस्य (ठ) केलिवासो वाराणसी ।

यद्वाचंयमवृत्तयः किमपरं नीवारमुष्टिम्पचाः
सत्यं ज्योतिरुपासते सुकृतिनो द्राक् संवदन्ते च नः ।
नित्यासन्नतया च स्वर्णपर्ण्योर्वाराणसीवासिनः
सम्भोगैरपि सुभ्रुवां तदजरं विन्दन्ति नन्दन्ति च ॥८२॥(ड)

सीता । दशकण्ठसूदन । वाराणसीसंकीर्तनेन सुम-

---

शैखरात् भ्रष्टा च्युता इयं जाह्नवी तत्पयोभिः गङ्गासलिलैः प्लाविता संयुता कालिन्दी यमुना च वन्द्यतां हि यतः एतत् स्वर्गमार्गः प्रयागो नाम तीर्थं पुण्यक्षेत्रम् । इन्द्रवज्रावृत्तम् ।

(ठ) भर्गस्य हरस्य केलिवासः क्रीडास्थानम् ।

(ड) यदिति । किमपरं किमन्यत् वक्तव्यमिति शेषः । वाचंयमा वाक्संयमकारिणी वृत्तिर्नियमः येषां तादृशाः मौनव्रतधरा इत्यर्थः नीवारमुष्टिम्पचाः नीवाराणाम् अरोपितवनजातधान्यविशेषाणां मुष्टिं पचन्तीति तथोक्ताः यथाकाले मुष्टिमितेन नीवारेण जीविनः इत्यर्थः सुकृतिनः पुण्यवन्तः यत् सत्यं ज्योतिः परमात्मानम् उपासते आराधयन्ति द्राक् झटिति न च संवदन्ते न च सिद्धिं लभन्ते, अत्र वाराणस्यां स्वर्णपर्ण्योः शम्भोः नित्यासन्नतया सततावस्थानेन काशीवासिनः सुभ्रुवां नारीणां सम्भोगैरपि तत् अजरम् अक्षयं ज्योतिः विन्दन्ति लभन्ते नन्दन्ति सुखेन वसन्ति च । भोगनिर्वाणयोरनुपमं धाम वाराणसीति भावः । शार्दूलविक्रीडितं वृत्तम् ।

विभीषणः । इह किल रामदेवेन क्षत्रियान्तकरस्य
भङ्गो (ढ) भार्गवमुनेर्दत्तः ।

सुग्रीवः ।

अपां फेनेन दग्धोऽसौ स्नातश्चन्द्रिकयाऽपि सः ।
यदप्रसूतकौशल्यं क्षत्रं क्षपितवान्मुनिः ॥ ९४ ॥(ध)

रामः । लज्जमानः सीतां प्रति ।

यत्रार्थातिशयोऽपि सूचितजगन्मर्यादया मोदते
सन्दर्भश्च समासमासलवदप्रस्तारविस्तारितः ।
उक्तिर्योगपरम्परापरिचिता काव्येषु चञ्चुमतां
सा रम्या नवचम्पकाङ्गि ! भवतु त्वमेतयोः प्रीतये ॥९५॥(न)

---

(ढ) भङ्गः पराभवः ।

(ध) अपामिति । असौ मुनिः भार्गवः अपां फेनेन दग्धः, स मुनिः चन्द्रिकयापि स्नातः । कुतस्तावत् यत् अप्रसूता अजननी कौशल्या यस्य तादृशं क्षत्रं क्षपितवान् नाशितवान् । पिपासुर्जनः यथा जलमप्राप्य तत्फेनेनैव तृषां निवारयति, यथा च चन्द्रद्युमे सरसि स्नानार्थी तदलाभे तच्चन्द्रिकया परितृप्यति तथा रामे अलब्धे इतरान् क्षत्रियानसौ सञ्जहारेतिभावः ।

(न) यत्रेति । हे नवचम्पकाङ्गि ! यत्र उक्तौ अर्थातिशयोऽपि अर्थकाठिन्यमपीत्यर्थः सूचितया विरचितया जगतां मर्यादया स्थित्या मोदते हृष्यति आनन्दयतीत्यर्थः यत्र सन्दर्भः प्रस्तावश्च समासमासल-वदप्रस्तारविस्तारितः सा काव्येषु योगपरम्परया परिचिता चञ्चुमतां रम्या उक्तिः त्वमेतयोः प्रीतये भवतु यादृशेषु काव्येषु दुरूहार्थनिवे-शेन भावनाक्लिष्टम् अर्थकाठिन्यञ्च तानि काव्यानि त्वं पश्य रहन्तु पूर्वश्लोकोक्तार्थस्य काठिन्येन जानक्या अर्थावगमनविरहाद्रहस्यमिति ध्येयम् ।

सीता । दूरादवलोकनं नाटयित्वा । लंघिदसाअरादो इध मंतादो वि दूरदेसदंसिणी दिठ्ठी सिणुद्धत्ति पडिहाअदि (४०) ।

ततः प्रविशति हनूमान् ।

हनूमान् । प्रणम्य । देव ! भगवान् श्रुतवृत्तान्तो वसिष्ठः समं भरतशत्रुघ्नाभ्यामन्याभिश्च प्रकृतिभिस्त्वदभिषेकमभ्यस्ति-ष्ठति । सर्वे परिक्रामन्ति ।

रामः । पुरोऽवलोक्य प्रणम्य च ।

राज्ञां रवेः प्रभवतां कुलराजधानी-<br>
मालोकयामरपुरीप्रतिमामयोध्याम् ।<br>
वार्भिः शरच्छशिकरद्युतिभिः सरय्वा<br>
या पूर्वपार्थिवयशोभिरिवावभाति ॥ ८६ ॥(प)

सर्वे प्रणमन्ति ।

रामः । पुरोऽवलोक्य विमानराज ! वसिष्ठादयोऽपि

---

(४०) लङ्घितसागरादस्मत्तोऽपि दूरदेशदर्शिनी दृष्टिः शीघ्रेति प्रतिभाति ।

---

(प) राज्ञामिति । रवेः सूर्य्यात् प्रभवतां जायमानानां राज्ञां कुलराजधानीम् अमरपुरीप्रतिमाम् अयोध्याम् आलोकय पश्य । याः शरदः ये शशिकराः चन्द्रकिरणाः तेषामिव द्युतिर्येषां तादृशैः शुभ्रै-र्विमलैः सरय्वाः नद्याः वार्भिः सलिलैः पूर्वपार्थिवानां पूर्वतनभूपालानां यशोभिरिव आभाति शोभते । वसन्ततिलकं वृत्तम् ।

मां प्रत्युद्यातुकामास्तदनु (फ) नरेन्द्रराजकुलेऽस्मिन्नवत-
रामः। सर्वेऽवतरणं नाटयन्ति।

ततः प्रविशति वशिष्ठो भरतशत्रुघ्नौ च।

वशिष्ठः। वत्स भरत! शत्रुघ्न!

शिष्ये शम्भोर्व्यधित यदयं यच्च धातुः प्रपौत्रे
कस्तेनास्मिन् जगति न जनो विस्मितः सस्मितश्च।
अभ्युत्थातुं वयमपि ततो रामभद्रं प्रवृत्ता
दिष्ट्या दृष्टं दशरथकुलं स्फीतमानं यशोभिः॥९७॥(ब)

सर्वे परिक्रामन्ति।

रामः। सविनयमुपसृत्य सपादोपग्रहम्।

इक्ष्वाकूणां कुलगुरुं श्रेष्ठं चिरमशिखण्डिनाम्।
अरुन्धतीपतिमृषिं राम एषोऽभिवन्दते॥९८॥ (भ)

---

(फ) तत् तस्मात् ननु भोः अस्मिन् नरेन्द्रराजकुले नरेन्द्रस्य राज-
मार्गे।

(ब) शिष्ये इति। अयं रामः शम्भोः शिष्ये भार्गवे यत्, धातुः
ब्रह्मणः प्रपौत्रे रावणे यच्च व्यधित कृतवान् भार्गवं दयानमस्य जित-
वानित्यर्थः को जनः तेन व्यापारेण भार्गवदयानजयरावणवधरूपेण
अस्मिन् जगति न विस्मितः चमत्कृतः सस्मितः आनन्दितश्च, सर्वे एव
एव विस्मितः आनन्दितश्चाभवदित्यर्थः। ततः कारणात् वयमपि
रामभद्रम् अभ्युत्थातुं प्रत्युद्गन्तुं प्रवृत्ताः चलिताः। दिष्ट्या भाग्येन
दशरथस्य कुलं यशोभिः स्फीतमानं वर्धमानं दृष्टम्। मन्दाक्रान्ता-
वृत्तम्।

(भ) इक्ष्वाकूणामिति। एष रामः इक्ष्वाकूणां कुलगुरुं चिरमभि-

वसिष्ठः। का दीयतां तव इत्यादि पठति।

रामः। आर्षं (म) हि वचनं विभिन्नवक्तृकमपि न विसंवदति यदगस्त्यवाचा भगवान् वसिष्ठोऽपि ब्रूते।

सीता प्रणमति।

वसिष्ठः। जनकराजपुत्रि! (य) रामाशिषैवाशीस्ते।

किञ्च।

अन्ययोगव्यवच्छेदादुपास्ते यदरुन्धती।
संविभक्तं त्वया पुत्रि! तत्सम्प्रति सतीव्रतम्॥८८॥ (र)

लक्ष्मणः। काकुत्स्थकुलगुरो! मैत्रावरुणे! लक्ष्मणोऽभिवादयते।

वसिष्ठः। वत्स! लक्ष्मण! जितेन्द्रजितस्तव (ल) किमाशास्महे।

---

वसिष्ठमं देवर्षीणां मरीच्यादीनां मध्ये सप्तमम् अरुन्धत्याः पतिम् ऋषिं वसिष्ठम् अभिवन्द्य ते प्रणमति।

(म) आर्षम् ऋषिसम्बन्धि विभिन्नः वक्ता यस्य तादृशमपि न विसंवदति न विरुध्यते इत्यर्थः। अगस्त्यवाचा अगस्त्यस्य वाचा का दीयतामिति पद्यवचनेन पूर्वोक्तेनेत्यर्थः।

(य) रामाशिषा रामभद्रस्य या आशीः तयैव ते तव आशीः, रामस्य मङ्गलेनैव तव मङ्गलमिति भावः।

(र) अन्येति। हे पुत्रि! अरुन्धती मम भार्या अन्ययोगव्यवच्छेदात् यत् सतीव्रतं पातिव्रत्यम् उपास्ते सेवते, सम्प्रति त्वया संविभक्तं तत् सतीव्रतम् उपास्ते। पूर्वं सतीव्रते अन्यासां योगो नासीत् केवलं अरुन्धत्येव पतिव्रता ख्यातिं लेभे इदानीं त्वमपि अरुन्धतीव पतिव्रतासीति भावः।

(ल) किम् आशास्महे आशिषं करोमीत्यर्थः।

भरतः। आर्य रावणविद्रावण! एष भरतोऽभिवादयते।

रामः। बाहू प्रसार्य। एह्येहि वत्स भरत!।

परिष्वजामि सोत्कण्ठो मां प्रतीपं परिष्वज।

आलिङ्गिते भ्रातृगात्रे कवोष्णः सोऽपि चन्द्रमाः॥१००॥(व)

भरतः। सीतां वन्दते।

सीता। वच्छ भरध! उठ्ठावीअदु वअणेंदू भोदु दे आणंदमंदपरिप्फंदा दिठ्ठी (४१)।

लक्ष्मणः। आर्ये! पादसेवाविसंवादी (म) शत्रुघ्नः प्रणमति।

रामः। शत्रुघ्नमुत्थाप्यावलोक्य च। दिष्ट्या द्वितीयलक्ष्मणो दृश्यते।

लक्ष्मणः। सीतां प्रणमति।

सीता। वच्छ! सत्तुहण! चिरं णंद जणणीजणो दे कहिं (४२)।

---

(४१) वत्स भरत! उत्थाप्यतां वदनेन्दुर्भवतु ते आनन्दमन्दपरिस्पन्दा दृष्टिः।

(४२) वत्स शत्रुघ्न! चिरं नन्द जननीजनस्ते क्व।

---

(व) परिष्वजामि इति। सोत्कण्ठः सस्पृहः अहं परिष्वजामि आलिङ्गामि त्वामिति शेषः। त्वमपि मां प्रतीपं परिष्वज प्रत्यालिङ्ग। यः कवोष्णः ईषदुष्णः जनः, सोऽपि भ्रातृगात्रे आलिङ्गिते सति चन्द्रमाः शीतलः स्पर्शैः भवतीति शेषः।

(म) पादसेवाविसंवादी चरणशुश्रूषाभिलाषी इत्यर्थः।

लक्ष्मणः । माङ्गलिक्यपाणिरन्तःपुरग्रीवे तिष्ठति ।

लक्ष्मणो भरतं वन्दते ।

भरतः ।

हे लक्ष्मण ! सलक्ष्मीक ! परिष्वज महाभुज ! ।
आर्य्यसेवापवित्राणि गात्राणि सुखयन्तु माम् ॥१०१॥ (ख)

शत्रुघ्नः । लक्ष्मण परिष्वजस्व । निर्विघ्ननिर्वाहितरामदेवादेशे (ग) त्वयि द्विगुणं स्निह्यति मनः ।

रामः । भगवत्यरुन्धति ! किष्किन्धापतिरेष सुग्रीवो (घ)भास्करिरयं च लङ्कापरमेश्वरो विभीषणः पौरस्त्योऽभिवन्दते ।

वशिष्ठः । दीर्घप्रशस्तिहस्ताविमौ (ङ) भवतां भवतः ।

रामः । भरत ! परिष्वजस्वैतौ सीतादेवरौ (च)।

---

(क) माङ्गलिक्यपाणिः माङ्गलिक्यं माङ्गलिकद्रव्यं पाणौ यस्य सः । अन्तःपुरस्य ग्रीवे द्वारे ।

(ख) हे लक्ष्मण ! इति । हे महाभुज ! दीर्घबाहो ! सलक्ष्मीक ! सश्रीक ! लक्ष्मण ! परिष्वज आलिङ्गस्व आर्य्यस्य रामस्य सेवया पवित्राणि गात्राणि तवेति शेषः मां सुखयन्तु सुखीकुर्वन्तु ।

(ग) निर्विघ्नेति निर्विघ्नं यथा तथा निर्वाहितः सम्पादितः रामदेवस्य आदेशः येन तादृशे ।

(घ) भास्करिः भास्करस्य अपत्यं भास्करिः सूर्य्यनन्दनः ।

(ङ) दीर्घप्रशस्तेः दीर्घाया महत्याः प्रशस्तेः प्रशंसाया हस्ताविति भावः हस्तौ हस्तावलम्बनसाधनभूतौ पदार्थविशेषौ ।

(च) सीतादेवरौ सीतायाः देवरभूतौ सुग्रीवविभीषणौ ।

भरतसुग्रीवविभीषणाः परस्परं परिष्वजन्ते ।

वशिष्ठः ।

रामो दान्तदशाननः किमपरं सीता सतीष्वग्रणीः
सौमित्रिः सदृशोऽस्तु कस्य ? समरे येनेन्द्रजिन्निर्जितः ।
किं ब्रूमो भरतं च रामविरहे तत्पादुकाराधकं ?
शत्रुघ्नः कथितोऽग्रजस्य च गुणैर्धन्यं कुटुम्बं रघोः ॥१०२॥(ग)

रामं प्रति । वत्स ! दाशरथे ! रामचन्द्र ! प्रशस्तो मुहूर्त्तो वर्त्तते तदध्यास्स्व पित्र्यं सिंहासनमेषोऽभिषिच्यसे ।

रामः । तथा कुरुते ।

वशिष्ठमुख्याः सर्वे साष्टाङ्गं प्रणमन्ति । नेपथ्ये मङ्गलगीतध्वनिर्गम्भीरवाद्यं च आकाशे ।

आराधितो रघुकुलोद्वह ! पुष्पकं प्राक्-
यानं चिरादिदमदत्त पतिः पशूनाम् ।

---

(ग) रामं इति । रामः दान्तः निहतः दशाननो येन तादृशः । अपरं किम् अस्य वक्तव्यं रावणवध विधानेनैवास्य सर्वश्रेष्ठत्व प्रकटना-दितिभावः । सीता सतीषु साध्वीषु अग्रणीः श्रेष्ठा । सौमित्रिः लक्ष्मणः कस्य सदृशः अस्तु भवतु ? न कस्यापीत्यर्थः येन समरे इन्द्रजित् निर्जितः । रामस्य विरहे तस्य रामस्य पादुकाराधकं भरतञ्च किं ब्रूमः ? किं कथयामः ? येन प्राप्तमपि राज्यं विहाय ज्येष्ठ-भक्त्या कठोरं व्रतमाचरितं तस्य किं वर्णयाम इति भावः । शत्रुघ्नः अग्रजस्य लक्ष्मणस्य गुणैः कथितः सदृशः अग्रजः तादृशः कनिष्ठो-ऽपीतिभावः तस्मात् रघोः कुटुम्बं परिवारः धन्यं सर्वथा प्रशं-सनीयमित्यर्थः शार्दूलविक्रीडितं वृत्तम् ।

तथापीदमस्तु ।

सम्यक् संसारविद्याविपदमुपनिषद्भूतमर्थाद्भुतानां
ग्रथ्नन्तु ग्रन्थिबन्धं वचनमनुपतत्सूक्तिमुक्ताः सुयुक्ताः ।
सन्तः सन्तर्पितान्तःकरणमनुगुणं सज्जनाः काव्यमूर्त्ते-
स्तत्तत्त्वं सात्त्विकैश्च प्रथमपिशुनितं भावयन्तोऽर्चयन्तु १०५(च)

इति निष्क्रान्ताः सर्वे ।

॥ राघवानन्दो नाम दशमोऽङ्कः ॥

---

कुपित इति भावः । इदञ्च प्राप्तं रावणात् लब्धं यानं पुष्पकं याचितवते अर्थिने कुवेराय दत्तञ्च । शार्दूलविक्रीडितं वृत्तम् ।

(च) सम्यगिति । सुयुक्ताः अभिनिवेशवन्तः अनुपतन्त्यः सङ्गच्छन्त्यः सूक्तयः शोभना उक्तयएव मुक्ताः येषां तथाभूताः सन्तः अर्थाद्भुतानाम् अद्भुतानाम् अर्थानाम् उपनिषद्भूतं रहस्यस्वरूपं संसारविद्यायाः भवव्यापारस्य विपदं नवक्षयकरमित्यर्थः ग्रन्थिबन्धं वचनं ग्रन्थिरूपं वाक्यं ग्रथ्नन्तु रचयन्तु काव्यमूर्त्तेः काव्यशरीरस्य सज्जनाः येरस्य सन्तर्पितं प्रीणितम् अन्तःकरणं येन तथाभूतम् अन्तःसन्तोषकरमित्यर्थः । अनुगुणं स्वसदृशं सात्त्विकैः सत्त्वगुणवद्भिः कविभिः प्रथमं पिशुनितं सूचितं निबद्धमित्यर्थः । तत् प्रसिद्धं तत्त्वं भावयन्तः चिन्तयन्तः सन्तः अर्चयन्तु प्रशंसन्तु च । सावधः स्वयं संसारबन्धमोचनाय अद्भुततत्त्वोद्भावकं प्रबन्धं रचयन्तु वा अन्यैः निबद्धम् अनुशीलयन्तः प्रशंसन्तु इति तात्पर्यार्थः । स्रग्धरावृत्तम् ।

दशमोऽङ्कः समाप्तः ।

इति श्रीजीवानन्दविद्यासागर भट्टाचार्य्यविरचिता
बालरामायण-नाटक-व्याख्या
सम्पूर्णा ।

॥ समाप्तोऽयं ग्रन्थः ॥

